शेठ नारायणदास तथा जेठानन्द आसनमल पुष्टिमार्गीयग्रन्थमाला. रत्न १०.

श्रीवल्लभो विजयते ।

# श्रीसंत्सिद्धान्तमार्तण्डः ।

पञ्चनद्युपाह्वविद्वद्रत्नश्रीघनश्यामभट्टात्मजन्मभिः भारतमार्तण्डवेदान्तभट्टाचार्या-
शुकविसहस्रावधाननिष्णातप्रभृतिनैकबिरुदभूषणालङ्कृतैः श्रीगट्टूलालेति
प्रसिद्धाभिधानः श्रीगोवर्धनशर्मभिः प्रणीतः ।

ओङ्कारजित्तनुजनुषा हरिशङ्करशास्त्रिणा संशोधितः ।

स च

मुम्बापुरीस्थश्रेष्ठिवर्य-'नारायणदास आसनमल ट्रस्ट'द्रव्यादिव्यवहारा-
वलोकयितृभिः ट्रस्टद्रव्यव्ययेन मुद्रयित्वा प्रसिद्धिं नीतः ।

निर्णयसागरमुद्रणाख्ययन्त्रालये मुद्रित. ।

ख० १९९९, स० १९४२, श० १८६५, श्रीवल्लभाब्दा ४६४

मूल्यं ५ रूप्यकाः ।

॥ विजयतेतराम्वल्लवीवल्लभो नन्दनन्दनः ॥

॥ श्रीगुरुभ्यो नमः ॥

आविरस्तु मम वाचि वागधीश श्रीभागवतप्रतिपदमणिवरभावांशुभूषिततनु

श्रीवल्लभः प्रभुः ।

# इदमत्र प्राप्तकालम् ।

श्रीमद्व्रजवनीवनितावलीलीलालालितवपुषः परमानन्दरसिककुलकाङ्क्षितकमनीयरसघनानन्दमयकरचरणमुखोदरादेर्यशोदोत्सङ्गरत्नस्य व्रजरत्नस्य परमयाऽनुकम्पया द्वितीयं संस्करणमिदमुदेति सत्सिद्धान्तमार्तण्डस्यास्य । प्रकाशयत्ययमष्टाष्टकेनानवद्यविद्याविभवविभूषितानां विपश्चिदपश्चिमाना सङ्ख्यावता सचेतसा चेतांसि, समुज्ज्वलयति सकलवैष्णवसम्प्रदायसत्सिद्धान्तान्, समुद्भासयति मायाऽविद्याऽऽभासाभ्यसितकुतर्कसन्ततितिमिरायितमतिमतां मानसानि, चकासयति च मीमांसाद्वितयसमवेतान्वेदवेदान्तस्मृतिपुराणेतिहाससिद्धान्व्यासपराशरमनुयाज्ञवल्क्यादिमुनिमानिताच्छुद्धाद्वैतसिद्धान्तरत्नराजिराजितान्सकलानपि सिद्धान्तान् । "भारतमार्तण्डेन" प्रकाशितस्य मार्तण्डस्यास्य समुदयेन, तिरोभवति तूलामूलानाद्यविद्याविस्तारिता तमस्ततिः, शुष्यति शिवगणाङ्गणसमुत्पन्नः शङ्कापङ्कः, नश्यति विनश्वरवादः, अपगच्छत्यात्मापहारिणां वाक्पेशलता, घूकायन्ते च सहस्राक्षानुयायिनो मायिनः । नात्रास्माक **भारतमार्तण्डस्य, सत्सिद्धान्तमार्तण्डस्य** च प्रशंसन एव प्रवृत्तिः । आचूडं ग्रन्थमिमं विलोक्य सर्वस्यापि सचेतसो विदुषस्तथैव भविताऽभिप्रायः, यो हि पक्षपातदर्वीकरादष्टः, शास्त्रलोचनालोचकश्च ।

अयं हि सत्सिद्धान्तमार्तण्डो दैनन्दिनमवश्यांचरणीयानामाचाराणां, परिपालनीयानां नियमाना, अनुष्ठेयानां च कर्मणां निर्णायको धर्मशास्त्रमहानिबन्धो मार्तण्ड इव प्रकाशते वैष्णवानां सदसि । अस्य निर्माताऽपि भारतमार्तण्डैः, वेदान्तभट्टाचार्यः, श्रीगट्टूलालापरनामधेयः, पण्डितप्रवरो गोवर्धनशर्मा । यस्य भारतमार्तण्डस्यास्तादारभ्याद्यदिन यावन्न कोऽपि जनिमलभत तादृशो भारते वर्षे । सत्सिद्धान्तमार्तण्डस्य प्रादुर्भावः कदा कुत्र कस्माद्धेतोरजायतेत्यत्र प्रस्तावनायां स्वयमोक्तवान् निखिलमपि ग्रन्थकारः, अतो नावशिष्यते विशेषतो वक्तव्यम् ।

अस्य विरचने प्रधानतया प्रयोजकास्तु गो. श्रीजीवनलालमहाराजा बृहन्मन्दिराधीशा एव । ये हि सकलसुरासुरानीकप्रमुखावलीशिरःकिरीटकिरणजालामालार्चितपादपद्मस्य श्रीबालकृष्णस्य शरणपरिचरणसम्प्राप्तनिःशेषामरसङ्घसंस्पर्धितानेकविद्यास्थानविश्रामाद्वितीयस्थानतया विद्वज्जनजीवनरूपा एव गोस्वामिमहाराजाः, बालकृष्णचम्पूब्रह्मसूत्र-

वृत्तिप्रभृतीनां ग्रन्थानां निर्मातारश्च । सम्प्रति विराजमानानां गोस्वामिकुलकौस्तुभश्रीमद्गोकुलनाथमहाराजाना धर्मतः पितृपादा एवैते । श्रीमद्गोकुलनाथचरणा अपि एतर्हि भूतलमलङ्कुर्वाणेषु वैष्णवाचार्येषु, प्रभुचरणचतुर्थतनयगोकुलनाथा इव कन्धरापणेनापि स्वधर्मरक्षका नमन्नृपतिमण्डलीमुकुटताण्डवैर्मण्डितचरणाः पण्डितमण्डलाखण्डा गोस्वामिवंशमण्डनरूपा एवातिशेरते भारते। ये हि गान्धिनान्धीकृते जगतीतले, केलाप्पन्प्रभृतिभिश्चण्डालपाषण्डपूजापराहतान्तःकरणैराहते धर्मध्वंसे केरलनृपतिना झामोरिन्महाभागेन समाहूताः श्रीमच्छङ्करभगवत्पादजनिभुवि केरलभुवि गुरुवायुर विजयप्रस्थानमकुर्वन् पादचारिण एव । यैश्च तत्र वर्णाश्रमस्वराज्यसङ्घस्य स्थापितो विजयध्वजः, दूरीकृतं च तत्रत्याना श्रीमच्छङ्करभगवत्पादसजातीयाना नम्बुद्रिब्राह्मणाना, द्राविडानां च धर्मसङ्कटम्, रक्षित च पावित्र्यं द्वारकाधीश-गुरुवायुर-मन्दिरस्य ।

पुरा किल जहांगीरराज्ञा मानितः कश्चन चिद्रूपनामा वावदूकः संन्यासी बभूव । यो हि महम्मदीयानां राज्याधिकारिणां प्रशंसक इङ्गितानुकारी च आसीत् । मथुरामण्डले नियुक्तानधिकारिणो वाक्पेशलेन वशीकृत्य, वैष्णवान्प्रयषेधयदूर्ध्वपुण्ड्रतुलसीमालादिवैष्णवचिह्नधारणे। तस्य च्छलेन सर्वेऽपि वैष्णवा आचार्याश्च श्रीमद्गोकुलादिपुण्यस्थानानि सन्त्यज्य गङ्गातटं प्रस्थिताः । श्रीमत्प्रभुचरणचतुर्थतनयश्रीगोकुलनाथास्तु गोकुल एव प्राणसङ्कटमपि तिरस्कृत्य स्थिताः। अथ गच्छति काले महता छलेन सत्रस्तैः कैश्चन वैष्णवैः सम्प्रार्थिताः श्रीमद्गोकुलनाथचरणाश्चतुरशीतिवर्षात्मके जराजीर्णे वयस्यपि धर्मरक्षणाय जहांगीरनृपतिसमीपं मथुरातो विजययात्रां संयोज्य काश्मीरदेशं ययुः, नृपतिरुपदिष्टो, निजचमत्कारश्च प्रदर्शितस्तस्मै। श्रीमद्गोकुलनाथैः प्रबोधिते जहागिरे तत्प्रार्थनया पुनराजग्मुर्वैष्णवाचार्या वैष्णवाश्च गोकुलवृन्दावनादिपुण्यक्षेत्रम् । इयं हि षोडशशतकीया कथा । सम्प्रति हि विंशतितमे शतके कालदावानलज्वालामालावलीढे सज्जनसमाजे, दन्दह्यमाने धर्मविचारैकप्रवणचित्ते ब्राह्मणकुले, सुदुःसहदहनधरैर्निःसहमिहार्दयतः पाश्चात्यैः प्रचारितस्य विद्युत्कणवादस्य प्रचण्डैः करैस्तिग्मं तापितायामिलायां, गान्धिना विस्तारितस्वसंस्कृतिकायामत एव सुजलायामपि नलिकाजलायां, सुफलायामपि सङ्करफलवृक्षराजिरञ्जितायां, मलयजशीतलायामपि बाष्पयन्त्रतापितायां भारतभुवि, वितर्ककण्टकाकीर्णे मानवीयधर्मविनाशके प्रचारे प्रचलिते सति, युवतीनां कबरीकर्तनोपदेशे, शङ्कापङ्कावरुद्धे शास्त्रीयविचारे, एकतो डार्वीनदर्वीकरे विकासवादं वमति सति, इतरतो गर्जति सति साम्यवाद-नाझीवादकेसरिणि, अग्रतः स्थितायां कुमारिकापहरणोपायभूतायां शारडापरिखायां, पृष्ठतश्च हरिरित्यभिधया गार्हस्थ्यसुखापहारिणि, सिह इत्याख्यया शुद्धसंस्कारं जिघृक्षति, सत्यामपि गौरेत्युपाख्यायां विवाहोच्छेदादिकैः कुमारीणां विधवाना सधवानां बहुधवानां च दायलाभादिकै राजनियमकारिप्रयत्नैः इयमायमाने कालपुरुष इव विस्फार्य वदनं समुपस्थिते, जयकरेऽप्यजयकरे वियति जगृध्यति दाक्षाय्ये, वटोदरेऽप्यवटोदरे सगोत्रोद्वाहादिधर्मविनाशक-

विधानविमर्शनतत्परे हिन्दूराज्ये, वैदिकधर्मरक्षणेऽजस्रं बद्धपरिकरा एव **श्रीमन्तो गोस्वामिनो गोकुलनाथमहाराजाः** । एतेषामेव तनुजन्मानः **श्रीदीक्षितमहाभागाश्च** भारतसंरक्षणसङ्घसंस्थापकाः भाष्यचतुष्टयविदः ।

स्मर्यते च सत्सिद्धान्तमार्तण्डप्रादुर्भवनप्रयोजकेषु, "सुरते" वास्तव्यानां गो० श्रीयदुनाथजिन्महाराजानां पुण्याभिख्या । सम्प्रति तत्पीठाधिष्ठिता गोस्वामिनः श्रीव्रजरत्नलालमहाराजाः । इमेऽपि सुगृहीतनामधेयाः पण्डितप्रकाण्डाः स्वधर्मसंरक्षणे विजयिनो गोस्वामिमण्डले रत्नरूपा एव । नित्यलीलां प्रविष्टेषु तिलकायितश्रीगोवर्धनलालमहाराजेषु श्रीमद्वल्लभाचार्यवंश्यानां गोकुलस्थभट्टाना च वेल्लनाटीयशुद्धाद्वैतवैष्णवसभाया अध्यक्षपदमलङ्कुर्वाणाः, स्वधर्मरक्षणे दत्तचित्ताः, सिद्धपुर-कराचीप्रभृतिनगरेषु शैवदयानन्दीयादिजनसम्मर्दप्रचुरासु सभासु निर्भयं स्वसिद्धान्तं प्रतिपादयन्तो निरीक्ष्यन्ते वैष्णवैरक्षिसौभाग्यरूपतया । एभिश्च पूज्यपादैः स्थापिताः शुद्धाद्वैतमहासभादिसंस्थाः प्रचलन्ति ।

श्रूयते, चात्र सत्सिद्धान्तमार्तण्डयोजने प्रोत्साहकतया गो० श्रीगोकुलाधीशमहाराजानां नामधेयम् । एते हि वेदान्तसिद्धान्तरसिका, भगवत्सेवापरायणा, महानुभावाः, सत्कवयश्च बभूवुः । एभी रचिता वल्लभस्तुतिरत्नावली दृष्टिपथमवतरिता । यस्यां भगवतो मत्स्याद्यवतारैस्तुलितो वल्लभाचार्यावतारः । अत्रैवैतेषां गोकुलाधीशमन्दिरं वर्तते । तत्पीठाधिष्ठिताश्च गो० श्रीमन्नलालमहाराजा विद्यन्ते । तेषा तनुजन्मानो गोकुलनाथमहोदया व्याकरणकाव्यादिषु कृतभूरिपरिश्रमा रासपञ्चाध्यायी-सुबोधिन्यध्येतारश्च ।

एत एव गो० श्रीगोकुलनाथमहाराजाः, श्रीव्रजरत्नलालमहाराजाः, श्रीदीक्षितमहोदयाः, श्रीमन्नलालमहाराजाः, श्रीगोकुलनाथमहोदयाश्च सत्सिद्धान्तमार्तण्डस्यास्य द्वितीयसंस्करणमुद्रापणेऽपि प्रोत्साहकाः । अतर्क्या हि भगवतो लीला । य एवास्य प्रणयने प्रयोजकास्तेषामेव वंशजास्तस्य द्वितीयसंस्करणेऽपि प्रोत्साहकाः । एतेषामेव महताऽनुग्रहेण गोलोकवासिनः श्रेष्ठिनारायणदासस्य गो० वा० श्रेष्ठिजेठानन्दस्य च विश्वस्तैः प्रकाश्यते द्वितीयमिदं संस्करणम् ।

वेदान्तभट्टाचार्यभारतमार्तण्डादिबिरुदावलीसमलङ्कृतानां पण्डितगट्टूलालामहाराजानां सम्पूर्णं विस्तृतं च जीवनचरितं परिश्रमभूयिष्ठेनापि न क्वापि समुपलब्धम् । हन्त भावनाप्रधाने सम्प्रदायेऽस्मिन् वणिग्वृत्तिभूमत्वादेव पण्डितानां महती दुरवस्था दृष्टिपथमवतरति, श्रीहरिरायमहाप्रभुश्रीमत्पुरुषोत्तममहाराजलाल्लूभट्टश्रीकृष्णभट्टप्रभृतीनां समयादारभ्याद्यदिनं यावत्पण्डितानां वैष्णवकृताया दुरवस्थायाः परम्पराप्यनवच्छिन्नतया प्रचलितैव । यद्यपि श्रुतिस्मृतिन्यायसिद्धोऽयं पुष्टिमार्गसम्प्रदायः पदैकमपि, क्षणैकमपि प्रगाढपाण्डित्येन विना न प्रचलति, पूर्वोत्तरमीमांसामर्मस्पृगेव तद्विचारः, श्रौतस्मार्तनित्यनैमित्तिकप्रायश्चित्तकर्मानुष्ठानभूयिष्ठ एवाचारः, तथापि वणिग्व्यापारेऽनु-

त्तीर्णानां—उत्तीर्णानां—ततो निवृत्तानां वा विद्याविद्वेषिणां वसुकामानां वणिजां प्रबन्धकर्तृकतया, विद्यायाः, पुस्तकानां, सरस्वतीभण्डाराणां, विदुषां च दुरवस्था क्षणमपि नात्मानं तिरयति। हन्त! विद्वान्, गोस्वामी वा स्यात्, गोकुलस्थो, मथुरास्थः, सागरस्थो वा स्यात्, अन्यजातीयो ब्राह्मणो वा स्यात्, पण्डितत्वादेव ब्राह्मणत्वादेव च तद्विद्वेषो नयनयोरवतरति। पण्डितप्रकाण्डानामेतेषां भारतमार्तण्डानां जीवनकाल एव तन्नयनयोरवतरन्त्यौ गङ्गायमुने साक्षात्कुर्वन्तो जना अद्यापि विद्यन्ते जगतीतले। अथास्ताचलं प्रस्थितेषु भारतमार्तण्डेषु, तत्सङ्गृहीतवस्तुजातमधिकुर्वाणैर्महानुभावैरपि तज्जीवनचरितं न सङ्गृहीतम्। हन्त! सत्यपि सहस्रावधानसामर्थ्ये, दिवानिशं प्रचलितेऽपि कविताप्रवाहे, सत्यप्यन्त्याक्षरीनियमे न क्वचन तत्सङ्ग्रहः सुरक्षितः। महता प्रयत्नेन सम्पादितोऽय जीवनसङ्क्षेपो न कस्यापि तन्मन्दिरव्यवस्थापकस्य, पुष्टिमार्गीयपण्डितस्य, गोस्वामिनो वा लेखनीतो निःसृतः, परं मध्वसम्प्रदायानुवर्ति "वळे"शास्त्रिणा, शाङ्करमतावलम्बिहीरालालश्रॉफमहोदयानां "विद्वच्चरितपञ्चक"काराणां च लेखनीतः प्रसृतानामेव प्रवाहानामय सङ्ग्रहः। अहो, यत्र सम्प्रदाये लक्षावधिग्रन्थाना कोटातः काशीतश्च क्रयोऽभूत्, यत्र च भाष्यप्रकाशादिसाम्प्रदायिकग्रन्थसंशोद्धू रत्नगोपालपण्डितस्य पाणिगृहीत्याः सकाशात् ग्रन्थसङ्ग्रह क्रीत्वापि तस्यै वराटिकाऽपि न प्रदीयते, तत्र को नाम गट्टूलालस्य जीवनचरितसङ्ग्रथनपरिश्रममुररीकुर्यात्। सम्यगेवावदन् वसन्तरामशास्त्रिणः, यत्, येन हरिरायाः, पुरुषोत्तमाः, गट्टूलालाश्च क्रोशितास्तेनेदानीन्तनाः सत्क्रियन्त इति तु गगनकुसुमायितमेव। भवतु।

इह च ग्रथितं जीवनचरितं हीरालालश्रॉफ—वळेप्रभृतिभिर्निर्दिष्टैः प्रसङ्गैः, मम तातपादानां मुखाच्छ्रुतैः शतावधानादिचमत्कारैः, गट्टूलालशिष्यमाधवजीशास्त्रिकथितैश्च चरितैरेव पूर्णतामेष्यति। अत एवैतेषां महानुभावानामुपकृति संस्मृत्यैव नाटयामि लेखनीम्।

भारतमार्तण्डस्योदयो राजपूतानामण्डले प्रसिद्धतमे कोटाख्यनगरे एकोनविंशतितमवैक्रमशतकसमाप्तौ विंशतितमशतकप्रारम्भे पौषकृष्णद्वादश्यां सोमवारे वेलनाडुपञ्चनद्युपाह्वानां श्रौतस्मार्तकर्मानुष्ठानचतुराणां कुले बभूव। एतेषां पितृचरणाः श्रीघनश्यामशर्माणो विविधविद्यानां पारावारपारदृश्वान एवासन्। माता चास्य जीर्णदुर्ग(जूनागढ)स्थ गो० श्रीव्रजवल्लभजीमहाराजानां तनया "लाडूबेटीजी" सञ्ज्ञका बभूव। जामनगरस्थाः श्री० बाबूरायजीमहाराजाः, सुदामपुरीस्थाः श्रीद्वारकानाथजीमहाराजा, इमे श्रीव्रजवल्लभजीमहाराजाश्चेत्येते त्रयोऽपि सोदरा एव। यैः सौराष्ट्रे पुष्टिमार्गसिद्धान्तः प्रचारितः।

पुरा किल दाक्षिणात्ये जनपदे पुण्यतमे पञ्चनदक्षेत्रे निवसन्तिस्म महापण्डिताः श्रोत्रियाश्चैतेषां पूर्वजाः। मूलपुरुषश्चास्य महापुरुषस्य गोविन्दशर्माऽभवत्, तञ्जापुरनरपतिपुरोहितः। तस्मात्समजनि विश्वविख्यातकीर्तिः सर्वाह्लादकारी "आह्लादभट्टशर्मा", यः

खलु श्रीमत्प्रभुचरणानां "देवका" सञ्ज्ञकां कन्यका परिणिनाय । अयं हि आह्लादभट्टः (अह्लडभट्टो वा) पञ्चनदक्षेत्रे राजपुरोहितो दानाध्यक्षश्च बभूव । तस्य दिगन्तविस्तृतां कीर्तिं श्रुत्वा श्रीमत्प्रभुचरणैराहूतः सन् पौरोहित्यं दानाध्यक्षत्वं च स्वपितृव्याय समर्प्य स्वकुलदैवत गोपाललालं मातर च गृहीत्वोवास गोकुले श्रीमत्प्रभुचरणसन्निधौ । आह्लादभट्टस्य बुद्धिकौशलं भक्तिं च समवलोक्य स्वस्य देवकानाम्नी कनीयसीं कन्यां षोडशशतोत्तरसप्तदशवत्सरे प्रादुर्भूतां प्रददुः श्रीमत्प्रभुचरणाः (१६२३) षोडशशतोत्तरत्रयोविंशतितमे वैक्रमाब्दे । आह्लादभट्टस्य कृष्णरायजीशर्मा, तस्य नरसिंहशर्मा, तस्मान्माधवः, ततो मधुसूदनः, तस्मान्मदनगोपालः, तस्यानिरुद्धः, तस्य व्रजनाथः, तस्मान्मुरलीधरः, तस्माद्गोपीनाथः, तस्यैव घनश्यामभट्टो भारतमार्तण्डस्य जनको बभूवेति वल्लभाचार्यशरणप्राप्ते वंशेऽस्मिन्नेकादशमाः श्रीगट्टूलालमहाभागाः । एतेषा महानुभावाना वृद्धप्रपितामहस्य व्रजनाथशर्मणो ज्येष्ठबन्धू रघुनाथशर्माऽऽसीत् । तस्य पुत्रः पुरुषोत्तमः, तस्य बालमुकुन्दः, तस्य रघुनाथः, तस्य द्वारकानाथः, तस्य दामोदरः, तस्य मन्वालालासञ्ज्ञकः, तस्य पुत्रद्वयं विद्यते सम्प्रति । तयोर्ज्येष्ठो मधुसूदनः, कोटा—मथुरा—नाथद्वार—कामवनादिषूपवसन् गिरिराजाधित्यकायां वसति साम्प्रतम् ।

पञ्चनदीत्यस्याधुनातनं नाम तिरुपादि वर्तते । तत्तु तञ्जावर (Tanjore) नगरसमीपे पञ्चक्रोशपरिमिते स्थाने विद्यते, तत्र कावेरीमहानद्याः पञ्चवृत्तयः सञ्जाता अत एव पञ्चनदीसञ्ज्ञामाप क्षेत्रमिदम् । भारतमार्तण्डाना पूर्वजो मधुसूदनशर्मा, कदाचित् तञ्जावरनृपतिना पौरोहित्यायाकारितः । तत्सहायेन राज्ञा भगवान् यज्ञपुरुष इष्ट बहुदक्षिणैर्यज्ञैः । अथ यज्ञादिकार्ये सम्पन्ने पुनरपि गोकुलागमनमिच्छते मधुसूदनशर्मणे प्रसन्नेन राज्ञा द्रव्यं प्रदातु समारब्धम्, तदा मधुसूदनशर्मणा प्रत्युत्तरितं यन्मया राजप्रतिग्रहो न क्रियते, मयाप्येको यज्ञः कर्तव्योऽस्ति, स तु द्रव्य विना न स्यात्तदर्थं द्रव्यं प्रदेयमिति । पश्चाल्लक्षत्रयपरिमितं द्रव्यं प्रादायि तेन राज्ञा । तद्रक्षणाय मया भवता सह सैन्यं दीयत इति राज्ञोक्ते, रक्षणार्थं मास्तु सैन्यमिति मधुसूदनशर्म्मणा प्रत्युत्तरितम् । तेन क्रुद्धेन राज्ञा परीक्षार्थं गूढरूपेण सेवकाः प्रेषिताः स्तेयकरणाय । मध्ये मार्ग सेवकैस्तैरवरुद्धः पन्था इति ज्ञात्वा स्वमन्त्रसामर्थ्येन केषाञ्चिच्छरीरेषु पट् षट् प्रहाराः कृता इति तत्सामर्थ्यं दृष्ट्वा उर्वरिताः सेवकाः पलाय्य राजसमीपमुपतस्थुर्निवेदयामासुश्च निखिलमपि वृत्तान्तम् । पश्चाद्राजा स्वयमपि तत्र गत्वा क्षमाप्य पुनरपि लक्षत्रयं प्रददौ । ततो मधुसूदनशर्मा द्रव्यजातं गृहीत्वा गोकुलमागत्य कामवने यथाविधि यज्ञं चकार । तत्र सर्वमपि राजद्रव्यं वितरितम् । एतादृशस्य नररत्नस्य वंशे भारतमार्तण्डः समजनीत्यत्र नाश्चर्यावसरः ।

## अस्य बाल्यकालो ग्रन्थविरचनं च

श्रीगट्टूलालमहाभागा बाल्यादारभ्यैव प्रज्ञाचक्षुष्ट्वमापुरिति प्रसिद्धम् । केचन, सूतिकागृह

एव मञ्चमेऽहनि बाह्यदृष्टिलोपोऽस्य जात इति वदन्ति, अपर च पञ्चमे वर्षे, नवमे वा वर्षे शीतलाप्रकोपेनेति । यदा दृष्टिलोपो बभूव तदाऽस्य जननी रुरोद । मातामहेनास्य स्वकन्यायाः सान्त्वनाय कथितमस्य भावि पाण्डित्यं, शास्त्रदक्त्वं, अन्धस्यापि भारत-मार्तण्डत्वं चेति । विश्वासाय च बालस्यास्य जिह्वाया सारस्वतं बीज लिलेख महाप्रतापो वल्लभकुलकमलदिवाकरो गोस्वामी श्रीव्रजवल्लभजीमहाराजो मातामहोऽस्य बालस्य । गच्छता कालेन मातामहस्य वरेण कवित्वमाप नवमे वर्ष एव । अष्टादशवर्षवयस्कस्यास्य पितृचरणसमीप एव वेद-वेदाङ्ग-न्याय-मीमांसादिसम्पूर्णमध्ययनं सम्पन्नम् । अष्टादशवर्षीयो भारतमार्तण्डः पित्राभ्या सममेका तीर्थयात्रा कृतवान्, तदा शीघ्रकवित्वेन प्रथितः । तेषु तेषु तीर्थेषु दर्शनशास्त्रेषु विशेषतः शुद्धाद्वैतसिद्धान्ते शास्त्रार्थेन जितवान्पण्डितमण्डलीम् । एव दिग्विजयं विधायैकविंशतितमे वर्ष एव रुक्मिणीहरणचम्पू-वेदान्तचिन्तामणिप्रभृती-न्ग्रन्थान्निर्ममे प्रज्ञाचक्षुरपि सकलशास्त्रचक्षुर्गट्टूलालः । एतावता कालेन विवाहोऽपि सम्वृत्त एव । पर न किञ्चिदपत्यं समुत्पन्नमिति श्रूयते, कन्यैवैकाऽऽसीदिति च ।

गट्टूलालमहाभागा वदन्ति स्म बहुवारं, यद्वंशस्तु विद्यया जन्मना चेति द्विविधः । यथा, नागोजीभट्टेन परिभाषेन्दुशेखरः, शब्देन्दुशेखरश्चेति द्वौ शेखरौ द्वौ पुत्रौ, लघु-मञ्जूषैत्येका कन्येत्यपत्यत्रयमस्माक विद्यत इति स्वकीयग्रन्थे लिखितम्, तथा, वेदान्त-चिन्तामणिः, सत्सिद्धान्तमार्तण्डः, मारुतशक्तिरिति ग्रन्थत्रयमेवापत्यत्रयम् । वेदान्तचिन्ता-मणिः, सत्सिद्धान्तमार्तण्डश्चेति द्वौ पुत्रौ, मारुतशक्तिरिति कन्यका चैका ।

वेदान्तभट्टाचार्यैर्निर्मितानां ग्रन्थानां नामावलिः सम्पूर्णा नासादिता प्रयत्ने कृतेऽपि । अवगताश्च ग्रन्था इमे—

( १ ) वेदान्तचिन्तामणिः
( २ ) कठोपनिषद्व्याख्या ( श्रूयते अन्या अपि उपनिषद्व्याख्या विरचिता इति )
( ३ ) रुक्मिणीहरणचम्पूः
( ४ ) कृष्णाभिसारकाव्यम्
( ५ ) मारुतशक्तिः
( ६ ) सत्सिद्धान्तमार्तण्डः
( ७ ) वल्लभस्तुतिरत्नावलीटीका
( ८ ) घटखर्परकाव्यटीका

## शास्त्रार्थः, सम्मानप्राप्तिश्च

१ कदाचित् दिल्लीनगरं प्रयातेषु श्रीगट्टूलालमहाभागेषु, लोकोत्तरं पाण्डित्यमाकर्ण्य तत्रत्यैर्नागरीकैः काचन महती सभा समाहूता । यत्र महामहोपाध्यायपदवीधरा महान्तो विद्वांसो राजकर्मकरा हिन्दवो मोहम्मदीया यौरोपीयाश्च जना धनिकाश्च सम्मि-

लिताः । तस्यां सभायां पण्डितप्रवराणां विविधभाषासु, बुद्धिबलादिक्रीडाखर्वनेषु, गणितादिषु च सहस्रावधानादिक निरीक्ष्य सर्वैर्मिलित्वा **"भारतमार्तण्डे"**ति पदेन सम्मानिता विद्वदग्रेसराः पण्डितगट्टूलालमहाभागाः ।

२ एकदा श्रीनाथनिवासिनो वल्लभाचार्यवंश्याः "तिलकायित" पदवाच्या गोस्वामिनः श्रीगोवर्धनलालजिन्महाराजा मुम्बापुर्यां समायाताः । तदा वेदान्तचिन्तामणिप्रभृतयो बहवो ग्रन्था एभिर्महानुभावै रचिता इति ज्ञात्वा माधवबागसभाया ते **"वेदान्तभट्टाचार्ये"**ति पदेन पूजितवन्तः ।

३ एकदा तु पुण्यपत्तने पण्डितप्रवरा इमे समाजग्मुः । तदा माध्वसम्प्रदायानुयायिनो जनार्दनाचार्यास्तत्रासन्, तैर्महती सभा कृता, तत्र पण्डितैरेभिः शीघ्रकवित्वं प्रदर्शितं, यथैव घटिकामात्रेण कालेन शताधिकाः श्लोका व्यरचि ।

४ यदा जगन्नाथयात्रा कृता तदा नागपुरे, सम्बलपुरे, कटकनगरे, जगन्नाथपुर्यां, कलिकातानगरे च शतावधानप्रयोगाः कृताः । कलकत्तानगरे **"पण्डितचक्रचूडामणि"**रितिपदं समुपलब्धम् ।

## महामहोपाध्यायपदविरोधः

मुम्बापुर्यां प्रेतानां दहनं यन्त्रे कर्तव्यमिति राज्ञा नियमितं, तदा धर्मविरुद्धमेतत्कार्यं राज्ञ इति दृष्ट्वा धर्मशास्त्रानुसारेण विरोधः कृत इति कृत्वा महामहोपाध्यायपदमवरुद्धम् ।

## मुम्बईस्थमानपत्रम्

श्रीमान्परमेश्वरः कृपालुर्वागादीन्द्रियाद्यगोचरोऽपि प्रारब्धकर्मफलदानेन प्राणिनामनुग्रहाय जगद्रूपेणाविर्भूय सर्वानर्थनिवारणहेतून् स्वनिःश्वासभूतान्वेदान् प्रथमं हिरण्यगर्भं प्रत्युपदिदेश। ततो मन्दमत्यनुजिघृक्षया स्वोपदिष्टवेदार्थमेवोपबृंहयितुं स्वयमेव मनुव्यासजैमिनिप्रभृतिमुनिरूपेणाविर्भूय धर्मप्रकाशनहेतून् स्मृतिपुराणादीन् रचयामास। एवमपि कलिमालिन्यवशाज्ज्ञानदुर्बलाञ्जनानालोच्य स्मृत्याद्युपबृंहितवेदार्थतत्त्वमेव स्फुटीकर्तुं तत्तदाचार्यरूपेणावतीर्य जनानन्वग्रहीत्। ततोऽप्यतिघोरकलिकालवशात्तत्तदुक्तिष्वपि नानाविधकुतर्कवशेनाविश्वसतामसद्व्यापारविपरीतमतीनां जनानां मनसि याथार्थ्येन तत्तात्पर्यं प्रकाशयितुमार्यसुधर्मोदयसभायां पक्षे पक्षे धर्मतत्त्वोपदेशेन बुभुत्सूनां मतिमालिन्यं निराकर्तुं किरणा धूतपापा चेत्याद्युक्तपञ्चनदीवज्जनचित्तानां शोधकत्वेन धर्मतत्त्वोत्तेजकसंस्कृतगवीनां वर्धकत्वेन चान्वर्थितनामोपनामानः **पञ्चनदिगोवर्धनशर्माणः** सभासदस्तन्मनोनुरञ्जनेनानुगृह्णन्ति। ये च स्वस्वधर्मं बुभुत्सुभिः स्वानर्थनिवृत्तये सुरैर्हरिरिव प्रतिदिनमभ्यर्थ्यन्ते, याश्च वाग्देवता स्वयमेवागत्य ब्राह्मणमिवावलम्बते, यैश्च विद्यासवितुः स्वसवितुर्मुखादधिगतसकलविद्यैः श्रीयुक्त**लाडूबेटीघनश्याम**भट्टाभिधानौ स्वमातापितरौ कृतबहुतपसौ वासुदेवेन देवकीवसुदेवाविव परं समतोष्येताम्। येभ्यो निर्गता वाचः सर्वात्मना सुजनानानन्दयन्ति। येषां च सकलशास्त्रहृदयज्ञातृत्वमखिलबुधैरभिनन्द्यते। येषु विलक्षणम्वदत्वं वदान्यत्वमखिलजनमनोहारिशीघ्रकविताशक्तिः सौजन्यं सदाचारसम्पत्तिश्च विराजन्ते। तादृशेभ्यो भवद्भ्य एतदखिलं वृत्तमनुभूयामितं मोदमादधानाः सर्वे वयमविरतसहवाससुखविच्छित्तिपरिहाराशया यथाशक्ति द्रव्यविश्राणनद्वारा साहाय्यं कुर्वाणा अद्य यत्किंचिदुपचितं वित्तं वितीर्य बहुसत्कारसूचकमिदं मानपत्रं समर्पयामः। एतच्च भवद्गुणवर्णनापर्याप्तमपि केवलमस्मास्वनुकम्पयाङ्गीकुर्वन्त्वत्रभवन्तो भवन्त इति विज्ञप्तयः समुल्लसन्तुतराम्।

मुम्बापुर्यां माधवारामे (माधवबागमध्ये) खाकाशवसुवसुधामिते १८०१ शकाब्दे चैत्रबहुलचतुर्दश्यां रविवासरान्वितायामर्पितमिदम्।

वरजीवनदास माधवदास
अध्यक्ष.

वन्दरावनदास पुरुषोत्तमदास.
त्रिभुवनदास वरजीवनदास
चतुर्भुज मुरारजी.
गोकुळदास जगमोहनदास.
ऑनररी सेक्रेटरी.



## कलिकातास्थं मानपत्रम्

श्रीमन्तः सकलजनप्रशंसितसौजन्यवदान्यादिगुणरत्नरत्नाकरा अनेकदेशवास्तव्यजनजेगीयमानयशस्तोमनिकराः श्रीमद्वल्लभाचार्यप्रवर्तिताचारविचारचातुरीधुरीणार्यजनहृत्पुण्डरीकप्रभाकरा वेदान्तभट्टाचार्याशुकवीश्वरेत्याद्यनेकोपमालङ्कृताः पाण्डित्यगुणगणगुम्फिताः स्वाधिष्ठानातिशयमुम्बानगरीशोभाविशेषा भवन्तः पञ्चनदिश्रीगट्टूलालमहोदयाः समुपेत्यात्र श्रीजगन्नाथतीर्थयात्राप्रसङ्गेनात्रत्याञ्छिष्टान् विदुषश्च स्वातमनः शतावधानितां यथार्थयन्तोऽसाधारणस्मृतिशक्तिपरिचायकेनापरिचितास्वनेकभाषासु विविधावधानप्रदर्शनेन सभीक्षकजनाभिलषितविषयानुसारिसमस्यापूर्तिपाण्डित्येन पञ्चदशपलाभ्यन्तर एव पञ्चविंशतिश्लोकनिर्माणनैपुण्येन साङ्गवेददर्शनधर्मशास्त्रव्याकरणादिविविधविद्याविवेकशक्तिसंयुक्तत्वेन विविधालङ्कारालंकृतकाव्यप्रणयनेन विनयादिगुणगणगरिम्णा च भृशं भृशं सन्तोषयन्ति स्मेति। विशेषतश्चाबाल्यान्धाना भवतामेष उत्कर्षप्रकर्षोऽतीवास्माकं विस्मयावहः कौतुकावहश्चेत्येतदभिज्ञानभूतमभिनन्दनपत्रमदः श्रीमद्भ्यः सबहुमान समर्प्यतेऽस्माभिरिति शम् ॥=॥

सौराश्विनस्य चतुर्विंशतितमे दिने ॥ सम्वत् १९४७। कलिकाताराजधान्याम् ।

महामहोपाध्यायविद्यारत्नोपाधिकेन श्रीभुवनमोहनशर्मणा—
महामहोपाध्यायन्यायरत्नोपाधिकश्रीराखालदासदेवशर्मणा—
तर्कवागीशोपाधिकश्रीकामाख्यानाथशर्मणा—
स्मृतिरत्नोपाधिकेन श्रीमधुसूदनशर्मणा—
श्रीउपेन्द्रमोहनशर्मगोस्वामिना—
महामहोपाध्यायश्रीदीनबन्धुदेवशर्मणा—
महामहोपाध्यायन्यायरत्नोपनामकेन श्रीमहेशचन्द्रशर्मणा—सी. आय्. ई.
श्रीगोविन्दशास्त्रिणा—
श्रीचन्द्रकान्तशर्मणा—
श्रीसदानन्दमिश्रेण—
श्रीरामेन्द्रन्यायवागीशभट्टपल्लिनिवासी—
महाराजाबहादुरठाकुरोपाधिकसारश्रीयतीन्द्रमोहनशर्मणा—के. सी. एस्. ई.
राजा श्रीप्यारीमोहनमुखोपाध्याय—सी. एस्. आई.

राजा सर श्रीसौरीन्द्रमोहनठाकुर—सी. आई. ई. इत्यादि—
मुखोपाध्यायोपाधिकश्रीशिवनारायणशर्मा
श्रीविधुभूषणमुखोपाध्यायश्रीरामविहारीशर्मा—
श्रीमधुसूदनशर्मा स्मृतिरत्नोपाधिकभट्टपल्लिनिवासी—
श्रीहृषीकेशशास्त्री—
विद्यारत्नोपाधिकश्रीमहेन्द्रनाथशर्मगोस्वामिना—
न्यायरत्नोपाधिकश्रीराजकुमारशर्माणः—
बाबू श्रीदामोदरदासवर्मा—
राजा श्रीराजेन्द्रनारायणदेवबहादुर—
राजा श्रीराजेन्द्रलालमित्र, सी. आई. ई. एस्., एल्. एल्. डी.
बाबु श्रीगिरीन्द्रचन्द्रघोषस्य—
बाबु श्रीगिरीशचन्द्रदास रायबहादुर—
बाबु श्रीरमानाथघोषस्य—
बाबु श्रीनन्दलालवसु—

## बुन्दीश्वरदत्तमानपत्रम्

श्रीहरिः

॥ श्रीमन्महाराजाधिराजमहारावराजेत्यादिपदवीशोभमानैर्बुन्दीश्वर-
श्री १०८ श्रीरघुवीरसिंहवर्मभिर्वितीर्णमभिनन्दनपत्रम् ॥

श्रीरङ्गेशचरणाब्ज-
चञ्चरीकीकृतचित्तमहाराजा-
ऽधिराजमहारावराजाख्य-
श्रीरघुवीरसिंहस्य मुद्रा
स० १९४२.

अयि पञ्चनदीत्युपनामकाः समाजद्वयलब्धभारतमार्तण्डवेदान्तभट्टाचार्येतिविशेषणद्वयाः श्रीगोवर्धनशर्माणो गट्टूलालेतिप्रसिद्धनाम्ना व्यवह्रियमाणाः कार्यप्रसङ्गेनैतद्देशसौभाग्यमाविष्कुर्वतां भवतां यशःपुण्डरीकं बुन्दीजनताकर्णावतंसतामयासीत् । अथ तदाकर्णितवद्भिरस्मत्सभ्यैर्वयमपि शतावधानादिकौशलसाक्षात्कारोत्सुकचेतसोऽकारिष्महि । तदनु च कोटातः स्वदेशोद्देश्यकप्रस्थानानेहसि बुन्दीमासेदिवद्भिरस्मदास्थानमुपेत्य श्रुतचरादप्यधिकं कौशलमन्वभाव्यत । तत्र च सर्वेन्द्रियाणि श्रवणैकरूप्यतां निनीषत्सु सभ्येषु संस्कृताद्यनेकभाषाविषयकशताधिकावधाने, प्रच्छकजनोदीरितान्योन्यासम्बद्धार्थकपादत्रयस्य तदभिलषितवर्ण्यविषयैकपादेन झटिति समस्यापूरणे, त्वरितं श्लिष्टकाव्यनिर्माणे घटीतुर्यांशकाल एव पञ्चविंशतिश्लोकग्रथने, तत्कालनिर्दिष्टयोर्मेघनादकंसवधाख्यानयोः श्लेषेण सत्वरं निर्माणे, षड्दर्शनीतत्त्वप्रदर्शनादौ चानल्पा वैज्ञानिकतां प्रदर्श्य विनयभूम्ना च सा परां कोटिमनायि । ततश्चाबाल्यादपरिकलितबाह्यदशामप्येतादृशीमन्तर्दशमवगत्यातिविस्मयमोदमेदुरमनसो वयमेतदभिनन्दनपत्रं गौरवाभिज्ञानभूतां रजतयष्टिं चार्पयामः ॥ ऊर्जासितसप्तम्यां भौमे सम्वत् १९५०

## नसीराबादसनातनधर्मसभामानपत्रम्

विदित हो कि, इस नगरके निवासियों की अत्यन्त अभिलाषा तथा भक्ति देखकर यहां की सनातनधर्मसभाने श्रीमान् महाराजाधिराज श्रीमान् भारतमार्तण्ड पण्डितवर श्रीयुत १०८ श्रीगट्टूलालाजी महाराज को निमन्त्रणपत्र भेजा था, और एक सभ्यजन को श्रीमान् की सेवामें प्रेरित किया तो श्रीमान् ने उक्त निमन्त्रणपत्र को ग्रहण किया, और ता. २८ मई सन् १८९५ की सन्ध्या की रेल में पधार के इस अपवित्र भूमि को पवित्र किया । स्टेशनपर नगरवासी अनुमानतः एक सौ बडे २ रईस श्रीमान् के स्वागत को गये थे । वहा से चौपैया बग्घीमे श्रीमान् को विराजमान करके शहर में लाये और उसी दिवस सन्ध्या को श्रीविहारीजी के मन्दिरमे जो बहुत बडा है सभा हुई । श्रोता गणों से मन्दिर पूरित हो गया था । श्रीमान् ने धर्म विषय पर जो अपूर्व व्याख्यान दिया, कि जैसा, हमलोगोंने आज तक कभी नहीं सुना था । दूसरे दिन सरकारी बागमें सभा हुई, जिसमे बडे २ अंग्रेज महाशय यथा, जनरल, करनल, कैप्टन, और लेफ्टिनेंट साहिब बहादुर और मौलवी मुसलमान और नगर के सैंकडों धर्मावलम्बी और अजमेर के बडे २ नामधारी आर्यसमाजी पधारे थे । प्रथम जर्मन, फ्रांस, अंग्रेजी, संस्कृत, नागरी, मरहटी, आदि अनेक भाषाओंमें अवधान हुआ, जिसको सुनकर लोग अचंभेमें आगये । अंग्रेज महाशय ताली बजाते २ और वाह २ कहते थक गये और नगरवासियों के आनन्दका तो पारावार नहीं था । श्रीमान् की स्मरणशक्ति की प्रशंसा जहां तक की जाय थोडी है । जनरल साहिब तथा मैजिस्ट्रेट साहिबोंने बडे उत्तम २ प्रशंसापत्र श्रीमान्जीको निवेदन किये हैं । तत्पश्चात् मूर्तिमण्डन, श्राद्ध, तर्पण, तथा तीर्थस्नान पर अति आश्चर्य युक्त व्याख्यान दिये । व्याख्यान क्या थे मानों हमलोगोंके हृदयमें अमृतरूपी वर्षा करते थे । व्याख्यानके पश्चात् श्रीमान् ने फर्माया कि यदि किसी को कुछ शंका होवे तो प्रश्न करे, परन्तु किसी ने भी कुछ नहीं पूछा । तत्पश्चात् सभा विसर्जन हुई । हम सहृदय निवेदन करते हैं कि हमने आजतक ऐसा न तो अपूर्व व्याख्यान सुनाथा, और न ऐसी स्मरणशक्ति किसी में देखी थी । आप इस समय इस कलिकालमें धर्मके बडे रक्षक हैं । आपका आह्निक कर्म देख कर हम चकित हो रहे हैं । आपकी स्मरणशक्ति और व्याख्यान देनेकी शक्ति अपूर्व है । अब इस पत्रको पूर्ण करके श्रीमान् से निवेदन करते हैं, कि, यहा की सनातनधर्मसभा पर पूर्ण कृपादृष्टि बनी रहे ॥ शुभम् ॥

मिति आषाढ कृष्ण दशमी
सम्वत् १९५२ ता. २७
जून सन् १८९५ चन्द्रवार
सनातनधर्मसभा नसीरावाद
( राजपूताना )

भवानी प्रसाद
प्रधानमन्त्री

छागालाल
मन्त्री.

## शाहपुरस्थमानपत्रम्

॥ श्रीरामजी ॥

श्रीमान्भारतमार्तण्ड धर्मप्रभाकर वेदान्तभट्टाचार्य आशुकवीर भट्टजीमहाराजश्री ५ श्री पचनदी गट्टूलालाजी महाराज की सेवामें

हम सर्व सनातनधर्मावलम्बी शाहपुरानिवासी अत्यन्तहर्ष और विनय पूर्वक आप श्रीमान्का धन्यवाद करते हैं, और अपने मनका वृत्तान्त प्रगट करते हैं कि आपश्रीमान्के यहाँ पधारने से और हम सब को धर्मोपदेश करने से जो आनन्द और उपकार धर्मके विषयमे आप श्रीमान्से हम को हुआ है उसके लिए जितना धन्यवाद और प्रशंसा आप श्रीमान् की हम करें बहुत थोडी है। विशेष करके हम इसकेलिए आप श्रीमान् का जियादहतर धन्यवाद करते है कि हमारे लिये आप श्रीमान्ने परिश्रम उठाकर यहाँ पधारके हम सबकी इस कलियुगमें अन्य धर्मों से ग्रसित हुओंकी रक्षा की और जो सशय नवीन प्रचलित धर्मों से हमलोगोंके मनमें अल्पकालसे प्राप्त होने लगेथे सर्व आप श्रीमान्ने मिटाये। मानो हमारे धर्मरूपी जहाजडूबते हुयेको आप श्रीमान्ने उभारा। जिसके पटलमें सर्व शक्तिमान् सर्वज्ञ सर्वव्यापी घटघटान्तर्यामी श्रीगोवर्धनधारीसे आप श्रीमान्के लिये हम सब सच्ची भक्ति और प्रेमके साथ प्रार्थना करते हैं कि आप श्रीमान् महात्मा को चिरकालतक इस ससारमे विद्यमान रखकर सब प्रकार धर्मके विषयमे आप श्रीमान् को दिग्विजयकरे कि जिस से सनातनधर्म की प्रतिदिन उन्नति होवै। शुभ मिती पौष कृष्णा ३ स. १८४९

भोलानाथदीवानाश्यास्तशाहपुरा
लाला बिहारीलाल
स्हाफुलचन्द चोरज
द. पं श्रीकृष्ण
द मागीलालतोरणीवाल
द. पावावहजरीसा
द. जगन्नाथ व्यीसका
द. फोजमलवीराणी
दा छोटेलाल पंचोली
दा रमनाथचेचाड़ीका
दा मगनीरामतोसणीबालक
द. रामबीलाससारडाका
द. रामचन्द रेगिया
द. जीवणरामवेटडाका
दसकतसोबगसलुकाफादार
द घुलीराम प्रगदपाचेका
द. रुगनाथ कोठरी
द. व्यास माधोलाल
द. सिंहवी किसनसिंह
द घुलमल नाहार
द बदरीलाल मुदडा
द व्यासदद्मतका
द. भोमसिंगका
द. व्यास फलतेलाल
द म्होताअमरसीघ
द. हजरीमन्नवीप्रजी
द. स्हाजगननाथतोरणीवाल
हस्ताक्षर कृष्णलाल कायस्थबाल
द. स्हाएकलीगदालतोरणीवाल
द. बकः बरजरागीत्स्हानवाल
द रामरतनाधनगरप्रव
द हरालजीपवालालज्जी
द श्योदात सिंहबुलजी

## काशीशास्त्रार्थः

अथ कदाचिद्गोवर्धनोद्धरणधीरचरणकमलमकरन्दलुब्धमधुपायमानमानसैः श्रीमन्मुकुन्दरायदर्शनकृतमतिभिः श्रीमद्गोस्वामितिलकैः श्रीमद्गोवर्धनलालजिन्महाराजैः श्रीमदाचार्यवंशमणिभिः, विश्वेश्वरसाक्षितया पत्रावलम्बनकृतविश्वेश्वरपुरविजयानां श्रीमदाचार्यचरणानामाद्यनिवासस्थानदर्शनोत्सुकैः काशीयात्रार्थं कृतसङ्कल्पैः प्रार्थिताः श्रीगट्टूलालमहाभागा भारतमार्तण्डाः सहागमनाय । श्रीतिलकायितमहाराजमुखात्काशीयात्रानिमित्त निशम्य परमप्रमोदमुपगता भारतमार्तण्डा अपि । अथ शुभे मुहूर्ते राजराजोचितेन छत्रचामरवेत्रधारिप्रतीहारिसचिवसेनापतिप्रहरिकाङ्गरक्षकादिनिकुरम्बेण सम महता सरम्भेण प्रस्थिताः श्रीतिलकायितगोवर्धनलालगोस्वामिमहाराजाः, शिष्यगणेन पुस्तकसमूहेन बूँदीनरेशप्रदत्तराजतयष्टिधारिणा परिवृताश्च गट्टूलालपण्डितेन्द्राः । एकतो राजराजोचिताटोपेनाचार्यवंशदिनमणिरितरतश्च वसिष्ठविश्वामित्रपराशरादिमुनिभिरुपमिता कविताकमनीयमूर्तिः पुरुषाकारा सुरसरस्वती भारतदिनमणिरिति चकितचकितमालोकयन्तिस्म नाथद्वारीयाः प्रजाः । अथ पुष्करमथुराप्रयागादिपुण्यक्षेत्रेषु विरचितविद्वज्जनसत्काराः स्वीकृतवैष्णववृन्दसत्काराश्च तिलकायितमहाराजाः, शतावधानादिचमत्कारचकितान् पण्डितान् कुर्वन्तो गट्टूलालमहाराजाश्च गङ्गाया उपकण्ठ विन्ध्याद्रेश्चाधित्यकायां चरणाद्रिसञ्ज्ञं श्रीमत्प्रभुचरणप्राकट्यस्थानमाजग्मुः । निसर्गरमणीयं पूर्वापराशयोर्विकचसारसपरागपाण्डुरीकृतसलिलसंशोभिसरोवराभ्या मुनिजनाश्रमस्मरणहेतुभूतं तमालतालाम्रकदम्बपनसादिवृक्षराजिरञ्जित हसकारण्डवपुंस्कोकिलादिपतत्रिभिरावृत्तं मालतीमल्लिकाजातिचम्पकाशोकपुन्नागादिकुसुमनिकरसौरभसुरभित श्रीमत्प्रभुचरणप्रादुर्भावस्थलमालोक्य प्रमुदितमानसा बभूवुः श्रीमद्गोवर्धनलालमहाराजाः श्रीगट्टूलालमहाराजाश्च । तत्र श्रीजीवनलालजीमहाराजविनिर्मिते सकलर्तुसुखसामग्रीसमन्विते महासौधे द्वित्रिदिनान्युषित्वा श्रीमन्महाप्रभूणा तदङ्के विराजमानानां श्रीमत्प्रभुचरणाना च सेवाचरणस्पर्शादिना कृतार्थतां समनुभूय काशी प्रयाता गट्टूलालद्वितीयाः श्रीगोवर्धनलालजिन्महाराजाः । अथ श्रुते वाराणसेयैर्वैष्णवैः पण्डितैश्च तिलकायितमहाराजानां श्रीगट्टूलालमहाराजानां च शुभागमने समीपमुपतस्थुस्तेषा सत्काराय विविधोपायनपाणयो वैष्णवाः । गोपालमन्दिराधीशैर्जीवनलालमहाराजैश्च महामहोपाध्यायदामोदरशास्त्रिरामशास्त्रिजयरामशास्त्रिगौरीनाथदीक्षितसप्तर्षिरमानाथपण्डितादिभिर्भारतेन्दुहरिश्चन्द्ररायलल्लनजीराजामोतीचन्दश्रेष्ठिश्यामदासादिवैष्णवैश्च समावृतैः सत्कृता मातुर्भागिनेया श्रीगोवर्धनलालमहाराजाः मातृसम्बन्धेन जायासम्बन्धेन च मातुलाः श्रीगट्टूलालमहाराजाश्च नगरोपकण्ठस्थिते मुकुन्दबागगोपालबागेतिप्रथितोद्याने । प्रविष्टाश्च वाराणसी मृदङ्गतालध्वनिभिर्गीयमानश्रीमदाचार्यवंशकीर्तनैः श्रीमन्महाप्रभूणा जयघोषैश्च समाह्लादितमानसाश्चतुस्तुरङ्गमयोजितेन कलधौतपुष्यरथेन श्रीतिलकायितमहाराजाः, शिबिकया च श्रीगट्टूलालमहाराजाः । मध्ये मार्ग वैष्णवैर्महाधनिकैश्च माल्यार्पणादिना चरणस्पर्शनादिनाऽभिनन्दितानभिवन्दितांश्च गोस्वामिमहा-

राजान्निरीक्षमाणा नागरिका विचित्रवसनाभरणभूषिता वातायनगवाक्षाट्टालिकादिस्थिता ललनाश्च तिलकायितमहाराजाना नगरप्रवेशनोत्सवसंरम्भं चकितनयनैरालोकयन्त्यः कुसुमान्यवाकिरन् । आम्रपल्लवतोरणैश्चित्रपताकादिभिश्च समलङ्कृतान् गृहानवलोकयन्तो महाराजाः प्रविविशुः श्रीगोपाललालमन्दिरम् । अथ विदिते श्रीगोवर्धनलालमहाराजानां गट्टूलालमहाराजानां च विश्वनाथपुरागमने सबहुमानं सादरं समुचितवसनाभरणभूषितास्ताम्बूलपरिपूर्णमुखमण्डला वाराणसेयाः समागमन्महाराजचरणानां दर्शनाय । एकतो वैष्णवानां समुद्वेलितो महाराजदर्शनोत्सुकः सङ्घट्टः, इतरतश्च श्यामाबेटीजीनां दौहित्रस्य सुकुमारमुखचन्द्रदर्शनमनोरथो जरठतया रजतायमानकबरीकः शुभ्रोत्तरीयावगुण्ठितगात्रपटलो मातुः सहचरीगणः, अपरतश्च साक्षान्निकुञ्जनायकस्य मुख्यपीठाधीशस्य मन्मथादपि सुन्दरस्य सुकुमारवपुषः सौन्दर्यसुधामाधुरीं नयनपुटैः पेपीयमानो बहुमूल्यरत्नाभरणभूषितचरणावलम्बिविचित्रदुकूलोत्तरीयः सहासलीलेक्षणविभ्रमभ्रुवा निर्निमेषमपि चकितमालोकयन्मानिनीगणश्च गोपालमन्दिरस्य सोपानेष्वारोहयन्नवरोहयंश्च व्यलोकयत् । इतश्च गोवर्धनपूजाप्राङ्गणे गजपोलिकायां जगन्मोहने च शिष्यसमूहैरावृतास्तालपत्रव्यजनपाणयोंऽसावलम्बितोत्तरीयाः भस्मरुद्राक्षाभरणभूषिताः पण्डिताश्च तमालपत्रपरिपूरितमुखमण्डला भारतमार्तण्डदर्शनाय समागमन् । रत्नवस्त्राद्यापणिका महार्घवस्त्राणि स्कन्धे निधाय, पाणिभ्या हीरकादिजटितानामाभरणानां च पेटिकाः समादाय तिलकायितमहाराजाना पुरत उपतस्थुः । मन्दिरे च वीणामृदङ्गतालतन्त्रीवादनपुरःसरं कृष्णलीलां गायन्तो वैष्णवाः, सौवर्णयष्टिं धारयन् वेत्रिकः, दर्शकसमूहं चैलाघातेन त्वरयन् 'झापटिया' सञ्ज्ञकः, ताम्बूलचर्वणं चर्वयन् सेवकगणश्चेतस्ततोपसरन्, श्रीमन्मुकुन्दरायगोपाललालयोः सौवर्णप्रेङ्खान्दोलनदर्शनं कृत्वा जय–जयेति घोषेणेतस्ततोऽपसरन् दर्शकसमूहश्च नेत्रयोरवततार । श्यामघटा–पुष्पान्दोलन–वासन्तिकोत्सव–जलविहारादिकैर्मनोरथैः सम्वत्सरसाध्या समारब्धा श्रीमन्मुकुन्दरायाणामुत्सवपरम्परा ।

इतश्च गोवर्धनपूजाप्राङ्गणे विश्वविख्यातवैदुषीविभवविभूषिताः सकलदर्शनपारावारपारीणास्त्वरितकवितानिर्माणकर्मठाः शतावधानिनः प्रज्ञाचक्षुषो भारतमार्तण्डेत्यन्वर्थमुपाधि वहन्तः श्रीगट्टूलालमहोदयाः सहामितैः शिष्यैर्विराजन्तेस्म विद्वज्जनसभायां शतावधानचातुरीप्रदर्शनोत्सुकाः । सभायामस्यां मध्ये महति कलधौतसिंहासने श्रीजीवनलालद्वितीयाः श्रीमन्तो गोस्वामितिलकायितमहाराजाः पण्डितैरभिनन्दिताश्च शुशुभिरे । भारतेन्दुहरिश्चन्द्रमहाभागादयोऽवतस्थिरे महाराजचरणान्तिकम् । दिगन्तविजयिनां भारतमार्तण्डानां वैदुष्यमाकर्ण्य काशिकायाश्चिरात्प्रसिद्धतम गौरव रिरक्षयिषन्तस्तदानीन्तना महान्तः पण्डिता वादकण्डूलमुखमण्डलाः शतशः साग्रहं समाजग्मुः । दर्शकाश्चेतरेऽपि सहस्रशः सङ्गता भारतमार्तण्डानां प्रथितप्रभावं निशम्य काशिकागौरवं माभाङ्क्षीदिति समाकुलचेतसो विच्छायवदनाः पण्डितमण्डलीं सादर सबहुमानं च पश्यन्तः परस्पर मन्दस्वरेण भारतमार्तण्डानङ्गुल्या निर्दिशन्तः कौतुहलिनः समुपतस्थुः ।

अथ, भारतमार्तण्डैरारब्धे निजशतावधानप्रदर्शने सर्वेऽपि पण्डिता दर्शकाश्च स्तब्धकर्णास्तदेकदत्तावधाना अभूवन्। विस्मिता च सा समस्ता महती सभा समीक्ष्य तेषां समकाल शतावधानचातुरीं प्रशशंस च साधुवादपुरः सरम्।

अथ प्रवृत्ते विद्वद्विनोदे, प्रचलितासु दार्शनिककथासु, प्रस्तुते चात्मानात्मविचारे, पण्डितपरिषदुपक्षिप्तान् पूर्वपक्षान् सद्यः समुत्तरयति भारतमार्तण्डे, भीतविस्मितसमस्तजनसमाजे, काशिकागौरवरक्षाबद्धकङ्कणाः केचन पण्डितप्रकाण्डाः पुरतः समुपसरन्तो, भारतमार्तण्डान् वादकथायै समाजुहुवुः। एकतः काशीस्थपण्डितप्रकाण्डानां सभ्यानां तुमुलः साधुवादः प्रसृतोऽपरतश्च वैष्णवाग्रेसरैः कृतो भारतमार्तण्डजयघोषः श्रीवल्लभाचार्यमहाप्रभूणा विजयघोषश्च गगनविभेदन चकार। केचन द्वित्रिभिरेव युक्तिभिः, केचन पञ्चषैः क्षणैः, केचन च अष्टभिर्दशभिर्वा कोटिभिर्निरुत्तरतां समाश्लिषन्। अथ, काशिकागौरवं माभाङ्क्षीदिति मनसि विचार्य प्रोचुः श्रीमन्तो भारतमार्तण्डाः, अहो, अध्यापनाध्वरदीक्षादीक्षिता विद्वद्वर्याः, नायमदीयो विजयः, अपि तु सुरसरस्वत्या एवेति, अत्र हि विश्वेश्वरो विजयते, न केनापि मानुषेण जेयः सः। काशी च अजेयैव। नाहं विजयपत्राकाङ्क्षाया समागतः, प्रत्युत विश्वेश्वरदर्शनायैव। मया समुपक्षिप्यते हीयं समस्या—अन्यक्षेत्रस्थैः पण्डितैर्दुष्पूरणीया भवतु येन केनापि पूरणीया, येन काशिकागौरवमच्छिद्रमेव भविष्यति। समाकर्ण्य भारतमार्तण्डस्योत्तर पण्डितैः साधुवादेन पूजितो भारतमार्तण्डः। अथ महामहोपाध्याया धीराग्रेसराः श्रीगङ्गाधरशास्त्रिणः साक्षाद्गङ्गाधर इव भारतमार्तण्डाना पुरतः समुपसृत्य प्रोचुः, एषोऽस्मि गुरुप्रसादात्सर्वदा सन्नद्धो दुष्पूरसमस्यासहस्रमपि सद्यः पूरयितुमिति। धीरगभीरामिमां वाणीं निशम्य भारतमार्तण्डैः समुपक्षिप्तेयं समस्या वर्णक्रमानुसारिणी—

**"बभौ मयूरो लवशेषसिंहः"** इति।

समस्यामिमां श्रुत्वा पण्डितौघः क्षण निश्चेष्टतामाप। अथ गुरुन् विश्वेश्वरं च स्मृत्वा, पञ्चषैः क्षणैर्जगदुः श्रीमन्तो गङ्गाधरशास्त्रिणः—

[1]अनेकवर्णक्रमरीतियुक्तः
कखागघाङच्छजझाञटौठः।

---

१ सपरिकरशिवस्य वाहनेषु कतमो मोदते इत्येव पृष्ट कोऽप्युत्तरयति—**अनेकेति**। अथ निदाघकालोत्तरम्, अनेकवर्णाना क्रमरीत्या युक्त पीतनीलादिविविधवर्णविशिष्ट कखागघाङ् कखेन हासेन अनायासेनेति यावत्, अङ्का कुटिलगामिना सर्पाणाम्, अघ भक्षणरूपमञ्चति पूजयत्याद्रियत इति तादृश अच्छ शोभन जातो [1]झो भूषणरूपो यस्य सोऽच्छजझ [2]ञाना विरावाणा [3]ट ध्वनिं स्वरमाधुर्येणौठति प्रतिहन्ति तिरस्करोति यस्तथाभूत [4]डण्ढर्णोऽचपल लवौ न्यूनौ नानावर्णवत्त्वादिगुणे शेषसिंहौ यस्मात्तादृक् मयूरोऽपरपक्षिहंसादिवत् तैः क्षीणता खेदमिति यावत्, न दधौ, प्रत्युत पम्फुल्ल् सन् प्रमोदातिशय भजमानो बभौ।

---

१ झकारश्च तथा वायौ नेपथ्ये समुदाहृत। २ ञकारो गायने प्रोक्त। ३ टो ध्वनौ च प्रकीर्तित। ४ डण्ढणश्चपलो मूर्ख इति रत्नदर्पण। ५ उपक्षयार्थकात्तस्य तेर्भावे क्विपि पुस्त्वाद्यविवक्षाप्रयुक्ते लिङ्गसामान्ये क्लीबत्वेऽमोलुकि। यङ्लुगन्तात्ते- कर्तरि क्विपि।

अडण्ढणस्तोऽथ दधौ न पम्फुल्
"बभौ मयूरो लवशेषसिंहः ॥"

विस्मितसकलजनाननसहस्रेभ्यः सद्य एव साधुवादो निर्जगाम । गुणग्रहिलमानसाः पण्डितेन्द्रा भारतमार्तण्डा अपि भूरिशः शास्त्रिवरान्प्रशशंसुः । अथ तिलकायितमहाराजैश्च गन्धमाल्यादिना सम्पूज्य पण्डितेभ्यः शतं शतं दक्षिणां प्रदाय महावस्त्रैः सुवर्णकङ्कणादिभिश्च सत्कृताः श्रीमन्तो गङ्गाधरशास्त्रिमहामहोपाध्यायाः ।

शास्त्रचर्चयाऽनया सञ्जातायां मैत्र्यां तैलङ्गत्वात्साजात्येन च श्रीगङ्गाधरशास्त्रिप्रार्थनया तत्सोदरेभ्यो रामशास्त्रिभ्यः अथर्वणवेदोक्तं प्रत्यङ्गिरासूक्तमुपदिदेश केदारघट्टे केदारेश्वरसन्निधौ भारतमार्तण्डः । रामशास्त्रिणश्च शत दिनान्यनुष्ठाय तत् केदारेश्वरसन्निधौ, महती कीर्तिमापुरिति जनश्रुतिः ।

अथ, कतिपयदिनान्युषित्वा काशीतः शिष्यगणैः समं मुम्बां समाजग्मुः श्रीभारतमार्तण्डाः । तिलकायितमहाराजा अपि श्रीमुकुन्दरायमङ्गलोत्सवं सम्पाद्य पुनराजग्मुर्नाथद्वारम् । श्रूयते, तिलकायितमहाराजानां महोत्सवे चात्र पञ्चलक्षपरिमितं द्रव्यं व्ययीभूतमिति । यावत्काशीमधिवसन्तो भारतमार्तण्डा आसन्, तावत् प्रत्यहं श्रीकैलासचन्द्रभट्टाचार्यशिवकुमारशास्त्रिगङ्गाधरशास्त्रिदामोदरशास्त्रिप्रभृतयः शतशः पण्डितप्रवरा भारतमार्तण्डान् परिवेष्टयन्त एवासन् ।

## एतेषां मन्त्रप्रभावः

पूर्वमेवाभिहितं यत् श्रीभारमार्तण्डस्य पितामहः गो० श्रीव्रजवल्लभमहाराजस्य सोदरौ बाबूरायजीमहाराजद्वारकानाथजीमहाराजावास्तामिति । तावुभावपि क्रमेण ज्येष्ठौ जामनगरपोरबन्दरवास्तव्यौ च समभवताम् ।·जामनगरस्थश्रीबाबूरायजीमहाराजाना तनयो गो० श्रीव्रजनाथमहाराजो बभूव, योऽनपत्य एव गोलोक प्रविवेश । तद्भार्यया सिंहासनेऽभिषिक्तः श्रीव्रजेशमहाराजः, सोऽपि गच्छता कालेन भगवल्लीला प्रविष्टः, तदा जूनागढतः श्रीगोकुलेशमहाराजा आहूताः । मुम्बातश्च श्रीगट्टूलालमहाभागा अपि समाहूतास्तन्मातुलान्या श्रीव्रजनाथमहाराजभार्यया । अथ नवानगराधीशेन द्विजिह्वैर्दूषिताशयेन यवनानीसहायेन जामविभाजीसञ्ज्ञकेन राज्ञा, विमनायमानेन श्रीगट्टूलालमहाराजाना जामनगरप्रवेशोऽवरुद्धः । प्रस्थिताश्च मुम्बां प्रति भारतमार्तण्डाः समाकर्ण्यमिमं वृत्तान्तम् । श्रीव्रजनाथमहाराजस्य भार्यायाश्च तत्क्षण एव देहपातो बभूव । श्रीगट्टूलालमहाराजा धोराजीमार्गेण प्रस्थिताः, इतश्च महाराजभार्यया दुःखेनानेन देहोऽपि परित्यक्त इत्याद्युदन्तजातं श्रुत्वा नवानगरनरपतिर्दुःखेन परिभूतो मन्त्रिणः प्रेरयामास सम्प्रार्थ्य सम्पूज्य च भारतमार्तण्डान् पुनरानेतुम् । तदानीन्तनस्य नवानगरसचिवस्य बापूभाई-मगनलालसञ्ज्ञकस्य पत्रेण समं दूतमुखाद्वृत्तान्तजातमवगत्य मातुलान्या देहोत्सर्गवृत्तान्तेन

राज्ञश्च दुर्वर्तनेन पीडितहृदया अपि मातुलस्य गो० श्रीगोकुलेशस्य सहायार्थं नवानगर-सचिवस्य च प्रार्थनया पुनरपि जामनगरं समाजग्मुः, किन्तु, नगराद्बहिरेव श्रीमन्महाप्रभूणा वल्लभाचार्याणा मन्दिरे निवास कल्पयाम्बभूवुः। जामविभाजीसञ्ज्ञकेन राज्ञा स्वसचिवादिद्वारा सम्प्रार्थिता अपि पण्डितेन्द्रा इमे, नगर न प्रविविशुः। ब्राह्मणस्य तेजोवध एवाशस्त्रवधः शास्त्रेषु प्रथितः। सञ्जातेऽवमाने राजसचिवादिप्रार्थनयाऽपि न प्रविष्टा भारतमार्तण्डा नवानगरम्। अथ, तदन्तेवासिना माधवजीशास्त्रिणा प्रार्थिता इमे पण्डितप्रवरा यत् नरपतयेऽस्मै ब्राह्मण्यं किमपि प्रदर्शनीयमिति, तदा शिष्येच्छामधिगत्य "शापादपि शरादपी"ति वाक्यमब्रुवन्, आज्ञप्तश्च माधवजीशर्मा आकण्ठजलमाविश्य विष्णुसहस्रनामोक्त किञ्चिदनुष्ठातुम्। मन्त्रशास्त्रतत्त्वज्ञैर्भारतमार्तण्डैराख्यातेऽनुष्ठाने समारब्धे, राज्ञो मनस्तापो बभूव। तत्सचिवो भट्टीगृहस्थैः श्यामशेठप्रभृतिभिः सम महाप्रभूणां मन्दिरमागत्य प्रार्थितवान् पण्डितेन्द्रान्। तदा, मयेहैव श्रीमदनमोहदर्शनं क्रियते, मम नास्ति किञ्चिदपि कार्य नगरे, मातुलान्या और्ध्वदेहिकं कर्म समाप्य मुम्बां प्रयास्यामीत्युत्तरित भारतमार्तण्डैः। द्वितीयेऽह्नि पुनरपि समायाता राजपदाधिकारणो नागरिकाश्च प्रार्थनायै। तृतीयेऽह्नि भिषग्वरझण्डूभट्टप्रभृतयो विद्वांसो नागरिकाः सचिवादयश्च पुनरागत्य प्रार्थयामासु, तदा "जामविभाजी वक्तव्यः, नाहमिदानीं प्रवेक्ष्यामि नगरं, मातुलान्या और्ध्वदेहिकं समाप्य प्रवेशविषये विचारयिष्यते" इत्युक्त्वा विरराम भारतमार्तण्डः। अथ सम्पन्ने मातुलान्या और्ध्वदेहिके कार्ये, पुनरपि राज्ञा विज्ञापिता भारतमार्तण्डास्तदा नगराद्बहिर्भूतेनैव मार्गेण जामविभाजीप्रासादं समाजग्मुः पण्डितश्रीगट्टूलालमहाभागाः। दर्शनादेव राज्ञा सिंहासनादुत्थाय चरणयोः पतित्वा क्षमापिता भारतमार्तण्डाः, सहस्रमुद्रार्पणेन सत्कृताश्च। अथ सञ्जात औपचारिकवार्तालापे विज्ञाप्तिाः पण्डिता इमे, यत्, श्रीमद्भिरत्र कानिचन दिनान्युषित्वैव प्रयातव्यं मुम्बाम्प्रति, नोचेत् ममायशः प्रसरिष्यति दिगन्ते, भवादृशाना पण्डितप्रकाण्डानां तपस्विब्राह्मणानां चावमानेन मे राज्यमपि विनङ्क्ष्यतीत्यादि। अथ तत्प्रार्थनया कतिपयदिनान्युषित्वा मुम्बां समाजग्मुः।

## विदेशीयानां कुतूहलम्

१९३८ तमे वैक्रमाब्दे जर्मनदेशतः केचन विद्वांसः पण्डितप्रवराणामेतेषां यशश्चन्द्रिकया समाह्लादितमनसो भारतवर्षमाजग्मुर्भारतमार्तण्डदर्शनाकाङ्क्षया। तैः सममेव काचन यौरोपीयाङ्गनापि समभ्यसितदेववाणी समाजगाम। पण्डितमहेन्द्रैरेभिर्विद्यालक्ष्मीत्यन्वर्थाभिख्यया पाठशाला स्थापितासीन्मुम्बापुर्याम्। यत्र स्वयमेवाध्यापयामासुः सहस्रश्छात्रान्। तथापि कार्यान्तरेण छात्राणां पाठविक्षेपो माभूदिति विचार्य पुण्यपत्तनस्थान् वासुदेवाचार्यानपि तत्राध्यापने नियोजयामासुः। अथ ज्येष्ठाराममुकुन्दजीसहायास्ते जर्मनदेशीयाः

पण्डितप्रवराणां पाठशालामधिजग्मुः। वैश्वदेवादिकं समाप्य पाठशालायां स्वासने समुपविष्टान् भारतमार्तण्डान् दृष्ट्वा

"मक्षिकापादघातेन कम्पितं भुवनत्रयम्"

इति समस्या प्रोक्ता जर्मनदेशीयेनैकेन पण्डितेन। तच्छ्रुत्वा सत्त्वरमेव प्रोचुः श्रीभारतमार्तण्डाः—

कृष्णस्य पिबतः पात्रे वदनात्प्रतिबिम्बतः।
मक्षिकापादघातेन कम्पितं भुवनत्रयम्॥

समाकर्ण्य भारतमार्तण्डवाक्य साटोपं जहसुः सर्वेऽपि जर्मनीयाः।

## कच्छदेशे राजसत्कारः, जामनगरे शास्त्रार्थश्च

अथ कदाचित् कच्छमाडवीराज्ञा तत्सचिवमणिभाईजशभाईद्वारा सम्प्रार्थिता भारतमार्तण्डाः कच्छप्रदेशं जग्मुः, मध्ये मार्गं जामनगरराज्ञा जामविभाजीसञ्ज्ञकेन सबहुमानं स्वालय प्रापिताः। तत्र, गो० श्रीबाबूरायजीमहाराजानां सम्बन्धिनो वाग्रोधीत्युपाह्वस्य श्रीकृष्णभट्टस्य शिष्यः केशवजीशर्माऽऽसीत्। यस्य शिष्यौ, महामहोपाध्यायहाथीभाईमहाशयो, महामहोपाध्यायशङ्करलालमाहेश्वरश्च, बभूवतुः। स च केशवजीशर्मा शुद्धाद्वैतसम्प्रदायानुवर्तिना शिष्यः सन्नपि वल्लभाचार्यविद्वेषको बभूव। भारतमार्तण्डस्यागमनमाकर्ण्य वादकण्डूस्तन्मुखे प्रादुरभूत्। अथ जामविभाजीसञ्ज्ञक नवानगराधिपं सम्प्रार्थ्य समाहूता काचन पण्डितसभा यत्र वादकथायां नारायणसरस्वतीनामधेयेन केनचन संन्यासिना द्राविडदेशादागतेन माध्यस्थ्यमूरीकृतम्। सम्प्रवृत्तायां वादकथायां केशवजीशर्मणोऽसम्बद्ध[1] प्रलापमाकर्ण्य माध्यस्थ्यं परित्यज्य भारतमार्तण्डांश्च क्षमाप्य प्रययौ नारायणसरस्वती।

कच्छमाडवीसस्थाने पण्डितेन्द्राणामेतेषां तदानीं स्थितेन राज्ञा दशसहस्रपरिमितेन द्रव्येण सत्कारः कृत इति श्रूयते।

## गुर्जरदेशे सौराष्ट्रे च राजसत्कारः

बडोदानगरेऽपि यदा सचिवपदे मणिभाईजशभाईसञ्ज्ञका एत एव महानुभावा आसन् तदा तत्रापि भारतमार्तण्डाः समाहूता बडोदानरेशेन, तदा तत्र कतिपयदिनान्युषित्वा विट्ठलमन्दिरे विद्वत्सभासु सहस्रावधानमकुर्वन् श्रीगट्टूलालमहाभागाः। राज्ञा च सबहुमानं लक्षमितेन द्रव्येण सत्कृताः, सचिवेन च स्वालयं प्रापयित्वा चरणयोः पूजनपुरःसर सहस्रं द्रव्यं निवेदितम्। सभासु तत्र त्र्यम्बकनाथशास्त्रितनुजनुषस्तर्कवाच-

---

[1] केशवजीशर्मण शिष्येण शङ्करलालमाहेश्वरेण कृष्णविद्विष्टा, कृष्णचन्द्राभ्युदय नाम नाटक व्यलेखि। तस्य टीका च हाथीभाईशास्त्रिणा। यस्य खण्डनं नवानगरपीठाधिष्ठितैर्नित्यलीलाप्रविष्टैर्गो० श्रीमदनिरुद्धलालमहाराजैर्व्यधायि गोपालपूर्वतापन्युपनिषट्टीकायाम्।

स्पत्यादिपदविभूषितस्य पञ्चविंशतिवर्षवयस्कस्य बदरीनाथशास्त्रिणो दार्शनिकव्युत्पत्ति तत्कृतकोटिक्रम च निरीक्ष्य रैककुलभूषणानां गुर्जराणामेतेषां पाण्डित्येन परमं सन्तोषमापुर्भारतमार्तण्डाः । सभायामस्यां शत पण्डिता आसन्, तेषु बहवो राजारामशास्त्रिटोपरेमहाभागानामन्तेवासिन आसन् । महामहोपाध्यायाः श्री. रामकृष्णशास्त्रिणः, छोटूमहाराजाः, ज्योतिर्मार्तण्डादिपदविभूषिता धर्माध्यक्षा श्रीगुरुज्ञातितिलका अमृतरामशास्त्रिणो, रमणनाथशास्त्रिणः काशीनाथशास्त्रिणो, नर्मदाशंकरशास्त्रिणो, दोलतरामशास्त्रिणो, देवशङ्करशास्त्रिप्रभृतयश्च विराजन्तेस्म । तदानीं स्थितेषु पण्डितेषु श्री. बालशास्त्रितैलङ्गमहाभागाः सम्प्रति भूतलमलङ्कुर्वन्ति ।

भावनगरेऽपि राजप्रार्थना शास्त्रार्थः शतावधानादिक चाभूत् । अथ गच्छता कालेन सीहोरनगरे भावनगरस्य राजकुमारः समागतस्तत्प्रार्थनया तत्रापि शतावधानादिचमत्कार दर्शयामासुः पण्डितप्रकाण्डा इमे । यत्र सदसि सङ्गीताचार्येण केशवजीमहाभागेन जलतरङ्गविषयका अपि केचन प्रश्नाः पण्डितेन्द्राणा पुरतः स्थापिताः, भारतमार्तण्डानां समुचितमुत्तर निशम्य जलतरङ्गवाद्येन सम्मानितास्तेनापि ते । शतावधाने चास्मिन् गञ्जीफा—बुद्धिबल—प्रभृतिक्रीडासु गणितादिषु च कौशलं प्रादर्शि भारतमार्तण्डेन ।

मुम्बामधिवत्सु भारतमार्तण्डेषु, राजारामशास्त्रिबोडस—काशिनाथशास्त्रिगुमवेलकर—भीमाचार्यझलकीकर—अप्पाशास्त्रि—भगवान्जीशास्त्रि-रणछोडजी-उद्धवजीप्रभृतयो विद्वांसः प्रायः प्रत्यहं भारतमार्तण्डदर्शनायागच्छन्तिस्म ।

जूनागढनगरे यदा शतावधानमभूत्, तदा नडीयादपत्तनस्थः देसाईहरिदास विहारीदासमहाभागः सचिवपदमलङ्करोतिस्म । यत्र जूनागढ—नरेशेन दशसहस्रमुद्राभिः सम्मानिता इमे पण्डिताः ।

## कृष्णगढनरेशेन कृतः सोमयागः

अथ राठोडवंशरत्नेन, श्रीमत्प्रभुचरणसेवकस्य भगवद्धर्मपरायणमानसस्य राज्ञ आशकरणस्य कन्यावंशसमुद्भवेन, कृष्णगढराज्ञाऽऽहिताग्निना सोमयागचिकीर्षया काशीतः श्रोत्रियप्रवरान् सप्तर्षीत्युपाह्वान्, गौरीनाथदीक्षितप्रभृतींश्च विद्वद्वरेण्यानाहूय श्रीमन्तो भारतमार्तण्डा अपि समाहूताः । मरुदेशेऽयमभूतपूर्व एव समारम्भ आसीत् । तदानीं वैष्णवैः पिष्टपशुनैव यष्टव्यमिति कोलाहलः प्रससार । तदा यज्ञकर्ममर्मज्ञैः पण्डितेन्द्रैः श्रीगट्टूलालमहाभागैः प्रत्यक्षपशुनैव यागो विधेय इति निर्णीते, पशुनैव सम्पन्ने यागे, तद्गृहे यज्ञनारायणप्रसादाद्यज्ञनारायणसिंहनामा पुत्रः समजनि । इत्थं धर्ममर्यादारक्षाबद्धकङ्कणा भारतमार्तण्डाः सर्वत्रापि विजयिन एवाभूवन् ।

## मुम्बायां माध्यस्थ्येन

अथ कदाचित् मरुदेशीयः शाङ्करमतानुयायी पण्डितो नानूरामशर्मा मुम्बामाजगाम,

तदा रामानुजानुयायिना नृसिंहाचार्येण सह तस्य वादकथा माधवबागे लक्ष्मीनारायण-मन्दिरे प्रवृत्ता, तदा सतत दशदिनावधि प्रवृत्ताया वादकथायां भारतमार्तण्डैर्माध्यस्थ्य-मूरीकृत्य समाहितम् । इत्थ दिगन्तविख्यातविद्यावैभवानामपि भारतमार्तण्डानां सुख नाभूदिति जनश्रुतिः, अभियुक्तेनेदं सत्यमेवाभ्यधायि "ज्ञातिश्चेदनलेन किमि"ति ।

## भारतमार्तण्डप्रतारणा

इत्थं भारतमार्तण्डस्य प्रचण्डेन प्रतापेन कैश्चन "यस्य षष्ठी चतुर्थी च विहस्य च विहाय चे"त्याद्युक्तिं कृतार्थयद्भिः, परम्पराविषये, रामनवम्यादिव्रतोत्सवादिविषये, भारतमार्तण्डानामनुपमपाण्डित्यविद्वेषणेन, तदौदार्येण, सहृदयतया परसाम्प्रदायिकविदुषां मैत्र्येण च केचन अधिक्षेपा अपि कृताः । चक्षुषाऽन्धोऽयं हृदयेनाप्यन्ध एवेत्यादिप्रलापै-रेव सत्कृतो भारतमार्तण्डः कैश्चन आचार्यैर्वैष्णवैश्च ।

अथैकदा भारतमार्तण्डान्तेवासिना श्यामजीशास्त्रिणा प्रार्थितः स्वहृदयप्रकाशनाय, पण्डितगट्टूलालमहानुभावो जगाद—

कालं विशालमपि शक्त्यधिकं स्ववित्तं
　चित्तं शरैरिव परैर्वचनैश्च विद्धम् ।
देहश्रम च परमं परियोज्य यावत्
　किञ्चिद्यथामति कथार्थमथान्ववर्णि ॥ १ ॥

लोकेन तावदपि भावविबोधपूर्व-
　मप्येकवारमखिलं खलु यः प्रहृष्यत् ।
को निश्चितो निजजनस्वमताभिमन्ता
　सन्तापहृद्भवत सम्प्रति सोऽस्मदीयः ॥ २ ॥

विद्या वरेषु बलिना कलिना विलीना
　हीनादरेषु हरिभक्तिविधौ नवीना ।
प्रायेण पद्धतिरुदेति मुदेऽतिगानां
　लेखास्ततो गतजनेषु वनेषु खेदाः ॥ ३ ॥

ये वा मतान्तरनितान्तरता अतान्त-
　विद्यावदातवपुषो विबुधा विभिन्नाः ।
स्वैः स्वैः प्रसिद्धपुरुषैर्विहितान्विहाय
　द्रक्ष्यन्ति हन्त किमु तत्त्वधिये परोक्तिम् ॥ ४ ॥

---

१ कोटिक्रमाय । २ अस्मत्सम्प्रदायवर्ती । ३ इद पद्धतिविशेषणम् । ४ अतिक्रामताम् । ५ निर्जनेषु । ६ अरण्यरुदितप्राया । ७ तत्त्वज्ञानाय ।

उच्छूनमत्सरनमत्सरसावधाना[1]<br>
नानागमा[2] अपि धृतात्ममताभिमानाः ।<br>
विद्वेषरोषकलुषेण विलोचनेन<br>
द्रक्ष्यन्ति केचन चिखण्डिषया परेऽपि ॥ ५ ॥

प्रायः परेष्वपि बलेन कलेः समल्पाः[3]<br>
कल्पा जनेन सधनेन धनाशनाद्यैः ।<br>
न प्रेरिता निरुपधिस्वमताभिमानात्<br>
कालेऽत्र ये कुशलशालिन आलिखेयुः ॥ ६ ॥

यत्साध्वसाध्वपि विसाध्वसमात्मबुद्ध्या<br>
प्रोक्तं मया रसमयात्समयात्समग्रम्[4] ।<br>
बुद्ध्वा बुधा इह लिखन्तु सुख तु दोषान्<br>
वादोऽपि मार्मिकबुधैः सह पुण्यलभ्यः ॥ ७ ॥

अग्रे न शक्त इति वक्ति विरक्तिवाच<br>
पण्याङ्गना[5] भवितुमिच्छति भूरिपुण्या ।<br>
वृद्धेति बद्धकुटिलभ्रूबलद्दगास्य[6]-<br>
मुल्लास्य हास्यकृदपास्यति मां जनोऽन्यः ॥ ८ ॥

आस्तामियं परकथा न तथा व्यथायै<br>
तोदः परान्मनसि मोदमहोदयार्थः ।<br>
अङ्गप्रभङ्ग इह सङ्गररङ्गभूमौ<br>
भूमानमानयति मानभृतौ बलानाम्[7] ॥ ९ ॥

या स्वैरवैरपरमैरशमैरबद्धा<br>
स्वैरेव दैववशतो निशितोक्तिरकैः[8] ।<br>
सा हन्ति हन्त तु निरन्तरमन्तर तत्<br>
प्रोत्साहमत्युपरमं[9] परमं तनोति ॥ १० ॥

वर्यं स्वकार्यमिह किं किमकार्यमार्यैः<br>
सत्कार्यधुर्यपदगा अविचार्य चैवम् ।<br>
मात्सर्यमेकमुपधार्य निवार्य धैर्य-<br>
गाम्भीरवृत्तिमपकुर्वत आत्मपक्षम् ॥ ११ ॥

---

१ अभिवृद्धमत्सरेण नमद्गुणीभूत. सरसवस्तून्यवधानं येषा ते । २ अनेकशास्त्रज्ञा । ३ अत्यल्पा । ४ रसमयमाचारं सम्विद चावलम्ब्य । ५ वृद्धा वेश्या तपस्विनीतिन्यायेन । ६ बलद्दक् आस्यमिति भिन्न पदम् । ७ प्रस्तुत बलबाहुल्यं मानभृत इति द्वितीयान्तमानयतिक्रियायाः कर्म । ८ प्रसाद्यमानैरप्यप्रसन्नै । ९ लेखप्रोत्साहबुद्धेर्विरामम् ।

शक्त्याखिलागमगतिः खलु पण्डितः[1] स्यात्
साभ्यासमेकमपि शास्त्रमवाप्य शास्त्री ।
श्लोकार्थमात्रमतिरेव न वैदुषी स्यात्
प्रायोऽद्य नैव सुलभा किल भाति सापि[2] ॥ १२ ॥

शास्त्रश्रमं परिविधाय निधाय चित्तं
स्वाचार्यवर्यचरणेऽप्यवधाय कृत्ये ।
सन्धाय सत्पतिरतिं[3] स्वयमेव सेतु-
बन्धाय साधु सकलैर्यतनीयमेव ॥ १३ ॥

शक्येत न स्वयमिदं यदि शुद्धचित्तं
वित्तं प्रयुज्य च परैरपि कारणीयम् ।
चेदुत्त्यजोऽर्थ इह साधुगिरोपकार्यः
सोत्तेजनं निजजनः स्वयमेव कुर्वन् ॥ १४ ॥

वाचोव्ययेऽपि यदि भूरिपरिश्रमः स्या-
द्वीक्ष्य स्वतः स्वजनमुद्यतमार्यकार्ये ।
औदास्यमात्रमवलम्ब्य सदास्यमुद्रां[4]
कार्या दया परतयात्र परोपकारे ॥ १५ ॥

कुर्वन्ति न स्वयममी कतिचित्कृतेर्ष्या
नान्यैः सहन्त इह हन्त विधीयमानम् ।
निन्दन्ति सत्सरणिमत्सरिणः परार्था-
नुन्मूलयन्ति वचसा बहुमान्यवाचैः[5] ॥ १६ ॥

लब्ध्वा न शास्त्रमधियन्ति धियं विशालां
तां योजयन्ति कुपथेषु नुताः कुभक्तैः ।
केचित्कथञ्चिदपि शास्त्रलवानवाप्य
स्वाचार्यवाचमतिमुच्य[6] परं चरन्ति ॥ १७ ॥

आचार्यवर्यविभुपादगिरः समग्रा
दृक्कर्णशोधनकृते[7] किल वर्णशोऽपि ।
पीताः सकृज्जनुषि यैरधुना सुधन्याः
स्युर्वैष्णवेषु कति तान्दिशताभिधातः ॥ १८ ॥

---

१ मध्यमणिन्यायेनोभयत्र सम्बन्ध । २ श्लोकलापनशक्तिरपि । ३ भगवान् । ४ सदा मुखमुद्रणं तूष्णींभाव इति यावत् । ५ बहुभिर्विश्रब्धैर्मान्या वाक् येषाम् । ६ उल्लङ्घ्य । ७ दृशो कर्णयोश्च शुद्ध्यै ।

अन्यस्तनोति न वयं निजकर्म कुर्म
एतत्तु नोचितमतो न परः करोतु ।
एवं प्रपञ्चपदसञ्चयमञ्चयन्तः
साधून्मृदूनधमयन्ति जनेषु वाग्भिः ॥ १९ ॥

दोषैकसेचनविवेचनदक्षवाचो
ग्रामेऽत्र केचन सदैव मदीयनिन्दाम् ।
प्रत्यालयं प्रतिजनं कृतिविघ्ननिघ्ना[1]
आवर्त्तयन्त्यविदिताः किमु वैष्णवाग्र्याः ॥ २० ॥

यैर्भ्रामितः स कितवामितवाक्प्रपञ्चैः
पूर्वाटवीष्वनुदकासु तपर्त्तुपूर्त्तौ ।
क्रूरैर्भ्रमन्[2]सममदृक्[3]स्वजनैर्वियुक्त-
स्त्रातोऽस्मि दासकरुणेन गदाधरेण ॥ २१ ॥

श्रान्तं यथामतिबलं समधीत्य मार्गे
तत्[4]पारितोषिकमिदं बिरुदं मयाप्तम् ।
अत्रत्यभावकचये धृतराष्ट्रशब्दः
किं वर्णितैरुप[5]कृतैरितरैः कृतैस्तैः ॥ २२ ॥

आजीवनानि च धनानि जनानुरागा-
न्सौख्यानि कीर्त्तिमपि हन्त हठैर्हरन्तः ।
जीवन्तु सन्ततमनन्तपदैकभक्ते-
र्हेतुं विरागमिह मन्मनसेऽर्पयन्तः ॥ २३ ॥

आचार्यवाच्यपि न चेद्यतते कथा का
श्रीपू[6]रुषोत्तममुखोक्तिसुधावधाने ।
भर्तृस्य मे तु रणित मशकोपमस्य
दूरं क्षिपेच्छ्रवणतो नहि वैष्णवः कः ॥ २४ ॥

लेखे स्वतन्त्र इह मेऽस्ति समाप्तकल्पो
भागः परोऽप्युपहतो वहतो विरागम् ।
प्रायोऽवकाशवसुचित्तविकाशहैन्या-
द्व्याख्यात्मना परिणतिं न गतस्ततः किम् ॥ २५ ॥

---

१ ग्रन्थनिर्माणविघ्नतत्पर । २ स्वजनासन्निधानादगत्या क्रूरैः सम भ्रमन् । ३ अन्ध । ४ यच्छ्रान्तं तस्य श्रमस्य । ५ उपकारै । ६ एतन्नामा नानाग्रन्थकारस्तदादीनाम् ।

श्रीवल्लभप्रभुपदाब्जरतिर्मुकुन्द-
सेवाकृतिः [१]श्रुतिमतिर्हरिवक्त्र[२]वाचाम् ।
अर्थादृतिर्हृदि [३]धृतिः प्रतिजन्म मे स्यात्
चित्रैश्चिरादिह भवे भ्रमतः स्वकृत्यैः ॥ २६ ॥

अष्टाक्षरस्मरणमेव गुरोः प्रसादा-
च्चित्ते चिरं शरणभावपुरःसर चेत ।
भव्याय किं न भविता भुवि तावदेव
[४]सासूयमत्सरकरैरपरैः [५]श्रमैः किम् ॥ २७ ॥

[६]ये नाम केचिदिति यो भवभूतिनोक्तो
न्यायेन तेन लिखितं व्यसनेन किञ्चित् ।
कर्त्तास्म्यहो उपरतः पुरतः स्वभाव-
कृत्यं प्रसह्य हृदि मां [७]प्रकृतिर्नियुङ्क्ते ॥ २८ ॥

चेन्[८]मण्डपेऽपि विदुषां च सुवर्णसूत्रे
व्याख्या मनोऽभिलषिता कृपया हरेः स्यात् ।
वक्ष्ये मया [९]यदिह वाच्यतयोक्तमग्रे
प्राभञ्जनोपकरण च समासतोऽस्याम् ॥ २९ ॥

दूरं निजोरुयुगलाद्विरचय्य वासो
दृश्येत नग्न इह दूरयितेति जाने ।
निर्गच्छ[१०]दच्छसुहृदां पुरतः प्रतप्ता-
च्चित्ताद्बहिः प्रलपितं क्षणविश्रमाय ॥ ३० ॥

[११]वार्चाटितेन कुटिलैः परिभाव्य मूर्त्त-
दुर्दैववद्भि बहुधैव समर्दयद्भिः ।
अस्मन्मतानुगतलोकविशेषवार्त्ता
स्वल्पा मयाऽकथि नमः शिरसा महद्भ्यः ॥ ३१ ॥

---

१ गीतादीना सुबोधिन्या चार्थेष्वादर । २ वैदिकज्ञानम् । ३ तासामेव हृदये धारणम् । ४ असूयावता मत्सरोत्पादकै । ५ ग्रन्थनिर्माणादिरूपै ।

६ ये नाम केचिदिह न प्रथयन्त्यवज्ञा जानन्तु ते किमपि तान्प्रति नैष यत्न ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्यय निरवधिर्विपुला च पृथ्वी ॥

७ प्रकृतिस्त्वा नियोक्ष्यतीति भगवद्वाक्यात् । ८ विद्वन्मण्डन श्रीविठ्ठलनाथप्रभुकृतो वादग्रन्थ सुवर्णसूत्रं च तस्यैव टीका श्रीपुरुषोत्तममहाशयै कृता । ९ मारुतशक्त्याविदमग्रे वक्ष्यामि इदमुत्तरार्धे वक्ष्यत इत्यादि-कथनेन मया यदग्रे वाच्यतया प्रतिज्ञात तत्तस्या टीकाया वक्ष्ये प्राभञ्जनोपयुक्तमपि तत्रैव प्रसङ्गात्किञ्चिद्वक्ष्ये । १० विमलाशयाना पुर प्रतप्ताच्चित्ताद्बहिर्निर्गच्छत्प्रताप क्षणं विश्रान्तये भवति । ११ मूर्तदुर्दैवेनेवात्यन्तं पीड-यद्भिर्वाचाटितेन मया लोकविशेषाणा वार्तात्रोक्ता न तु सर्वस्यादृश इति विशेषपद तदेवाभिप्रेत्याह नम इति ।

गोस्वामिवंशतिलकः किल कश्मलानां
हर्त्तोद्यतो निजमतोदयतोषहेतोः ।
गोवर्धनोऽस्ति गिरिभृत्पदपङ्कजालि-
र्विद्याविलासस्त्वथ विभुः सदयो मयि स्वे ॥ ३२ ॥

श्रीदीक्षितान्वयविभूषणमार्यकार्यं
कुर्वन्स्स्वयं प्रमुदितैश्च विधापयन्स्स्वैः ।
सेवास्वधर्मशुचिशास्त्रनिधिः स्वमार्गो-
द्धर्ता विभाति विभुविठ्ठलनाथनामा ॥ ३३ ॥

मादृग्जनेऽपि सदयाभ्युदयाः स्वधर्म-
शर्मस्पृहाः श्रमवहा हि महानुभावाः ।
अन्येऽपि सन्ति विलसन्तु यथोपकारी
श्रीदेवकीसुतसुहृद्[1]धृतिधर्मधुर्यः ॥ ३४ ॥

पुनरमृतघनैर्यैर्दग्धमाशुप्ररोहे-
दघविघटनवज्रा दासवर्गे दयार्द्राः ।
दयतु सुभगसिद्धीरत्र चामुत्र सर्वाः
सततमथ कटाक्षाः श्रीमुकुन्दस्य ते मे ॥ ३५ ॥

इत्यादि ।

## एतच्छिष्येषु सहजकवित्वम्

एतेषां सहस्रशः शिष्या अभूवन् । तेषु पं. श्यामजीशास्त्री, रवजीशास्त्री, नन्दकिशोर-शास्त्री, मूलशङ्करशास्त्री, माधवजीशास्त्रीत्येत एव प्रायः सम्प्रदाये प्रथिततराः । महाराष्ट्रे, गुर्जरे, सौराष्ट्रे, मध्यदेशे चैतेषां शिष्यपरम्परा कचित्कचिदिदानीमपि दृश्यत एव । एतेषां शिष्येषु कवित्व साहजिकमिव लक्ष्यते ।

## पाठशालास्तिता

सम्प्रत्यपि विद्यालक्ष्मीपाठशाला स्वास्तित्वं प्रदर्शयति बहिःस्थापितायां परिचायकफल-कायाम् । छात्राश्चापि निवसन्ति तन्मदिरे विश्वस्तानां कृपापात्रतया । अधीयते च तैः पाठशालान्तरेषु साहित्यज्यौतिषादिक, कलाशालादिषु च आङ्ग्लसाहित्यमेव । यतो विश्वस्ता एव, बी. ए., एल् एल्. बी., एम्. ए. इत्यादिपदभाजः । अध्यापकस्तु ब्राह्मण एव भवेदिति नास्ति तदावश्यकतेति मन्यन्त इव विश्वस्ताः । तेलीवालाप्रभृतिभिः प्रका-

---

१ देवकीनन्दनाख्य. सुहृत् ।

शितानां पुस्तकानां विक्रय एव शास्त्रसम्बन्धः । श्रीमद्गोपीजनानां विशुद्धपुष्टिमार्गे एव विश्वस्ताना विश्वासः । स च न केनापि पण्डितेन ज्ञेयो भवेत्, यतः पण्डितानां प्रायः सर्वेषामेव, भारतमार्तण्डानामिव वर्णाश्रमधर्मे विश्वासः, अतो विश्वस्ताः स्वयमेव भाण्डारकरादिकृतमन्दिरान्तःप्रवेशिकादिद्वारा सम्पादितसकलदार्शनिकप्रमेयजातपारङ्गमतयैव ख्यापयन्ति स्वात्मानम् । मन्दिरान्तःप्रवेशिकया अन्तः प्रवेशो भवति तन्मन्दिरस्य प्रथमसोपानस्पर्श एव वेत्यन्यदेतत् । मन्दिरान्तःप्रवेशिकाकारो रामकृष्णभाण्डारकरोऽपि भारतमार्तण्डाना चरणकमलसन्निधौ पुस्तकमादाय छात्ररूपेण समागच्छतिस्मेति माधवजीशास्त्रिणो वदन्ति । अहो, विश्वस्तानां विश्वासः ।

## परमपदप्राप्तिः

१९५३ तमे वैक्रमाब्दे भगवच्चरणान्तिकं प्रस्थिता भारतमार्तण्डाः पाञ्चभौतिकं देहं विसृज्य दिव्येन सेवौपयिकेन देहेन भावनगरनगरे । अथास्तङ्गते भारतमार्तण्डेऽद्यदिनं— यावत् अन्धन्तमःप्रविष्टोऽयं लोकः, न कुत्रापि आचार्यपरम्परयाऽधिगतस्वसम्प्रदायविदो नापि शास्त्रमर्मस्पर्शरूपा वादकथैव प्रचलति, न कुत्रापि कविकर्मचर्चा, न च तादृशं दिवानिश शास्त्राध्ययनम् । केवलमधिक्षेपविधयैव पारस्परिको विद्वेषः प्रतिक्षणं प्रवर्धमानो नयनपथमवतरति । अयं हि पण्डितः शैवः, अय हि वैष्णवः, वर्णाश्रमधर्मपरित्याग एव पुष्टिमार्गः, भारतमार्तण्डेन च शैवपरम्परैवाङ्गीकृतेति न स पुष्टिमार्गीय इत्येवमसम्बद्धैः प्रलापैरेव यापयन्ति कालम् । सत्यमेव दिवान्धेभ्यो मार्तण्डप्रकाशो नैव रोचत इति । यदा खलु भारतमार्तण्डोऽस्तावलं प्रस्थितस्तदा वैष्णवाग्रगण्येन धनिकवरेण देवकरण-नानजी महाशयेन भारतमार्तण्डानां सहधर्मचारिण्यै प्रतिमासं साहाय्यमर्पितम् । परं साऽपि पतिप्राणा स्वल्पैरेवाहोभिः पतिमनुजगाम पाञ्चभौतिकं देहं परित्यज्य । श्रूयते, पण्डितप्रकाण्डानामेका कन्यकाऽवशिष्टेति, पर साऽपि पितरावेवानुसृता । सकलमप्यौर्ध्वदैहिकं कृत्य पञ्चनदीकुलोत्पन्नैर्मनुवालालाशर्मभिरेव सम्पादितम् ।

## साम्प्रतिकी व्यवस्था तत्स्मारकाणि च

तन्मन्दिरस्य, पुस्तकालयस्य, पाठशालायाश्च व्यवस्था विश्वस्तैरेव विधीयते, यत्र भट्टकुलेषु रत्नरूपा विद्वदग्रेसराः श्रीबलभद्रशास्त्रिचरणा अप्यासन्, परं केवलहूणभाषा-पाण्डित्येन पण्डितम्मन्याना एल् एल् बी. पदभाजा, पण्डितप्रकाण्डानां बलभद्रशास्त्रिणां

---

१ गोस्वामिकुलकौस्तुभाना पू पा श्रीगोकुलनाथमहाराजाना तनुजनुषौ श्री कृष्णजीवनजी—श्रीदीक्षितजी-महाभागौ शास्त्राध्ययने कृतभूरिपरिश्रमौ ज्ञातसकलशास्त्रप्रमेयौ सदैव शास्त्रचर्चारसिकौ विद्वज्जनसत्कारपरायणौ च विराजेते विजयेते च मुम्बायाम् । मन्ये कार्यकाले अनयो पुनरपि समुदेष्यति दार्शनिकप्रमेयविचार इति । श्रीबालकृष्ण. प्रभुर्दीर्घायुष्ट्व प्रदाय शास्त्ररसिकतामेतयो पुष्णात्विति तदङ्घ्रिसरोजेऽभ्यर्थना ।

च सञ्जाते मतभेदे तत्स्थानापन्नः कश्चिद्यौरोपीयभाषाभिज्ञ एव विश्वस्तः साम्प्रतं वहति निखिलमपि कार्यं जातम् । यत्र धीरजलालमहाभागा बी ए एल् एल्. बी. पदभाजा हिरालालशर्मा वस्त्रापणिकोऽन्ये च दत्तावधाना विराजन्ते । गो श्रीनृसिंहलालमहाराजानां तत्तनुजाना गो. श्रीगोवर्धनलालमहाराजानां च कृपापात्रतया ख्यातकीर्तिः कल्याणजीशास्त्री चात्र शास्त्रपरामर्शने योजितः । साम्प्रतमपि राजमन्दिरे भारतमार्तण्डधियैव तत्पुस्तकालयोऽपि मानमर्हतीति कियान्वर्णनीयो भारतमार्तण्डोज्ज्वलप्रतापो मादृशेन मन्दबुद्धिना ? पण्डितप्रवराणां भारतमार्तण्डानां स्मरणचिह्नतया तत्पुस्तकालयः, तत्पाठशाला, तन्मदिरं चेति मुम्बायाम्, पेटलादनगरे "वेदान्तभट्टाचार्यभारतमार्तण्डपण्डितश्रीगट्टूलालजी-धार्मिकपुस्तकालयः (यस्य प्रयोजकः कै. वा. हीरालाल व्रजभूषणदास श्रॉफमहाभागः बी. ए. एफ्. टी एस्. आसीत्, यो हि दर्शनशास्त्रनिपुणः, गट्टूलालचरणयोः श्रद्धातिशयं भजतिस्म), वृन्दावने गौडसम्प्रदायानुयाभिः श्रीराधाचरणगोस्वामिप्रभृतिभिर्गट्टूलालस्मारकतया गवा पानीयार्थ दृषन्मय आधारः स्थापितः प्रपारूपेण रासालिन्द-निकटे, अन्यत्रापि स्युस्तत्स्मारकाणि, पर वास्तविक तेषा स्मारकं तु तदैव भवेत् यदा तद्ग्रथितानां ग्रन्थानामध्ययन समाप्य श्यामजीशास्त्रि-नन्दकिशोरशास्त्रिसदृशा विद्वांसोऽवतरेयुस्तत्पाठशालातः, पाठशालाया चास्यां तज्जीवनकाले यथाऽध्ययनाध्यापनादिकं प्रचलितमासीत्तथैवाविरतं प्रचलेत् ।

सम्प्रदाये चास्मिन् प्रचलितेन विद्वद्विद्वेषेण, विदूयमानमानसेन लेखनीयं नावरुणद्धि स्वचापल, यत्, दयारामादिकवीना जयन्त्युत्सवादिक्ं प्रतिवर्षं प्रतिनगरं भवति तत्स्मरणमन्दिर च निर्मीयतेऽधुनातनैः पुष्टिमार्गीयैः, परं भारतमार्तण्डस्य नामापि न स्मर्यते, स्मृतेऽपि कैश्चित्, ते विद्वेषभाजनतां भजन्ते । दयारामादितः सहस्रगुणगुणितगुणगरिष्ठा भगवत्सेवापरायणान्तःकरणा भारतमार्तण्डाश्चर्मचक्षुर्विहीना अपि भगवत्स्वरूपस्य शृङ्गारविरचनचातुरी प्रकटितवन्तोऽपि ते केवल पण्डिता इति न "तादृश"वैष्णवजनकक्षामधिरूढा दयारामादयस्तु तादृशवैष्णवाश्चेत्यहो साम्प्रतिकानां विद्वद्विद्वेष्टृत्वम् । इदानीन्तनानां तादृशवैष्णवत्व पोषयन्तोऽपि दयारामादयो न भारतमार्तण्डस्योज्ज्वलता प्राप्ता इति कामनाकाङ्क्षाविरहिताना पक्षपातदर्वीकरादष्टधियां विशुद्धचेतसां सचेतसां मतं सार्वजनीनम् ।

## सत्सिद्धान्तमार्तण्डप्रकाशः

स चायं सत्सिद्धान्तमार्तण्डः सिन्धुदेशोद्भवाना लोहाणाज्ञातीयेषु मार्तण्डायमानानां गोलोकवासिनां श्रेष्ठिनारायणदासानां तत्सोदराणा श्रेष्ठिजेठानन्दमहाभागाना च संरक्षितद्रव्येण प्राकाश्यं नीयते तद्विश्वस्तैः । पुरा किल सिन्धुदेशे नगरठट्ठानाम नगरे परमवैष्ण-

वस्य गण्ढामल्लमहाभागस्य प्रथिततरं कुलमासीत्। यत्र समुत्पन्नाविमौ सुगृहीतनामधेयौ नारायणदासजेठानन्दनामानौ भ्रातरौ। एतद्वेपि तत्प्रदेशे गण्ढामल्लस्य कुल पावित्र्ये प्रतिष्ठायां च मुख्यतामापादयत्प्रसिद्धमेव। अथ हि गण्ढामल्लः नारायणदासजेठानन्दयोः पितामह आसीत्। अस्य वंशवृक्षश्चेत्थम्—




नारायणदासजेठानन्दयोर्जनक आसनमल्लो भगवत्परिचर्यया यापितवान्निखिलमपि जीवनम्। गण्ढामल्लो हि 'मीरो' सञ्ज्ञकस्य कस्यचन राज्ञः प्रधानसचिवो बभूव। गण्ढामल्लस्यैश्वर्यं सिन्धुप्रदेशेऽनन्यजनसाधारणतया प्रथिततरमासीदिति जनश्रुतिः। प्रजाश्चैतस्य प्रेमातिशयेन न्यायपरायणबुद्ध्या च तद्वशवर्तिन्य एवाभूवन्। अयं हि गण्ढामल्लो गुणगरिष्ठो दृढप्रतिज्ञः कृतिमांश्च बभूव। सिन्धुप्रान्ते यथा सम्प्रति, स्वभावतः क्रूराणां यवनाना प्राबल्यं नयनपथमवतरति, तथैव प्रागपि तत्रैतादृशी स्थितिरासीदेव, तथापि गण्ढामल्लः कृतिकुशलतया न केवल स्वमानं ररक्ष, अपि तु प्रतिक्षणं दत्तचित्त एवासीत् हिन्दूनां मानरक्षणाय। अथ गच्छति काले कदाचित् महम्मदीयानामनुचितव्यवहारेण क्षणादेव तत्याज सचिवपदं धर्मप्राणतया। आसनमल्लस्य पितृव्य आसुमल्लोऽप्युदारचरिततया ख्यातकीर्तिर्गुप्तदाने च कृतमतिर्बभूव। स चायमासुमल्लो वाणिज्येन द्रव्यसम्पादनाय "अरब" देशं जगाम। यत्र मौक्तिकाना व्यापारे प्रभूततरं धनमार्जिजत्। येन, कुलस्यास्य प्रतिष्ठा लोकोत्तरतामवाप्य नगरठट्ठानगरे नगरश्रेष्ठितामाप। अथ कदाचित्, महम्मदीयानामाधिक्येन प्रायः सर्वेऽपि स्रोतसस्तेषामेव स्वत्वतया बभूवुः। यत्र प्रतिघटं हिन्दूभ्य एकं ताम्रखण्डं कररूपेण ते जगृहुः। महम्मदीयानां त्रासेन त्रस्ताः प्रजाः श्रेष्ठिवरस्यासुमल्लस्य समीपमाजग्मुर्निवेदयामासुश्चाततायिनां महम्मदीयानां कष्टकथाम्। अथ निशम्य वृत्तान्तजातमिमं आसुमल्लेन श्रेष्ठिना "विधानी" कुटुम्बोत्पन्नात्परशुरामात् प्रभूतां भूमिं क्रीत्वा तत्रैकं सरश्चखान। तच्च सरः सम्प्रति "नानाबाग" इत्यभिख्यया प्रथितम्।

नारायणदासस्य भगिनी बाल्य एव वयसि वैधव्यकष्टमाससाद। या हि भगवच्चरणसेवया वयसो द्विचत्वारिंशद्वत्सरान् यापयित्वा भगवच्चरणान्तिकं जगाम। नारायण-

दासस्य भ्राता वल्लभदासोऽपि कदाचित् समुद्रमार्गेण स्वदेशं प्रत्यागच्छन् वाताभ्रादिनोद्वेलिते समुद्रे, निमग्नश्चतुर्विंशतिवर्षवयस्क एव । त्रिविक्रमदासोऽपि भगवच्चरणपङ्कजमवाप, तत्पत्नी च गोकुलेऽधिवसन्ती स्वदेहं परित्यज्य प्रभुचरणान्तिकं जगाम । सम्प्रति विद्यते केवलं जेठानन्दस्यैव भार्या गं. स्व. गोमतीबाईसञ्ज्ञका, या हि विश्वस्तेष्वन्यतमतया भर्तुर्धार्मिकं कार्यं चालयति ।

श्रेष्ठिवरो नारायणदासो यदा मुम्बामाजगाम तदा प्रतिमासमष्टौ रूप्यकाणि भाटकं प्रदाय भूलेश्वरसमीपे श्रीलालबावामन्दिरे एकस्मिन्कोष्ठे स्थितः । बाल्यादारभ्य चपलबुद्धिरयं नारायणदासो मुक्तानां हीरकादिरत्नानां च व्यापारे बद्धदृष्टिः स्वकौशलेन प्रभूत धनमर्जयामास । साधारणजनसदृक्षजीवनः कुशलतयाऽल्पव्ययेन धर्मर्म्मर्यादया च यापितवान् जीवनम् । अस्य पुष्टिमार्गे समभवन्महती श्रद्धा । अस्य मुलतानीज्ञातीयेषु नान्यजनसुलभं ममत्वमासीत् । १९६४ वैक्रमाब्दे यदा रूप्यकाणां महर्घता सम्वृत्ता तदा नारायणदासेनानेन मुलतानीयानां यादृशी सेवा विहिता, तादृशी न कोऽपि कुर्यादेव व्यापारैकचित्तः । अयं हि नारायणदासो मुलतानीयानां ज्ञातिषु सम्प्राप्तसम्मानो धुरीणश्च बभूव । यदाऽयं मुम्बामायातो, मुक्ताना हीरकादिरत्नाना च व्यापारे पदमर्पयत्, तदारभ्यैवास्य श्रेष्ठिवरमाणेकचन्दपानाचन्दस्य कुटुम्बेन कौटुम्बिकेन सौहार्देन समादरः सम्बद्धः, यद्यप्ययं पुष्टिमार्गीयो वैष्णवः, माणेकचन्दस्य कौटुम्बिका दिगम्बरजैनमतानुयायिनश्चासन्, तथापि, उदारचरितानामेतेषा नासीद्धर्मविरुद्धतया सौहार्दविरोधः । स चायं सम्बन्धः स्वविश्वस्तेषु 'ताराचन्द नवलचन्द' महाभाग• विश्वस्तेष्वध्यक्षतया स्वीकार्यैव जगतीतले प्रसिद्धिं प्रापितः । महान्यायालयेनापि स्वीकृता तदध्यक्षता । स चायं श्रेष्ठिताराचन्दमहाभागो दिगम्बरजैनसम्प्रदाये दृढमतिः प्रथितकीर्तिरपि पुष्टिमार्गीयेषु नारायणदासनिर्दिष्टेषु कार्येषु दक्षतया प्रबन्धं विरच्य शिक्षापत्रादिग्रन्थानां प्रकाशनमकरोत् । अयमपि ग्रन्थस्तदध्यक्षतयैव मुद्रणाय स्वीकृतः । हन्त, सोऽपि दिवं प्रयातः प्रकाशनात्प्रागेवास्य ग्रन्थस्य ।

क्षणभङ्गुरस्य देहस्य नश्वरतामधिगम्य स्वजीवनकाल एव श्रेष्ठिप्रवरेणानेन धीमतामग्रेसरेण नारायणदासेन स्वबुद्धिसामर्थ्येन समुपार्जितं द्रव्यं पुण्यकार्येषु योजितम् । (१) १९७० तमे वैक्रमाब्दे ठठ्ठाख्ये नगरे स्वजन्मदेशे वृद्धाना, पङ्गूना, महम्मदीयानां च त्रासेन स्वरक्षितानां गवां रक्षणाय तन्नगरस्य पांजरापोलस्य स्थायिकोशमध्ये प्रभूतं द्रव्यमर्पितम् । (२) व्रजमण्डले उद्धवकुण्डक्षेत्रे चैका गोशाला स्थापिता या हि साम्प्रतमपि विश्वस्तैश्चाल्यते । (३) नगरठठ्ठानगरे स्वभ्रातुः स्मरणाय त्रिविक्रमदासनाम्ना धर्मार्थमौषधालयश्च स्थापितः, यत्रैक आयुर्वेदाचार्य आयुर्वेदरीत्या चिकित्सां करोति, यत्र जातिभेदो धर्मभेदो वा न गण्यते, पर हिन्दुर्वा भवेत् महम्मदीयो वा भवेत्, सर्वेभ्यो निःशुल्क-

मौषधं वितीर्यते । ( ४ ) पुष्टिमार्गस्य प्रचाराय लक्षमित द्रव्यं पृथगेव संरक्षितम्, येन पुस्तकप्रकाशन, कराचीनगरे पुस्तकालयश्च प्रचलति । ( ५ ) व्रजमण्डले स्थिताना पुण्य-सरसां रक्षणाय, जीर्णोद्धाराय च, यत्र जलाशयस्याभावस्तत्र नूतनजलाशयनिर्माणाय च लक्षपरिमितं द्रव्य स्थापितम । ( ६ ) नगरठट्ठाख्यनगरे माध्यमिकशिक्षाप्रचाराय हाई-स्कूलसञ्ज्ञया पाठशाला लक्षमितेन द्रव्येण प्रचलति, यस्माच्छात्रेभ्यो मुम्बायामपि छात्र-वृत्तिः प्रदीयते । ( ७ ) स्वसेव्यभगवत्स्वरूपस्य मन्दिरनिर्माणाय तत्सेवाप्रबन्धाय च लक्षमितं द्रव्यं रक्षितम् । उद्धवकुण्डस्थितायां गोशालाया शतद्वयाधिका गावः पाल्यन्ते । नगरठट्ठास्थे औषधालये प्रायो विंशतिसहस्राधिकानां रुग्णानां निःशुल्कं चिकित्सा भवति प्रतिवर्षम् । छात्रवृत्तिं गृहीत्वा माध्यमिकं शिक्षणं समाप्य बी. ए, इंजिनियर्, इत्यादिपरिक्षासु समुत्तीर्णाः स्वस्वकार्येषु परमोच्चपदारूढा बहवश्छात्राः । कराचीनगरे पञ्चविंशतिसहस्रमितेन द्रव्येण पुष्टिमार्गीयपुस्तकालयार्थमेको महालयो निर्मितः, यत्रास्ति दशसहस्राधिकानां पुस्तकानां सङ्ग्रहः, प्रतिवर्ष पञ्चशतपुस्तकानि च वर्धन्त एव । प्रकाशनकार्यमपि प्रचलति यतोऽयं मार्तण्डः प्रकाश्यते, सविवरणमणुभाष्यं, पञ्चटीकोपबृंहितस्तत्त्वार्थनिबन्धश्च मासाभ्यन्तर एव प्रकाशयिष्येते, शिक्षापत्रम्, वृत्रासुर-चतुःश्लोकी, भागवताध्यायार्थः, सहस्रीभावना, पुष्टिमार्गोपदेशिका, कीर्तनसङ्ग्रहश्चैते प्रकाशिताः, वल्लभकुलस्य वंशचरितमपि मुद्र्यते, इतःपर भगवद्गीता रसिकरञ्जन्यादि-टीकात्रयसमुपबृंहिता, व्याससूत्रसाहित्यं, प्राभञ्जनो मारुतशक्त्या समेतः, भक्तिमार्तण्ड इत्यादयो ग्रन्थाः प्रकाशमेष्यन्ति ।

एवमस्य नारायणदासस्य पृथग्रक्षितेन द्रव्येण बहूनि लोकोपकारकाणि कार्याणि विश्वस्तैः कुशलतया सम्पाद्यन्ते ।

एतस्य पृथगेव संरक्षिताद्द्रव्यात्सहस्र प्रतिवार्षिकं ठट्ठानगरे भाटियासूतिकागृहाय प्रदीयते, यत्र पूर्व केवलं भाटियाज्ञातीयानामेव सूतिकानामुपचारोऽभवत्, तत्र सहायेनानेन सर्वासामपि हिन्दूसूतिकाना चिकित्सा भवति ।

ठट्ठानगरे रात्रिशालायै प्रतिवर्षं शतद्वयं साहाय्य दीयते ।

मुम्बायां वनिताविश्रामस्थविद्यार्थिनीभ्यः प्रतिमासं चत्वारिंशद्रूप्यकाणि प्रदीयन्ते, प्रतिवर्षं चतुःसहस्रमुद्राश्छात्रवृत्तौ प्रदीयन्ते मुम्बायां ठट्ठानगरे कराचीनगरे च ।

विगतवत्सरे ७१५१३ रुग्णानां निःशुल्कं चिकित्साऽभूत् ठट्ठानगरे । येषु ४०९९९ हिन्दूजातीयाः, ३०५१४ महम्मदीयाश्चासन् । नगरठट्ठापुरि प्रतिवर्ष "हेण्डरसन ब्लाईण्ड रीलीफ एसोशियेशन" द्वारा नेत्ररोगचिकित्सकः समागच्छति, तदा नेत्र-

रोगोपचाराय विगतवत्सरे ७५१ रूप्यकाणि व्ययीकृत्य नेत्ररोगिणां साहाय्यं वितरितम् । नेत्ररोगचिकित्सार्थमपि तत्र गृह निर्मितम् । यत्र सदाकालं नेत्रचिकित्सा भवेत् ।

प्रागेवावादि व्रजमण्डले जलाशयानां जीर्णोद्धाराय प्रयत्यत इति । तत्राद्यदिनं यावत् (१) मधुवनकुण्ड–(२) पतीतपावनकुण्ड–(३) करनावरकुण्ड–(४) कल्लोलकुण्ड–(५) गोमुखकुण्ड–(६) गोविन्दकुण्ड–(७) गङ्गाकुण्ड–(८) ग्वालपोखर–(९) शीवीपोखर–(१०) बिलछुकुण्ड–(११) हरिहरकुण्ड–(१२) कृष्णकुण्ड–(१३) गोविन्दकुण्ड–(१४) चन्द्रसरोवर–(१५) हरिहरकुण्ड–(१६) क्षीरसागर (१७) विमलकुण्डगोघट्ट–प्रभृतीनां पुण्यजलाशयानां जीर्णोद्धारकार्यं सम्पन्नम्, प्रचलत्येवान्यदपि जीर्णोद्धारकार्यम् । चतुर्थपञ्चमपीठाधीश्वराणां गो. श्रीवल्लभलालजीमहाराजानां मनीषया कामवने विमलकुण्डे खननं प्रचलति, कृतेऽपि प्रभूते व्यये यथोचितः समूहो जलस्य नाद्यावधि निर्गतः, किञ्च, आशास्यते भूरिजलं प्राप्स्यत इति, बोरिंगाख्ययन्त्रेण च खन्यते पुनरपि । परमत्र जलौघमिमं साक्षात्कर्तुं श्रीवल्लभलालजीमहाराजा न विराजन्ते, यतस्ते प्रागेव लीलां प्रविष्टा इति चेखिद्यते चेतः ।

कराचीनगरे पुस्तकालये ४२००० सङ्ख्यापरिमितैर्जनैर्निःशुल्कं धार्मिकानां नैतिकानां च ग्रन्थानां वाचनं कृतमिति प्रहर्षास्पदम् । पुस्तकालयश्चायं लोकाभिरुचिकरः सम्पन्नः, दैनंदिनं चास्य प्रगतिः प्रवर्धत एव । यत्र प्रो० पं० धर्मदत्तजेटलीमहाभागानां निरीक्षणं, तदनुरोधेनैव क्रेयपुस्तकादिनिर्वाचन च भवति । आनन्दाश्रम-चौखम्बा-मैसूर-काश्मीर-बडौदा-प्रभृतिषु ग्रन्थमालासु प्रकाशितानां प्रायः सर्वेषामेवास्ति तत्र सङ्ग्रहः । विश्वस्तानां प्रो. जेटलीमहाभागानां च पुस्तकालयनिरीक्षकाणां, यावत्प्राप्यं सस्कृतसाहित्यं क्रीत्वा तत्र सङ्ग्राह्यमिति वर्तते मनीषा । मन्ये पञ्चषैरेव वत्सरैः पूर्णतामेष्यति तेषां मनोरथः । सिन्धुप्रदेशेऽपि भविष्यत्ययं पुस्तकालय आदर्शरूपः संस्कृतसाहित्यसेवकाना कृते ।

ग्रन्थप्रकाशनकार्यमिदं पूज्यपादैर्गोस्वामिकुलकौस्तुभैः श्रीगोकुलनाथजिन्महाराजैः, गो. श्रीव्रजरत्नलालमहाराजैः, गो. श्रीदीक्षितजिन्महोदयैश्च परमानुग्रहेण भूरिपरिश्रमेण च सूचितानामेव ग्रन्थाना भवति । गोस्वामिचरणानामेतेषां कृपापरिपूर्णा दृष्टिः सन्ततमेवावतरत्विति प्राथ्र्यते । गो. श्रीमगनलालजिन्महाराजानां, तत्तनूद्भवाना विद्वद्वर्याणां गो. श्रीगोकुलनाथमहोदयाना, गो. श्रीपुरुषोत्तमलालजीमहाराजानां (अमरेलीवास्तव्यानां), तृतीयपीठाधीश्वर–काकरोलीनरेश-श्रीव्रजभूषणलालजिन्महाराजानां, गो. श्रीद्वारकेशलालजीमहाराजानां (पोरबन्दरवास्तव्यानां), गो. श्रीपुरुषोत्तमलालजीमहाराजानां (कोटावास्तव्याना) प्रायः सर्वेषामपि महाराजाना वर्तते चात्र महती कृपा, येन

धर्मकार्यमिदं निष्प्रत्यूहं प्रचलति । अतोऽहं विश्वस्ताश्च, व्यवस्थापकाश्चैते सर्वेऽपि तेषामधमर्णा एवेति । वर्ततेऽस्मासु विद्वन्मणीनां, पं० कण्ठमणिशास्त्रिणां, पं० जटाशङ्करशास्त्रिणां, प्रतिक्षणं प्रमोदावहानामामोदभाजां श्रीमतां चमनलालशास्त्रिप्रवराणां "साम्प्रदायिकशास्त्रिणां", शुद्धाद्वैतरत्नानां श्रीव्रजरत्नलालचरणाश्रितानां च महती कृपा, यतोऽस्माभिः पुस्तकान्युपलभ्यन्ते निष्कण्टकेन पथा, सम्पाद्यते च सकलमपि कार्यजातं सत्यपि बहुलतरे विरोधे ।

नारायणदासजेठानन्दयोः पृथक्संरक्षितेन द्रव्येण मुम्बायां वालुकेश्वरसन्निधौ बाणगङ्गायामेकमारोग्यभवनमपि निर्मितं विश्वस्तैः, यस्मिन् स्वल्पेनैव भाटकेन मासत्रयमधिवसन्त्यारोग्याकाङ्क्षिणो जनाः । तदिदमपि भवनं महान्यायालयानुज्ञयैव निर्मितम् ।

नारायणदासस्य पत्नी तस्य जीवनकाले अनपत्यतयैव दिवं प्रयाता, तथापि नारायणदासेन कनीयासं जेठानन्दनामभ्रातरमेव पुत्रभावेन पश्यता, द्वितीयोद्वाहाय मनसापि न विचारितम् । अयं सुगृहीतनामधेयो नारायणदासः १९८४ मिते वैक्रमाब्दे श्रावणकृष्ण-७ म्या दिवं प्रतस्थौ ।

कनीयसा जेठानन्देन भ्रातुः प्रयाणोत्तर नारायणदासस्य सर्वोऽपि व्यवहारः, तेन निर्दिष्टानि धर्मकार्याणि च सादर सबहुमानं च सम्पादितानि । पर दैवगत्या सोऽपि १९८५ तमे वैक्रमाब्देऽनपत्य एव भ्रातरमनु दिवं प्रययौ । तेनापि स्वजीवनकाल एव पत्न्यै यथोचितं द्रव्यं प्रदायावशिष्टोऽपि द्रव्यसङ्ग्रहो भ्रात्रा समारब्धेष्वेव लोकहितावहकार्येषु नियोजितः, यस्य विश्वासलेखो राजनियमानुसारेण कृत एव । महान्यायालयेनापि मानित एवेति ।

एवमेतेषां श्रेष्ठिप्रवराणां धनेन सत्सिद्धान्तमार्तण्डो द्वितीयवारं प्रकाशमायातीति प्रमोदास्पदम् ।

## उपकारस्मरणम् ।

श्रीमत्प्रभुचरणतुरीयकुमारश्रीगोकुलनाथ इव कन्धरापणेनापि धर्मरक्षाबद्धकङ्कणा विराजन्ते विजयन्ते च गोस्वामिकुलकौस्तुभाः श्रीगोकुलनाथचरणाः । पूज्यपादानामेतेषामेव मदाराध्यचरणाना परमेणानुग्रहेण सम्पन्न कार्यमिदम् । सम्पत्स्यन्ते चावशिष्टाण्यपि कार्याणि, पाण्डित्यनिकषाकराणां विद्वज्जनैकविश्रामाणां श्रीगोकुलनाथचरणानामेवानुकम्पया । नगरस्यास्य चरमे कोणे क्षारोदधितीरे निवसतो मे क्षारमपि जीवितं "रोषदृक्पातसम्प्लुष्टभक्तद्विद्" इति श्रीमन्महाप्रभुचरणाभिख्यां "कृपादृग्वृष्टिसंहृष्टदासप्रियः" इत्यभिधानं च कृतार्थयद्भिरेभिरेव पूज्यपादैराप्यायित "स्वभक्तरक्षणदक्ष"तया । एतेषां पूज्यपादानामुपकारान्

स्मारं स्मारं प्रहृष्यते मे मनः। अतस्तच्चरणधूलिकां शिरसा वहन् सततं स्मरामि मुक्तकण्ठतया तदुपकारान्। तत्तनुजनुषोस्तत्प्रतिबिम्बरूपयोः (मन्मते तु तद्रूपयोरेव) पूज्यपादयोः श्रीकृष्णजीवनजीश्री.दीक्षितजीमहाभागयोश्च विद्वत्प्रिययोर्मयि परमस्नेहवत्तयोपकारस्मरणेनानुभवामि कृतार्थताम्। यौ हि रामलक्ष्मणाविव परमस्नेहवन्तौ भ्रातरौ, अयोनिर्मितचणकानां चर्वणमिव विद्याध्ययनक्लेशं स्वीकृत्य दार्शनिकाग्रगण्यतया ख्यातयशस्कौ, विद्वज्जनसेवनीयौ च वल्लभवंशकीर्तिं सुधाधवलितां कुर्वाणौ विजयेतेतमाम्भूतलेऽस्मिन्। प्रार्थये भगवन्तं बालकृष्णं चिरञ्जीवतां भ्रातराविमौ, भवतां च विद्वज्जनकल्पवृक्षतुल्याविति। अस्मद्गुरुचरणानां महामहोपाध्यायश्री बालकृष्णमिश्रमहाभागानां (Principal of the College of Oriental Learning B H U.) म. म. श्रीचिन्नस्वामिशास्त्रिणा (The Principal of the College of Theology B H U.) चोपकृतिस्मरणमावश्यकम्। येषां महतानुग्रहेण मे जीवनसाफल्यम्। नुतिततिपुरःसरं स्तौमि भगवन्तं यन्मे जन्मनि जन्मनि एतज्जन्मेव विद्वत्कुलप्रसूतित्वं बालकृष्णमिश्रचिन्नस्वामिनोरेव गुरुचरणयोरन्तेवासित्वं च भूयादिति।

सन्ति विश्वस्ताश्चात्र श्रेष्ठिप्रवरा गोवर्धनदासविशनदास-गोवर्धनदासतुलसीदासगोवर्धनदासनारायणदास–पुरुषोत्तमदासव्रजमोहनदास–जेठानन्दस्य धर्मपत्नी गं. स्व. गोमतीबाई चेत्येते। एतेषां महामनसामपि विश्वस्तानां, स्मर्यन्ते उपकाराः, येन कार्यमिदं प्रत्यूहपरम्परामुल्लङ्घ्य सम्पन्नम्। याज्ञिकोपाह्वानां श्री.शिवशङ्करशर्मणां (अत्र व्यवस्थापकानां), श्री.भोगीलालशर्मणां च सत्परामर्शेन प्रचलत्ययं प्रबन्धः, एतेषामप्युपकारपरम्परां स्मृत्वा मे चेतः प्रमोदातिशयं भजते। वे. शा. सं. गोस्वामिकुलोपाध्यायाः श्री.चन्द्रशङ्करशर्म्माणः पण्डितपञ्चाननश्री.बदरीनाथशास्त्रिणश्च मे भिन्नशरीरं हृदयमेव, याभ्यां समुत्साहितोऽहं प्रकाशनकार्येऽस्मिन् निरुद्धोऽनिरुद्धचरणाश्रितोऽपि। अतस्तयोः कथङ्कारमुपकारं स्मरामि विस्मरामि वा। शुकवंशप्रादुर्भूतानां मित्रवराणां शुद्धाद्वैतविशारदानां श्रीधीरजलालशास्त्रिमहाभागानां, शङ्खोध्दारवास्तव्यानां श्रीलक्ष्मीरामशास्त्रिणां, सुदामपुरिस्थानां श्रीहरिकृष्ण–शास्त्रिणां शुद्धाद्वैतविशारदानां, साहित्याचार्याणां श्रीपुरुषोत्तमचतुर्वेदानां च स्मरामि नामधेयानि यैरात्मसात्कृतं मे मनः प्रेमातिशयेन। पण्डितकण्ठमणयः कण्ठमणिशास्त्रिणो मे बाल्यादेव रक्षन्ति मित्रत्वमिति न कदापि तान् विस्मरामि। अस्य संस्करणे महानुभावैः सद्वैष्णवैः शुद्धपुष्टिमार्गाग्रहिभिः तेलीवालासहायेन बहुग्रन्थशोधकैर्भाष्यप्रकाशरश्मिपरिसमापनकृतभूरिपरिश्रमैः साङ्कलीयेत्युपाह्वैः बी. ए., एल्. एल्. बी. पदभा-

---

१ तातवणो प्रतिबिम्ब रे रसना इतिन्यायेन। २. आत्मा वै पुत्रनामासीतिश्रुतेः।

-जैर्वांकीलैर्धैर्यलालमहोदयैर्भगवद्धर्मैकपरायणैः कृतस्यापरिमितसहाय्यस्योट्टङ्कनं न कुर्या चेत्, कृतज्ञता नैव प्रादुर्भूयादेव "उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिते"-त्याद्यभियुक्तोक्तरीत्या । निर्णयसागरमुद्रणालयव्यवस्थापकाना, रामचन्द्र येसू शेडगे महाभागप्रभृतीनामप्युपकाराः स्मर्यन्त एव । सीसकाक्षरसयोजकाना श्रीधरशर्मणां, प्रतिलिपिलेखकाना पुरुषोत्तमशर्म–प्रवासिनन्दकिशोरशर्म–नर्मदाशङ्करशर्म–परशुराम-शर्मणामपि स्मर्यन्ते नामधेयानि ।

"गच्छतः स्खलनं क्वापी"त्याद्यभियुक्तोक्ति पुरतो निधाय विज्ञाप्यन्ते विद्वासो, मादृशस्य प्रमादमेव जानतो जनस्य शोधनप्रमादान् क्षन्तुमिति—

मुम्बापुरि
१९९८ वत्सरे श्रीमत्प्रभु-
चरणप्राकट्यमहामहोत्सवे

सुधीजनविधेयेन
**शुक्लोपनाम्ना हरिशङ्करशास्त्रिणेति शिवम् ।**

# सत्सिद्धान्तमार्तण्डस्य विषयानुक्रमः ।

## अथ तृतीयोऽवान्तरः प्रश्नः ४५



## तुरीयोऽवान्तरः प्रश्नः ४६

## सप्तमः प्रश्नः ६५



## सप्तमप्रश्नावयवः ६६

## अष्टमः प्रश्नः ९७



## द्वितीयः प्रधानप्रश्नः ९८



## नवमः प्रश्नः १०५

## द्वितीयस्याद्यः प्रश्नः १०५



## दशमः प्रश्नः ( द्वितीयस्य द्वितीयोऽवान्तरः प्रश्नः ) १०९

विषयानुक्रमः।

विषय: पृष्ठे

## सप्तदशाष्टादशौ प्रश्नौ (तृतीयस्य प्रथमद्वितीयौ प्रश्नौ) १३७



## एकोनविंशः प्रश्नः (तृतीयस्य तृतीयः) १५५

विषय पृष्ठे

विषय पृष्ठे

## શેઠ નારણદાસ આસનમલ.



જન્મ –સંવત્ ૧૯૨૦ શ્રાવણ સુદી ૭
અવસાન –સંવત્ ૧૯૮૪ શ્રાવણ વદી ૭,
ઇ સ ૧૯૨૮ તા ૬ ઠી સપ્ટેમ્બર

## શેઠ જેઠાનંદ આસનમલ.



જન્મઃ–સંવત્ ૧૯૨૮ ના ફાલ્ગુન વદી ૧૧
અવસાન –સંવત્ ૧૯૮૫ પોષ વદી ૧૨,
ઇ સ ૧૯૨૯ તા ૬ ઠી ફેબ્રુઆરી

# सत्सिद्धान्तमार्तण्डे प्रश्नोत्तरसङ्क्षेपः[1]।

मङ्गलम्

श्रीमद्बालमुकुन्दमिन्दुवदनं वृन्दावनानन्दिनं
वन्दे सुन्दरमेकमेव न परान्निन्दामि वृन्दारकान्।
वर्तन्तामचिरन्तनादिविषदोऽनन्ता अनन्तातले
मन्तुं ते गणयन्तु माऽयमितरान्मूर्धा न नन्तुं क्षमः॥

उद्दामदानवमदाऽनवदानदुःख्य-
द्भूभारहारणविहारकृतावतारः।
निष्पक्षभक्तपरिरक्षणदत्तदीक्ष-
चक्रायुधोऽवतु चिरान्मथुराधिपोऽस्मान्॥

सर्वाम्नायमयेन येन वहतान्तःपुण्डरीकेक्षणं
हृत्पद्मानि विकासितानि सुपथा व्यक्तीकृता हर्षिताः।
हंसालोचनरोधिनः प्रमथिता वादाः प्रमादावहा
गोभिः कर्म सतां प्रवर्तितमसौ श्रीवल्लभाऽर्कोऽवतात्॥

सुरसार्थसेवनीयं श्रुत्युचितगुणं परप्रभावलयम्।
सद्ब्रह्मसूत्रकलितं स्वाचार्याणां वपुर्वचश्च भजे॥ ४॥

सदालिसेवितौ वन्दे परागमहितौ मृदू।
अरविन्दरुचां चोरौ चरणौ विठ्ठलेशितुः॥ ५॥

भूमिका

अथाऽस्ति भारतेऽस्मिन्वर्षे प्राच्योपान्तप्रान्तेषु ढुण्ढारो नाम विषयविशेषः। तस्मिंश्चाऽस्ति श्रीमद्राम-चन्द्रकुलोद्भवतया पारम्परिकात्यन्तवैष्णवैरुपासनानि-र्भरवशात् सर्वत्र सत्कार्येषु जानकीजानि पुरस्कुर्वद्भिः सकलकलानिधितया सार्थकितराजभावैर्नृपालैः पाल्य-मानं जयपुरं नाम नगरम्। तच्चेदानीं प्रशास्ति परम-धर्मधुरीणो राजराजपदभाग्रामसिंहो नाम। तस्य च निकटे अस्ति कश्चिल्लक्ष्मणगिरिर्नाम शैवलक्ष्मणाऽन्वितो दण्डीति व्यपदिश्यमानः स्ववचसालं कलहंसतामुद्भाव्य प्रजाः सकलकलाः कुर्वन् जनविशेषः। यो हि—

---

[1] सम्पूर्णग्रन्थावलोकनश्रमपरिहाय, केवलजिज्ञासूना सुकोमलमतीना बोधायाय सङ्क्षेपोऽत्र समुपन्यस्त.।

कालानुकूलं कलयन् किलाऽविल-
म्बलान्नृपालस्य मनोऽतिनिर्मलम् ।
सदा नवश्रीसहितश्च शैशवा-
द्रमेशमार्गेष्वधिकारितां गतः ॥ ६ ॥

तेनाऽधुनाऽमन्दनृपाश्रयातुन्दिलमदेन स्वच्छन्दतया स्वेच्छामात्रमूलांश्चतुःषष्टिप्रश्नान्विधाय वसुधावलये सर्वत्र तत्पत्रकं चतुरोऽपि प्रधानवैष्णवसाम्प्रदायिकान्प्रति प्रेषितमिति किम्वदन्ती चिरेण सञ्चरन्ती उत्तराशाभरणमितो भवितेतीव वैश्रवणोपकण्ठमाससादेह-मोहमयीपुरवास्तव्यानां समग्रोदग्रगुणस्तव्यानां श्रीमदाचार्यवंशमौक्तिकानां गोस्वामिनाम् । तेषु च—

श्रीवल्लभाचार्यकुलप्रदीपः
समस्तदुर्वादतमःप्रमाथी ।
सुवर्णसत्पात्रकृताऽऽश्रयो यो-
ऽक्षयिष्णुसत्स्नेहरसेन पूर्णः ॥ ७ ॥

प्रज्वाल्य दारिद्र्यदशाममीषां
प्रकाशमानः स्वकरप्रभावात् ।
विवेकहेतुः सदसत्पथानां
श्रीजीवनाख्यो जयति प्रधानः ॥ ८ ॥

वेदान्तसाहित्यमुखाः सुविद्याः
श्रिया समं यत्र कृताधिवासाः ।
सापत्न्यभावादिव दर्शयन्ति
प्रतिक्षणं स्वस्वगुणातिरेकम् ॥ ९

सर्वदैव गुरोः कर्तुर्नित्यं सुरसभावनम् ।
जीवस्य जीवनस्याऽपि गतो भेदः परस्परम् ॥ १० ॥

अथ स्फुरद्व्याकृतिलब्धकीर्ते-
र्न्याकृतिः श्लाघ्यतमास्ति यस्य ।
परः स वेदान्तवनीमृगेन्द्रः
श्रीगोकुलाधीश इति प्रसिद्धः ॥ ११ ॥

तथाऽपरः श्रीयदुनाथनामा
सदीक्षितो दुर्जनशिक्षणेषु ।

पात्रं य एकं परमं मतीना-
मन्येऽप्यनन्येश्वरभक्तिमन्तः ॥ १२ ॥

ते च सर्वेऽपि—

तदा तदाकर्ण्य जनाननागतं
कुतश्चिदानाय्य तदत्र पत्रकम् ।
श्रीजीवनेशोपवने समुत्सुकाः
समेतमेतन्मिलिता व्यलोकयन् ॥ १३ ॥

ततश्च—

निरीक्ष्यासङ्गततरान् प्रश्नांस्ते नितरामिमान् ।
पराहतोत्तरौत्सुक्याः क्षणमेकं व्यमर्शयन् ॥ १४ ॥
पदवाक्यप्रमाणज्ञ आचार्यो जीवनाभिधः ।
समाज्ञापयतिस्मेदं स मां तावत्पुरःस्थितम् ॥ १५ ॥
विचित्रसंस्कृताः प्रश्ना विचित्रार्था इमे यतः ।
विचार्यमाणा आचार्यमुखादर्हन्ति नोत्तरम् ॥ १६ ॥
वैतण्डमण्डलीगण्डकण्डूपाण्डित्यखण्डिनः ।
निपतन्ति नखा नैव हरिणां गिरिकागणे ॥ १७ ॥
तस्मादस्माकमाज्ञातस्त्वमेषां नातिविस्तरात् ।
वितरोत्तरमाम्नायादिप्रमाणैः प्रपूरितम् ॥ १८ ॥
प्रायः सर्वं सुबोधार्थं नात्यन्तं तर्ककर्कशम् ।
अन्वमोदन्त ते सन्त इमां श्रीजीवनोदितिम् ॥ १९ ॥
अथो गुणवतीमेतां हेतुमामोदसम्पदाम् ।
सुमनोनन्दितां मूर्ध्ना माल्यमिव वहन्नहम् ॥ २० ॥
विद्वन्मणेर्धनश्यामात्स्वतातांल्लब्धशास्त्रदृक् ।
गोवर्धनाभिधो लेखं यथामति समारभे ॥ २१ ॥
सत्पक्षपातिनो हंसा नूनं नालीकवल्लभाः ।
गुणं गृह्णत मा दोषं नीरक्षीरविवेकिनः ॥ २२ ॥

इति भूमिका । पृष्ठे ३

परिभाषा

अष्टौ प्राधान्यतः प्रश्नाः कृतास्तत्राऽप्यवान्तराः ।
अष्टाष्टं प्रत्येकमित्थं चतुःषष्टिरिहोदिताः ॥ २३ ॥
सर्वांस्तान् क्रमशः प्रश्नान् सङ्ख्यानिर्देशपूर्वकम् ।
विलिख्यैकैकशस्तेषामत्रोत्तरमुदीर्यते ॥ २४ ॥

सङ्क्षिप्योत्तरसारार्थः कथ्यते कारिकात्मना ।
पूर्वं पुनः स एवार्थः सप्रमाणं प्रपञ्च्यते ॥ २५ ॥
अन्तेऽतीतार्थनिष्कर्षः पद्यैः सर्वत्र दृश्यते ।
सर्वेषूत्तरभागेषु प्रायेणाऽयं क्रमोऽत्र मे ॥ २६ ॥
क्वचित्प्रासङ्गिकोऽत्रार्थोऽनापृष्टोऽपि निरूपितः ।
स्वसिद्धान्तोपकाराय भाविप्रश्नापनुत्तये ॥ २७ ॥
इति परिभाषा । पृष्ठे ३

स्वकामितम्—

किञ्चित्सविस्तरमिदं विफलं किल स्या-
दित्थं विधाय सहसैव धियं न हेयम् ।
सन्तः परश्रमनिरर्थकताजिहीर्षा-
वन्तः कृपालव इहाऽस्ति ममार्थनेयम् ॥ २८ ॥
किन्त्वेकवारमखिलं खलु नेत्रपात्रं
कार्यं विचार्यमथ योऽत्र गुणश्च दोषः ।
व्यक्तीभविष्यति स दर्पणमर्पणीयं
किं पाणिकङ्कणपरीक्षणकामनायाम् ॥ २९ ॥
पृष्ठे ३–४

प्रश्न

अथात्राष्टसु प्रधानप्रश्नेष्वाद्यः प्रश्नः
(१) भवत्सम्प्रदायः कः
तत्र सम्प्रदायशब्दस्य कोऽर्थः ?

उत्तरम्

अथ श्रीहरिदासैर्यद्ब्रह्मरुद्रादिभिः सुरैः ।
पुरा प्रादुष्कृतं वेदाद्भेदाभेदादिभेदतः ॥ १ ॥
सम्यक् परम्पराप्राप्तं हरिमन्त्रादिकर्मकम् ।
सर्वप्रकर्षवद्दानं सम्प्रदाय इहोच्यते ॥ २ ॥ पृष्ठे ३–४

तस्मात्—
सम्यक् प्रकृष्टं दानं स मन्त्रादेः श्रुतिमूलकम् ।
इत्यर्थः सम्प्रदायेति शब्दस्योक्तः पुरातनैः ॥ ३ ॥

---

कति भेदाः (१)

पृष्ठे ९

किमयं सम्प्रदायत्वव्याप्यविभाजकतावच्छेदकधर्मविशिष्टविशेष्यकसङ्ख्याप्रकारकः प्रश्नः, आहोस्विद्वैष्णवसम्प्रदायत्वव्याप्यविभाजकतावच्छेदकधर्मवद्विशेष्यकसङ्ख्याप्रकारकः ?

तत्राद्ये, वैष्णवहैरण्यगर्भशैवप्रभृतयोऽनन्ता एव, ते शास्त्रे लोके च तत्र तत्र प्रसिद्धाः ।

अथ द्वितीयश्चेदुच्यते—

चतुर्भुजभुजच्छायाव्यवसायात्सुनिर्भयाः ।
सम्प्रदायास्तु चत्वारो महामायाभयापहाः ॥ १ ॥
रुद्रेण भगवत्पत्न्या ब्रह्मणा सनकादिभिः ।
एतैश्चतुर्भिराचार्यैर्जगदुद्धारकारणैः ॥ २ ॥
समुद्रशायिनः स्वान्तःशायितातिदयाम्बुधेः ।
प्रभोः सकाशात् सम्प्राप्य प्रकाशं गमिताः पुरा ॥ ३ ॥
द्वापरान्ते हरीच्छातो मतैः कापालिकादिभिः ।
बौद्धैश्चाब्रह्मवादैश्च दैवैस्ते शिथिलीकृताः ॥ ४ ॥
श्रीविष्णुस्वामिभी रामानुजैर्माध्वाभिधैस्तदा ।
निम्बार्कैश्चावतीर्णैस्ते भूय एव समर्थिताः ॥ ५ ॥
एते प्राधान्यतः प्रोक्ता अन्ये तदुपजीविनः ।
प्रकाशानन्दमुख्यास्त्वनन्ताः सन्तो जयन्ति ते ॥ ६ ॥

तस्मात्,

"सत्सम्प्रदायस्य भिदाः प्रसिद्धा-
श्चतस्र एताश्चतुरब्धिकाञ्च्याम् ।
दातुं समर्थाश्चतुरः पुमर्थान्
यासु प्रमाणं श्रुतयश्चतस्रः" ॥ १ ॥

पृष्ठे ९–१०

कस्मै प्रयोजनाय ? ( २ )

ब्रह्मज्ञानश्रवणतः सर्वकर्मसमृद्धता ।
अन्ते मुक्तिर्हरेर्भक्तिः फलसाधनरूपिणी ॥ १ ॥
अनन्यसाध्यं मोक्षस्य द्वारमेकं गतार्गलम् ।
यत्तस्य वैष्णवत्वस्योद्भवो मन्त्रोपदेशतः ॥ २ ॥
आचार्यशासनाद्वेदसर्वधर्मानुपप्लवः ।
ततश्च जगतो रक्षा समग्रस्य स्वधर्मतः ॥ ३ ॥
एवमादीनि मुख्यानि सम्प्रदायकृतौ हरेः ।
प्रयोजनानि दृश्यन्ते गौणानि तु सहस्रशः ॥ ४ ॥

पृष्ठे १२

प्रयोजनान्यनन्तानि तत्सन्तानं कियन्मया ।
सर्वसत्फलसन्तानसम्प्रदायस्य वर्ण्यताम् ॥ १ ॥

विद्विषां रोषपोषार्थे तोषार्थं विदुषां सताम् ।
अज्ञमोहप्रमोषार्थं तथाप्युक्तानि कानिचित् ॥ २ ॥

पृष्ठे ४४

केन केन वैलक्षण्येन सम्मताः ?

इह जिज्ञासाबोधकः किंशब्दो वैलक्षण्ये सामानाधिकरण्येनान्वेति । वैलक्षण्यं त्वसाधारणो धर्मः । प्रयोजकत्वं च तृतीयार्थः । तत्र प्रकृत्यर्थस्याधेयतासम्बन्धेनान्वयः । प्रत्ययार्थप्रयोजकत्वस्य तु सम्मता इत्येकदेशसम्मतौ निरूपकतासम्बधेनान्वयः । सम्मतिश्चात्र तत्तत्सम्प्रदायानुयोगिकपरस्परप्रतियोगिकभेदप्रकारिकाभिप्रेता स्यादिति प्रकरणानुरोधादवगम्यते । तथा च पूर्ववाक्ये भेदशब्दोपात्ततत्तत्सम्प्रदायविशेषविषयकतादृशसम्मतिप्रयोजका साधारणधर्मविषयिणी बुभुत्सा अनुयोजिकात्मसमवेतेति ज्ञायते ॥

वैलक्षण्यं बहुविधं सम्प्रदायेषु वर्तते ।
आचारेषु च चिह्नेषु साधनेषु फलेषु च ॥ १ ॥
भक्त्यादीनां प्रकारेषु सिद्धान्तेषु च विस्तरात् ।
तद्यथा तुलसीकाष्ठघटितां मालिकां गले ॥ २ ॥
दधत्येके सदा देव पूजाद्यवसरेऽपरे ।
ऊर्ध्वपुण्ड्रे च मुद्रादौ सेवादिषु हरेस्तथा ॥ ३ ॥
प्रकारभेदा बहवस्तत्तद्ग्रन्थेषु दर्शिताः ।
शुद्धाद्वैतं तथा द्वैतं विशिष्टाद्वैतमप्यथ ॥ ४ ॥
द्वैताऽद्वैतं चेति भेदा अपि वेदादिनिर्णयात् ।
विलक्षणत्वमन्योन्यमेवं ग्रन्थेषु विस्तरात् ॥ ५ ॥
तेषु तेषु विनिर्णीतमनन्ताः सन्ति ते भुवि ।
अत्यन्तविस्तरभयात्तत्सर्वमिह सर्वथा ॥ ६ ॥
वक्तुं न शक्यते स्याच्चेज्जिज्ञासा ते समुत्कटा ।
तत्तद्ग्रन्थान् समभ्यस्य तत्तदाचार्यसन्निधौ ॥ ७ ॥
कृत्वोपसृतिं तत्सर्वं वैलक्षण्यं विबुध्यताम् ।
जीवा नानाप्रकृतयः सात्त्विकादिविभेदतः ॥ ८ ॥
सर्वेषामुद्धृतिस्तेषां तत्तद्योग्योपदेशतः ।
कर्तव्या सम्प्रदायैरित्यन्योन्यमविरोधिता ॥ ९ ॥

पृष्ठे ४६

भेदेषु भवत्सम्मतिर्न वा ?

वेदशास्त्राविरुद्धेषु भेदेष्वस्त्येव सम्मतिः ।
न कस्याप्यास्तिकस्य स्यात्तद्विरुद्धेषु सम्मतिः ॥
खेदारण्यस्य लोकानां ये दावाग्नय उत्थिताः ।
वेदादिमूलका मार्गभेदास्तेष्वस्ति सम्मतिः ॥ १ ॥

पृष्ठे ४८

सम्मतिश्चेत्तदाचरणं कुतो न ?

वेदानुसारिभेदेषु प्रोक्तोऽभ्युपगमस्तु नः ।
तथापि न स्वधर्मातिरिक्ताचरणमिष्यते ॥ १ ॥
कृतेर्विधिनिषेधाभ्यां शास्त्रे स्वेतरधर्मयोः ।
तथास्तिकानां सर्वेषां भिन्नेष्वपि परस्परम् ॥ २ ॥
तत्तच्छाखीयपाठेषु तत्तत्सूत्रोक्तकर्मसु ।
सत्त्वेऽपि सम्मतेः पूर्वं स्वशाखाध्ययनं मतम् ॥ ३ ॥
सदैवाचरणं चापि स्वस्वशाखीयकर्मणाम् ।
स्वकीयमेवाचरणं तथास्ते सम्प्रदायिनाम् ॥ ४ ॥
एवं सम्मतिसत्त्वेऽपि नान्यधर्मकृतिः क्वचित् ।
प्राप्यतेऽतोऽत्ययुक्तोऽपि ह्येवं प्रश्नस्तु चातुरी ॥ ५ ॥

पृष्ठे ४८

अथावान्तरषष्ठप्रश्नरूपं द्वितीयं वाक्यम् ।
असम्मतिश्चेत्कुतोऽङ्गीक्रियते ? ॥ ६ ॥

"सम्मतिर्वैदिकेषूक्ता ततोऽयं सर्वथा वृथा ।
हेतुपर्यनुयोगोऽथावैदिकेष्वस्त्यसम्मतिः ॥ १ ॥
तत्र चेत्पृच्छ्यते हेतुः सविकल्पद्वयोत्तरे ।
वेदशास्त्रविरोधाख्यः पूर्वमेवोदितो मया" ॥
तस्मान्नायं प्रश्नः पुनरुत्तरमर्हतीति श्रीः ॥
मार्गकुले किल कलया
कलहाकुलतां तु कलयितुं प्रश्नः ।
रचितोऽनुचितोऽन्योन्यं
कलहायेरन् वृथा कथं सन्तः ॥ १ ॥

पृष्ठे ४८

किं वर्णनिष्ठः ॥ ६ ॥

"इह किमिति पृथक्पदात् सम्प्रदायस्य वर्णनिष्ठत्वमस्ति न वेत्येव जिज्ञासितमाहोस्वित् कस्मिन् वर्णे निष्ठा यस्येति समस्तपदाजिज्ञासाबोधककिंशब्दस्य वर्णे सामानाधिकरण्येनान्वयात्, सम्प्रदायाधिकृतो वर्णविशेषः ?" ॥

तत्राद्ये, वर्णविशिष्टेषु मनुष्येषु सम्प्रदायप्रवृत्तेः प्रत्यक्षसिद्धत्वेन संशयघटकस्याभावकोटेरनुदयेन प्रथमकोटेरेव विवादानध्यासिततया संशयस्यैवानुदयात्तस्यैकधर्मिकविरुद्धकोटिद्वयावगाहिज्ञानरूपत्वात् व्यर्थः प्रश्नः ॥

अथ किमाश्रमनिष्ठ इत्यग्रिमवाक्यानुरोधाज्ज्ञायते धर्मा हि द्विविधा एव, वर्णधर्मा आश्रमधर्माश्चेति भेदादिति प्रष्टुर्मतम् ॥ तत्र भगवन्मन्त्रग्रहणतत्सेवादीनां सम्प्रदायधर्माणां वर्णधर्मत्वमाश्रमधर्मत्वं वेत्येव विचिकित्सितं तस्येति ॥ तत्राप्युच्यते—

न हि धर्माणामुक्तरीतिकद्वैविध्यमेव शास्त्रसम्मतम् ॥ तदतिरिक्तानामपि जातिधर्मकुलधर्मदेशधर्मादीनां तत्र तत्र निरूपणात् ॥ "किञ्च वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषत" इत्यत्र धर्माणां षड्विधत्वं विज्ञानेश्वरेणोक्तम्, तद्यथा—"वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति" ॥

तत्र सम्प्रदायधर्माणां साधारणधर्मत्वम्, सम्प्रदायसम्मततुलसीकाष्ठमालाद्याचाराणां प्रायेण सर्ववर्णेष्वविशिष्टत्वात् ॥ विज्ञानेश्वरेणाप्यहिंसाशौचाचारादीनां साधारणधर्मत्वं विलिख्य तेषामाचार्यकरणपूर्वकत्वकथनात् । इदञ्चाचार्यकरणं साम्प्रदायिकगुरूपसर्पणरूपमेव ॥ उपनयनकालिकस्य तस्य स्त्रीशूद्रादिष्वसम्भवेन साधारणधर्मत्वाभावात् ॥ तथा बाह्यान्तरभेदेन द्विविधमपि शौचं सम्प्रदायैकलभ्यमित्युपपादितं प्राक् ॥

पृष्ठे ५४

"एवं स्वधर्मशिक्षायै भगवद्भक्तिसिद्धये ।
स्वाधिकारानुसारेण ब्रह्मज्ञानाय मुक्तये ॥
तन्मूलभूतभगवन्मन्त्रसङ्ग्रहणाय च ।
चतुर्णामपि वर्णानां सम्प्रदायोपसेवनम् ॥
अतो हरेः सम्प्रदायभुजच्छायाविनिर्भयाः ।
महर्षिभिः सर्ववर्णनिष्ठाः शास्त्रेषु वर्णिताः" ॥

पृष्ठे ६४

अथास्य षष्ठप्रश्ननिवेशितस्य किंवर्णनिष्ठ इति वाक्यस्य शाखाभूतमेव वाक्य खतन्त्रतयाऽवान्तरसप्तमप्रश्नत्वेन लिखितं तद्यथा—

वर्णनिष्ठश्चेत्सम्प्रदायपूर्वको वर्णो वर्णपूर्वकः सम्प्रदायो वा ? ।

किमत्र पूर्वत्वं नाम अवश्यक्लृप्तनियतपूर्ववृत्तित्वं पूर्वकालिकत्वमात्रं वा तत्राद्यश्चेत् सम्प्रदायानां "वेदान्तकृद्वेदविदेव चाह"मित्यादिस्मृतिभिर्भगवत्कर्तृकत्वप्रतिपादनेन वर्णानामपि "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः" इति "मुखबाहूरुपज्जाना"मित्यादिश्रुतिस्मृतिभिस्तथात्वप्रतिपादनेन चोभयोरपि सृष्ट्यारम्भे परमेश्वरकर्तृकत्वनिश्चयाद्वर्णसम्प्रदाययोरन्यतरस्यान्यतरकारणकत्वशङ्कायाः किञ्चिज्ज्ञबालकबुद्धावप्यनुदयेन एवाऽयुक्ततरः ॥ अथ च यदि सर्ववर्णानामप्यावश्यको वैष्णवसम्प्रदायस्तर्हि सम्प्रदायग्रहणादेव तेषां तत्तद्वर्णवैशिष्ट्यसिद्धिरुत प्रथमतस्तद्वर्णविशिष्टानामेव सम्प्रदायग्रहणमभिप्रेयत इत्येव तव विचिकित्सितं स्यात् । तदा तु एतत्समानयोगक्षेमोऽसावपि प्रश्नो भवन्तं प्रति कुतो न प्रसरेत् ? ॥ द्विजमात्राधिकारकस्य गायत्रीमन्त्रस्योपदेशादेव द्विजत्वसिद्धिं स्वीकुर्वतां सर्वशिष्टानां मते गायत्र्युपदेशपूर्वकं द्विजत्वं द्विजत्वपूर्वकस्तदुपदेशो वेति ॥ तथा सर्वेष्वपि वर्णेषु प्रसह्य भस्मरुद्राक्षधारणादिशिवदीक्षाचिह्नाग्रहं कुर्वतो भवतोऽपि मते तद्धारणपूर्वको वर्णो वर्णपूर्वकं तद्धारणं वेति च ॥ अतः, स्वयं प्रदेयेनैतादृशप्रश्नानामुत्तरेणैव प्रकृतेऽपि सन्तुष्यतां समानयोगक्षेमत्वादित्यलम् । अनेनैव द्वितीयपक्षोऽपि दत्तोत्तरः । नित्यत्वाप्रतिद्रुहिणं प्रतिकल्पं चावर्तमानानामुभयेषामपि सृष्टिकाल एव भगवता प्रकटितत्वेन समकालिकत्वसिद्ध्याऽन्यतरस्मिन् पूर्वकालिकत्वकथनस्य गगनकुसुमसगन्धसगन्धत्वात् ॥ अतो न वर्णानां सम्प्रदायपूर्वकत्वं, नापि सम्प्रदायस्य तत्पूर्वकत्वं वेति भाव्यम् ॥

पृष्ठे ६५

अथ स्वतन्त्रप्रश्नकल्पमपीदं वाक्यमस्य सप्तमप्रश्नस्यैव कुक्षिनिवेशितमुपलभ्यते, तद्यथा—

आश्रमा ब्रह्मचर्यादयः, तन्निष्ठत्वं च सम्प्रदायस्य तदधिकारकत्वम् । किंपदात्तद्विषयिणी जिज्ञासा प्रष्टुरात्मसमवेताऽस्तीति ज्ञायते तत्र ॥

किमाश्रमनिष्ठः ? ।

अथ पूर्ववदत्राऽपि किमिति बुभुत्साबोधकं पृथक्पदमाश्रित्य सम्प्रदायोपलक्षिततद्धर्माणामाश्रमधर्मत्वमस्ति ? न वेत्येवं जिज्ञासितमाहोस्वित्कस्मिन्नाश्रमे निष्ठा यस्येति समासमाश्रित्य सम्प्रदायाधिकृताश्रमविशेषः ? तत्राद्यपक्षस्य किं वर्णनिष्ठ इति प्रश्नाद्यकल्पसमानयोगक्षेमत्वात्तदुत्तरेणैव दत्तोत्तरत्वात् ॥ द्वितीयश्चेत् प्रथमकल्पोत्तरे साधारणधर्मत्वकथनेनैव प्राप्तप्रतिवचनः । अथाऽप्युच्यते—

"हरेर्मन्त्रग्रहस्तस्य पूजनं वेदचिन्तनम् ।
एकपक्षावलम्बेनातृष्णाशमदमादिकम् ॥
ब्रह्मज्ञानं ततो मुक्तिः कृष्णभक्तिः सुनिर्मला ।
सर्वेष्वप्याश्रमेष्वस्तीत्यखिलाश्रमनिष्ठता ॥
बोधिता सम्प्रदायानां तत्र तत्र महर्षिभिः ।
स्पष्टा सा बुद्ध्यते सर्वैः सच्छास्त्रश्रमहर्षिभिः" इति ।

पृष्ठे ६६

"एवं सत्सम्प्रदायानां वैष्णवानामिहोदितः ।
सर्वाश्रमेषूपयोगोऽत्यावश्यकतया मया" ॥

पृष्ठे ९६

अथ स्वतन्त्रप्रश्नकल्पस्यापि अनुयोजकेन सक्रमप्रश्नकुक्षावेव प्रसह्य निक्षिप्तस्य "किमाश्रमनिष्ठ" इति वाक्यस्यावान्तरार्थविषयकमपि वाक्यं स्वातन्त्र्येणावान्तराष्टमप्रश्नतयोल्लिखितम्, तद्यथा—

आश्रमनिष्ठश्चेत्तदा सम्प्रदायपूर्वक आश्रम
आश्रमपूर्वकः सम्प्रदायो वा ?

अत्रापि पूर्वत्वं नाम कारणत्वं विवक्ष्यत आहोस्वित् पूर्वकालिकत्वमात्रम् ? नाद्यः । उक्तवक्ष्यमाणैः, "वेदान्तकृद्वेदविदेव चाहम्", "वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" इत्यादिभिर्गीतामनुस्मृत्यादिप्रमाणमूर्धन्यग्रन्थवचनशतैः सम्प्रदायानामीश्वरप्रादुष्कृतत्वसिद्ध्यां, एवमाश्रमाणामपि द्वितीयस्कन्धे (अ० ६ श्लो० १८)—

"पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः ।
अन्तस्त्रिलोक्यास्त्वपरो गृहमेधो बृहद्व्रत" इति ॥

एकादशस्कन्धे (अ० १७ श्लो० १३)—

"गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ।
वक्षःस्थलाद्वने वासो न्यासः शीर्षणि संस्थितः" ॥

इत्यादिश्रीभागवतादिवचनैर्भगवन्निर्मितत्वनिश्चयेन चा-

न्यतरस्मिन्नन्यतरकारणकत्वस्य वक्तुमयुक्तत्वात् । नान्त्यः । उभयोरपि सृष्ट्यारम्भकाले परमेश्वरप्रकटितत्वेन समकालिकत्वसिद्धावेकतरस्य पूर्वकालिकत्वकथनानौचित्यात् । अथाश्रमग्रहणानन्तरं सम्प्रदायग्रहणं, तद्ग्रहणानन्तरं वाऽऽश्रमग्रहणमित्येव विचिकित्सितं स्यात्, तदा तूभयमपि स्वीकुर्मः, अनुभवसिद्धत्वात् । तथाहि, गृहस्थाश्रमे ब्रह्मचर्यावस्थानुष्ठितसाम्प्रदायिकधर्मोत्तरकालिकत्वं तदुत्तरानुष्ठेयतद्धर्मापेक्षया पूर्वकालिकत्वं चास्त्येव । एवमुत्तरत्रापि वेदितव्यम् । अथैवं तर्हि ब्रह्मचर्यस्य तु न सम्प्रदायपूर्वकत्वमिति व्यभिचारः । नैष दोषः, "आबालं हरिभक्ति"रिति सर्वशिष्टप्रसिद्धेर्ध्रुवप्रह्लादनारदादिषु सत्सम्प्रदायग्रहणपूर्वकमत्यन्तबाल्येऽपि भगवद्भक्तिभरस्य बहुपुराणप्रसिद्धत्वाच्च । तस्मात्प्रष्टुः पाण्डित्यख्यापक एवायमीदृशश्चोद्योदय इति शिवम् । एवम्—

"अज्ञानां कष्टदैरष्टप्रश्नैः शिष्टोपहासदैः ।
युक्तोऽनिष्टो विनिर्दिष्टोत्तरः प्रश्न इहादिमः" ॥

पृष्ठे ९७

(अथ द्वितीयः प्रधानप्रश्नः)
कियत्कालात्प्रवृत्तः ? ।

अत्र कालादिति गम्यमानप्रभृतियोगे पञ्चमी । "अपादाने पञ्चमी"तिसूत्रे कार्तिक्याः प्रभृतीति महाभाष्यप्रयोगेण प्रभृत्यारभ्यादिपदयोगे तत्स्वीकारात् ॥ तथा चावधित्वं पञ्चम्यर्थः । अथ जिज्ञासाबोधकात् किंशब्दात् "किमिदम्भ्यां वो घः" इति शास्त्रानुशिष्टेन यत्तदेतेभ्यः "परिमाणे वतुबि"त्यतोऽनुवृत्तेन परिमाणार्थकेन वतुपा निष्पन्नः कियच्छब्दश्च सामानाधिकरण्येन कालेऽन्वेति ॥ तथा च सम्प्रदायप्रवृत्त्यावधिभूतकालमारभ्य वर्तमानकालपर्यन्तकालनिष्ठं परिमाणं सङ्ख्याविशेषविशिष्टसम्वत्सरयुगादिरूपं प्रष्टुर्बुभुत्सितमिति प्रतीयते ।

"अनादिसिद्धवेदोक्ताः सम्प्रदाया अनादयः ।
प्रश्नः प्रवृत्तिकालस्यानादित्वात्तत्र नोचितः ॥

प्रतिकल्पं जगत्सृष्टौ प्रवर्तन्ते हरीच्छया ।
वेदवद्वेदसिद्धास्ते तिरोदधति च क्षये" ॥

पृष्ठे ९८

"अनादिकालिकास्तस्मात्सम्प्रदायास्तु वैष्णवाः ।
अनादिसिद्धवेदोक्ताः प्रतिकल्पप्रवर्तिनः ॥
वैष्णवैर्ब्रह्मरुद्राद्यैर्दैवतैर्नारदादिभिः ।
महद्भिर्मुनिभिश्चान्यैः प्राक्तनैरुपसेविताः" ॥

पृष्ठे १०५

( नवमः प्रश्नः )

अथास्य द्वितीयस्य मुख्य-प्रश्नस्यावान्तरा अष्टौ प्रश्नाः कृतास्तत्राद्यः प्रश्नः ।

तत्र बहुकालात्प्रवृत्तश्चेन्मन्वादिग्रन्थेष्वदृष्टत्वात्तद्विलक्षणत्वाच्च कथं प्रमाणम् ?

"नूनं मनुस्मृतिर्दृष्टा नान्यत्किञ्चित्त्वया यतः ।
वेदोक्तसम्प्रदायेषु ब्रूषे मन्वाद्यदृष्टताम् ॥
स्वरूपासिद्धमत्रोक्तं हेत्वाभासद्वयं त्वया ।
तद्दूषणादयं प्रश्नो भवेद्दत्तोत्तरोऽचिरात्" ॥
"अतः प्रमाणमूर्धन्यवेदाद्यैर्वर्णितेष्विह ।
प्रवर्तितेषु हरिणा सम्प्रदायेष्वनादिषु ॥
कथं प्रमाणमित्येप हेत्वाभासद्वयाश्रयात् ।
प्रश्नः शास्त्रादर्शनाद्वा विद्वेषाद्वेति भाति नः" ॥

पृष्ठे १०९

अथ द्वितीयस्य द्वितीयोऽवान्तरः प्रश्नः—

( दशमः प्रश्नः )

स्वल्पकालाच्चेद्धर्मादिनिर्णयस्तद्विधिस्तत्फलानि च सर्वत्रोपलभ्यमानत्वात्कथं प्रवृत्तः ?

अत्र यद्यर्थकाच्चेदित्यव्ययात्, स्वल्पकालात्प्रवृत्तिपक्ष एवायं प्रश्नो भवतोऽभिप्रेत इति ज्ञायते ।

अस्माभिश्च बहुकालादेव तत्प्रवृत्तिः श्रुत्यादिसिद्धत्वादङ्गीक्रियते । अतः, प्रकृतविकल्पे प्रथमकल्पसमर्थनेनैवायं दत्तोत्तरः । अस्मिन् प्रश्ने उपलभ्यमानत्वादित्यनेनान्वयार्थं धर्मादिनिर्णयस्य तद्विधेस्तत्फलानां चेति षष्ठीप्रयोगे कर्तव्येऽपि प्रथमान्तप्रयोगस्तु आर्षग्रन्थाभ्यासबाहुल्यात् षष्ठ्यर्थे प्रथमाङ्गीकारेणेति भाति। आस्तामेतत्, ईदृशानि संस्कृतोच्चारणकौशल्यान्येतेषु प्रश्नेष्वनेकत्र सन्त्येव । तानि चावलोकनक्षण एव विदुषां स्वतः प्रतिभास्यन्तीति किं परच्छिद्रोद्घाटनेन ।

तस्मात्—

"धर्मादिनिर्णयं तस्य विधिं फलयुतं जनान् ।
वेदाद्युक्तं ग्राहयित्वा प्रवर्तयितुमत्र तान् ॥

ततो ज्ञाने ततो भक्तौ धरोद्धारधुरन्धराः ।
प्रादुष्कृताः सम्प्रदायाः पुरैव परमात्मना" ॥

पृष्ठे ११४

( एकादशः प्रश्नः )

अथास्यैव द्वितीयावान्तरप्रश्नस्य पुनः प्रपञ्चनरूपो द्वितीयप्रधानप्रश्नावान्तरस्तृतीयः प्रश्नः ।

**किञ्च, वेदपुराणेतिहासादिषु प्रचुरतया धर्मनिर्णयस्तत्फलनिर्णयश्च वर्तत एव, पुनर्नवीनरीत्याऽशास्त्रीयतया किं प्रयोजनम् ?**

इति वक्तव्यम्—

अनुपदमुपन्यस्तेन प्रश्नेन गतार्थोऽपि स्वाभिलषितप्रश्नसङ्ख्याप्रपूर्तये स एव प्रश्नः पुनः प्रकारान्तरेणोपन्यस्तः । अस्ति चात्र किञ्चिद्वैलक्षण्यं यत्साम्प्रदायिकरीतौ नवीनत्वं अशास्त्रीयत्वं चोपक्षिप्तमिति ।

"अनादिवेदसिद्धेषु सम्प्रदायेष्वनादिषु ।
प्रवर्तितेषु श्रुतितो हरिणोद्धारकारिणा ॥
सहसैव नवीनत्वमशास्त्रीयत्वमीरयन् ।
भासि भोः प्राक्तनम्मन्यः परब्रह्माद्यपेक्षया ॥
वेदादौ नैव शास्त्रत्वं भवतोऽभिमतं किमु ।
शक्तो वक्तुमशास्त्रीयत्वं श्रौते कथमन्यथा" ॥

पृष्ठे १२१

अथ द्वितीयस्य चतुर्थोऽवान्तरः प्रश्नः

**आचार्यश्च कः ?**

( द्वादशः प्रश्नः )

किमत्र सम्प्रदायप्रवर्तकाचार्यलक्षणमेव विवित्सितं उत तद्व्यक्तिविशेषः ? । तत्राद्यश्चेत्, सारसङ्ग्रहे पाद्मे—
"सहस्रशाखाध्यायी च सर्वयज्ञेषु दीक्षितः ।
कुले महति जातोऽपि न गुरुः स्यादवैष्णवः ॥
यस्तु मन्त्रद्वयं सम्यगध्यापयति वैष्णवः ।
स आचार्यस्तु विज्ञेयो भवबन्धविनाशक" इति ॥

इत्थञ्चास्मन्मार्गाचार्याणाम्—

"परम्परा पुरा प्रोक्ता परमात्मपुरःसरा ।
चिराचराचराभीष्टा धरायां भक्तितत्परा ॥
गोपीपतिसमारम्भां श्रीविष्णुस्वामिमध्यमाम् ।
श्रीमदाचार्यपर्यन्तां स्तुतां गुरुपरम्पराम्" ॥

पृष्ठे १२८

अथ द्वितीयस्य पञ्चमोऽवान्तरः प्रश्नः

( त्रयोदशः प्रश्नः )

**तत्र वर्णनिर्देशो देशनिर्देशो**

अथ पूर्ववदिहापि कस्मिन्वर्णे देशे वंशे चोत्पन्न आचार्यो भवितुमर्हतीत्येव पृच्छ्यते ? आहोस्विद्भवत्सम्प्रदायप्रवर्तका आचार्याः केषु वर्णदेशवंशेषूत्पन्नाः ? इति ॥

वंशपरम्परानिर्देशश्च वक्तव्यः

तत्राद्यश्चेत्, न हि देशविशेषवंशविशेषयोर्नियम आचार्यत्वप्रयोजकः शास्त्रसिद्धोऽस्ति। तथापि ब्राह्मणवर्णोत्पन्नो मन्वादिप्रशंसितत्रैवर्णिकनिवासार्हार्यावर्तादिनीवृदुद्भूतो मातृपितृकुलशुद्ध एवाचार्यो भवितुमर्हतीति बहुशिष्टसम्मतम्। तत्र वर्णान्तरव्यावर्तनायाद्यं विशेषणम्। मन्वादिभिर्ब्राह्मणस्यैव धर्मप्रशासनाधिकारस्मरणात्। यथाह प्रथमाध्याये मनुः (श्लो० ९८)—

"उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥
ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।
ईश्वरः सर्वभूतानां धर्मकोषस्य गुप्तये" इत्यादि॥

अथ द्वितीयश्चेत्तर्ह्युच्यते। तत्र प्रथमाचार्यस्य सर्वकारणस्य सर्वेश्वरस्य श्रीपुरुषोत्तमस्य तु वर्णनिर्देशेनालम्। अथ शिवनारदयोर्व्यासादीनां स्ववंशसहितः श्रीमदाचार्यपर्यन्तानां च ब्राह्मणेष्वेव प्रादुर्भावोऽस्तीति निर्दिष्टो वर्णः। अथ देशा निर्दिश्यन्ते। तत्राद्याचार्यस्य तु स्वरोमरन्ध्रनिक्षिप्तानेकब्रह्माण्डमण्डलस्य न वयं देशनिर्णये शक्ताः। शिवस्य तु भगवद्धाम वा कैलासादिर्वासः। नारदस्य तु शबलाश्वादीनां शिष्यत्वकरणानन्तरं दक्षशापस्वीकारिणो न देशविशेषनियमः, किन्तु तस्य सर्वत्र पर्यटनमेव। "त्वं पर्यटन्नर्क इव त्रिलोकीमन्तश्चरो वायुरिवात्मसाक्षी", "कदाचिन्नारदो योगी लोकानुग्रहकाङ्क्षया। पर्यटन् सकलाँल्लोकानि"त्यादिषु श्रीभागवतब्रह्माण्डपुराणमहाभारतादिषु तत्र तत्र वर्ण्यते। एवं व्यासस्य यमुनाद्वीपप्रादुर्भूतस्य बदरिकाश्रमः स्थितिदेश इति। तथा शुकाचार्यस्य व्यासवेश्मन्याविर्भूतस्य जन्मतः प्रव्रजनं न स्थितौ विषयविशेषनियम इति च तत्र तत्र पुराणेतिहासादिषु प्रसिद्धमेव।

इत्थञ्च—

"कृतदेशादिनिर्देशा उमेशादिमदैशिकाः।
जयन्तु स्वपथाचारान्नयन्तु श्रीहरिं निजान्" ॥

पृष्ठे १३६

(चतुर्दशपञ्चदशषोडशाः प्रश्नाः)

अथ द्वितीयस्यावान्तराः षष्ठसप्तमाष्टमप्रश्नाः ।

पेषणयन्त्रनिपतितकणवदेकहेलया निराक्रियन्ते, ते यथा

किञ्च, ब्राह्मणादृतेऽन्यवर्णोऽपि स्वस्याचार्यत्वं कर्तुं शक्नोति न वा ? । शक्नोति चेत्तदा शास्त्रविरुद्धम्, नो चेत्तदा कुत आचार्यत्वम् ? तदुपदेश्याश्च हीनवर्णोपदेश्याः कथं कल्याणभागिनः स्युः ? ।

अस्माकं सम्प्रदाये श्रीमहादेवाचार्यादारभ्य स्वरूपेण इदानीं स्ववंशरूपेण च स्वसम्प्रदायानुशासनकारिश्रीमद्वल्लभाचार्यचरणपर्यन्तं न कोऽपि ब्राह्मणातिरिक्तवर्ण आर्यतरमाचार्यकार्यमात्मन्याचार्यत्वमवधार्य कृतवान् । युक्तं चैतत् "वर्णानां ब्राह्मणो गुरुः", "ब्राह्मणो नितरां गुरुरि"त्याद्यनेकवचनेभ्यः । अत इयन्मात्रेणैव द्वितीयप्रश्नावयवभूताः षष्ठसप्तमाष्टमाः प्रश्नाः प्रदत्तोत्तरा इति श्रीः । येषां च सम्प्रदाये स्वेच्छया वा शापादिवशाद्वा क्षत्रादिवर्णेष्ववतीर्णा अपि महानुभावा भगवदाज्ञया भक्तिधर्मोपदेशादिकं कृतवन्तः सन्ति सन्तस्ते भवन्तमुत्तरवितरणेन मूकीकर्तुं समर्था इति न वयमेतत्पर्यनुयोगार्हाः । इत्थम्—

"सम्प्रदायोत्पत्तिकालाचार्यपङ्क्त्यादिकर्मकः ।
दत्तोत्तरो द्वितीयोऽयं प्रश्नः प्रश्नैः सहाष्टभिः" ॥

पृष्ठे १३६

अथ तृतीयः प्रधानः प्रश्नः,

भवतामुपदेश्याश्चत्वारो वर्णास्त्रयो द्वावेको वा ?

"जगदुद्धारचतुरो वर्णांस्तु चतुरो हरिः ।
उद्धर्तुं सम्प्रदायं स्वं पुरा प्राह पुरारये ॥
मन्त्रग्रहे भगवतस्ततस्तन्नित्यसेवने ।
यथाधिकारे भगवज्जन्मने च गुरुदर्शिते ॥
ततो मुक्तौ च भुक्तौ च चतुर्णामधिकारिता ।
अविशेषान्मुमुक्षाया उपदेश्यास्ततोऽखिलाः" ॥

एतत्सर्वं "किंवर्णनिष्ठ" इत्यस्योत्तरे पूर्वमेव विस्तरात् प्रपञ्चितम्, अयं प्रश्नश्च तस्यैव प्रपञ्चनरूपश्चतुःषष्टिसङ्ख्यापूरणाय पुनः कृत इति तदुत्तरेणैव दत्तोत्तरो वेदितव्य इति शिवम् ।

पृष्ठे १३७

( सप्तदशाष्टादशौ प्रश्नौ )

अथास्य तृतीयप्रश्नस्याङ्गप्रश्नप्रतिपादकान्यष्टौ वाक्यानि तत्र प्रथमद्वितीये यथा ।

तत्र त्रयो वर्णा द्विजातय-

अत्राद्यवाक्ये जिज्ञासाबोधककिमादिपदाभावात् प्रष्टव्यांश एव न स्फुटीभवति । यदि तु त्रैवर्णिकानामेतन्मुख्यं न वेत्येवं विचिकित्सितं तदा तु एकतरनिर्धारफलकविरुद्धकोटिद्वयोद्भावनार्थं न वेति विकल्पबोधकपदलेखोऽपेक्षितः । अत्रोत्तरं तु शास्त्रसिद्धत्वा-

स्तेषु गर्भाधानादिसंस्कारपूर्वकं यज्ञोपवीतादिग्रहणं सावित्रीग्रहणं च मुख्यम् ।

तद्वते जातित्वाभावाद्व्रात्यत्वं यथा तथा भवदुपदेशाभावेऽपि किम् ?, तथात्वे सर्वेषां भवदुपदेशाभावाद्व्रात्यत्वं स्नानदानादिकं वृथा स्यात्, तन्न शास्त्रसम्मतं विद्वत्सम्मतं च, नो चेत्कुतो विशेषाग्रहः ? ।

त्रैवर्णिकानां गायत्रीग्रहणमपि मुख्यमेवेति को वा प्रामाणिकोऽनुन्मत्तो न ब्रूयात् । इदमेव मुख्यं न त्वन्यत्किमपीति तु न प्रामाणिकेन शक्यं वक्तुम् । वक्ष्यमाणरीत्या वैष्णवमन्त्रग्रहणस्याप्यावश्यकत्वात् । यदि तु भवदुपदेशाभावेऽपि किमित्यन्तः प्रथमः प्रश्नः, तदा तु प्रश्नपत्रेऽङ्कनिक्षेपः प्रमादात् । उत्तरं त्वनुपदमुच्यते ।

अथावान्तरद्वितीयप्रश्ने गायत्रीग्रहणमन्तरा त्रैवर्णिकानां द्विजत्वासिद्ध्या यथा व्रात्यत्वमत्यनिष्टं स्ववारणायोपदेशस्यावश्यकत्वफलकं भवति, तथा भवतां वैष्णवसाम्प्रदायिकानां मन्त्राणामुपदेशाग्रहणेऽपि किं तादृशमनिष्टं येनोपदेशग्रहणावश्यकता सिद्ध्येदित्यभिप्रेत्य यदुक्तं तत्रोत्तरं ब्रूमः—

"श्रीकृष्णदेवमन्त्राणां वैष्णवात्सम्प्रदायतः ।
अभावे तूपदेशस्य वैष्णवत्वं न सिद्ध्यति ॥
असिद्धौ वैष्णवत्वस्य भक्तिज्ञाने सुदुर्लभे ।
अलाभे ज्ञानभक्त्योस्तु हरितोषः कुतस्तराम् ॥
हरिप्रसादशून्यस्य कुतो मुक्तिः कुतः सुखम् ।
अतो मोक्षादिसिद्ध्यर्थं तदावश्यकता मता ॥
किञ्चोक्तं त्रिषु गायत्र्यावश्यकत्वं त्वयाऽपि तु ।
उपदिष्टाऽपि गायत्री स्वार्थज्ञानमपेक्षते ॥
जपेन फलसिद्ध्यर्थं तदर्थस्तु हरिः स्वयम् ।
गायत्रीद्वारतश्चेतोऽर्पणं कृष्णे निगद्यते ॥
इत्थं समन्वयाध्याये निर्णीतमपरत्र च ।
अवश्यमुपदेशोऽतः स स्यात्तस्याः फलाप्तये ॥
तमन्तरा नाधिकारः श्रीहरेः सेवनादिके ।
हेतौ चतुःपुमर्थानामतश्चावश्यको मतः ॥
अन्यानि चास्य धन्यानि फलानि विमलानि तु ।
सकलानि प्रमापूरैः प्रापश्यन्त चिरन्तनैः" ॥

पृष्ठे १३८

इत्थमन्यत्राप्यनेकत्रार्षग्रन्थेषु उद्घाटितहृदयेक्षणेन वीक्षणीयम्—

"अत आवश्यकतर उपदेशस्तु वैष्णवः ।
भक्तिज्ञानादिसम्पत्त्या सन्तोऽसन्तोषहा हरेः ॥
प्रसन्ने तु जगन्नाथे ब्रह्मरुद्रेश्वरे हरौ ।
किं नस्तद्भृत्यभृत्यानां चेत्यं कृत्यं च शिष्यते" ॥

पृष्ठे १५५

(एकोनविंशः प्रश्नस्तदुत्तरारम्भश्च)

अथ तृतीयप्रश्नस्यावान्तरतृतीयः प्रश्नः

किञ्च, यथा वर्णाश्रमधर्मवर्णनं सर्वत्र ग्रन्थेषु तत्फलवर्णनं च तथा भवत्सम्प्रदायवर्णनं तत्फलवर्णनं च कुतो न?

अत्र सर्वग्रन्थेषु वर्णाश्रमधर्मवर्णनकथनं प्रमादात् । शिक्षाव्याकरणनिरुक्तच्छन्दोलक्षणरूपेष्वङ्गग्रन्थेषु प्रातिशाख्यनिघण्टुब्रह्ममीमांसादिषूपाङ्गग्रन्थेषु आयुर्वेदधनुर्वेदगान्धर्वस्थापत्याख्योपवेदग्रन्थेषूक्तसर्वशास्त्रानुरोधाज्ञनबोधानवरोधाय तैस्तैः सूरिभिः प्रणीतेषु परार्धाधिकेषु तेषु तेषु ग्रन्थेषु, बहुषु काव्यनाटकादिषु च सर्वत्र नियमेन तद्वर्णनानुपलब्धेर्ग्रन्थत्वेन वर्णाश्रमधर्मनिरूपकत्वेन च व्याप्त्यसिद्धेः । उक्तेषु सर्वेषु ग्रन्थत्वस्य च सर्वविद्व्यवहारसिद्धत्वात् । यदि तु स्मृतिपुराणादय एवात्र सर्वग्रन्थशब्देनाभिप्रेतास्तर्हि तेष्वस्माकं वैष्णवसम्प्रदायस्य तदभिमतसिद्धान्तज्ञानभक्तिभगवत्सेवोर्ध्वपुण्ड्रतुलसीकाष्ठमालाशङ्खचक्रादिधारणप्रभृतिधर्माणां भगवत्प्रसादतत्परपदावाप्तितत्सायुज्यादिलक्षणानां सम्प्रदायफलानां च यथायथं तत्र तत्र वर्णनमहाकल्लोला दरीदृश्यन्त एव बहुग्रन्थार्णवकर्णधारैर्निर्मत्सरैः सद्भिरिति न कोऽपि दोषः ।

पृष्ठे १५५

इह तु—

"प्रमाणानन्त्यतः सर्वं लेखितुं नैव शक्यते ।
तथापि तव सन्तुष्ट्यै दिङ्मात्रं दर्शितं मया ॥
सर्वग्रन्थेष्विति वदन् सर्वज्ञः स्वमुखाद्भवान् ।
बौद्धवैभवशून्यैस्तदीयतां कथमुत्तरम्" ॥

पृष्ठे १६५

स्तेषु गर्भाधानादिसंस्कारपूर्वकं यज्ञोपवीतादिग्रहणं सावित्रीग्रहणं च मुख्यम् ।

तद्वते जातित्वाभावाद्व्रात्यत्वं यथा तथा भवदुपदेशाभावेऽपि किम् ?, तथात्वे सर्वेषां भवदुपदेशाभावाद्व्रात्यत्वं स्नानदानादिकं वृथा स्यात्, तन्न शास्त्रसम्मतं विद्वत्सम्मतं च, नो चेत्कुतो विशेषाग्रहः ? ।

त्रैवर्णिकानां गायत्रीग्रहणमपि मुख्यमेवेति को वा प्रामाणिकोऽनुन्मत्तो न ब्रूयात् । इदमेव मुख्यं न त्वन्यत्किमपीति तु न प्रामाणिकेन शक्यं वक्तुम् । वक्ष्यमाणरीत्या वैष्णवमन्त्रग्रहणस्याप्यावश्यकत्वात् । यदि तु भवदुपदेशाभावेऽपि किमित्यन्तः प्रथमः प्रश्नः, तदा तु प्रश्नपत्रेऽङ्कनिक्षेपः प्रमादात् । उत्तरं त्वनुपदमुच्यते ।

अथावान्तरद्वितीयप्रश्ने गायत्रीग्रहणमन्तरा त्रैवर्णिकानां द्विजत्वासिद्ध्या यथा व्रात्यत्वमत्यनिष्टं स्ववारणायोपदेशस्यावश्यकत्वफलकं भवति, तथा भवतां वैष्णवसाम्प्रदायिकानां मन्त्राणामुपदेशाग्रहणेऽपि किं तादृशमनिष्टं येनोपदेशग्रहणावश्यकता सिद्ध्येदित्यभिप्रेत्य यदुक्तं तत्रोत्तरं ब्रूमः—

"श्रीकृष्णदेवमन्त्राणां वैष्णवात्सम्प्रदायतः ।
अभावे तूपदेशस्य वैष्णवत्वं न सिद्ध्यति ॥
असिद्धौ वैष्णवत्वस्य भक्तिज्ञाने सुदुर्लभे ।
अलाभे ज्ञानभक्त्योस्तु हरितोषः कुतस्तराम् ॥
हरिप्रसादशून्यस्य कुतो मुक्तिः कुतः सुखम् ।
अतो मोक्षादिसिद्ध्यर्थं तदावश्यकता मता ॥
किञ्चोक्तं त्रिषु गायत्र्यावश्यकत्वं त्वयाऽपि तु ।
उपदिष्टाऽपि गायत्री स्वार्थज्ञानमपेक्षते ॥
जपेन फलसिद्ध्यर्थं तदर्थस्तु हरिः स्वयम् ।
गायत्रीद्वारतश्चेतोऽर्पणं कृष्णे निगद्यते ॥
इत्थं समन्वयाध्याये निर्णीतमपरत्र च ।
अवश्यमुपदेशोऽतः स स्यात्तस्याः फलाप्तये ॥
तमन्तरा नाधिकारः श्रीहरेः सेवनादिके ।
हेतौ चतुःपुमर्थानामतश्चावश्यको मतः ॥
अन्यानि चास्य धन्यानि फलानि विमलानि तु ।
सकलानि प्रमापूरैः प्रापञ्चयन्त चिरन्तनैः" ॥

पृष्ठे १३८

इत्थमन्यत्राप्यनेकत्रार्षग्रन्थेषु उद्घाटितहृदयेक्षणेन वीक्षणीयम्—

"अत आवश्यकतर उपदेशस्तु वैष्णवः ।
भक्तिज्ञानादिसम्पत्त्या सन्तोऽसन्तोषहा हरेः ॥
प्रसन्ने तु जगन्नाथे ब्रह्मरुद्रेश्वरे हरौ ।
किं नस्तद्भृत्यभृत्यानां चेत्यं कृत्यं च शिष्यते" ॥

पृष्ठे १५५

(एकोनविंशः प्रश्नस्तदुत्तरारम्भश्च)

अथ तृतीयप्रश्नस्यावान्तरतृस्तीयः प्रश्नः

किञ्च, यथा वर्णाश्रमधर्मवर्णनं सर्वत्र ग्रन्थेषु तत्फलवर्णनं च तथा भवत्सम्प्रदायवर्णनं तत्फलवर्णनं च कुतो न ?

अत्र सर्वग्रन्थेषु वर्णाश्रमधर्मवर्णनकथनं प्रमादात् । शिक्षाव्याकरणनिरुक्तच्छन्दोलक्षणरूपेष्वङ्गग्रन्थेषु प्रातिशाख्यनिघण्टुब्रह्ममीमांसादिषूपाङ्गग्रन्थेषु आयुर्वेदधनुर्वेदगान्धर्वस्थापत्याख्योपवेदग्रन्थेषूक्तसर्वशास्त्रानुरोधाज्ञनबोधानवरोधाय तैस्तैः सूरिभिः प्रणीतेषु पराधाधिकेषु तेषु तेषु ग्रन्थेषु, बहुषु काव्यनाटकादिषु च सर्वत्र नियमेन तद्वर्णनानुपलब्धेर्ग्रन्थत्वेन वर्णाश्रमधर्मनिरूपकत्वेन च व्याप्त्यसिद्धेः । उक्तेषु सर्वेषु ग्रन्थत्वस्य च सर्वविद्व्यवहारसिद्धत्वात् । यदि तु स्मृतिपुराणादय एवात्र सर्वग्रन्थशब्देनाभिप्रेतास्तर्हि तेष्वस्माकं वैष्णवसम्प्रदायस्य तदभिमतसिद्धान्तज्ञानभक्तिभगवत्सेवोर्ध्वपुण्ड्रतुलसीकाष्ठमालाशङ्खचक्रादिधारणप्रभृतिधर्माणां भगवत्प्रसादतत्परपदावाप्तितत्सायुज्यादिलक्षणानां सम्प्रदायफलानां च यथायथं तत्र तत्र वर्णनमहाकल्लोला दरीदृश्यन्त एव बहुग्रन्थार्णवकर्णधारैर्निर्मत्सरैः सद्भिरिति न कोऽपि दोषः ।

पृष्ठे १५५

इह तु—

"प्रमाणानन्त्यतः सर्वं लेखितुं नैव शक्यते ।
तथापि तव सन्तुष्ट्यै दिङ्मात्रं दर्शितं मया ॥
सर्वग्रन्थेष्विति वदन् सर्वज्ञः स्वमुखाद्भवान् ।
बौद्धवैभवशून्यैस्तदीयतां कथमुत्तरम्" ॥

पृष्ठे १६५

(विंशः प्रश्नः उत्तरकारिका च)
अथ तृतीयस्यावान्तरस्त्रिकोटिकसंशयघटितश्चतुर्थः प्रश्नः भवदाचार्येभ्यः पूर्वाचार्या व्यासादयो न्यूनाः, समाः, अधिकाः, वा?

"व्यासादिभ्योऽस्मदाचार्या न्यूना अंशेन केनचित् ।
अंशेन केनचित्तुल्याः कुतश्चिच्चांशतोऽधिकाः" ॥

तथाहि—अस्मत्पूर्वाचार्यैर्व्यासाद्यनुसारेणैव धर्मब्रह्मणी निर्णीय जीवोद्धारार्थं प्रतितन्त्रार्थानां प्रवर्तितत्वेन तैस्तेषां बहुस्थलेषु स्वगुरुत्वकथनेन चास्मदाचार्याणां स्वदृष्ट्या व्यासादितो न्यूनत्वमस्त्येव ।

अथ तैर्यथा साङ्ख्यपातञ्जलतर्कदिगम्बराद्यर्वाचीनकुराद्धान्तनिराकरणपूर्वकं जीवोद्धारार्थं ब्रह्मचतुर्लक्षण्यादिकं प्राणायि । तथा अस्मदाचार्यैरपि तदर्थं तद्भाष्यसुबोधिनीतत्त्वदीपनिबन्धप्रभृतयो महत्तरा ग्रन्था अनेकार्वाचीनमायावादादिकुतर्कनिरासपूर्वकं प्रणीताः । तादृशवाङ्मनोऽगोचरान्यलौकिकार्थनिरूपणदर्शनेन व्यासादिवत्तेषां सर्वज्ञत्वमपि निर्मत्सराणां सतां चेतसि स्वयमेव निश्चीयते । तथेदानीं प्रत्यक्षतस्तद्दर्शनाभावेऽपि व्यासादिवद्बहुजनमान्यत्वमप्यनुभूयत एव । अतोऽस्मदाचार्याणां व्यासादिभिस्तुल्यत्वमपि सुस्थम्, तथा व्यासादिकृतानेकग्रन्थसद्भावेऽपि केषाञ्चिच्चतुर्लक्षण्यादीनां सर्वथा स्वतोऽवबोधाक्षमार्थत्वात्तत्राऽप्रविशतां सुगमेष्वपि पुराणादिषु विविधविचित्रदेवादिवर्णनदर्शनेनातिभ्राम्यदल्पमतीनां बहुलकलिकालकलुषकलहकवलितसकलसत्कर्मज्ञानादीनां अस्मादृशां वारम्वारमपारसंसारवारिधितरङ्गैरितस्तत उत्क्षिप्यमाणानामतिजडमतितया व्यासादिभिरपि बोधयितुमशक्यानां जनानां परमकरुणया भाष्यादिग्रन्थद्वारा निखिलश्रुतिगीताब्रह्मसूत्रश्रीभागवताद्यर्थावबोधहस्तावलम्बदानेन सहसैव श्रीमन्नन्दसूनुपदारविन्दसेवाख्यायां सुदृढेनाविस्थापनेनास्त्यस्मदाचार्याणां व्यासादितोऽप्याधिक्यम् ।

. पृष्ठे १६६

(एकविंशः प्रश्नस्तत्राद्यकोटेरर्थः उत्तरकारिकाश्च)
अथ पञ्चमोऽवान्तरः प्रश्नः
न्यूनाश्चेत्सकलधर्ममार्ग-

अत्राद्यकोटेरयमर्थः स्यात् । यदि भगवदाचार्येभ्यो व्यासादयो न्यूनास्तर्हि तन्माहात्म्यादिप्रतिपादकस्य शास्त्रस्य विरोधः । सकलधर्ममार्गाणां व्यासादिकर्तृ-

विप्लवः स्यात्, समाश्चेत्तदा तत्कर्तृकग्रन्थानां प्रचारः सर्वत्र स्यात्, तत्कुतो न?

कत्वात्तेषां न्यूनपुरुषकर्तृकत्वापत्त्या विप्लवश्च भवेदिति ।
"आध्यात्मिकस्य ज्ञानस्य सन्मन्त्रस्य च दानतः ।
भगवत्प्रापकाः साक्षादाचार्याः सर्वतोऽधिकाः ॥
परब्रह्मतया सर्वोत्तमास्ते सर्वथा जनैः ।
मन्तव्या इति धर्मस्य मार्गो व्यासादिनिर्मितः ॥
अतो व्यासाद्यनुज्ञातः स्वाचार्योत्कर्षचिन्तने ।
नैव विप्लवगन्धोऽपि धर्ममार्गस्य कस्यचित्" ॥

पृष्ठे १६९

अथ समाश्चेत्तदा तत्कर्तृकग्रन्थानां प्रचारः सर्वत्र स्यात्तत्कुतो नेति द्वितीयकोटेरयमर्थो भवेत् । यदि व्यासादयो भवदाचार्यैस्तुल्यास्तर्हि व्यासादिकृतभारतादिग्रन्थवद्भवदाचार्यकृतग्रन्थानां सर्वत्र प्रचाराभावे को हेतुरिति । अत्र तत्कर्तृकेति तच्छब्देनास्मदाचार्यपरामर्शः प्रक्रमविरुद्धः । समाश्चेदिति व्यासादिविशेषणसान्निध्येन व्यासादिपरामर्शस्यैव सम्भवात् । तेषामेव शीघ्रोपस्थितिकत्वात् । तथा स्यात्तत्पदयोर्वैयर्थ्यं सर्वत्र प्रचारः कुतो नेत्येतावतैव निर्वाहात् । तदिति क्लीबप्रयोगोऽपि प्रमादात् । परामृष्टव्यस्य प्रचारस्य पुंस्त्वात् । अव्ययत्वादिप्रकल्पनं तु क्लिष्टं आस्तामेतत् ।

न हि सादृश्ये तद्गतसर्वधर्मत्वमुपमेये सम्भवति । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव सादृश्यत्वात् ।

अतो ग्रन्थप्रचाररूपधर्माभावेऽपि न क्षतिः । किञ्च, ग्रन्थप्रचाराऽभावेऽपि न महात्मनां तौल्यहानिः । अन्यथा वेदान्ताचार्यतया व्यासतुल्यानां व्यासेन स्वशास्त्रे समुदाहृतसिद्धान्तानामप्याश्मरथ्यौडुलोमिकाशकृत्स्नादीनामिदानीं तत्कर्तृकग्रन्थप्रचाराभावादाधम्यं प्रसज्येत । तेषां वेदान्ताचार्यत्वं तु श्रीमदाचार्यरामानुजाचार्यपूर्णप्रज्ञाचार्यनिम्बार्कभास्करशङ्कराचार्यनीलकण्ठविज्ञानेन्द्रभिक्षुप्रभृतिभिः प्रायः सर्वैरपि ब्रह्ममीमांसाभाष्यकारैस्तत्तत्सूत्रव्याख्याने इत्यमुक आचार्यो मन्यते, इत्यमुक आचार्यो मन्यत इत्येवं लिखद्भिः स्वीकृतमेव । अपिच, किमत्र प्रचारशब्देन प्रामाण्याभ्युपगमपूर्वकाध्ययनादिकं विवक्षितमाहोस्वित्तदभावेऽपि ग्रन्थानां पर्यालोचनादिमात्रम् । तत्राद्यश्चेत् व्यासकर्तृकग्रन्थानामपि न हि तादृशः प्रचारः सर्वत्र मनुष्यसामान्येऽस्ति । न चैवमपि वेदप्रामाण्यवादिषु तु सर्वत्र तत्प्रचारोऽस्त्येवेति वाच्यम् । वेदप्रामाण्यवादिभिरपि पूर्वमीमांसकतार्किकादिभिर्दर्शनान्तराभिमानिभिस्तत्त्वतो व्यासदर्शनप्रामाण्यानङ्गीकारात् । यथा जैमिनिना नवमाध्याये कर्मण एव फलसमर्पकत्वं निर्णीतं न त्वीश्वरस्य । यथा च तार्किकैरीश्वरस्य निमित्तत्वमात्रमूरीकुर्वद्भिः (अ० १ पा० ४ सू० २३)

"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"त्यादौ व्यासोक्तमपीश्वरस्य जगदुपादानत्वं नाङ्गीक्रियत इति दिक्। यदि तु व्यासदर्शनानुयायिषु सर्वेषु तत्कृतग्रन्थानां तथा प्रचारोऽस्त्येवेत्युच्यते। तदा तु तदन्तःपातिष्वस्मत्सम्प्रदायानुरोधिष्वस्मदाचार्यकृतग्रन्थानामपि तथा प्रचारोऽस्त्येवेत्युच्यते, तदा तु तदन्तःपातिष्वस्मत्सम्प्रदायानुरोधिष्वस्मदाचार्यकृतग्रन्थानामपि तथा प्रचारोऽस्त्येवेति तुल्यम्। अथ द्वितीयश्चेत्तर्हि औदासीन्येन प्रियतया द्वेष्यतया वाऽस्मदाचार्यकृतग्रन्थपर्यालोचनमन्यत्रापि भवेदेव। अत एव भवताऽपि सप्तमप्रधानप्रश्नस्यावान्तरचतुर्थप्रश्ने लिख्यते। प्रमाणं चेत्तदा भवदीयरचितग्रन्थेषु कुतो विरुद्धतया वर्णनमिति। तथा भवद्गुरुतया श्रूयमाणेन सदानन्दगिरिणाऽपि इदानीं प्रारब्धे सहस्राक्षनामके स्वग्रन्थे अस्मन्मतभास्करोपरि किञ्चिद्दूषणधूलिनिक्षेप आरब्ध इति किम्वदन्ती श्रूयते। अतोऽस्माकं ग्रन्थप्रचारे तादृशभवत्प्रश्न एव प्रमाणम्। कथमन्यथा भारतभागवतादिटीकाविरोधो भवताऽपर्यालोचितेष्वस्मद्ग्रन्थेष्ववगतः। अनवगमे च कथं धार्ष्ट्येन पृष्टं स्यात्। अतः कृतमीदृशेन महात्मनां निन्दाफलकेन कुतर्केण।

यथा प्रथमाध्याये बृहत्पराशरः (श्लो० २१)—

"तथा स्मरन्ति ते धर्मं कल्पे कल्पान्तरान्तरे।
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे"॥

इत्यादिना प्रतियुगं धर्मवैलक्षण्यात्तदा तदा तत्तत्प्रवृत्त्यर्थं धर्मप्रवर्तकानामाचार्याणामाविर्भावमुक्त्वाऽऽह (श्लो० ३१)—

"युगे युगेषु ये धर्मास्तेषु धर्मेषु ये द्विजाः।
तेषां निन्दा न कर्त्तव्या युगरूपा द्विजोत्तमा" इति॥

पराशरमाधवीये च प्रथमाध्याये कूर्मपुराणे—

"न निन्देद्योगिनः सिद्धान् व्रतिनो वा यतींस्तथे"ति॥

पृष्ठे १६९–१७१

(द्वाविंशः प्रश्नस्तत्र दोषः उत्तरं च)

अथास्यैव संशयस्य चरमकोटिघटितोऽवान्तरः षष्ठः प्रश्नः अधिकाश्चेत्तदा प्रमाणं वक्तव्यम्?

अत्र जिज्ञासितं तु व्यासादिनिरूपितेऽस्मदाचार्यनिष्ठोत्कर्षे प्रमाणं भवेत्तथापि भवदाचार्येभ्यः पूर्वाचार्या व्यासादयो न्यूनाः, समाः, अधिका वेति संशयवाक्यप्रक्रमानुरोधात्तस्मादाचार्यनिरूपितव्यासादिनिष्ठोत्कर्षे प्रमाणं विवित्सितमिति फलति। तत्राद्यश्चेत् प्रक्रान्तत्रिकोटिकविकल्पे आद्यकल्पस्यानल्पोत्तरविलोकनेनैव सन्तोष्टव्यं भवता। अथ द्वितीयश्चेत्तदा न हि सर्वावधिकव्यासादिपूर्वाचार्यनिष्ठोत्कर्षे कस्यापि विसम्मतिरस्तीत्यलं बहुपुराणादिप्रमाणगणनिर्णीतेऽर्थे पोतवत्प्रमाणजिज्ञासया। तस्मात्—

"व्यासादितोऽस्मदाचार्येष्वसामान्यतयोदितम्।
न्यौन्यं सामान्यमाधिक्यं मान्यं तन्माऽन्यथा भ्रमेः"॥

पृष्ठे १७१

(त्रयोविंशः प्रश्नस्तदुत्तरकारिके च)

अथ सप्तमोऽवान्तरः प्रश्नः

शूद्राश्चेदुपदेश्यास्तदा सच्छूद्रा असच्छूद्रा वा। साधारणाश्चेदधमाः कुतो नोपदेश्याः?। उपदेश्याश्चेत्तैः सह वैष्णवत्वेन तुल्यता न्यूनता वा। न्यूनत्वं चेत्किं भवदीयदीक्षया? तुल्यत्वं चेत्तत्कृतपाकादिकं कुतो नाङ्गीक्रियते?। अङ्गीक्रियत एवेति चेत्तर्हि वैष्णवदीक्षायां सर्वे वर्णाः समा इत्युच्यमाना भवन्तो धन्याः।

"सदसच्छूद्रसामान्यमुपदेश्यतयाऽऽदृतम्।
शास्त्रे सामान्यतः प्रोक्ता शूद्रस्याप्यधिकारिता॥
किं वर्णनिष्ठ इत्यत्र पुरैवैतत्प्रकाशितम्।
किञ्चित्प्रपञ्च्यते प्राप्तावसरत्वात्पुनर्मया॥

अथ यदुक्तं प्रश्नवाक्ये—

अथ यदुक्तं प्रश्नवाक्ये—

उपदेश्या एवेति चेत्तैः सह वैष्णवत्वेन तुल्यता न्यूनता वा। न्यूनत्वं चेत्किं भवदीयदीक्षया? तुल्यत्वं चेत्तत्कृतपाकादिकं कुतो नाङ्गीक्रियते? इति।

इदमनुत्तरणीयम्। अस्माभिश्चाण्डालादिभ्य उपदेशदानानङ्गीकारात्। अथ शूद्राणामुपदेशेऽप्ययं प्रश्नः प्राप्तावसर इति चेदुच्यते। वैष्णवत्वेन तुल्यत्वेऽपि जातेः पाकादिकर्मानर्हत्वात्तत्कृतं तन्नाङ्गीक्रियते।

दीक्षा हि वैष्णवत्वेनोत्कर्षं सम्मान्यत्वमोक्षाधिकारित्वादिलक्षणमैहिकामुष्मिकफलपर्यवसायिनं सम्पादयति। न तु जातिमप्यपहरति। सम्पादयति हि वसन्तस्तरूणामवैषम्येणैव बहलदलसुमनःसङ्गसघनत्वं न तु निम्बकदम्बमाकन्दमन्दारत्वादिलक्षणामपहरति जातिमपि।

पृष्ठे १७९

इत्थम्—

मन्त्रेण विन्यस्यात्मानमनन्यत्वात्पदे हरेः।
सदसच्छूद्रसामान्यं मुनिमान्यं भवत्विह ॥

पृष्ठे १८१

( चतुर्विंशः प्रश्नस्तदर्थश्च )

अथास्य प्रक्रान्तप्रधानप्रश्नस्यावान्तरोऽष्टमः प्रश्नः सच्छूद्रा इति चेत्के सच्छूद्रा इति? तेषां लक्षणं वक्तव्यम्

अस्यायमर्थो भवेत्, यदि सच्छूद्रा एवोपदेश्यास्तर्हि उपदेश्यानुपदेश्ययोः परस्परं व्यावर्त्तकधर्मावगमाय विभाजकतावच्छेदकासाधारणधर्मो निर्वक्तव्य इति।

अस्माभिस्तु साधारण्येन सदसच्छूद्रसामान्यस्यैवोपदेश्यत्वं स्वीक्रियत इति नास्माकमनेन विचारेण प्रयोजनम्। प्रश्ने चेदिति पदेन सच्छूद्रमात्रस्योपदेशाङ्गीकारपक्ष एव तल्लक्षणजिज्ञासावतारबोधनात्।

"इत्यष्टभिः सपदि सङ्गतमङ्ग जल्पै-
रल्पैः कुरङ्गतृषि तुङ्गतरङ्गकल्पैः।
चोद्यं प्रमाणगणयुक्तितरङ्गितेन
दत्तोत्तरं किल विचित्रतरं तृतीयम्"।

पृष्ठे १८३

( चतुर्थः प्रधानः प्रश्नः उत्तरकारिका च )

अथ चतुर्थः प्रधानः प्रश्नः

उपदेशे च रामकृष्णादिमन्त्राः समाना उत तेषु न्यूनाधिकता वा?

"सामान्यं न्यौन्यमाधिक्यमन्योऽन्यं तन्यतेऽधुना।
सन्मन्त्राणां स्वतन्त्राणां श्रूयतां तर्कबन्धुना" ॥

इत्थम्—

"रामकृष्णादिमन्त्राणां न्यूनता च समानता।
आधिक्यं चोचितं तेन भवद्युक्तिः समाऽऽनता" ॥

पृष्ठे १८४

( पञ्चविंशः प्रश्नः उत्तरे स्वसाम्प्रदायिकमन्त्रातिरिक्तमन्त्राग्रहणे बीजं च )

अथास्य चतुर्थप्रधानप्रश्नस्यावलम्बी प्रथमः प्रश्नः तत्र समानश्चेन्मन्त्रान्तरनिषेधः कथं क्रियते ?

किमत्र निषेधशब्देन केनाप्यधिकारिणा नायं मन्त्रो ग्राह्य इत्येवंरूपः स विवक्षित उतास्मत्सम्प्रदायेऽस्मदिष्टफलस्य पुरुषोत्तमसायुज्यादिलक्षणस्यास्मदाचार्यपरम्परोपदिश्यमानमन्त्रमात्रेणैव सिद्धावस्मच्छिष्यस्य न मन्त्रान्तरग्रहणेन प्रयोजनमित्येवंरूपः सः ? तत्र नाद्यः । अस्माभिरस्मदाचार्यैर्वा तादृशनिषेधस्य क्वापि कदाचिदप्यकृतत्वेन कथं क्रियत इत्याक्षेपवैयर्थ्यात् । अथ द्वितीयश्चेत्तर्हि अस्य प्रश्नस्य तद्दानं शिष्याय कुतो न क्रियत इत्यग्रिमप्रश्नादवैलक्षण्येऽपि स्वविवक्षितप्रश्नसङ्ख्यापूरणायैव पार्थक्येनोपन्यस्तत्वादुत्तरेणैवास्य दत्तोत्तरत्वं स्यादिति तच्छ्रवणेनैव परितोष्टव्यं भवद्भिः ।

पृष्ठे १८५

( षड्विंशः प्रश्नस्तदुत्तरारम्भश्च )

अथ चतुर्थप्रधानप्रश्नावलम्बी द्वितीयः प्रश्नः तद्दानं शिष्याय कथं न क्रियते ?

अत्र प्रश्नद्वये कुत इति हेतौ प्रष्टुमुचितेऽपि कथमिति प्रकारप्रश्नस्तु स्वस्य वैलक्षण्यद्योतनार्थः । उत्तरं तु ब्रूमः । अस्मदभीष्टस्य पुरुषोत्तमसायुज्यादिलक्षणस्य फलस्यास्मदाचार्यपरम्परोपदिश्यमानकृष्णमन्त्रैरेव सिद्धौ प्रयोजनाभावात्स्वसदाचारविरोधाच्चास्मत्सम्प्रदायपरम्पराप्रसिद्धगोपालादिमन्त्रत्रयव्यतिरिक्तं कमपि मन्त्रं नास्मदाचार्याः शिष्येभ्य उपदिशन्ति ।

अस्मत्सम्प्रदाये स्वीक्रियमाणस्य कृष्णमन्त्रोत्कर्षस्य तु न स्वोत्प्रेक्षितत्वं शङ्क्यम् । बहुप्रमाणसिद्धत्वात् ।

तस्मादस्मत्सम्प्रदायपूर्वाचार्यपरम्परयोपदिश्यमानं कृष्णमन्त्रत्रयमेवेदानीमप्यस्मदाचार्यैः स्वशिष्येभ्य उपदेष्टव्यं न त्वन्यत् । अस्मत्सम्प्रदायेष्टफलस्य तावतैव सिद्धौ मन्त्रान्तरस्योपदेशे प्रयोजनाभावात् । तदुपदेशे स्वाचार्यमर्यादोल्लङ्घनेन स्वसदाचारविरोधापत्तेश्च । अस्मत्सम्प्रदाये हि श्रीपुरुषोत्तममारभ्य इयदवधि न केनाप्याचार्येण कस्मैचिदपि स्वसाम्प्रदायिकशिष्याय मन्त्रान्तरमुपदिष्टम् । अतः, स्वसाम्प्रदायिकमन्त्रदानमेव स्वशिष्याय क्रियत इति सर्वं सुस्थम् ।

पृष्ठे १९०

( सप्तविंशः प्रश्नः उत्तरे मन्त्राणां स्वस्वप्रतिपाद्यावतारादिसायुज्यदातृत्वम् )

अथ चतुर्थप्रधानप्रश्नावलम्बी तृतीयः प्रश्नः ।

**न्यूनाश्चेत्सर्वमन्त्राणां शास्त्रसम्मतमोक्षदातृत्वाविशेषेण कुतो न्यूनता ?**

अस्माभी रामकृष्णादिमन्त्राणां परस्परतो न्यूनतायां समानतायामधिकतयां च हेतवः पूर्वमेव समर्थिता इति नेदानीमयं हेतुप्रश्न उत्तरणीयः । किञ्चित्तु वदामः । भगवन्मन्त्रेषु तत्तन्मन्त्रप्रतिपादकशास्त्रेण तत्तन्मन्त्रस्य मोक्षदातृत्वे वर्ण्यमानेऽपि नैतन्मन्त्रसामर्थ्येनैवेति वक्तुं युक्तम्; किन्तु, तत्तत्प्रतिपाद्यदेवताप्रसत्त्यैव । तथा चेह भगवन्मन्त्रेषु तत्तन्मन्त्रजपेन तत्तत्प्रतिपाद्यरामकृष्णाद्यन्यतमभगवदवतारप्रसादात्तत्तत्सायुज्यादिलक्षण एव मोक्षो भवति । तैत्तिरीयाणां नारायणोपनिषदि—

"एतासामेव देवताना१ँसायुज्य१ँसार्ष्टिता१ँसमानलोकतामाप्नोती"ति श्रावितन्यायात् । अतस्तत्तन्मोक्षाकाङ्क्षिभिस्तत्तन्मन्त्रोपासनं कर्त्तव्यमिति युक्तम् ।

किञ्च, भगवदवतारेष्वपि पूर्णत्वांशत्वकलात्वादिनां तारतम्यं शास्त्रसिद्धमिति तदनुसारेण तत्प्रतिपादकमन्त्रेष्वपि समालोचनीयं सच्छास्त्रविचारचतुरैः सूक्ष्ममतिभिः कृतिभिरिति श्रीः ।

पृष्ठे १९१

( अष्टाविंशः प्रश्नस्तदुत्तरं च )

अथ चतुर्थप्रश्नावलम्बी चतुर्थः प्रश्नः

**प्रशंसापरतयोपपत्तिस्तु समानैव -परस्परभिन्नमन्त्रग्रहणकर्तुः**

अस्यायमर्थो भवेत् यदि भवद्भिः शास्त्रसिद्धायाः स्वमन्त्रनिष्ठाया मोक्षदातृत्वादिलक्षणायाः स्तुतेर्वास्तविकत्वं मन्त्रान्तरनिष्ठायास्तस्यास्तु तद्ग्रहणविधिशेषार्थवादरूपतया स्वार्थेऽप्रामाणिकत्वमित्युच्यते तर्हि मन्त्रान्तरोपासकेन स्वमन्त्रनिष्ठायास्तस्याः प्रामाणिकत्वं भवन्मन्त्रनिष्ठायास्तूक्तरीतिकाप्रामाणिकत्वमिति शक्येतोद्धुष्य भाषितुम् । तस्मान्नैतत्समाधानं साधीय इति । अस्माभिस्तु शास्त्रसिद्धाया यावद्भगवन्मन्त्रस्तुतेर्भवदुक्तरीतिकमप्रामाणिकत्वं नोररीकृतम्; किन्तु, प्रामाणिकयुक्त्यन्तरत एवोत्तरमनन्तरमेव वितीर्णमतो विशीर्णमूलो नायमनुयोग-इतरदुत्तरवितरणमर्हतीति भव्यं नः ।

पृष्ठे १९९

(एकोनत्रिंशत्तमः प्रश्नः उत्तरकारिकाः)
अथ चतुर्थप्रधानप्रश्नावलम्बी पञ्चमोऽवान्तरः प्रश्नः।
शैवशाक्तिकमन्त्राणां मोक्षदातृत्वमस्ति न वा?

"मन्त्राणां मोक्षदातृत्वं देवतायाः प्रसादतः।
वक्तव्यं मोक्षदो देवो मुकुन्दः सर्ववन्दितः॥
तदंशाः सकला देवाः सकामा आश्रयन्ति तान्।
तत्तद्ददाति तद्द्वारा तेभ्यो माहात्म्यबुद्धये॥
अतो मोक्षप्रदत्वं तु हरिमन्त्रस्य केवलम्।
सर्वकामप्रदत्वं चानन्यभक्तेभ्य उच्यते॥
देवतान्तरमन्त्रास्तु साक्षान्मोक्षप्रदा न हि।
त्रैवर्गिकफलं तेभ्यस्तत्तद्रूपाद्धरेर्भवेत्"॥

अतः—
"मोक्षदं केवलं कृष्णसेवनं देवनन्दितम्।
मुक्तिदं शिवभक्त्यादि दैवतं नैव तं विना॥
तस्मान्मुकुन्दमन्त्राणाममन्दं मुक्तिदायिताम्।
वक्ति शास्त्रं नैव शैवशाक्तादीनां तु तां क्वचित्"॥
पृष्ठे १९१

(त्रिंशत्तमः प्रश्नः उत्तरे निन्दाभेदः स्वस्य तत्कर्तृत्वाभावः)
अथ प्रक्रान्तप्रधानप्रश्नावलम्बी षष्ठः प्रश्नः अस्ति चेन्निन्दा कथं क्रियते?

अस्ति-चेत्पदाभ्यां शैवशाक्तादिमन्त्राणां मोक्षदातृत्वपक्ष एवावतीर्णोऽयं प्रश्नस्तदभावसमर्थनेनैव दत्तोत्तरः।

किञ्च, किमत्र निन्दाशब्देनाऽविद्यमानदोषकीर्त्तनं, विवक्षितमुत विद्यमानतत्कीर्त्तनं स्वयं तद्ग्रहणजपाद्यकरणमेवेति वा?

नाद्यः। अस्माकमद्वैतब्रह्मवादे सर्वस्यापि ब्रह्मरूपत्वेन "सरित्समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्य" इत्यादिषु भक्तिवशात्सर्वस्यापि मन्तव्यत्वविधानेन चास्मत्सम्प्रदाये निन्दाया एवानवसरपराहतत्वात्। क्वचिद्ग्रन्थेषु भगवन्मन्त्रादिस्तुतिप्रकरणे कदाचिदितरनिन्दा चेत्तस्या न हि निन्दान्यायविचारेणादुष्टत्वात्।

न द्वितीयः। तादृशकथने निन्दात्वाभावात्। अन्यथा सर्ववस्तुनिष्ठतात्त्विकगुणदोषनिरूपकाणां ज्यौतिषायुर्वेदादीनां बहूनां शास्त्राणां सर्ववस्तुनिन्दकत्वेन अनुपादेयताप्रसङ्गात्।

न तृतीयः। परधर्मानाचरणस्य शास्त्रसिद्धत्वात्।

अत एव तृतीयाध्याये आपद्धर्मप्रकरणे ( श्लो० ७ ) "आपद्गत" इत्यत्र आपदि क्षात्रादिवृत्त्यपेक्षया ब्राह्मणस्य हीनहीनतरहीनतमेभ्योऽपि प्रतिग्रहादिकमुत्कृष्टं वदता याज्ञवल्क्येन आपद्यपि परधर्माद्द्विगुणस्यापि स्वधर्मस्यैवाचरणं वरीय इति बोधितम् ।

तथा चातः—

"वन्दामहे मुकुन्दं सानन्दं नन्दनन्दनममन्दम् ।
शुद्धाद्वैतानैतानितरान् वृन्दारकांस्तु निन्दामः" ॥

पृष्ठे १९८

( एकत्रिंशः प्रश्नः, उत्तरे शैवादिमन्त्रा राजसतामसेभ्यः शिवसायुज्यादिप्रदाः, तदुपासना क्वचित्परम्परया हरिभक्ति चोत्पादयति )

अथ प्रक्रान्तप्रश्नस्यावलम्बी सप्तमः प्रश्नः

नास्ति चेत्तत्प्रतिपादकशास्त्रस्य का गतिः ?

तादृशं शास्त्रमेव दुर्लभं कदाचित्तत्सम्भवेऽपि तामसजीवपरम् ।

इति तादृशशास्त्रार्थे सति तस्य गतिः कृता ।
मतिमन्तो रतिर्गोपीपतिपादेऽस्त्वतिप्रिया ॥
श्रुतिशुक्तिभवैर्युक्तिमौक्तिकैर्वक्ति भूषितः ।
मुक्ति भुक्ति भक्तिमतामाचार्यः शास्त्रशक्तिमान् ॥
सन्तो जयन्त्वसन्तश्च लोके सुखलतोद्भवाः ।
कुशास्त्रधारिणः प्राज्योत्तमसाधनतत्पराः ॥

पृष्ठे २००

( द्वात्रिंशः प्रश्नः )

अथ चतुर्थप्रधानप्रश्नावलम्ब्यष्टमः प्रश्नः

पत्नीग्रहणरहितस्य दीक्षादानेऽधिकारोऽस्ति न वा ?

"पत्नीयुक्तोऽप्यपत्नीको यती जीवोद्धृतौ गुरुः ।
दद्याद्दीक्षां दयावीक्षां हृद्यां तन्वन्न दोषभाक्" ॥

तथा हि, नियतब्रह्मचारिणां सनकादीनामपि दीक्षोपदेशादिदानेऽधिकारो दृश्यते । उद्योगपर्वणि विदुरेण तेषां गुरुत्वनिरूपणात् । तत्रैव धृतराष्ट्राय तैर्विज्ञानमुपदिष्टमिति प्रख्यातम् । तथा श्रीभागवतचतुर्थस्कन्धादिषु पृथुराजादिभ्यस्तैर्ज्ञानादिकमुपदिष्टम् । नारदपञ्चरात्रादिषु नारदायापि भगवन्मन्त्रतत्कवचादिकं दत्तमिति प्रसिद्धम् । नारदेनाप्याजन्मब्रह्मचारिणा व्यासाय भगवन्मन्त्रदीक्षा दत्तेति नारदपञ्चरात्रब्रह्मवैवर्त्तादिषु स्फुटम् । एवं भागवतगौतमतन्त्रादिषु तेनैव ध्रुवगौतमादिभ्यो द्वादशाक्षरविद्याष्टादशाक्षरगोपालविद्यादय उपदिष्टा इति स्पष्टम् । एवं व्यासादिभ्यो

ज्ञानोपदेशस्यापि तत्कर्तृकत्वं भारतभागवतादिष्वपाणिपिहितम् । एवमपत्नीकेन नारायणमहर्षिणाऽपि सिंहभीतब्राह्मणबटुकाय भगवन्मन्त्रदीक्षादत्तेत्यनाच्छादितं नारदपञ्चरात्रप्रथमरात्रे । एवमितरत्रापि पुराणादिषु तादृशेतिहासा विस्फारितदृग्भ्यां निरीक्षणीयाः ।

किञ्च, "यदहरेव विरजेत्तदहरेव प्रव्रजेत्", "अविप्लुतब्रह्मचर्यो यमिच्छेत्तु तमाविशे"दित्यादिश्रुतिस्मृतिसिद्धमाश्रमासमुच्चयपक्षमाश्रित्य प्रव्रजतामपि दीक्षादानेऽधिकारो दृश्यते । यथा शङ्कराचार्याणां दक्षिणामूर्त्यादिदीक्षादाने । अत एव च याज्ञवल्क्यप्रायश्चित्ताध्याये वानप्रस्थप्रकरणे (श्लो० १) "सुतविन्यस्तपत्नीक" इत्यस्य मिताक्षरायां सुतविन्यस्तपत्नीकस्यापि हि तापसाश्रमिणो वैतानौपासनसाध्यकार्येषु दाने चाधिकारोऽभ्यनुज्ञातोऽस्ति । दीक्षाया अपि दानमेव । गोपृथ्वीसरस्वतीभेदेन दानत्रैविध्यस्य सामशाखीयसांहित्युपनिषदि बृहस्पतिस्मृतौ च दर्शितत्वात् । अतोऽस्मत्सम्प्रदाये पत्नीरहितानामपि नारदशुकदेवाद्याचार्याणां मन्त्रोपदेष्टृत्वस्य पूर्वत एव प्राप्तत्वाच्छास्त्रविरोधाभावाच्च पत्नीरहितस्याप्यस्ति । मन्त्रोपदेशदानेऽधिकारः ।

"धुर्यं सन्मित्रविषये तुर्यं चोद्यं सहाष्टभिः ।
दुर्यन्त्रितं स्वाङ्गवाक्यैः पर्यन्तं नीतमुत्तरैः" ॥

पृष्ठे २०४

(पञ्चमः प्रधानः प्रश्नः)

अथ पञ्चमः प्रधानप्रश्नः भवतामत्यावश्यको धर्मः कः ?

"श्रीकृष्णदेवमन्त्राणां ग्रहणं स्वगुरोर्मुखात् ।
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।
स्वाचार्यदर्शितदिशेत्यादीनां समनुष्ठितिः ॥
धर्मोऽत्यन्तमवश्यकोऽस्माकं वेदवेदान्तभाषितः ।
वैष्णवत्वप्रयुक्तोऽथाध्ययनाध्यापनादिकम् ॥
प्रजारक्षादिकं नानाव्यापाराद्द्विजसेवनम् ।
वर्णप्रयुक्ता इत्याद्या धर्मशास्त्रोदिताः क्रमात् ॥

तत्तदाश्रममूलाश्च धर्माः श्रुत्यादिदर्शिताः ।
सर्वेऽप्यावश्यका नस्तेऽनुष्ठीयन्ते यथार्हणम् ॥
देशकालवयोऽवस्थाधीशक्त्याद्यनुसारतः ।
तत्र वर्णाश्रमप्राप्ताः प्रत्यवायनिवृत्तये ॥
ज्ञानेऽधिकारसिद्ध्यर्थं चानुष्ठीयन्त उज्ज्वलाः ।
हरिध्यानादिसाहित्यात्तेऽस्माकं वीर्यवत्तराः ॥
चित्तं संशोध्य कल्पन्ते ज्ञानभक्त्यादिसिद्धये ।
हरिसेवादयो धर्माः साक्षान्मोक्षाप्तये मताः ॥
अत आवश्यकतरा आचार्यैरुभये स्मृताः ।
वैष्णवत्वप्रयुक्ता ये ये च वर्णाश्रमोद्भवाः ॥
ये त्वन्यदेवताभक्त्याऽन्यमन्त्रोपासनादयः ।
पुत्रेष्ट्याद्याश्च ये काम्या वर्ज्यानावश्यकाः क्रमात् ॥
तत्राद्यवर्जने हेतुर्यो वै स्वां देवतामिति ।
एवमादीनि वाक्यानि प्रत्यवायाऽश्रुतिः परे ॥
भूतिकामस्य वायव्यश्वेतालभनमुच्यते ।
अननुष्ठानतस्तस्य प्रत्यवायोऽश्रुतो यथा ॥
मया ग्रन्थेषु वेदान्तचिन्तामण्यादिषु स्फुटम् ।
विस्तरेणैव निर्णीतमेतत्तत्रैव दृश्यताम्" ॥

पृष्ठे २०५

( त्रयस्त्रिंशः प्रश्नः )

अथैतत्प्रधानप्रश्नावलम्बी आद्यः प्रश्नः

तत्र हरिध्यानादिकमावश्यकं यद्युच्यते तदा सन्ध्यागायत्रीमध्ये भवतामनावश्यकत्वमिति वक्तव्यम्, तर्हि वर्णाश्रमगणना भवन्मतेऽस्ति न वा?

"अङ्गाङ्गिभावादुभयोर्विरोधं
शक्ता न वक्तुं श्रुतियुक्तिविज्ञाः ।
ध्यानादिकावश्यकताविधाने
सन्ध्याद्यनावश्यकता कथं स्यात्" ॥

परस्परविरुद्धयोर्ह्येकतरावश्यकतास्वीकारेऽन्यतरस्यानावश्यकत्वं प्रसज्येत । इह तु 'सन्ध्यावन्दनगायत्रीजपादिकं न हरिध्यानादिविरुद्धं प्रत्युताङ्गाङ्गिभावात् तत्प्रापकत्वाच्च तदनुकूलमेव । तस्मादस्माकं तूभयोरप्यावश्यकत्वस्वीकार इति अविचाररमणीय एवायं वर्णाश्रमगणनाभावाभावप्रश्नः ।

"विचार्यते शास्त्रकथा यथा यथा
वचांसि युक्तानि लभेत्तथा तथा ।

श्रान्तोऽसि लेखाद्बहुलोदलं वृथा
वादव्यथां मैव कृथा हरेः पथा ॥
यथास्ति वर्णाश्रमधर्मवर्णनं
सत्सम्प्रदायेषु गतिप्रदायिषु ।
हरौ रतेश्चारुविचारसञ्चयै-
र्न चेतरत्रास्ति तथेति बुद्ध्यताम्" ॥

पृष्ठे २१३

( चतुस्त्रिंशः प्रश्नः )

अथ प्रक्रान्तपञ्चमप्रश्नावलम्बी द्वितीयः प्रश्नः सन्ध्यादिहीनस्याब्राह्मण्यं भवत्सम्मतं न वा ?

"ब्राह्मण्यस्य तिरोधानं नित्यसन्ध्यादिलोपने ।
प्रतिबन्धैर्विहीनस्य सूतकाद्यैररोगिणः ॥
सेवाद्यनुपरुद्धस्य देवदेवरमापतेः ।
वृथा लोपयतः कर्म यथाशास्त्रं सुसम्मतम्" ॥

अत्राब्राह्मण्यं नाम, "ब्रह्माननं क्षत्रभुजो महात्मे"-त्यत्र द्वितीयस्कन्धसुबोधिन्यां श्रीमदाचार्यदर्शितदिशा ब्राह्मणबीजस्तत्परिणीतब्राह्मणजातीयक्षेत्रोत्पन्ने शरीरे प्रायो गर्भाधानादिशास्त्रीयसंस्कारैरेव शक्याविर्भावस्य क्वचिदीश्वरेच्छया शरीरान्तरेऽपि तपोविशेषादिभिः प्रादुर्भावशालिनो भगवन्मुखरूपस्य ब्राह्मण्याख्यदेवताविशेषस्य सन्ध्यावन्दनलोपम्लेच्छान्नभक्षणादिप्रतिकूलसम्पत्प्रयुक्तं प्रायश्चित्तप्रतिविधेयं तिरोधानम् । पुनस्तत्प्रादुर्भावकप्रायश्चित्तानि तु स्वल्पवैगुण्ये स्वल्पानि, गुरूणि तु, पुनः संस्कारादिरूपाणि गुरूणि, यथा शास्त्रोक्तविधिना प्रतिष्ठाकरणात्प्रतिमादौ प्रादुर्भूताया देवतायास्तिरोधानप्रयोजके स्वल्पवैगुण्ये प्रोक्षणपञ्चामृतस्नानादिकमेव पुनः प्रादुर्भावकम्, म्लेच्छसंसर्गादौ महत्तरानाचारे तु पुनः प्रतिष्ठाकरणादीति दिक् ।

तस्मात्—

"सच्छास्त्राणां विचारेण स्वच्छाचारे सतां पथे ।
कस्मादकस्मात् प्रश्नोऽसत्तर्कसम्पर्ककर्कशः" ॥

पृष्ठे २१९

( पञ्चत्रिंशः प्रश्नः )

अथ पञ्चमप्रश्नस्यावान्तरस्तृतीयः प्रश्नः सन्ध्यावन्दनाद्यकरणप्रयुक्तपापनाशाय प्रायश्चित्तं भवत्सम्मतं न वा?

"प्रायश्चित्तं तु भवतो नूनं नैवास्ति सम्मतम् ।
बालवत्पृच्छयते यस्मादर्थेऽस्मिन् सर्वसम्मते" ॥

पूर्वप्रश्ने सन्ध्याराहित्येन ब्राह्मण्याभावः प्रतिपादितः । इह तु पापमात्रमिति पृच्छकस्य पूर्वापरानुसन्धानवैदग्धी । आस्तामित्थङ्कारम् । सन्ध्यालोपे सकृदभ्यासादिभेदेन विविधप्रायश्चित्तानां धर्मशास्त्रसिद्धत्वात्तत्तदधिकारिविशेषेण तत्तत्पापप्रणोदनाय तत्तत्प्रायश्चित्तमनुष्ठेयमेवेत्यत्र को वाऽऽस्तिकः सम्मतिं न दद्यात्?

"सन्ध्यायतां तु नित्यं नः सन्ध्याद्यं कर्म निर्मलम् ।
प्रायश्चित्तप्रसङ्गो न प्रायश्चित्तस्थिते हरौ" ॥

पृष्ठे २२०

( षट्त्रिंशः प्रश्नः )

अथ पञ्चमप्रधानप्रश्नावलम्बी चतुर्थः प्रश्नः गृहस्थानां पञ्चदेवपूजनमावश्यकं न वा?

"सर्वेषां तु गृहस्थानां पञ्चदैवतपूजनम् ।
नावश्यकं तथा शास्त्रशिष्टाचाराद्यभावतः ॥
सदैव दैवतं स्वेष्टमेकं पूज्यं तु सर्वथा ।
प्रामाणिकनिबन्धेषु बहुष्वेवं विनिर्णयात् ॥
नित्या पञ्चामरार्चा तु तादृग्दीक्षावतां मता ।
एकैकस्यार्चनं येषु सम्प्रदायेषु सम्मतम् ॥
तत्तद्वर्त्तिजनैस्ते ते लङ्घनीया न सर्वथा ।
सुरार्चैव स्मृता नित्या निन्दिता बहुभक्तता ॥
गण्यते बृहदारण्ये पुण्यमेकार्चनं सदा ।
तदेव नित्यं सर्वेषां निर्णीतं माधवादिभिः ॥
किञ्च मुख्या हरिहरान्यतरार्चैव वै कलौ ।
तत्रापि सेवनं मुख्यं देवदेवस्य केवलम् ॥
कीर्तनाद्यैरेव मुक्तेः कलेर्मलविलोपनात् ।
तथा गत्यन्तराभावात्सन्ध्यावन्नित्यतोक्तितः ॥
सर्वानुकूलं तन्मूलं सर्ववैदिककर्मणाम् ।
सर्वैरवश्यं कर्तव्यं सिध्येत्सर्वार्चनं ततः ॥
तस्मात्पूज्यतमं नान्यत्साक्षान्मोक्षस्तदर्चनात् ।
शालग्रामद्वारवतीशिले प्रतिमया सह ॥

पूज्ये त्रैवर्णिकैः स्पृष्ट्वा स्त्रीशूद्रैः प्रतिमैव तु ।
दूराच्छूद्रैर्वैष्णवैस्ते अर्च्ये विप्रकरेण वा ॥
प्रत्यवेत्येव सन्ध्यावन्नित्यं मूर्त्यर्चनं विना ।
नराणां नरकप्राप्तिस्तद्धीनानां न तद्भुजाम् ॥
शालग्रामस्य महिमा न हि मातुं तु शक्यते ।
सूतकादावप्यहेयमुच्यते क्वचिदर्चनम् ॥
गुरुदत्ततनौ सेव्य एकोऽखिलसुरेश्वरः ।
मूर्युत्कर्षो भारतेऽस्मिन् वर्षे हर्षेण तां गृहे ॥
भजेन्नतूग्रान् दुर्गादींस्तामसाच्र्यानमुक्तिदान् ।
देवान्तराणां सेवा तु काम्या सान्तफलाऽध्रुवा ॥
अवैधयागरूपा सा वैष्णवानां निषिद्ध्यते ।
सिद्ध्येत्सर्वसु पर्वाऽर्चा सर्वाशीश्वरसेवनात् ॥
विविधैर्हेतुभिर्विद्वत्केतुभिः शास्त्रसेतुभिः ।
सेवा श्रीनेतुरेवात्र सर्ववर्णेषु वर्णिता" ॥

पृष्ठे २२२

(सप्तत्रिंशः प्रश्नः)

आर्षानार्षग्रन्थेषु पार्थिवपूजाया नित्यत्वानुपलब्धिः । तस्याः काम्यत्वम्, कामनाभेदेन द्रव्यभेदः, लिङ्गानां सङ्ख्याभेदः इत्यादि, तां विना भोजननिषेधवाक्यविचारः तदर्चनाद्रुद्रलोकाप्तिश्च

पार्थिवपूजनमन्तरा गृहस्थानां भोजनमुचितं न वा? ॥ ३७ ॥

अयं दत्तोत्तरप्रायः पूर्वप्रश्नोत्तरेण तु ।
तथापि कथ्यते तथ्यं पथ्यं किञ्चिद्वचो नृणाम् ॥ १ ॥
क्वापि पार्थिवपूजाया नित्यत्वं नोपपद्यते ।
काम्यत्वं कीर्त्यते तस्यास्तस्मादस्याः कृतिं विना ॥ २ ॥
सामान्यतो गृहस्थानामपि दोषो न भोजने ।
हरेरनन्यदासानां वैष्णवानां कुतस्तराम् ॥ ३ ॥
"शैवस्यावश्यकं काम्यमन्येषां पार्थिवार्चनम् ।
ऋतेऽपि तदतो दोषो गृहस्थानां न भोजने ॥ १ ॥
कुतस्तरां वैष्णवानां तद्भ्राम्यत न भो जनाः ।
श्रीहरिं भजतानन्याः सेवन्ते यं नभोजनाः ॥ २ ॥

पृष्ठे २६३

(अष्टत्रिंशः प्रश्नः उत्तरकारिके)

बलिवैश्वदेवादिकं कर्तव्यं न वा? ॥ ३८ ॥

अनावश्यकता पूर्वं स्थलभेदेन भण्यते ।
आवश्यकं यथाशास्त्रं वैश्वदेवादिकं मतम् ॥ १ ॥
प्रत्यवायादकरणे करणे सत्फलाप्तितः ।
मोक्षोपयोगात्कार्यं तद्विष्णूच्छिष्टेन वैष्णवः ॥ २ ॥
"यथाऽधिकारं कर्तव्यं वैश्वादेवादिकं नरैः ।

नित्यनैमित्तिके यस्मादावश्यकतया मते ॥ १ ॥
वैश्वदेवाद्यकरणे ज्ञाननिष्ठादिभिर्द्विजैः ।
उक्तमन्वादिवचनानुरोधात्क्वापि न क्षतिः ॥ २ ॥
कार्याकार्यविचारं तु वेत्त्येकस्तत्त्वतः प्रभुः ।
यथाचारं यथाबुद्धि यथाशक्ति यथाकुलम् ॥ ३ ॥
निराकुलं तु कर्तव्यं सर्वैः सत्कर्म निर्मलम् ।
अतो भगवताऽप्युक्ता कर्मणो गहना गतिः ॥ ४ ॥

पृष्ठे २७०

( एकोनचत्वारिंशः प्रश्नः उत्तरकारिकाः )

अथ पञ्चमप्रधानप्रश्नावलम्बी सप्तमः प्रश्नः ॥ ७ ॥
भगवन्निवेदितवस्तूनां ग्रहणे विधिनिषेधयोः का गतिः ? ॥ ३९ ॥

निवेदितानां हरये वस्तूनां ग्रहसेधनम् ।
सुदुर्लभं कदाचिच्चेत्तदभक्तपरं भवेत् ॥ १ ॥
निर्माल्यादिनिषेधस्तु देवान्तरपरो मतः ।
निषेधभ्रमकृद्वाक्यस्यार्थस्तूक्तः पुरातनैः ॥ २ ॥
अतो निवेदितं नित्यं ग्राह्यं भगवतोऽखिलम् ।
श्रुतिस्मृतिपुराणेषु तद्भोजनविधानतः ॥ ३ ॥
पुण्यातिशयतश्चित्ताद्यतिशुद्धेरघक्षयात् ।
प्रसादः श्रीहरेर्भोज्योऽनेकसत्फलसाधकः ॥ ४ ॥
अनिवेद्य न भुञ्जीत यत्किञ्चिदपि कर्हिचित् ।
हरयेऽनेकधा तत्रात्यन्तदोषप्रसक्तितः ॥ ५ ॥
सर्वसाधारणग्रन्थैर्विस्तरेण प्रमाणतः ।
गुरुणा निरणायीदमिह किञ्चित्प्रपञ्च्यते ॥ ६ ॥
"अच्युतार्पितवस्तूनां ग्रहणे सूरिसम्मता ।
विधीनां च निषेधानां व्यवस्था स्थापिता मया ॥१॥
अतो रसमयाः शास्त्रसमयात्सुनिरामयाः ।
प्रसादं श्रीहरेर्भुक्त्वा प्रसादं यात सर्वदा ॥ २ ॥

पृष्ठे २९३

( चत्वारिंशः प्रश्नः )

देवतान्तरनिवेदितमन्नं भोज्यं न वा ? ॥ ४० ॥

देवतान्तरनैवेद्यभोजनं प्रतिषिध्यते ।
सौरशाक्तादिनैवेद्यभुक्तौ कामादकामता ॥ १ ॥
तत्र तत्र निबन्धेषु प्रायश्चित्तं प्रपञ्च्यते ।
शिवनिर्माल्यसंसर्गनिषेधः सुतरां मतः ॥ २ ॥
क्वचिद्विधिस्तु तद्भक्ते पञ्चदेवार्चकेऽथवा ।
प्रवर्तते तदन्नादेः शालग्रामेण शोधनात् ॥ ३ ॥

वैष्णवानां तदन्यत्वस्मरणात्तादृशव्रतात् ।
सत्पारम्परिकाचारान्नाराचत्तसङ्ग इष्यते ॥ ४ ॥
तस्मान्न भोज्यमस्माभिः कस्मा अपि समर्पितम् ।
रमाधरसुधामिश्रं हरिभुक्तं विनेतरत् ॥ ५ ॥

इत्थं तदुदाहृतबहुषु वचनान्तरेष्वपि समूलत्वं चिन्त्यम् । भगवन्नैवेद्यस्य तु सर्वथा बाधोऽशक्य एव ।

शिवो मूर्ध्ना धत्ते चरणसलिलं यस्य सततं
मखे भागान्गृह्णन्त्यपि भुवि यदङ्गौ सुरगणाः ।
श्रुतिर्यन्निःश्वासान् हृदि च वदने बिभ्रति सदा-
ऽखिला विप्रा धाता सृजति सकलं यस्य तनयः ॥१॥

मनश्चन्द्रो यस्यौषधिचयमशेषं पचति य-
त्पदं चादित्यः प्रोज्वलयति जगद्यस्य महसा ।
कृशानौ यद्वक्त्रे जगति सकलं जुह्वति हवि-
र्द्विजन्मानः सर्वे वदनजनुषोऽश्नन्ति च ततः ॥ २ ॥

सर्ववेदोपदिष्टाङ्गैः शिष्टाराध्यस्य तस्य कः ।
इष्टे सम्बन्धरहितं भोक्तुमक्लिष्टकर्मणः ॥ ३ ॥
देवतान्तरनैवेद्यस्याग्राह्यत्वं निरूपितम् ।
काचित्कविधिवाक्यानां विषयश्च प्रदर्शितः ॥ ४ ॥
अस्माभिर्भुज्यते नैव तस्माद्देवान्तरार्पितम् ।
न स्मार्तैरपि सर्वत्र भस्मालिप्तैस्तु तत्क्वचित् ॥ ५ ॥
कन्दर्पदर्पहाऽऽनन्दसन्दोहामन्दमन्दिरम् ।
सेव्य एकोऽरविन्दाक्षो भोज्यमेकं तदर्पितम् ॥ ६ ॥

पृष्ठे ३११

षष्ठः प्रधानप्रश्नः
भवन्मार्गे तिलकं कीदृशं केन द्रव्येण कर्तव्यम् ? ॥६॥

निर्दोषमस्माभिरूर्ध्वपुण्ड्रमेव विधीयते ।
गोपीचन्दनमिश्रेण भगवत्कुङ्कुमादिना ॥
अस्य वैष्णवचिह्नत्वात् पावनत्वादघक्षयात् ।
आवश्यकत्वाद्भगवत्प्रापकत्वाच्च धारणम् ॥
पृष्टानि द्रव्यभेदप्रमाणानि पृथक् त्वया ।
तदुत्तरेषु वक्तव्याः प्रमाणप्रचया मया ॥ १ ॥

पृष्ठे ३१२

( एकचत्वारिंशः प्रश्नः, )

अथास्यावान्तरः प्रथमः प्रश्नः ॥ १ ॥

तत्र, पूर्वं तत्प्रियायाश्च कीदृशं विधानम् ? ॥ ४१ ॥

ईश्वरे चोदनावाक्याऽनियोज्यत्वेन योज्यताम् ।
तिलकं किल किञ्चित्स्वरुचितो रुचिरं चिरम् ॥१॥
परम्परागताकारं द्रव्यैर्मृगमदादिभिः ।
जातरूपमयं रत्नैर्जातरूपं च तज्ज्ञनैः ॥ २ ॥
तैर्द्रव्यैस्तत्प्रियायास्तु तत्स्याल्लोके स्त्रिया इव ।
यतः शास्त्रे लोकवत्तु लीलाकैवल्यमुच्यते ॥ ३ ॥
पूजाङ्गत्वाद्धरेरूर्ध्वं तिलकं किल केनचित् ।
सुद्रव्येणोचिताकारं यथाचारं विरच्यताम् ॥ १ ॥
तत्प्रियायाः श्रिया लोके स्त्रिया इव विधीयते ।
स्वरुच्या तिलकं भक्तैः सेवासक्तैर्निरन्तरम् ॥ २ ॥

पृष्ठे ३१६

अथ द्वितीयोऽवान्तरः प्रश्नः ।

( द्विचत्वारिंशः प्रश्नः )

तदनु भवच्छिष्याणां तत्पत्नीनां च समानरीत्या वा वैलक्षण्येनेति वक्तव्यम् ? ॥ ४२ ॥

शिष्टाचारो न हि स्त्रीणामूर्ध्वपुण्ड्रविधेः क्वचित् ।
वैदिकत्वात्स्वपतिना कृते सति च सिद्धितः ॥ १ ॥
तत्र वैदिकत्वं तु वेदमन्त्रोच्चारणविशिष्टेतिकर्तव्यताकत्वात् ।

तस्मात्स्त्रीभिर्नोर्ध्वपुण्ड्रं कार्यं धार्यस्तु सर्वदा ।
अमन्दसौभाग्यपदं गन्धबिन्दुः सुसुन्दरः ॥ १ ॥

पृष्ठे ३२०

अथ तृतीयोऽवान्तरः प्रश्नः ॥

( त्रिचत्वारिंशः प्रश्नः )

तत्तद्द्रव्यभेदे किं प्रमाणम् ? ॥ ४३ ॥

द्रव्यत्वेनोर्ध्वपुण्ड्रस्य मृद्गोपीचन्दनादिना ।
विष्णोः प्रसादभूतं च प्रोच्यते चन्दनादिकम् ॥१॥
स्तव्यानां भुवि भव्यानां द्रव्याणां तिलके भिदा ।
किञ्चित्प्राचीनवचनविचारेण विनिश्चिता ॥ १ ॥

पृष्ठे ३२७

( चतुश्चत्वारिंशः प्रश्नः )

अथ चतुर्थोऽवान्तरः प्रश्नः ॥ ४ ॥

आकारभेदे च किं प्रमाणम् ? ॥ ४४ ॥

चया वाचामनर्वाचां माधवाद्यैरुदाहृताः ।
प्राचामाचारमिलिताः पुण्ड्राकारविचारणे ॥ १ ॥
सारं सारं मया प्रोक्तमपारं शास्त्रमत्र तत् ।
नानाऽऽकारं यथाऽऽचारं सविचारं विधीयताम् १

पृष्ठे ३३०

श्रुतिष्वपि पुराणेषु प्रायो ग्रन्थेषु चाह्निके।
सर्वेष्वस्त्यूर्ध्वपुण्ड्रस्य विधानं सर्वसम्मतम् ॥ १ ॥
तथापि नेति किमिति संशयो विस्मयाम्बुधौ।
निमज्जयति मां यद्वा गतिश्चित्रेयमैश्वरी ॥ २ ॥
चित्तं तिलकनैर्मूल्याशङ्कापङ्ककलङ्कितम्।
क्षालयन्त्वार्षवाग्रूपैः शीतलैर्विमलैर्जलैः ॥ १ ॥

पृष्ठे ३४०

दत्तोत्तरस्तव प्रश्नः पूर्वप्रश्नोत्तरेण मे।
ग्रन्थेष्वविहितत्वं हि प्रश्नबीजमिहेक्ष्यते ॥ १ ॥
सर्वग्रन्थेषु तु मया विहितत्वं विवेचितम्।
हेत्वभावादतः प्रश्नोऽवतरीतुं न सोऽर्हति ॥ २ ॥
तथाप्युत्तरदानस्यौत्सुक्याद्वक्ष्यामि किञ्चन।
पृच्छकाभावतोऽतोषो वैष्णवानां यतो महान् ॥३॥
सर्वाह्निकेषु सन्ध्यादिवन्नित्यत्वनिरूपणात्।
तद्राहित्ये च वैफल्यश्रावणात्सर्वकर्मणाम् ॥ ४ ॥
अग्निहोत्रेण तौल्यातिदेशाद्दोषादधारणे।
सर्वेषामूर्ध्वपुण्ड्रं तदत्यावश्यकमिष्यते ॥ ५ ॥
सर्वसाधारणग्रन्थेष्वेवमावश्यकं मतम्।
ऊर्ध्वपुण्ड्रं तु शैवानां वैष्णवानां च सर्वदा ॥ १ ॥
समुदाहृतमद्वाक्यसमुदायादिदं बुधाः।
समुदारेण मनसा समुदारं विबुध्यताम् ॥ २ ॥

पृष्ठे ४४६

अरविन्दाक्षचरणारविन्दमकरन्दपाः।
न निन्दामो विजातीयं वयं तु तिलकादिकम् ॥१॥
न निन्द्यमपि निन्दन्ति शिष्टा अद्वैतवादिनः।
किमु शास्त्रोदितं तर्हि गर्हणीयं भवेद्धि तैः ॥ २ ॥
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः।
इति न्यायेन माचार्यैः किञ्चिदप्यस्ति निन्दितम् ॥३॥
न भजामो विजातीयमन्यधर्मतया वयम्।
स्वधर्मे निधनं श्रेयः परधर्मो भयाऽऽवहः ॥ ४ ॥

अधारणात्कृता निन्देति चेन्नैवं स्वशाखया ।
विहितस्य कृतौ नाऽन्यशाखानिन्दा प्रसज्यते ॥५॥
तथाऽपि किञ्चिद्वक्ष्यामो भवत्प्रश्नानुसारतः ।
सुरूपं वा कुरूपं वा तादृक् दृश्येत दर्पणे ॥ ६ ॥

ब्राह्मणैस्तु सर्वैरावश्यकत्वादूर्ध्वपुण्ड्रमेव धार्यं तस्यैव विष्णुचिह्नत्वात्, न तु देवतान्तरचिह्नानि त्रिपुण्ड्रादीनि; तेषां विष्णुचिह्नमात्रधारणविधानात् । त्रिपुण्ड्रादिधारणे बहुलनिषेधोपलब्धेश्च ।

निन्दाकृतिं न विन्दामो विजातीयेऽपि यद्वयम् ।
अतो निन्दाप्रमाणस्यान्वेषणे किम्प्रयोजनम् ॥ १ ॥

पृष्ठे ३६७

( अष्टचत्वारिंशः प्रश्नः )

अथाष्टमोऽवान्तरः प्रश्नः ।

तदनङ्गीकारे दोषस्य च किम्प्रमाणम् ॥ ४८ ॥

तिलकावश्यकत्वे किम्प्रयोजनमिति त्वया ।
पृष्टं तस्योत्तरे सम्यक् तदावश्यकतोदिता ॥ १ ॥
तेनैवायं गतार्थोऽपि प्रश्नो यस्मात् पुनः कृतः ।
अकस्मादुत्तरं तस्मादस्माभिः पुनरुच्यते ॥ २ ॥
विहितस्यावश्यकस्याधारणं दोषकारणम् ।
प्रायश्चित्तं रवेर्दृष्टिस्तद्धीनाननलोकने ॥ ३ ॥
अत्यन्तं द्योत्यते दोषस्तेनैतद्रहितस्य तु ।
तद्धीनं च त्यजेत्कृष्णो वक्तव्यं किमतः परम् ॥४॥
सङ्गतस्योर्ध्वपुण्ड्रांशे त्वङ्गप्रश्नैः सहाष्टभिः ।
भङ्गः प्रश्नस्य रचितो मङ्गलं ददतोत्तरम् ॥ १ ॥

पृष्ठे ३६८

अथ सप्तमः प्रधानः प्रश्नः ।

( सप्तमः प्रधानः प्रश्नः )

सर्वशास्त्रसम्मतः शिवविष्ण्वोरभेदो भवत्सम्मतो न वा ? ॥ ७ ॥

क्षराक्षराभ्यां परमो भगवान् पुरुषोत्तमः ।
स निर्गुणोऽनन्तगुणोऽत्यचिन्त्यानन्तशक्तिमान् ॥१॥
नित्यानन्तनिजाभिन्नाचिन्त्यधर्माश्रयो महान् ।
स एव सच्चिद्भणितानन्दमात्रोऽक्षरः स्मृतः ॥ २ ॥
मुण्डके बृहदारण्ये कठवल्ल्यां स्फुटं श्रुतः ।
अक्षरं तूपदधते सत्त्वाद्याः प्राकृता गुणाः ॥ ३ ॥
स्यात्सत्त्वोपहितो विष्णू रजसोपहितो विधिः ।
तमसोपहितः शम्भुर्ब्रह्मैवैकमभूत्त्रिधा ॥ ४ ॥

उपाधिभेदाद्भिन्नास्ते त्वभिन्ना ब्रह्मभावतः ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ ५ ॥
भक्त्यैकलभ्यो भगवान्निर्गुणः सर्वकारणम् ।
दास्यवद्भिरुपास्यः सोऽस्माभिः प्रास्य वृथाश्रमम् ॥ ६ ॥
वेदादिवर्णितौ भेदाभेदावित्युतौ तयोः ।
छेदाय भक्तदुःखानां पृथगुक्तः परः पुमान्" ॥

पृष्ठे ३७४

अथैतत्सप्तमप्रधानप्रश्नावलम्बिनोऽष्टौ प्रश्नाः तत्राद्यः ।
(एकोनपञ्चाशत्तमः प्रश्नः)
तत्राभेदः सम्मतश्चेत्तदुपदेशः कुतो न क्रियते प्रत्युत शिवपूजादेः प्रतिषेधः क्रियते तत्कथम् ? ॥ ४९ ॥

किमत्रोपदेशशब्देनाभेदोपदेश एव विवक्षितः अहोस्वित्तन्मन्त्रोपदेशः ? तत्राद्यश्चेदुक्तरीतिकस्तयोरभेदोऽस्मदाचार्यादिभिर्भाष्यसुबोधिनीप्रभृतिषु निर्णीत एव । तत्तद्ग्रन्थाध्यापनावसरे स्वशिष्येभ्योऽपि स उपदिश्यत एवेति व्यर्थोऽयं तदभावे हेतुप्रश्नः । द्वितीयश्चेत्तुर्यप्रधानप्रश्नावान्तरपञ्चमादिप्रश्नत्रयोत्तरेणैव सर्वमुत्तरितमिति श्रीः ।

यत्तूक्तं शिवपूजादेः कथं प्रतिषेधः क्रियत इति; सत्यम्, क्रियते, परं त्वस्य प्रश्नस्यायमाशयो भवेत्, यदि शिवविष्ण्वोरभेद एव स्वीक्रियते तर्हि विष्णुरूपाणां रामकृष्णादीनामिव शिवस्याप्युपासनं भवद्भिः कार्यमेव, विष्णुरूपत्वाविशेषादिति । उत्तरं तु तादात्म्यरूपोऽभेदो हि गुणावतारयोरेव तयोरुपपादितः । तद्यदि वयं गुणावतारविष्णूपासका एवाभविष्यामस्तर्हि तदभिन्नत्वाच्छिवस्याप्युपासनं कर्तव्यत्वेनास्मानप्राप्स्यत्, नत्वेवं, अतो नैव, अस्माकं तु सर्वकारणस्य तस्य सर्वेश्वरस्य श्रीपुरुषोत्तमस्य सेवनेनैव गतार्था सर्वदेवोपासना ।

पूज्यो नः सरलो देवो देवदेवः श्रियः प्रियः ।
न तु प्रयोजनाभावाद्वामदेवादयः परे ॥ १ ॥
देवतान्तरविद्वेषस्त्वस्माकं नैव विद्यते ।
कुर्मः स्वधर्ममात्रं तु शाखाधिकरणोक्तवत् ॥ २ ॥
शिवेन गुरुणाऽस्माकं देवदेवेन केवलम् ।
अदर्शि यः सम्प्रदायस्तमेवानुसृता वयम् ॥ ३ ॥

पृष्ठे ३८४

अप्रमाणं चेत्तदा ते विज्ञा अज्ञा वेति वक्तव्यम् ॥५३॥

पाण्डित्यप्रदर्शनस्य च प्रत्यक्षतोऽनुभूयमानत्वात् । न तु सर्वार्थज्ञाः । अर्थविशेषे तदपेक्षया विज्ञैरितरैः स्वग्रन्थेषु कृतानां तद्दूषणानामपि दृश्यमानत्वात् ।

पृष्ठे ३८९

षष्ठोऽवान्तरः प्रश्नः ॥६॥

विज्ञाश्चेत्तदा तल्लेखः प्रमाणरूप एव ॥ ५४ ॥

ते विज्ञा एव नतु सर्वज्ञाः अन्यथा तेषामेव परस्परविरोधो न स्यात् । अस्ति त्वेवं भवन्मतग्रन्थकाराणामपि रत्नप्रभाभामतीनिबन्धकल्पतरुप्रभृतिषु भाष्यव्याख्यासु परस्परतोविरोधस्य स्वस्वानुगुण्येन भाष्ययोजनस्य च दर्शनात् । तथा कैश्चित् भावत्कैरेव स्वीकृतस्य प्रतिबिम्बपक्षस्य अपरैर्यौष्माकीणैरेव अवच्छिन्नत्वपक्षावलम्बेन दूष्यमाणत्वात् । एवं न्यायव्याकरणयोरपि दृश्यते प्राचामर्वाचां च बहुतरो मतभेदः । तथा धर्मशास्त्रादिष्वप्युपलभ्यते माधवविज्ञानेश्वरादीनां राद्धान्तवैलक्षण्यम् । अतो यदि ते सर्वेऽपि सर्वज्ञा एव अभविष्यन् । कथं तर्हि परस्परतोऽतीव व्यरोत्स्यन् ? । कथं च सर्वज्ञस्य एकतरस्य वचनमन्यतरेण दूषयितुं शक्येत ? । अतो विज्ञत्वेऽपि तेषां सर्वज्ञत्वाभावात् न तल्लेखस्य सर्वांशतः प्रामाण्यं केनापि वक्तुं शक्यम् ।

नाप्यज्ञा नापि सर्वज्ञा विज्ञा एव तु केवलम् ।
तल्लेखानां प्रमाणत्वं नास्ति सर्वांशतस्ततः ॥ १ ॥

पृष्ठे ३९०

अथ सप्तमोऽवान्तरः प्रश्नः ॥ ७ ॥

अज्ञाश्चेत्तदा सर्वजगद्विरुद्धवादिनो यूयं के इति विवेचनीयम् ॥ ५५ ॥

न ह्यस्माभिः सर्वथाऽज्ञत्वं तेषूपपादितम् । नापि वयं सर्वजगद्विरुद्धवादिनः अस्मदनुगुणानामपि बहूनामेव जगति सत्त्वात् । यदि तु केषाञ्चिदनभिमतवादमात्रेणैव सर्वजगद्विरुद्धवादित्वं शक्यं वक्तुं तर्हि अनादिसिद्धानि वैष्णवमतानि स्वग्रन्थेष्वनुवादपूर्वकं दूषयित्वाप्रवृत्ते भवन्मत एव तत्प्रसरेत् ।

किञ्च, जगतो रज्जुभुजङ्गवदसत्यत्वाप्रतिष्ठत्वानीश्वरत्वादिवादिन एव सन्तु जगद्विरुद्धवादिनो न तु

जगति भगवत्कार्यत्वताद्रूप्यादिस्वीकारिणो वयं भवेम । यत्त्वाक्षिप्तं यूयं क इति विवेचनीयमिति ।

तत्र ब्रूमः । सर्ववेदशास्त्रप्रसिद्धसम्प्रदायभूमण्डलेऽपि यावति वेदविभागोऽस्ति, यावति च वर्णविभागः, तावति वर्तमानैश्चातुर्वर्णिकैरनन्तैः शिष्यैः सम्पन्नाः शिवादिसर्ववृन्दारकवृन्दवन्दितपदारविन्दश्रीमन्नन्दनन्दनपन्नलिनमिलिन्दाः, श्रीवेदव्यासविष्णुस्वामिश्रीमद्वल्लभाचार्यचरणानुचराः, तत्कृपया वेदादिप्रमाणघोषपक्षपातेन तन्मूलकसद्युक्तिचयचञ्चुता च विविधविषमहितदुर्वादिपृदाकुभोगविदलनेन सार्थकितद्विजराजभावा, इदानीन्तना अप्यस्मदाचार्यास्तच्चरणरजोधनिनस्तदनुकम्पातो वादयुद्धाऽविकम्पा वयं, किं तवाऽविदिता एव येनैवमनुयुङ्क्षे । अथवा युक्त एव हरिभक्तेषु कालानुकूल एष आक्षेपः । यथोक्तं माधवीयाचारकाण्डे प्रथमाध्याये ( श्लो० ३० ) व्याख्याने विष्णुपुराणे—

"यदा यदा सतां हानिर्वेदमार्गानुसारिणाम् ।
तदा तदा कलेर्वृद्धिरनुमेया द्विजोत्तमैः ॥
न प्रीतिर्वेदवाक्येषु पाखण्डेषु यदा रतिः ।
तदा तदा कलेर्वृद्धिरनुमेया द्विजोत्तमैः ॥" इति ।

आस्तामेतत् । तथाप्यस्माभिस्तु नैतादृशा अकल्याणवादा वक्तव्याः । नापि वितण्डया शुष्कवैरं चोत्पादनीयम् । शातातपस्मृतौ—

"भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा पुनः ।
शुष्कवैरं विवादं च न कुर्यात्केनचित्सह" ॥

इति तन्निषेधात् ।

पृष्ठे ३९१

अथाष्टमोऽवान्तरः प्रश्नः८

यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स्मामनु । त्वदुपासो जगन्नाथ सैवास्तु मम गोपते ।

"तपोव्रतादिसहितभक्त्या तद्वशतां गतः ।
शिवादिभ्यः स्वपरमभक्तेभ्यो भक्तवत्सलः ॥
प्रभुरीदृशवाक्यानि प्रवदेच्चित्रमत्र किम् ।
पार्थादीनां स्वभक्तानां विषयेऽपि तथा जगौ" ॥

इत्यादिवाक्यानामर्थोऽपि कया रीत्या भवतीत्यपि विवेचनीयम् ॥ ५६ ॥

सप्तसप्तिहृदिस्थस्य कृपया सप्तमं मया ।
सद्य उत्तरितं चोद्यमङ्गैः सङ्गतमष्टभिः ॥

पृष्ठे ३९७

अथाष्टमः प्रधानः प्रश्नः ८
भवतामाह्निकं कीदृशम् ? ८

"वेदेषु स्मृतिषु प्रोक्तं यथावश्यकमाह्निकम् ।
यद्व्यवस्थापितं सूत्रैः शाखाभेदान्महर्षिभिः ॥
यथोदितं च व्यासाद्यैः पुराणेषु पुरातनैः ।
महानिबन्धकारैश्च सम्प्रदायविभेदतः ॥
वैष्णवानां तु कर्तव्यं निर्णीतं विस्तरेण यत् ।
सदाचार्यैः सदा कार्यं यत्प्रमाणैः प्रपञ्चितम् ॥
तत्तथैवाह्निकं सर्वं स्वस्वशक्त्यनुसारतः ।
यथादेशं यथाकालं यथावर्णं यथाश्रमम् ॥
यथास्वसम्प्रदायं च यथाशाखं यथामति ।
अनुतिष्ठन्ति नः शिष्टा विशिष्टाः श्रद्धया सदा ॥
उत्थानकालमारभ्य यावच्छयनमत्र तत् ।
सर्वं न शक्यते वक्तुं महाविस्तरभीतितः ॥

अतो विस्तरतो जिज्ञासायां तन्निरूपकान् वेदभागान् स्मृतिविभागान् कल्पसूत्रादिखण्डान् पुराणेतिहासदेशांश्च निरीक्ष्यावबुद्ध्यताम् । ततोऽप्यनिर्णये मदनपारिजाताचारमाधवहेमाद्र्याचारचिन्तामणिधर्मप्रवृत्त्याचारार्ककमलाकराह्निकाचारप्रकाशधर्माब्धिसारप्रभृतयःसाधारणग्रन्थाः स्वमार्गाह्निकप्रभृतयो विशेषग्रन्थाश्च निरीक्षितमात्रा एव निराकरिष्यन्ति सुरसरित्पूराभिरोपात्तं दुरितभरमिव सकलसंशयप्रसरमस्मदाह्निकविषयकमित्यलम् ।

सन्देहेन्धनसन्दोहस्त्वद्धामस्माकमाह्निके ।
निर्निह्नवं शास्त्रवह्निज्वालाजालात्समाप्यताम् ॥

पृष्ठे ४००

अथैतत्प्रश्नानुरोधिनोऽष्टौ प्रश्नास्तत्राद्यः प्रश्नः ॥ १ ॥

प्रातः कृत्यादिसन्ध्यावन्दनान्तं कर्म कया श्रुत्या स्मृत्या वा क्रियते ? ॥ ५७ ॥

एतादृशेष्वसङ्गततरेषु प्रश्नेषु विचारचतुरेण किमुत्तरणीयम् । तथा हि । इमे हि प्रश्ना वैष्णवसाम्प्रदायिकान् सर्वान्प्रति प्रवृत्ताः । सन्ति च वैष्णवसम्प्रदायेषु सर्वशाखीया ब्राह्मणादयः । अतो यदि बह्वृचा एव

वैष्णवाः स्युस्तर्हि ऋक्शाखाश्रुत्या आश्वलायनादिसूत्ररूपया स्मृत्या च क्रियत इत्युत्तरं स्यात् । यदि वा यजुःशाखीया एव भवेयुस्तर्हि तैत्तिरीयमाध्यन्दिनशाखाश्रुत्या आपस्तम्बसत्याषाढकात्यायनादिसूत्ररूपया स्मृत्या च क्रियत इत्युत्तरितं भवेत् । नत्वेवमेकशाखीया एव वैष्णवाः सन्ति। अतः कया श्रुत्या स्मृत्येति जिज्ञासितो नित्यकर्मसाधकतमो नियतः श्रुतिविशेषः स्मृतिविशेषो वा न वक्तुं शक्यः। इदं तु वदामः । अन्यसम्प्रदायस्थवदस्मत्साम्प्रदायिकैरपि स्वस्वशाखाश्रुत्यनुसारेण स्वस्वगृह्यसूत्रादिरूपस्मृत्यनुसारेण च सर्वमपि नित्यं नैमित्तिकं च विधीयत इति। स्वशाखास्वसूत्रयोरनुरोधेनैव श्रौतस्मार्तकर्मकरणस्य तदुल्लङ्घने दोषातिशयस्य च शास्त्रसिद्धत्वात् ।

"यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा" ॥ इति ।

तथा च सर्वोपसंहारेणैव धर्मानुष्ठानमिति स्थितमिति । विस्तरस्तु "एकं वा संयोगरूपचोदनाख्याविशेषात्" इति शाखान्तराधिकरणभाष्यादाववधेयः । अतो यथास्मत्साम्प्रदायिकभिन्नैरपि द्विजातिभिः स्वस्वशाखानुसारेण स्वस्वसूत्रानुसारेण च श्रौतस्मार्तानि सर्वकर्माणि अनुष्ठीयन्ते तथैवास्मत्साम्प्रदायिकैरपि तैस्तानि यथादेशकालं यथाशक्ति यथामति चानुष्ठीयन्ते इति सर्वं सुस्थम् ।

पृष्ठे ४०३

अथैतत्प्रश्नानुबन्धी द्वितीयः प्रश्नः ॥ २ ॥
विधानग्रन्थश्च कीदृशः ? ५८

अयमपि प्रश्नः पूर्वप्रश्नवदसङ्गततर एव । शाखाभेदेन विधानग्रन्थानां वैविध्यात् । तत्तच्छाखीयैर्वैष्णवैरपि स्वस्वशाखीयविधानग्रन्थानामेवादर्तव्यत्वेनाऽमुक एव विधानग्रन्थ इति वक्तुमश्यक्यत्वात् । अत्र प्रश्नवाक्ये विधानग्रन्थश्च क इति वक्तव्येऽपि कीदृश इति प्रकारप्रश्नस्तु चातुर्यातिशयात् । यदि तु प्रकार एव जिज्ञासितस्तर्हि अस्मद्ग्रन्थाः समीचीनप्रकारका इत्येवोत्तरम् । अतो मीमांसानिवर्तितसर्वसन्देहास्तास्ताः श्रुतयः

स्मृतयः स्वस्वशाखीयगृह्यसूत्राणि चानुष्ठानक्रमनियामकाः कात्यायनकल्पसूत्रतद्भाष्यादयश्च तदनुरोधेन बह्वृचतैत्तिरीयादीनां संस्कारकौस्तुभविश्वप्रकाशबोप्पणभट्टीप्रभृतयश्च श्रौतस्मार्तादिकर्मणां विधानग्रन्थास्तथाचारप्रकाशाचारादर्शकमलाकराह्निकनागदेवकृताह्निकप्रभृतय आह्निकग्रन्थाश्च सन्ति बहुतरा जागरूका जगत्याम् । तथा श्रीविट्ठलाचार्यादिकृतपुष्टिमार्गाह्निकप्रभृतय आस्माकीनाश्च विजयन्त एवाऽनन्ता इत्यलमज्ञबालकर्तव्येनेदृशप्रश्नेन ।

पृष्ठे ४०४

अथ प्रक्रान्तप्रश्नानुबन्धी तृतीयः प्रश्नः ॥ ३ ॥

गायत्रीजपस्यावश्यकताऽनावश्यकता वा ॥ ५९ ॥

पुरुषोत्तमदेवस्य गूढतत्त्वनिरूपिणी ।
सर्वाघसङ्घसङ्घातकृत्साक्षान्मोक्षदायिनी ॥
जननी सर्ववेदानां परब्रह्ममयी स्वयम् ।
अजापे व्रात्यता हेतुर्बीजं ब्राह्मण्यसत्तरोः ॥
अगण्यपुण्या गायत्री सर्वत्र विदितैव या ।
तज्जपावश्यकत्वं को न ब्रूयाद्द्विजवीर्यजः ॥
तथा हि—
ब्राह्मण्यद्रुमबीजं स्वराहित्ये व्रात्यताकरी ।
परब्रह्ममयी साक्षात् पुरुषोत्तमवर्णिनी ॥
तत्र चेतोऽर्पणे हेतुर्वेदमाताऽखिलैर्द्विजैः ॥
अवश्यमेव जप्या सा वैष्णवैः सुतरां पुनः ॥

पृष्ठे ४०८

अथैतदनुबन्धी चतुर्थः प्रश्नः ॥ ४ ॥

आवश्यकता चेत्तत्र भस्मधारणस्य, रुद्राक्षमालया जपस्यावश्यकता नावश्यकता वा ॥ ६० ॥

नैवावश्यकता भस्मधारणस्य कथंचन ।
नापि रुद्राक्षमालाया गायत्र्यास्तु जपे क्वचित् ॥
न भस्मधारणं नापि जपो रुद्राक्षमालया ।
आवश्यकस्तु सर्वेषां वैष्णवानां कुतस्तराम् ॥ १ ॥

पृष्ठे ४२३

अथैतत्प्रधानप्रश्नानुबन्धी पञ्चमः प्रश्नः ॥ ५ ॥

पुराणे पञ्चरात्रादौ पूजायाः प्रक्रमे प्रभोः ।
प्रोक्तानि यानि पात्राणि पवित्राणि पुरातनैः ॥
स्वसम्प्रदायप्राप्तानि रचितान्युचितानि तु ।

भगवत्पूजनसमये कानि पात्राणि शस्तानि ॥ ६१ ॥

सुवर्णताम्रदुर्वर्णकांस्याद्यैः शुद्धधातुभिः ॥
यथाकालं यथाकर्म यथाशक्ति यथाश्रमम् ।
प्रशस्तानि समस्तानि शास्त्रचाराविरोधतः ॥

पृष्ठे ४२३

अथ प्रक्रान्तप्रधानप्रश्नानुबन्धी षष्ठः प्रश्नः ॥ ६ ॥

गङ्गाजलेन भगवतः स्नानं समीचीनं न वा ॥ ६२ ॥

अस्यायमाशयो भवेत् । पाद्मगोदामाहात्म्यादिषु विवाहसमये पार्वतीदर्शनात् स्कन्नरेतसो वेधसः पापापनोदाय शिवेन सर्वतीर्थजलपूर्णः कमण्डलुस्तस्मै दत्तः । तेनैव जलेन ब्रह्मणा त्रिविक्रमावतारे भगवतश्चरणः क्षालित इति प्रसिद्धम् । श्रीभागवते च तदा भगवन्नखेन ब्रह्माण्डभेदे बाह्यजलधाराऽपि प्राप्तेत्युच्यते ।

"विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् । समन्ताद्ब्रह्मणः पुर्यां गङ्गा पतति वै दिव" ॥ इत्यादिषु सर्वत्रैव भगवच्चरणोदकरूपत्वं तस्या निरूपितमिति तद्भक्तानां शिवादीनामेव स्वमूर्ध्नि विष्णुपद्यास्तस्या धारणत्वमुचितम् ।

उक्तं च श्रीभागवते द्वितीयस्कन्धे—

उत्तरं ब्रूमः—

भगवतो ह्यवयवविभागप्रदर्शनमैच्छिकमेव । वस्तुतस्तस्य सर्वतः पाणिपादान्तत्वात् । तैत्तिरीये—

"विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो
बाहुरुत विश्वतस्पात्" ॥ इति ।

"सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्त्य तिष्ठति" ॥

इत्यादिश्रुतिस्मृतिभ्यः ।

श्वेताश्वतरे तु—"सर्वतः पाणिपादं तत्" इति पाठः । अतः सर्वत्रैव सच्चिदानन्दपूर्णत्वाविशेषात् अवयवविभागप्रदर्शनस्यैच्छिकत्वाद्वस्तुतः सर्वतः पाणिदान्तत्वाच्च भगवदवयवेषु नित्यसिद्धसच्चिदानन्दरूपेष्वनौपाधिकेषु न प्राकृतमनुष्याद्यवयववदुत्तमाधमभावो वक्तुं शक्य इति चरणवत्तदुदकस्याधिदैविकरूपत्वात्तेन तदर्चनादौ न कोऽपि दोषः । एवमेव च सति वटपत्रपुटशायिना भगवता स्वमुखे निक्षिप्य स्वचरणाङ्गुष्ठश्चूष्यत इति पुराणप्रसिद्धिः सङ्गच्छते । कथमन्यथा अत्युत्तमावयवे मुखे प्राकृतदृष्ट्या अधमावयवस्य चरणनिक्षेपो योग्यः स्यात् । किञ्चास्ति गङ्गायामाधिदैविकादिभेदेन त्रैरूप्यम् । चरणोदकस्य स्वल्पत्वाबाहुल्यार्थं चर्मण्वत्यादिनद्यन्तरोदकवर्षोदकादिप्रवेशश्च । तत्राधिदैविक्या देवतारूपायाः सम्बन्धात् पवित्रतमेन सर्वतीर्थोत्तमेनाध्यात्मिकजलेन भौतिकजलेन च भगवत्पूजादिकरणे न कोऽपि शङ्कावकाशः । शास्त्रेषु ब्रह्मद्रवत्वकथनाच्च । अत एव पुराणादिषु भगवत्पूजायां तज्जलस्योत्कर्षो निरूप्यते ।

"यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्" ॥ इति । न तु भगवतः स्वचरणोदकेन स्नानादिकं योग्यमिति ।

उत्तमाधमभावस्याभावात्प्राकृतवद्धरौ ।
पुराणादौ प्रभोः पूजाप्रक्रमेषु प्रशंसनात् ॥
आधिदैवादिभेदेन त्रैविध्याज्जाह्नवीभवम् ।
मुरारिस्नापने वारि पुण्यकारि विचारितम् ॥

पृष्ठे ४३२

अथैतत्प्रश्नानुबन्धी सप्तमः प्रश्नः ॥ ७ ॥

भगवत्सम्प्रदायरहितविद्वत्तादिगुणयुक्तब्राह्मणेन दृष्टमन्नं भोज्यं न वा ॥ ६३ ॥

आहारस्य रहस्यत्वविधानाच्छादिते स्थले ।
कर्तव्यताविधानाच्च तत्तादृग्व्रतवत्तया ॥
तथैवास्मत्कुलाचाराल्लोकादृग्दोषरूपणात् ।
तथैव चात्मसन्तोषात् पाकदेवार्चनादिषु ॥
दृष्ट्यन्तरालचैलानां निबन्धनविधानतः ।
केनापि नः सम्प्रदाये स्थितेनाप्यस्थितेन वा ॥
विदुषाऽविदुषा वापि दृष्टमन्नं भुज्यते ।
पूर्वैर्युक्तं तु यद्दृष्टं तद्दृष्टं खलु भुज्यते ॥
आहारस्य रहस्यत्वमाच्छन्नस्थलकार्यता ।
तादृग्व्रतं कुलाचारो दृष्टिदोषस्तथात्मनः ॥
असन्तोषः प्रावरणविधिः पाकादिकर्मसु ।
दृष्टान्नाभोजने त्वेते हेतवोऽत्र समर्थिताः ॥
अन्येऽपि बहवोऽनेकशास्त्ररण्यविहारिभिः ।
स्वतः सुधीकेसरिभिरुपलप्स्यन्त एव ते ॥
तस्मादस्माभिरुचितं स्वाचाररुचितश्चिरात् ।
स्थले भित्त्यादिनाच्छन्ने प्रावृतद्वारि वाससा ॥
प्रवासे पटवासेषु सेवापाकादिचाशनम् ।
विधीयते किं बहुलादलं लेखात्फलं परम् ॥

पृष्ठे ४४२

( चतुःषष्टितमः प्रश्नः )

अथैतत्प्रक्रान्तप्रधानप्रश्नानुबन्धी अष्टमः प्रश्नः ॥ ८ ॥

भवत्सम्प्रदायस्थसर्ववर्णदृष्टमन्नं भुज्यते न वा ॥ ६४ ॥

"अयं दत्तोत्तरः प्रश्नः पूर्वप्रश्नोत्तरेण तु ।
केनापि दृष्टं नास्माभिर्भोज्यमित्थं समर्थितम् ॥
तथापि कथ्यते किञ्चित्तथ्यं पथ्यं तदुत्तरम् ।
वैष्णवत्वेऽपि शूद्रादिजातिभेदो न नश्यति ॥
तस्माद्भोज्यं न तद्दृष्टं शूद्रदृष्टान्नसेवनात् ।
कुलाचाराद्यभावाच्चाज्ञेयत्वाद्धूर्तचेतसाम्" ॥

उक्तं च जैमिनीयाधिकरणमालायाम्—
"सदाचारोऽप्रमा मा वा निर्मूलत्वादमानता ।
अष्टकादेरिवैतस्य समूलत्वात्प्रमाणता" ॥ इति ।

इतरदृष्टान्नस्याभोज्यत्वविषये विस्तरश्चानुपदमतीतस्य प्रश्नोत्तरे दर्शित एवेत्यलम् । अतो यथासम्प्रदायमेवेतरैर्दृष्टमदृष्टं वा श्रीमद्राधावदनारविन्दाधरामृतमकरन्दास्वादादमन्दमामोदनिवेदकं सदन्नं सदास्माभिर्भोक्तव्यमिति सकलं मङ्गलं नः ।

शूद्रादिदृष्टसेधाच्चाबोध्यत्वाच्छ्वनः कलौ ।
सम्प्रदायविरोधाच्च दृष्टमन्नं न भुज्यते ॥

इत्थम्—
अष्टमं सहितमष्टभिरङ्गैश्चोद्यतं यदिह चोद्यमहृद्यम् ।
तस्य वैदिकसुयुक्तितरङ्गैरुत्तरं बहुतरं व्यतरं ते ॥

पृष्ठे ४४४

अथैतत्प्रश्नान्ते लिखितमस्ति

एतेषामुत्तरं सप्रमाणं देयम् । प्रमाणं च,

श्लोकः—

यन्नास्ति वेदे न च यत्पुराणे रामायणे भारतसागरे वा । मन्वादिशास्त्रेषु च यन्न वोक्तं तन्नास्ति नास्तीति न तेन कार्यम् ॥

यदस्ति वेदेऽस्ति च यत्पुराणे रामायणे भारतसागरे यत् ।
मन्वादिशास्त्रेषु च यद्बहूक्तं तदेव सर्वं विमलं व्यलेखि ॥

यत्त्वस्मिन्भवच्छ्लोके सर्वशास्त्रमूर्धन्यानामपि ब्रह्ममीमांसादीनामपरिगणनम्, तत्तु तदनभ्यासात् । कथमन्यथा एतावत्सु प्रश्नेषु वेदान्ताचार्यान् प्रत्येव प्रवृत्तेषु एकोऽपि वेदान्तगर्भितः प्रश्नो न स्यात् । यच्च स्वपरिगणितशास्त्रातिरिक्तोक्तं नास्त्येव प्रामाणिकमित्यवादि । तदपि प्रमादात् । तदतिरिक्तायामपि ब्रह्ममीमांसायां प्रतिपादितस्यार्थस्य केनापि सदास्तिकेन प्रतिषेद्धुमशक्यत्वात् । न च वेदोक्तार्थ एव व्यासेन निर्णीत इति वेदसङ्ग्रहादेव सङ्गृहीता सेयमिति वाच्यम् । तथा सति श्रौतानेवार्थान् स्मरतां मन्वादीनां शास्त्राणि स्त्रीशूद्रार्थं वेदार्थमेवानुवदन् महाभारतं च तेनैव सङ्गृहीतमिति पृथगुल्लेखस्य पुनरुक्तित्वापत्तेः ।

किञ्च, वेदपदेन साङ्गस्य तस्य ग्रहणमभिप्रेतं साङ्गोपाङ्गस्य वा ? आद्ये, पूर्वोत्तरमीमांसयोरसङ्ग्रहः । तयोरुपाङ्गत्वात् । द्वितीये, पुराणेतिहासपरिगणनं पुनरुक्तिः

स्यात् । उपाङ्गत्वाविशेषात् । चरणव्यूहे अङ्गानि गण-
यित्वा अनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क
इत्युपाङ्गानीत्युक्तेः । न च मन्वादीत्यादिपदेन तत्स-
ङ्ग्रहः । मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिरादिस्मृ-
तिप्रसिद्धानां स्मृत्यन्तरकाराणामेव तौल्येन सङ्ग्रह-
सम्भवात् । तादृशस्य प्रधानस्य शास्त्रस्य सर्वथा पृथङ्-
निर्देष्टुमौचित्याच्च आस्तामेतत् ।

नहि भवद्भिरस्मत्सिद्धान्ते प्रमाणविषये सन्देग्धव्यं
किञ्चिदपि ।

वेदेषु सर्वेषु तथा स्मृतिष्वपि
पुरा पुराणेषु च यन्महर्षिभिः ।
श्रुतं स्मृतं वीक्षितमस्ति नोऽखिलं
तदेव जागर्ति मते समुज्ज्वलम् ॥

( युग्मं )

दुष्टप्रपञ्चप्रलयप्रसङ्गाद-
त्युन्मदानष्टविनष्टदृष्टीन् ।
सदन्तदैर्घ्यान् गिरिवर्यभाव-
भ्रान्त्युद्धवान् प्रश्नगजांस्तदित्थम् ॥

सद्युक्तिशूलेन निविध्य ग्रन्थाभिधो नृत्यतु शङ्करोऽयम् ।
परप्रमाणाख्यतृतीयनेत्रज्वालावलीवेगवलीढमोहः ॥

"इत्यष्टमूर्तिमतवर्तिकृताष्टचोद्य-
ध्वान्तप्रशान्तय उदैदयमुष्णरश्मिः ॥
उल्लास्य हृद्य नलिनानि सतां सताव-
द्यामॉस्तमोष्टहरितां हरतां प्रतापी ॥

अपि च—

श्रीमद्वल्लभविट्ठलेशचरणच्छायाश्रयान्निर्भया
वेदारण्यविचारिणोऽत्र नखरैर्वादैः प्रमाणोज्ज्वलैः ।
दुर्वादोद्धतहस्तिमस्तदलने शार्दूलविक्रीडितं
सन्तः सन्ततमाचरन्तु सुधियोऽनन्ता अतन्तालये ॥

## अस्मिन् ग्रन्थे उद्धृतानां ग्रन्थानां ग्रन्थकाराणां च वर्णानुक्रमसूचिः ।



---

॥ श्रीकृष्णाय नमः ॥

॥ श्रीमद्वल्लभाचार्यश्रीविट्ठलेश्वरचरणकमलेभ्यो नमः ॥

सर्वविद्यानिधान-आशुकवीश्वर-शतावधानि-वेदान्तभट्टाचार्य-भारतमार्तण्ड—
श्रीगोवर्धनशर्म( श्रीगट्टूलालजी )विरचितः

# सत्सिद्धान्तमार्तण्डः



श्रीमद्बालमुकुन्दमिन्दुवदनं वृन्दावनानन्दिनम्
वन्दे सुन्दरमेकमेव न परान्निन्दामि वृन्दारकान् ।
वर्तन्तामचिरन्तनादविषदोऽनन्ता अनन्तातले
मन्तुं ते गणयन्तु माऽयमितरान्मूर्धा न नन्तुं क्षमः ॥ १ ॥

ચન્દ્ર સમાન મુખવાળા, વૃન્દાવનને એટલે ત્યાં રહેનાર સ્થાવર જઙ્ગમાત્મક અનન્ય ભક્તોને આનન્દ દેનાર એવા, સુન્દર ( મનોહર ) એકજ શ્રીમદ્ બાલમુકુન્દ પરમાત્માને જ હું વન્દુછુ (પરન્તુ દુરાગ્રહી જનોની પેઠે) હું બીજા દેવતાઓની નિન્દા કરતો નથી. ભૂતલ ઉપર અચિરન્તન ( પુરાણપુરુષ પરમાત્માની અપેક્ષાથી અર્વાચીન ) એવા અનન્ત દેવતાઓ ભલે બિરાજો. તેઓ મારો અપરાધ ગણે નહિ, કેમકે આ મારૂ મસ્તક- એક પરાત્પર પરમાત્મા શ્રીકૃષ્ણને નમવા માટે અર્પણ કરી ચુક્યોછુ, માટે તે મસ્તક બીજા દેવને નમવાને અશક્ત છે.[1]

મદોન્મત્ત દૈત્યોના મદથી જે દુષ્ટકર્મ બને છે,- તેથી દુઃખી થનાર જે પૃથ્વી, તેને થનારો ભાર દૂર કરવા માટે લીલાથી અવતાર ધરનાર, નિષ્પક્ષ ભક્તનું રક્ષણ કરવા માટે દીક્ષા ધારણ કરનાર એવું સુદર્શન[2] ચક્ર અનાદિ કાળથી જેણે હાથમાં ધર્યું છે, એવા શ્રીમથુરેશજી અમારૂ રક્ષણ કરો.

જેમણે પોતાના હૃદયમાં પુણ્ડરીકાક્ષ પરમાત્માને ધારણ કરીને, વેદાત્મક કિરણોથી, ભક્તોના હૃદય રૂપી કમલો પ્રફુલ્લિત કર્યા, અને ઉત્તમ રાજમાર્ગ દેખાડવી હર્ષિત બનાવ્યા, તથા પરમહંસ પરમાત્માનું દર્શન થવામાં પ્રતિબન્ધક તથા કુમાર્ગે દોરી જનાર, એવા દુષ્ટવાદો નષ્ટ કર્યા, અને સત્પુરુષોનાં ઉત્તમ કર્મો શરૂ કર્યા, એવો આ શ્રીમદ્વલ્લભાચાર્ય રૂપ સૂર્ય ( જગત્નું ) રક્ષણ કરો.

---

૧ આ નમનાત્મક મઙ્ગલાચરણ કરનાર, ગીતામા કહેલા "अनन्याश्चिन्तयन्तो मा ये जना पर्युपासते, तेषा नित्याभियुक्ताना योगक्षेमं वहाम्यहम्" એ શ્લોક પ્રમાણે અનન્ય ભક્તિ કરનાર છે, તેવા ભક્તો બીજા દેવતાના પૂજન પ્રસઙ્ગે પોતાના ઇષ્ટને અન્તર્યામીરૂપે જાણીને જ નમન ઇત્યાદિ કરે છે

૨ સુદર્શન ચક્રને પરમાત્માની એવી આજ્ઞા છે કે, જ્યારે મારા કોઈ પણ અનન્ય ભક્ત ઉપર આપત્તિ આવે, ત્યારે તારે જઇને તેનુ રક્ષણ કરવુ. જેમ અમ્બરીષ રાજાને મારવાને દુર્વાસાએ મોટી કૃત્યા મોકલી હતી, તે સમયે સુદર્શન ચક્રથી જ અમ્બરીષ રાજાનુ રક્ષણ થયુ હતુ

ઉત્તમ ઉત્તમ રસથી સેવાયલું, શ્રુતિ( કાન )માં પહેરવા યોગ્ય છે ગુણ ( કુણ્ડલ ) જેના, અત્યન્ત કાન્તિયુક્ત મણ્ડળવાળું, ઉત્તમ બ્રહ્મસૂત્ર ( જનોઈ ) ધારણ કરેલું એવા નિજ આચાર્યજી ( શ્રીમહાપ્રભુજી )ના શ્રીઅઙ્ગને હું ભજુછુ આ શ્લોકનો બીજો અર્થ:—

ઉત્તમ જે પ્રેમરસ તેથી સેવાએલું એવું, શ્રુતિ ( વેદ )માં કહેલા ( શમદમાદિ ) ગુણોથી યુક્ત, પરપ્રભાવલય (બીજા અભક્તોના કુતર્કના પ્રભાવનો નાશ કરનારા ) એવા સદ્બ્રહ્મ સૂત્ર ( ઉત્તર મીમાંસા )ના ભાષ્યરૂપ નિજાચાર્યજીનાં વચનોને હું માનું છુ. અર્થાત્ શ્રીઆચાર્યજીની કાયા તથા વાચા બેઉ દિવ્ય હોવાથી બેઉને લાગુ પડે એવી રચના આ શ્લોકમાં કરી, પોતાની ઉભયત ગુરુભક્તિ દર્શાવી છે.

નિરન્તર ભ્રમરે સેવેલુ, પરાગથી શ્રેષ્ઠ કોમલ કમલની કાન્તિને હરનાર, એવા શ્રીવિઠ્ઠલેશજી ( ગુસાંઇજી )ના બે ચરણને હું વન્દુ છુ.

## ઉપોદ્ઘાત

આ ભરતખણ્ડના વાયવ્ય પ્રાન્તમાં ઢુણ્ઢાર નામનો દેશ છે. તે દેશમાં શ્રીસૂર્ય-વંશી રામચન્દ્ર કુલોદ્ભવ હોવાથી પરમ્પરાપ્રાપ્ત અત્યન્ત વૈષ્ણવ ધર્માનુસાર ઉપા-સનામાં તત્પર રહીને, સર્વ સત્કાર્યમાં જાનકીનાથ શ્રીરામચન્દ્રનો જ આદર કરનાર, સકલ કલાનિધિ હોવાથી, પોતાનું રાજાપણું જેમણે સાર્થક કર્યું છે, એવા રાજાથી રક્ષણ પામેલું જયપુર નામનું નગર છે. ત્યાં હમણા ઉત્તમ ધર્મધુરીણ રાજરાજપદ ભોગવનાર રામસિંહ નામક રાજા રાજ કરે છે. તેની પાસે કોઈ એક શૈવમતાવલમ્બી ચિહ્ન ધારણ કરનાર લક્ષ્મણનાથ નામનો દણ્ડી રહે છે. તેણે પોતાના ભાષણથી સત્પુરુષોમાં મોટો કલહ ઉત્પન્ન કરીને સમ્પૂર્ણ પ્રજાજનોમાં કોલાહલ ઉભો કર્યો છે.

જેણે રાજાના અતિનિર્મલ મનને સમય જોઈને બલાત્કારથી મલીન કર્યું છે. જે પોતે બાલપણથી જ દણ્ડી હોવાથી "નારાયણ" નામનું સઙ્કીર્તન કરનાર, તેથી લક્ષ્મીપતિની સેવાનો અધિકારી ગણાય છતાં, હમણાં દૈત્ય સમ્પત્તિથી યુક્ત એટલે દ્વેષી બન્યો છે.

હમણા તેણે, મોટો રાજાશ્રય મળવાથી, ધૃષ્ટ પુષ્ટ મદોન્મત્તથઈ, સ્વચ્છન્દ પણે, કેવલ પોતાની ઈચ્છા માત્રથી જ ૬૪ પ્રશ્નો તૈયાર કરીને, ભૂતલપર સર્વ ઠેકાણે તે પ્રશ્નો ચારે મુખ્ય વૈષ્ણવ સમ્પ્રદાય પ્રવર્તકો ઉપર મોકલી આપ્યા છે, એવી વાત ઉત્તર આશાથી[1] લાંબા વખતથી વૈશ્રવણે[2] પડી હતી.

અર્થાત્ તે મુમ્બાપુર નિવાસી, સકલ ગુણગણથી સ્તુત્ય, શ્રીમદ્વલ્લભાચાર્યના વંશમાં મણીરૂપ ગોસ્વામી શ્રીજીવનલાલજી માહારાજને કાને પડી.

---

૧ ઉત્તર આશા એટલે ઉત્તરદિશા ( જયપુર ) થી અને બીજો અર્થ ઉત્તર મળવાની આશાથી.

૨ વૈશ્રવણે એટલે ઉત્તર દિશામા રહેનાર કુબેરને, બીજો અર્થ કુબેર જેવા ધનાઢ્ય ગોસ્વામી શ્રીજીવનલાલજી મહારાજને કાને

एते प्राधान्यतः प्रोक्ता अन्ये तदुपजीविनः ।
प्रकाशानन्दमुख्यास्त्वनन्ताः सन्तो जयन्ति ते ॥ ६ ॥

( वैष्णवसम्प्रदायानां चातुर्विध्ये भागवत प्रमाणम् )

तथाहि—

श्रीमद्विष्णुभक्तिप्रवर्तकानामनादिसिद्धानां सत्सम्प्रदायानां चतुष्ट्वमेवाऽभिप्रेत्य प्राह तृतीयस्कन्धे द्वात्रिंशाध्याये भगवान् कपिलः ( श्लो० ३७ )—

"प्रावोचं भक्तियोगस्य लक्षणं ते चतुर्विधमि"ति ।

इदं च, चातुर्विध्यं सम्प्रदायशब्दवाच्यविष्णुस्वाम्यादिमार्गाभिप्रायादेव । ( अ० २९ श्लो० ७ )—

"भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यत" इति पूर्ववाक्यात् ।

तत्रैवाग्रे, "अभिसन्धाय यो हिंसामि"त्यादिश्लोकत्रयेण द्वैतप्रतिपादकसम्प्रदायत्रयस्य "मद्गुणश्रुतिमात्रेणे"त्यादिना शुद्धमद्वैतं निरूपयतो भक्तिसम्प्रदायस्य च सङ्क्षिप्य स्पष्टतया दर्शितत्वात्, पुरतोऽपि तदवगमाच्च । मार्गशब्दस्य सम्प्रदायपर्यायत्वं तु तवाप्यभिमतम् ।

भवत्सम्प्रदाये इतिवक्तव्ये भवन्मार्गे तिलकं कीदृशमिति कथनात् ;

( तत्रैव महाभारत प्रमाणम् )

एवमेव श्रुतिसिद्धानां साम्प्रदायिकधर्माणां चातुर्विध्यं देशधर्मकुलधर्माद्यपेक्षया । तेषामेव प्राथमिकत्वेन प्राधान्यं च स्मर्यते महाभारते आनुशासनिके पर्वणि उमा-महेश्वरसम्वादे—

"धर्माश्चतुर्विधा लोके श्रुतिभेदमुखोद्भवाः ।
दत्तधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च ॥
जातिधर्मा वयोधर्मा गुणधर्माश्च शोभने ।
शरीरकालधर्माश्च आपद्धर्मास्तथैव च ॥
एतद्धर्मस्य मान्यत्वं क्रियते लोकवासिभि"रिति ॥

( नामनिर्देशपूर्वक तच्चातुर्विध्यबोधकानि पाद्मवचनानि )

अन्ये त्विमानि पाद्मवचनान्यप्युदाहरन्ति—

"सम्प्रदायविहीना ये मन्त्रास्ते निष्फला मताः ।
अतः कलौ भविष्यन्ति चत्वारः साम्प्रदायिनः ॥

( कलौ पुनस्तत्समर्थकाचार्याणा नामानि )

श्रीब्रह्मरुद्रसनकवैष्णवाः क्षितिपावनाः ।
चत्वारस्ते कलौ भाव्याः सम्प्रदायप्रवर्तकाः ॥

रामानुजानां सरणी रमातो गौरीपतेर्विष्णुमतानुगानाम् ।
निम्बार्कगानां सनकादितश्च माध्वानुगानां परमेष्ठितः सा ॥" इति ।

त एव च पुनः शिथिलीभूताः सन्तः श्रीमद्वल्लभाचार्यश्रीलक्ष्मणाचार्यपूर्णप्रज्ञाचार्य-प्रभृतिभिर्भगवदाज्ञया प्रादुर्भूतैः स्वाचार्यविष्णुस्वामिनाऽथ यामुनाक्षोभ्यतीर्थाद्युक्तदिशा समर्थिताः ।

( एषां जन्मकालतयैव कले प्रशंसा )

ईदृशानामाचार्याणां प्रादुर्भावकालतयैव कलेः सभाजनपूर्वकं करभाजनेन मुनिना सामान्यतो वैष्णवाचार्याविर्भावो निरूपित एकादशस्कन्धे ( अ० ५ श्लो० ३६ )—

"कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र सङ्कीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥
न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ।
यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥
कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम् ।
कलौ खलु भविष्यन्ति नारायणपरायणाः ॥
क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः ।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥
कावेरी च महापुण्या प्रतीची च महानदी ।
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ॥
प्रायो भक्ता भविष्यन्ति वासुदेवेऽमलाशयाः ॥
देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य सर्वम् ॥" इति ।

( भागवतवचसा तादृशार्थकत्वनिगमनम् )

इदं च भाविवृत्तान्तकथनं वैष्णवाचार्यप्रादुर्भावविविधतच्छिष्यसम्भवाभिप्रायेणैव । वैष्णवाचार्याणां प्राशयः सर्वेषामपि आन्ध्रकर्णाटकद्रविडप्रान्तेष्वेव प्रादुर्भूतत्वात् । इह च द्रविडेषु च भूरिश इति कथनात् । अत एवाचार्योपदेशैकसाध्या भगवच्छरणागति-रपि जीवानां स्वफलविशिष्टाऽत्रानुपदमेवोक्ता । इदं च भाविवृत्तान्तकथनं विस्तराद्याज्ञ-वल्क्यादिवचनोपन्यासपुरःसरं पुरस्तात्प्रपञ्चयिष्याम इति शुभम् । सामान्यतो नारायण-परायणा । इत्युक्त्या चैतन्यप्रकाशानन्दादय उपसम्प्रदाया अपि पुनर्भावित्वेन सङ्गृहीता वेदितव्या इति सर्वं क्षेमम् ।

तस्मात्, "सत्सम्प्रदायस्य भिदाः प्रसिद्धाश्चतस्र एताश्चतुरब्धिकाञ्च्याम् ।
दातुं समर्थाश्चतुरः पुमर्थान् यासु प्रमाणं श्रुतयश्चतस्रः" ॥ १ ॥

## अथ द्वितीयोऽवान्तरः प्रश्नः

## कस्मै प्रयोजनाय ? (२)

### उत्तरम् ।

ब्रह्मज्ञानश्रवणतः सर्वकर्मसमृद्धता ।
अन्ते मुक्तिर्हरेर्भक्तिः फलसाधनरूपिणी ॥ १ ॥
अनन्यसाध्यं मोक्षस्य द्वारमेकं गतार्गलम् ।
यत्तस्य वैष्णवत्वस्योद्भवो मन्त्रोपदेशतः ॥ २ ॥
आचार्यशासनाद्वेदसर्वधर्मानुपप्लवः ।
ततश्च जगतो रक्षा समग्रस्य स्वधर्मतः ॥ ३ ॥
एवमादीनि मुख्यानि सम्प्रदायकृतौ हरेः ।
प्रयोजनानि दृश्यन्ते गौणानि तु सहस्रशः ॥ ४ ॥

( सम्प्रदायो धर्मब्रह्मज्ञानहेतु )

तथाहि । सम्प्रदायो हि परम्पराप्राप्ताचार्यसदुपदेश इत्युक्तं प्राक् । स एव हि मीमांसाद्वयानुसारात्सन्देहवारणपुरःसरं जीवानां समग्रवेदार्थावगमेन धर्मब्रह्मणोर्ज्ञानं जनयति । अन्यथा—

"अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥

( साम्प्रदायिकगुरूपसत्तौ श्रुति पुराण च )

"अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः" इति मुण्डकश्रुत्युक्तमेव सर्वत्र प्रसज्येत । अतस्तद्वारणाय तत्रैवोपनिषद्यनुपदं परमानुग्राहिणी श्रुतिर्ज्ञानस्य सम्प्रदायेतरासाध्यत्वबोधनपुरःसरं साम्प्रदायिकगुरूपसत्तिं विधत्ते—

"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामि"ति ।

( तत्रैव विस्पष्टा हारीतश्रुति )

प्रोवाचेति लकारव्यत्ययः । व्यत्ययमिच्छति शास्त्रकृदेषामित्युक्तेः । व्यत्ययो बहुलमित्यनुशासनाच्च । प्रब्रूयादित्यर्थः । शङ्कराचार्यैरपि तथैव भाष्ये व्याख्यातम् । एवमेव गुरूपसत्तिः श्रीभागवतेऽप्युच्यते । ( स्क० ११ अ० ३ श्लो० २१ )—

"तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपरमाश्रयम्" इत्यादि ॥

---

१ आत्मन . २ शमा

सारसङ्ग्रहभगवत्तत्त्वविवेकादिषु च हारीते,

"आचार्यं संश्रयेत्पूर्वमनवद्यं वैष्णवं द्विजः ।
शुद्धसत्त्वगुणोपेतं नवेज्याकर्मकारकम् ॥
सत्सम्प्रदायसंयुक्तं मन्त्ररत्नार्थकोविदम् ।
ज्ञानवैराग्यसम्पन्नं वेदवेदाङ्गपारगम् ॥
शासितारं सदाचारैः सर्वधर्मविदाम्वरम् ।
महाभागवतं विप्रं सदाचारनिषेविणम् ॥
आलोक्य सर्वशास्त्राणि पुराणानि च वैष्णवः ।
तदर्थमाचरेद्यस्तु स आचार्य इतीरितः" इति ॥

अत्रोक्तश्रुतौ गुरुमेवेत्यवधारणेन सम्प्रदायेतरासाध्यत्वं विज्ञानस्य नियम्यते । तेन पुस्तकलेखदर्शनादिना न ब्रह्मनिष्ठोत्पत्तिः, किन्तु साम्प्रदायिकगुरूपसत्तिपूर्वकं तन्मुखाच्छ्रवणादिनैवेति निश्चीयते ।

( उपसत्तव्यतया श्रुतस्य गुरोः श्रुत्यक्षरैः साम्प्रदायिकत्वसिद्धिः )

नन्वत्र गुरूपसत्तिमात्रमुच्यते, न तु साम्प्रदायिकगुरूपसत्तिरिति कथं तस्य साम्प्रदायिकत्वमेवाऽऽहत्य प्रतिपत्तव्यमिति चेत्, नः उक्तरीत्या ब्रह्मनिष्ठाया गुरूपसत्त्यतिरिक्तसाधनाऽसाध्यत्वनिश्चयादुपसत्तव्यस्य गुरोश्च अरुणैकहायनीन्यायेन श्रोत्रियत्वब्रह्मनिष्ठत्ववैशिष्ट्यस्यावश्यमपेक्षितत्वाच्च । तदर्थं[1] गुरोरपि तादृशगुरूपसत्तिर्भूतपूर्वाऽध्यवसीयते, पुनस्तद्गुरोरपि तथात्वप्रयोजिका सा भूतपूर्वाऽवगम्यत इति परमात्मपर्यन्तपरम्पराप्राप्त्या उपसत्तव्यस्य सुखेन साम्प्रदायिकत्वगुणवैशिष्ट्यनिश्चयात् ।

( श्रुतौ मीमांसारीत्या वाक्यभेदाशङ्का )

ननु श्रोत्रियब्रह्मनिष्ठत्वाद्यनेकगुणविधाने वाक्यभेदः स्यात् । गुरुमभिगच्छेत् यमभिगच्छेत्स श्रोत्रियो ब्रह्मनिष्ठश्चापेक्षित इति । स चासङ्गतः । अन्यथा, चित्रया यजेतेत्यादौ यजेतेत्यनेनाग्नीषोमीयं पशुमालभेतेति विहिताग्नीषोमीयपशुयागानुवादमङ्गीकृत्य तत्र चित्रत्वस्त्रीत्वरूपगुणद्वयविधानस्य वक्तुं शक्यत्वेन चित्रापदस्य दध्यादिविचित्रद्रव्यषट्कसंसृष्टप्राजापत्ययागनामधेयत्वोद्घोषो मीमांसकानां विरुध्येत । अतो यथा तत्र वाक्यभेदभयात् बहुगुणविधानं नाङ्गीकृतम्, तथाऽत्राऽप्यस्तु; ग्रहं सम्मार्ष्टीत्यादावेकत्वसङ्ख्याया इव विशेषणयोरविवक्षितत्वमिति । किन्तु तत्र यथा पात्रत्वेन सजातीयेषु सोमयागाङ्गेषु चमसेषु सम्मार्गवारणायोद्देश्यगतं गृहत्वमात्रं विवक्षितम्, तथाऽत्र गुरुत्वमेवेति चेदुच्यते ।

---

1 ब्रह्मनिष्ठार्थं.

( मीमांसाशास्त्रार्थेन तत्परिहार. )

तत्र पशुयागस्य प्राप्तत्वेन बहुगुणविधानमयोग्यम् । अप्राप्तस्थले तु "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पूर्णमास्यां चाच्युतो भवती"त्यादावनेकगुणविधानस्य स्वीकृतत्वात्; तथाऽत्राप्युपसत्तेरप्राप्तत्वेन तत्रैकहेलयाऽनेकगुणविधानमविरुद्धम् । उक्तं च,—

"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" इति ॥

यत्तूक्तम्, ग्रहगतसङ्ख्यावद्विशेषणयोरविवक्षितत्वमिति । तत्रापि ब्रूमः, तत्र हि, ग्रहमिति द्वितीयाश्रुत्येप्सिततमत्वेन उद्देश्यत्वात् प्रयोजनवत्त्वाच्च तस्य प्राधान्यमध्यवसीयते । सम्मार्गस्य तु गुणत्वमिति प्रतिप्रधानं गुणावृत्तिरिति न्यायेन प्रतिग्रहं सम्मार्गप्राप्त्या कति ग्रहाः सम्मार्जनीया इति बुभुत्साया अनुदयाच्छ्रूयमाणमप्येकत्वं न विवक्ष्यते; इह तु यथा "पशुना यजेते"त्यत्र तृतीयाविभक्त्याऽभिहितयोर्लिङ्गसङ्ख्ययोः करणकारकशक्त्यात्मसात्कृतत्वेन कारकाणां च क्रियान्वयित्वनियमेन यागान्वयित्वे प्राप्ते, प्रथमं तयोः प्रातिपदिकार्थपशुद्रव्येणान्वयमनङ्गीकृत्य द्रव्यवद्गुणत्वेन क्रियायामन्वये कृते पश्चात् परस्परान्वयः । यागाङ्गत्वेन यः पशुर्विहितः स पुमानेकश्चेति । यथा वा "अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाती"त्यत्र कारकाणां सर्वत्र क्रियान्वयनियमात् करणविभक्त्या आरुण्यपिङ्गाक्षत्वादीनां चतुर्णां परस्परमनन्वितानामेव सोमक्रयणाङ्गत्वेनाऽन्वये सति आरुण्यादेर्गुणस्यामूर्तस्य स्वतः क्रियासाधनत्वायोगात् क्रियासाधनगोपरिच्छेदकत्वेन पश्चात्परस्परं पार्ष्णिकान्वयः । या एकहायनी गौः सा पिङ्गाक्षी अरुणेतीत्युक्तं परिभाषाकृता । एवं प्रकृतेऽपि कर्मकारकविशिष्टानां गुरुश्रोत्रियब्रह्मनिष्ठप्रातिपदिकार्थानां अन्योन्यमनन्वितानामेव ईप्सिततमतया स्वातन्त्र्येण अभिगमनक्रियायामन्वये पश्चाद्यो गुरुः स श्रोत्रियो यः श्रोत्रियः स ब्रह्मनिष्ठ इति पार्ष्णिकान्वय इति सर्वमनवद्यम् । तस्मादुक्तरीत्या साम्प्रदायिकस्यैवोपसत्तिरिह ब्रह्मविज्ञानफलकतया[1] विधीयते ।

( उक्तश्रुतावुपनायनकालिकी उपनायकोपसत्तिर्विधीयत इति शङ्का तत्परिहारश्च )

न चेयमुपनायकं प्रत्युपनयनकालिक्येवोपसत्तिरिति वाच्यम् । इतःपूर्वं "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायादि"ति उपसत्तिप्रयोजकजिज्ञासाजनकनिर्वेदकरणस्य ऐहिकामुष्मिककर्मचितत्वपरीक्षाप्रयुक्तस्य विधित्सितोपसत्त्यङ्गतया विधानात्, स्थानप्रमाणेन स इति पूर्वपरामर्शकसर्वनामबोधितैकवाक्यतया चोपसत्तेस्तदुत्तरकालिकत्वनिश्चयात् । एवं निर्वेदकरणं च माणवकस्याशक्यमिति विधिव्यापारकौण्ठ्येन तथाकल्पनाऽयोगात् । न ह्यशक्ये शास्त्रं प्रवर्तत इति मीमांसककोलाहलात् ।

---

१ फलाश्रयतया.

न च "प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इति प्रवचनविधिनियुक्तेनाचार्येण माणवकस्य प्रवर्तनसम्भवान्नानुपपत्तिरिति वाच्यम्, चित्तप्रशान्त्यादिपूर्विकायां सम्यगुपसत्तौ सत्यां प्रवचनमात्रविधानेन उपसत्तेः पूर्वमाचार्यस्य प्रवर्त्तनाऽसम्भवात्। "नाऽपृष्टः कश्चन ब्रूयान्न चान्यायेन पृच्छतः" इति मनुना तन्निषेधाच्च। अतः कृतं प्रसक्तानुप्रसक्त्या। तस्माद्ब्रह्मविज्ञानार्थं साम्प्रदायिकाचार्योपसत्तिरावश्यिकैव।

(ज्ञानस्य साम्प्रदायिकाचार्यैकसाध्यत्वे पुन श्रुति.)।

श्वेतकेतुविद्यायामप्येवं भगवन्मार्गप्रदर्शकाचार्यवत एव भगवज्ज्ञानं श्रूयते (ख० १४)—

"यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीयं तं ततोऽतिजने विसृजेत्स यथाऽत्र प्राङ्वा उदङ्वाऽधराङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य"इतीति। अत्राचार्यवत एव मोक्षस्यातिसान्निध्यमाम्नातम्।

(त विहाय देवेभ्योऽधिगतब्रह्मविद्यस्यापि न मोक्षादिसिद्धि)

किञ्च, साम्प्रदायिकाचार्यसत्त्वे देवेभ्योऽधिगतब्रह्मविद्यस्यापि पुनराचार्योपदेशमन्तरा विद्याया न मोक्षादिरूपसाधुतमफलप्रापकत्वम्। यथा सत्यकामब्राह्मणे बलीवर्दादिसकाशाच्छ्रुतब्रह्मविद्यस्यापि गुरुगवीश्चारयित्वा पुनर्गृहमागतस्य सत्यकामस्य स्वाचार्येण सह सम्वादः श्रूयते। (ख० ९)—

"प्राप हाचार्यकुलं तमाचार्योऽभ्युवाद सत्यकाम इति भगव इति ह प्रतिशुश्राव। ब्रह्मविदिव वै सोम्य भासि कोऽनु त्वानुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवाꣳस्त्वेवमेका मे ब्रूयात्। श्रुतꣳह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयति" इति।

(वैष्णवाचार्येष्वाचार्यशब्दप्रवृत्तिर्वचनसिद्धि)

न चोक्तसामश्रुतिष्वाचार्यपदेन वैष्णवसाम्प्रदायिकस्य मन्त्रोपदेष्ट्राचार्यस्य ग्रहणं न शक्यं कर्तुं तेष्वाचार्यशब्दप्रवृत्तेः शास्त्रेष्वदृष्टत्वादिति शङ्क्यम्; उक्तहारीतवचनेषु—

आलोक्य सर्वशास्त्राणि पुराणानि च वैष्णवः।
तदर्थमाचरेद्यस्तु स आचार्य इतीरितः" इति॥

सारसङ्ग्रहे च पाद्मे—

"यस्तु मन्त्रद्वयं सम्यगध्यापयति वैष्णवः।
स आचार्यस्तु विज्ञेयो भवबन्धविनाशक" इति॥

(सम्प्रादयजन्यस्य ज्ञानस्य बुद्ध्यादिशोधकत्वम्)

तच्च, ज्ञानमावश्यकम् । बुद्ध्यादिशोधकत्वात्, सर्वकर्मसमृद्धिजनकत्वात्, मोक्षफलकत्वाच्च ।

यथोक्तं स्वमेश्वरभाष्ये चायुर्वेदे अष्टाङ्गहृदये (अ० १ श्लो० २३)—

"धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परमि"ति ।

मनुरपि (अध्याय ५ श्लो० १०५)—

"ज्ञानं तपोऽग्निराहारो मृन्मनोवार्युपाञ्जनम्" इत्यादिना—

शुद्धिहेतूनुपक्रम्य (श्लोक १०९)—

"विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यती"त्याह ।

(प्रायश्चित्तेषु ज्ञानापेक्षा)

किञ्च, सर्वथा पापविशोधकत्वेन प्रसिद्धानि प्रायश्चित्तान्यपि किञ्चिदात्मज्ञानसहकृतान्येव स्मृतिषूच्यन्ते, अतः किं वाच्यं साक्षाज्ज्ञानस्य विशोधकत्वे ?

यथाह प्रायश्चित्तानि निरूपयन्नेकादशाध्याये मनुः (श्लोक ८६)—

"अतोऽन्यतममास्थाय विधिं विप्रः समाहितः ।
ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तया" इति ॥

गीतायामपि—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" इति ।

(ज्ञानादेवान्तरशौचम्)

दक्षस्मृतौ—

"सार्वभौतिकमन्नाद्यं कर्त्तव्यं ग्रहमेधिना ।
ज्ञानवद्भ्यः प्रदातव्यमन्यथा नरकं व्रजेत् ॥
शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः ।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ।
शौचं च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्ध्या तथाऽऽन्तरम् ॥
अशौचं तु परं बाह्यं तस्मादाभ्यन्तरं परम् ।
उभयेन शुचिर्यस्तु स शुचिर्नेतरः शुचिः" ॥ इति ।

अत्र शौचस्यात्यावश्यकत्वमुक्त्वा तस्य द्वैविध्यमभिधाय ज्ञानसाध्यस्य निरतिशयभावशुद्धिलक्षणशौचस्यैव बाह्यशौचोपजीव्यत्वाभिधानाज्ज्ञानस्यैव परमविशोधकत्वमत्यावश्यकत्वं च सिद्ध्यति । निरतिशयान्तःशुद्धेर्ज्ञानसाध्यत्वं तु "बुद्धिर्ज्ञानेन शुद्ध्यती"त्यादौ स्फुटम् ॥

( ज्ञानार्थमुद्योगेऽपि शुद्धिः )

अथ ज्ञानस्याऽसुलभत्वेन तदनुद्भवेऽपि तदर्थं यतमानस्य साधनदशायां वर्त्तमानस्यापि सम्प्रदायानुसाराद्वेदरहस्यभूतोपनिषदादिग्रन्थार्थं विजानतः सम्प्रदायशिक्षितधर्मानाचरतः सद्यःशौचमुच्यते ।

तत्रैव सूतकमुपक्रम्य—

"ग्रन्थार्थं यो विजानाति वेदमङ्गैः समन्वितम् ।
सकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम्" ॥ इति ।

अतः सद्यःशौचवन्तो भवामेति सेव्यः सम्प्रदायः ॥

( इन्द्रियनिग्रहादौ शुद्धिः )

एवं ज्ञानोद्भवार्थमिन्द्रियनिग्रहादीनि तत्साधनान्याचरतोऽपि परमपावित्र्यं बोधयति स्वस्मृतौ वृद्धशातातपः ( श्लो० ६० )—

"निगृहीतेन्द्रियग्रामो यत्र तत्र वसेन्नरः ।
तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्कराणि च" ॥ इति ।

तथा चोक्तरीत्या ज्ञानस्य सम्प्रदायैकसाध्यत्वात् ज्ञानं तदभ्यासं वा विना कथमपि विशुद्ध्यनुदयात् सर्वेषां मूलभूतस्य शौचस्यापि ज्ञानद्वारा तत्साधनद्वारा वा सम्पादनं सम्प्रदायप्रयोजनम् । एवं बुद्ध्यादिशोधकत्वं ज्ञानस्य व्याख्यातम् ।

( ज्ञानात्सर्वकर्मसमृद्धिः )

अपि च, "ब्रह्मज्ञानात्समृद्धानि विफलानि तदन्तरा ।
नित्यनैमित्तिकादीनि सर्वकर्माणि शास्त्रतः ॥
अतः समृद्धिकरणं सर्वावश्यककर्मणाम् ।
वैफल्यवारणं ज्ञानात्सम्प्रदायप्रयोजनम्" ॥

( विद्याशब्दार्थः )

तत्र विद्यया कर्मसमृद्धिं सामगाः पठन्ति—

"यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवती"ति ।

विद्या च सम्प्रदायलभ्यमद्वैतज्ञानम् । "विद्याऽऽत्मनि भिदा बाध" इत्येकादशस्कन्धवाक्यात् । तयैव कर्माणि समृद्ध्यन्ते । ज्ञानसम्पादका भगवन्मन्त्रसद्ग्रन्थादयोऽपि विद्याशब्देनोच्यन्ते ।

आथर्वणैः—

"द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च" इत्युपक्रम्य—
"अथ परा यया तदक्षरमधिगम्यत" इत्याम्नानात् ।

शुक्लयजुःशाखीयानां मैत्रैयीब्राह्मणेऽपि ( खं० १० )—

"श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानी"ति

ब्रह्मसूत्रभाष्यादीनामलौकिकत्वश्रावणाच्च । अतोऽपरोक्षज्ञानसम्पत्तिपर्यन्तं तत्सम्पादकसद्ग्रन्थाभ्यासेन च तानि समृद्ध्यन्ते ।

( सन्ध्यावन्दनादिसर्वनित्यकर्मणा ज्ञानसहकारेण साफल्यमन्यथा वैफल्यम् )

अन्यच्च, स्मृतिष्वपि सन्ध्यावन्दनादिनित्यकर्माणि ज्ञानसहकृतान्येवोच्यन्ते ।

यथाह माधवीये ( अ० १ श्लो० ३९ ), व्याख्यायां अत्रिः—

"सन्ध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा ।
उभे सन्ध्ये तु कर्तव्ये ब्राह्मणैश्च गृहेष्वपि" ॥

किञ्च, तत्रैव होमान्तमाह्निकं निरूप्याह माधवः—

"एतच्च ज्ञात्वैवानुष्ठेयम्, अन्यथा दोषस्य श्रवणादि"ति ।

दोषं त्वाहाङ्गिराः—

"स्वाभिप्रायकृतं कर्म यत्किञ्चिज्ज्ञानवर्जितम् ।
क्रीडाकर्मेव बालानां तत्सर्वं निष्प्रयोजनमि"ति ।

चतुर्विंशतिमतेऽपि ।

"हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानिनः क्रियाः ।
अपश्यन्नन्धको दग्धः पश्यन्नपि च पङ्गुलः" ॥ इति ।

अतो ज्ञानाभावे कर्मदोषः स्यात्, कर्मदोषे च निन्द्यत्वमेव ।

यथाह याज्ञवल्क्यः—

"कर्मदुष्टाश्च निन्दिता" इति । अतः स्वाङ्गसाध्यपरोक्षापरोक्षज्ञानद्वारा सर्वसत्कर्मणां समृद्धिकरणं तद्वैय्यर्थ्यवारणं च सर्वेषामप्यास्तिकानामत्यावश्यकं सम्प्रदायप्रयोजनम् ।

( पात्रत्वादि सम्पत्तयोऽपि सम्प्रदायात् )

किञ्च, पात्रत्वादिसम्पत्तयोऽपि सम्प्रदायात् । तथाहि, माधवीय एव ( अ० १ श्लो० ३७ ) व्याख्यायां यमः—

"विद्यायुक्तो धर्मशीलः प्रशान्तः क्षान्तो दान्तः सत्यवादी कृतज्ञः ।

"स्वाध्यायवान् धृतिमान् गोशरण्यो दाता यज्वा ब्राह्मणः पात्रमाहुः" ॥ इति ।

अत्र विद्यायुक्तः सम्प्रदायैकसाध्यब्रह्मविद्यायुक्तः । स्वाध्यायस्य पृथङ्निर्देशात् । तादृशस्यैव च पात्रतोक्ता । अपात्राय च दानं तस्मिन्नेव प्रकरणे बहु निषिद्धम् । तस्मात् सात्त्विकदानादिसम्पत्तिरपि सम्प्रदायप्रयोजनम् ।

(अपात्राय दाननिषेध, अविदुष प्रतिग्रहनिषेधश्च)

अपात्राय दाननिषेधस्तु स्मर्यतेऽत्रिणा—

"नास्ति दानात्परं मित्रमिह लोके परत्र च ।
अपात्रेषु तु यद्दत्तं दहत्यासप्तमं कुलम् ॥
हव्यं देवा न गृह्णन्ति कव्यं तु पितरस्तथा" ॥ इति ।

बृहस्पतिस्मृतौ—.

"आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु ।
विनश्येत्पात्रदौर्बल्यात्तच्च पात्रं विनश्यति ॥
एवं गां च हिरण्यं च वस्त्रमन्नं महीं तिलान् ।
अविद्वान् प्रतिगृह्णाति भस्मीभवति काष्ठवत्" ॥ इति ।

प्रतिग्रहीतुरपि असम्पादितब्रह्मविद्यस्य प्रतिग्रहे दोष उक्तः । अतो विद्यावते एव दाने दातुः फलं तस्यैव प्रतिग्रहाधिकारश्चेति निश्चीयते ।

(वेदपारगादिभ्यो दाने फलानन्त्यम्, वेदपारगत्व च जगदाविर्भावतिरोभावादिज्ञानत.)

पुनः पराशरव्याख्यायामेव यमः—

"सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
प्राधीते शतसाहस्रमनन्तं वेदपारगे" ॥ इति ।

प्राधीतः प्रारब्धाध्ययन इत्यर्थः । अत्र वेदपारगे दानस्यानन्तफलत्वमुक्तम् वेदपारगस्तु सम्प्रदायलब्धजगदाविर्भावतिरोभावादिसर्वतत्त्वविज्ञानवानेव ।

यथाह सम्वर्तः—

"उत्पत्तिप्रलयौ चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स भवेद्वेदपारगः" ॥ इति ।

तथा बृहस्पतिस्मृतावपि भूम्यादिदानानि निरूप्य ।

"श्रोत्रियाय कुलीनाय दरिद्राय च वासव ।
सन्तुष्टाय विनीताय सर्वभूतहिताय च ॥
वेदाभ्यासस्तपोज्ञानमिन्द्रियाणां च संयमः ।
ईदृशाय सुरश्रेष्ठ यद्दत्तं हि तदक्षयमि"ति ॥

अतोऽनेकेषां ब्रह्मविद्याभ्यासेन पात्रत्वसिद्ध्या लोके सर्वजगन्मित्रभूतदानव्यवहारस्यानुच्छेदः, समग्रविद्यासम्पत्त्या तत्फलानन्त्यं च सम्प्रदायप्रयोजनमिति किमाम्रेडितेन ।

(हैतुकादीना कर्मानुपयोग.)

अपि च, यमस्मृतौ—

"रोगी हीनातिरिक्ताङ्गः पिशुनो मत्सरी तथा ।
दुर्भगो हि तथा षण्ढः पाखण्डो वेदनिन्दकः ॥

हैतुकः शूद्रयाजी च अयाज्यानां च याजकः ।
नित्यं प्रतिग्रहे लुब्धो यावको विषयात्मकः" ॥

इत्यादीनुक्त्वा,

"एते श्राद्धे च दाने च वर्जनीयाः प्रयत्नतः" ।

इत्यादिना ते निन्दिताः ।

मनुरपि—

"ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः ।
तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत्" ॥ इति ।

अत उपदेशकगुर्वभावात् पाखण्डत्वस्य हैतुकत्वस्य च प्राप्त्या निन्द्या मा भवन्तु जना इत्यपि सम्प्रदायप्रयोजनम् ।

(वैष्णवत्ववेदान्तज्ञातृत्वादिरूपं पात्रत्वं, तस्यैव दैवपित्र्ययोरुत्तमाधिकारिता, शारीरदोषाणामन्धत्वादीनामकिञ्चित्करत्वं च)

पुनर्यमस्मृतावेवानुपदम्—

"अथ चेन्मन्त्रविद्युक्तो वैष्णवो ज्ञानवान् हि सः ।
हव्यकव्ये नियोक्तव्य इति प्राह स्वयं यमः ॥
तस्मात्सर्वप्रयत्नेन श्राद्धे यज्ञे च कर्मणि ।
अदुष्यश्चैव विप्रेन्द्रो योजनीयः प्रयत्नतः ॥
तथैव मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः ।
अवर्ज्यं तं यमः प्राह पङ्क्तिपावन एव सः ॥
निर्मत्सरः सदाचारः श्रोत्रियो ब्रह्मविद्युवा ।
विद्याविनयसम्पन्नः पात्रभूतो द्विजोत्तमः ॥
वेदान्तविज्ज्येष्ठसामाप्यलुब्धो वेदतत्परः ।
योजनीयः प्रयत्नेन दैवे पित्र्ये च कर्मणि ॥
यद्दत्तं च हुतं तस्मै ह्यनन्तं नात्र संशयः" ॥ इति ।

अतो वैष्णवत्वावाप्त्या वेदान्तबोधावाप्त्या ततः फलदशायां ब्रह्मज्ञतया च श्राद्धयज्ञादिसर्वकर्मार्हत्वसिद्धिर्जनानाम् । तेन तत्तत्कर्मणामाभासत्वनिवृत्त्या तत्तत्फलसम्पत्तिश्चेत्यपि सम्प्रदायप्रयोजनम् ।

वैष्णवत्वं तु विष्णुमन्त्रोपदेशैकसाध्यम्, उपदेशश्च सम्प्रदायैकसाध्य इति निरूपयिष्यामः ।

निर्णयसिन्धौ श्राद्धप्रकरणे तृतीयपरिच्छेदे—

"शतायुर्वेदार्थविदो प्रवक्ता स्याद्ब्रह्मचारी च तथाग्निचिच्च ।
सीदद्वृत्तिः सत्यवाक् पूरुषैः स्वैर्मातापित्रोः पञ्चभिः ख्यातवंशः ॥
पत्नीयुक्तो ज्येष्ठसामा पुराणवेत्ता पुत्री चेतिहासेष्वभिज्ञः ।
योगी भिक्षुः सामगो ब्रह्मवेत्ता पञ्चाग्निश्च श्रोत्रियस्तत्सुतो वा ॥
शम्भुध्यायी श्रीशपादाब्जसेवी पान्थश्चैते तूत्तमाः सम्प्रदिष्टाः" ॥ इति ।

अत्रापि वेदार्थविदो ब्रह्मविदो वैष्णवाश्च उत्तमत्वेनोक्ताः ।

(षड्विधं श्रुतम्)

अन्यच्च, माधवीये आचारकाण्डे हारीतः—
"वेदाङ्गानि धर्मोऽध्यात्मविच्चं विज्ञानं स्मृतिश्चेति षड्विधं श्रुत"मिति ॥
श्रुतवन्तो भवामेति सेव्यः सम्प्रदायः ॥

(अविदुषां निन्दा)

अपि च—अत्रिस्मृतौ (श्लो० २० )—

"अव्रताश्चानधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभुक्तं प्रदण्डवत् ॥
विद्वद्भोज्यमविद्वांसो येषु राष्ट्रेषु भुञ्जते ।
तेऽप्यनावृष्टिमिच्छन्ति महद्वा जायते भयम् ॥
ब्राह्मणान्वेदविदुषः सर्वशास्त्रविशारदान् ।
तत्त्वं वर्णयतो मान्यान् यत्र तान् पूजयेन्नृपः" ॥ इति ।

अविद्वांसो मा भूमेति सेव्यः सम्प्रदायः ।

(वेदार्थज्ञाने फलम्)

किञ्च, सम्प्रदायानुसरणात् स्वाचार्यसूत्रभाष्यादिदर्शितदिशा वेदार्थज्ञाने सति, अत्रिस्मृतौ तृतीयाध्याये,—

"यथाऽतिप्रबलो वन्हिर्दहत्यार्द्रानपि द्रुमान् ।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः" ॥ इति ।

अतः सर्वदोषविनिर्मोचकस्य वेदार्थज्ञानस्य सिद्धिरपि सम्प्रदायप्रयोजनम् । अन्यथाऽनुपपत्तेर्व्युत्पादयिष्यमाणत्वात् ।

पुनरत्रिस्मृतौ पञ्चमाध्याये—

"न[1] स्त्री दुष्यति चारेण न विप्रो वेदपारगः ।
नापो मूत्रपुरीषेण नाग्निर्दहनकर्मणा" ॥ इति ।

---

१ इदानीमुपलब्धायामत्रिस्मृतौ तु—"न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा । नापो मूत्रपुरीषाभ्या नाग्निर्दहति कर्मणा' ॥ इति पाठ समुपलभ्यते ।

वेदपारगत्वं च सम्प्रदायैकसाध्यादाविर्भावतिरोभावविद्याविद्यादिज्ञानादेव भवति उक्तसम्वर्तवचनात्; किमनेन प्रासङ्गिकप्रयोजनान्तरकथनेन । तस्मात्कर्मसमृद्ध्यर्थमपि ज्ञानमावश्यकं ज्ञानार्थं च सम्प्रदाय आवश्यकः ॥

( सम्प्रदाय विना सन्यासानुपपत्ति )

किञ्च; सम्प्रदायं विना संन्यासानुपपत्तिः स्यात् । पारम्परिकसद्गुरूपसत्तिजनितवेदान्तविज्ञानेन सुनिश्चितब्रह्मस्वरूपसाधनफलादिसर्वपदार्थस्य सञ्जातात्मज्ञानस्य सञ्छिन्नसङ्गस्यैव तत्राधिकारश्रवणात् ।

तथाच, तैत्तिरीये नारायणोपनिषदि ( मुण्डकोपनिषदि ? ) श्रूयते—

"वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" ॥ इति ।

वाजसनेयब्राह्मणेऽपि ( पृ० ५९० )—

"एवं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरन्ती"ति ।

मनुरपि ( अ० ६ श्लो० ३३ )—

"चतुर्थमायुषो भागं त्यक्त्वा सङ्गान्परिव्रजेदि"ति ।

याज्ञवल्क्योऽपि तृतीयाध्याये संन्यासप्रकरणे ( श्लो० ६ )—

"सन्निरुद्ध्येन्द्रियग्रामं रागद्वेषौ प्रहाय तु ।
भयं हृत्वा च भूतानाममृतीभवति द्विजः" ॥ इति ।

अत्र तैत्तिरीयश्रुतौ संन्यासस्य वेदान्तविज्ञानहेतुकार्थसुनिश्चयावश्यपूर्वकत्वं पाठक्रमादेवावगम्यते पञ्चमस्य प्रथमे पादे—

"अध्वर्युर्गृहपति दीक्षयित्वा ब्रह्माणं दीक्षयती"त्यादौ, श्रुतेरिव समिधो यजति तनूनपातं यजतीत्यादिषु पाठस्यापि क्रमनियामकत्वस्य जैमिनिना स्वीकृतत्वात् ।

वाजसनेयिश्रुतौ तु क्त्वाश्रुत्यैवात्मवेदनस्य पूर्वकालिकत्वं द्योत्यते । एवं मानवयाज्ञवल्क्यादिष्वपीति कृतमस्मिन्सर्वसम्मते विषये बहुप्रपञ्चनेन ।

एतच्च वेदान्तविज्ञानार्थसुनिश्चयादिकं नहि साम्प्रदायिकगुरुमन्तरा सम्भवतीति तु पूर्वमेवावोचाम ।

संन्यासार्थं ज्ञानस्यावश्यकत्वं तु अन्यत्राप्यनेकत्रोच्यते । यथा पराशरमाधवीये द्वितीयाध्याये स्मृत्यन्तरे—

"ऋणत्रयमपाकृत्य निर्ममो निरहङ्कृतिः ।
ब्राह्मणः क्षत्रियो वाथ वैश्यो वा प्रव्रजेद्गृहात्" ॥ इति ।

कूर्मपुराणेऽपि—

"अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् ।
योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः" ॥ इति ।

बौधायनः—

"एतद्गृहीत्वा निष्क्रम्य स्वग्रामं बान्धवांस्त्यजेत् ।
निःस्पृहोऽन्यत्र गत्वैव व्रतैः स्वैर्वर्त्तयेत्सदा" ॥ इति ।

पुनः कूर्मपुराणे—

"प्राजापत्यां निरूप्येष्टिमाग्नेयीमथवा पुनः ।
अन्तःपक्वकषायोऽसौ ब्रह्माश्रममुपाश्रयेत्" ॥ इति ।

इदं निर्ममत्वादिकं सम्प्रदायैकसाध्यम् । एवं सम्प्रदायमन्तरा विद्वत्संन्यासानुपपत्तिर्व्याख्याता । विविदिषुसंन्यासे तु ज्ञानार्थं सम्प्रदायस्यावश्यमुपयोगोऽस्त्येवेति तु किमाश्रमनिष्ठ इत्यस्योत्तरे प्रपञ्चयिष्यामः ।

अत एव सम्प्रदायासेवनादनुत्पन्नज्ञानस्य यतेः फलमाम्नायते आचारमाधवे—

(अनुत्पन्नज्ञानस्य यते फलमाम्नायते)

"काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ।
स याति नरकान् घोरान् महारौरवसञ्ज्ञितानि"ति ॥

इतराण्यप्येतदनुकूलानि कालिकापुराणमनुदक्षादिवचनानि बहूनि किमाश्रमनिष्ठ इत्यत्र व्याख्यास्यामः । तथाचातः सर्वकर्मसमृद्धिहेतोः संन्यासाद्युपजीव्यस्य ज्ञानस्य श्रवणादिद्वारा उपसन्नपुरुषे सम्पत्तिः सम्प्रदायप्रयोजनम् ।

(मनुस्मृतौ निदिध्यासनशरणागत्योर्मोक्षसाधनता)

अत एव मनुनाऽपि स्मर्यते षष्ठे (श्लो० ८०)—

"यदा भावेन भवति सर्वभावेषु निःस्पृहः ।
तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥
अनेन विधिना सर्वास्त्यक्त्वा सङ्गान् शनैः शनैः ।
सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥
ध्यानिकं सर्वमेवैतत् यदेतदभिशब्दितम् ।
न ह्यनध्यात्मवित् कश्चित्क्रियाफलमुपाश्नुते ॥
अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।
आध्यात्मिकं च सततं वेदान्ताभिहितं च यत् ॥
इदं शरणमज्ञानामिदमेव विजानताम् ।
इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ॥

अनेन क्रमयोगेन परिव्रजति यो द्विजः ।
स विधूयेह पाप्मानं परं ब्रह्माधिगच्छती"ति ॥

अत्र ध्यानिकं सर्वमेवैतदित्यत्र इतः पूर्ववाक्येषु चान्वयव्यतिरेकाभ्यां "नारायणपरो ध्याता" "ततस्तु तं पश्यते निष्कलं ध्यायमान" इत्याद्युक्तध्यानैकसाध्यत्वं मोक्षस्योद्घुष्य वदता मनुनापि साम्प्रदायिकगुरूपसत्तिरङ्गीकृतैव । अन्यथा श्रवणासम्भवात् । श्रवण-मननोपजीव्यत्वाच्च निदिध्यासनस्य । अत्र च ध्यानशब्देन तस्यैव सङ्ग्रहात् । स्वातन्त्र्येण साधनत्वे तु श्रोतव्यमन्तव्यश्रुतिविरोधात् । तथा अनेकधा ब्रह्मणो जप्यत्वविधानेन इदं शरणमज्ञानामित्यनेन तदेवाविदुषां विदुषां च शरणमिति ब्रह्मण एव शरणत्वभाव-नविधानेन च सर्वेषां भगवदेकशरणत्वबोधकजप्यसमन्त्रोपदेष्टृवैष्णवसम्प्रदायानुसार्येव ज्ञानं मोक्षसाधकत्वेन मनोरभिमतमिति निश्चीयते । अधिकयज्ञादिस्वरूपं तु गीतायां स्फुटम् ।

(तत्र सम्प्रदायपदानुपादानशङ्कानिरास)

न चैवमपि मनुना स्फुटतया सम्प्रदायपदोपादानपुरःसरं तदुपसत्तेरनुक्तत्वान्नेदं तत्सम्मतमिति वाच्यम् । श्रुतिसिद्धत्वादुक्तरीत्या स्फुटं तत्सिद्धेः । अन्यथा श्रुतिविरोधो बलिष्ठः ।

यथाह प्रथमस्य तृतीयपादे जैमिनिः (सू० ३)—"विरोधे त्वनपेक्षं स्यादसति ह्यनु-मानमि"ति । अत एव यद्यपि मनुना (श्लो० ३४) आश्रमादाश्रमं गच्छेदिति पक्ष एव षष्ठे स्फुटमुक्तः, तथापि जाबालादिश्रुत्युक्तत्वात् "यदहरेव विरजेदि"ति पक्षोऽपि (मनु० अ० ६ श्लो० ३८) "ब्राह्मणः प्रव्रजेद्गृहादि"ति । तथा (श्लो० ३९), "प्रव्रजत्यभयं गृहात् । तस्य तेजोमया लोका" इति ।

तथा (श्लो० ४१), "अगारादभिनिष्क्रान्त" इति,

गृहागारपदोपादानात् व्याख्याकृता कुल्लूकभट्टेन स्फुटीकृतः । एवं पूर्वोक्तमपि प्राक्तनैः ।

(याज्ञवल्क्यस्मृतौ सम्प्रदायप्रयोजनम्)

एवमेव याज्ञवल्क्योऽपि तृतीयाध्याये अध्यात्मप्रकरणे पुनः पुनरवतीर्य सूत्रभाष्या-दिकरणादनादिसिद्धवेदान्तसम्प्रदायप्रवर्तकान् महर्षीन् सम्प्रदायाविच्छेदाय निरूप्य तद्द्वारा श्रवणादिकमाह (श्लो० १३६)—

"स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ।
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभि"रिति ॥

एवं सम्प्रदायोपसत्तिपूर्वकश्रवणादिनोत्पन्नज्ञानानां अर्चिरादिगत्याऽपुनरावृत्तिं चानु-पदमाह "पुनरावृत्तिस्तेषामिह न विद्यते" इत्यन्तेन ।

( मीमांसाद्वयज्ञाने पङ्क्तिपावनत्वादिफलम् )

किञ्च सम्प्रदायाचार्यप्रणीतमीमांसासूत्रभाष्याद्यालोचनान्मीमांसाज्ञानेन निर्विचिकित्सब्रह्मज्ञाने सति पङ्क्तिपावनत्वं सिध्येत् ।

यथाह निर्णयसिन्धौ श्राद्धप्रकरणे मात्स्ये मनुः—

"यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
सामस्वरविधिज्ञश्च पङ्क्तिपावनपावनः" ।। इति ।

गारुडेऽपि—

"श्राद्धेषु विनियोज्यास्ते ब्राह्मणा ब्रह्मवित्तमाः" इति ।

पराशरस्मृतिव्याख्यायां च तृतीयाध्याये शङ्खः—

"नित्यं योगपरो विद्वान् समलोष्टाश्मकाञ्चनः ।
ध्यानशीलो यतिर्विद्वान् ब्राह्मणः पङ्क्तिपावनः" ।। इत्यलं बहुना ।

( मनुस्मृतौ सशरीरमोक्ष. )

एवं सम्प्रदायोपसत्त्या सम्पादितज्ञानस्य शिक्षितसर्वधर्माचारस्य ज्ञानबलात् सम्मृद्धसर्वसत्कर्मजातस्य दग्धदुष्कर्मतूलजालस्य भगवद्भक्तस्य नियतं मोक्षः स्यात् ।

यथाह मनुः ( अ० ४ श्लो० २४३ )—

"धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ।
परलोकं नयत्याशु भास्वतं खशरीरिणम्" ।। इति ।

खशरीरिणं खं ब्रह्मेति श्रुत्या ब्रह्मस्वरूपम् । अत एव भास्वन्तमानन्दांशप्रकाशाद्दीप्यमानं जीवं ब्रह्माख्यं परलोकं प्रापयतीत्यर्थः ।

( आपस्तम्बस्मृतौ मोक्षोपाय. )

आपस्तम्बस्मृतावपि दशमाध्याये—

"न यमं यममित्याहुरात्मा वै यम उच्यते ।
आत्मा संयमितो येन तं यमः किं करिष्यति ।।
न तथासिस्तथा तीक्ष्णः सर्पो वा दुरधिष्ठितः ।
अरिर्वा नित्यसङ्क्रुद्धो यथात्मा दुरधिष्ठितः ।।
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ।।
न शब्दशास्त्राभिरतस्य मोक्षो न चैव रम्यावसथप्रियस्य ।
न भोजनाच्छादनतत्परस्य न लोकवित्तग्रहणे रतस्य ।।
एकान्तशीलस्य दृढव्रतस्य मोक्षो भवेत्प्रीतिनिवर्तकस्य ।
अध्यात्मयोगैकरतस्य सम्यङ्मोक्षो भवेन्नित्यमहिंसकस्य" इति ।।

(ज्ञाने श्रुत्यादि)*

अथ श्रुतयोऽपि सहस्रशः पारम्परिकगुरुलब्धाज्ज्ञानादेव मोक्षमुद्धुष्यन्ति । "ब्रह्म-विदाप्नोति परम्" "तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय" 'तमेव विदित्वाऽतिमृत्युमेति" "तरति शोकमात्मवित् आत्मना विन्दते वीर्यं विद्यया विन्दते-ऽमृतमि"त्याद्यास्तैत्तिरीयबृहदारण्यकच्छन्दोगभूमविद्याकेनोपनिषदादिरूपाः ।

किञ्चास्यास्तलवकारश्रुतेरर्थं मनुरप्याह (अ० १२ श्लो० १०४)—

"तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।
तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते" इति ॥

(तपसा ब्रह्म विजिज्ञासस्वेति श्रुतिविचार.)

ननु "तपसा ब्रह्म विजिज्ञासस्वे"ति तपस एव ज्ञानं प्रति साधनत्वं श्रूयते कथं तर्हि सम्प्रदायः साधनमिति चेत्, मैवम्;

(कायशोषणात्मकं तप. कृतयुगे)

"यद्धि वेदोक्तेन प्रकारेण तथा चान्द्रायणादिभिः ।
शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः" इति ॥

एवमन्यत्रापि कायशोषणात्मकं तप उक्तं तत्सर्वं प्राधान्येन कृतयुगमात्रविषयम् ॥

अत एव लघुपराशरः (अ० १ श्लो० २३)—

"तपः परं कृतयुगे" इत्याह ॥

त्रेतादिषु तपसोऽप्राधान्ये कारणं तु तत्रैव "कृते त्वस्थिगताः प्राणा" इत्यस्य व्याख्यायां माधवेन दर्शितम् ।

(ब्रह्मविचारस्वधर्मवर्तनादिरूपतप सु प्रमाणानि)

न चैवं श्रुतिविरोधः शङ्क्यः । तपःशब्देनात्र सम्प्रदायानुसारात् ब्रह्मविचारस्वधर्म-वर्तनप्रभृतीनामेव विवक्षितत्वात् ।

यथोक्तमाचारमाधवे (२३ श्लोकव्याख्यायां) स्कान्दे—

"कोऽहं मोक्षः कथं तेन संसारं प्रतिपन्नवान् ।
इत्यालोचनमर्थज्ञास्तपः शंसन्ति पण्डिताः" ॥ इति ।

अत्रैव व्यासेनापि स्मर्यते—

"तपः स्वधर्मवर्तित्वं शौचं सङ्गनिबर्हणमि"ति ।

परा० (श्लो० ३१) व्याख्यायामपि । कूर्मपुराणे युगान्तराभिप्रायेण तपोन्तरं वर्णितम् ।

"अहिंसा सत्यवचनमानृशंस्यं दमो घृणा ।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणमि"ति ॥

( विद्यातपोभ्यां संयुक्ताभ्यां सिद्धिः )

अथ च श्रुतौ तपःशब्दस्य भाष्यानुसारात् कायशोषणपरत्वादरणेऽपि तस्योक्तरीत्या कृतयुगमात्रविषयत्वम् । तत्रापि सम्प्रदायसहकारेणैव ज्ञानजनकत्वं च बोध्यम् । तस्मिन्प्रपाठके भृगोः पुनः पुनर्गुरूपसत्तिसहकृततपसैव ज्ञानोत्पत्तिश्रवणात् ।

अत एवात्रिस्मृतावपि द्वितीयाध्याये—

"यथाऽश्वा रथहीनास्तु रथाश्चाश्वैर्विना यथा ।
एवं तपोऽप्यविद्यस्य विद्या चाप्यतपस्विनः ॥
यथाऽन्नं मधुसंयुक्तं मधु चान्नेन संयुतम् ।
एवं तपश्च विद्या च संयुक्तं भेषजं महत् ॥
विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपतत्परम् ।
कुत्सितेष्वपि वर्तन्ते नैनः संस्पृशते क्वचित्" ॥

विद्या हि सम्प्रदायैकलभ्या ।

( असच्छास्त्राधिगमनास्तिक्ययोरुपपातकत्वं च )

अपरं च, लोके सम्प्रदायप्रवृत्तिमन्तरा शासकानां सच्छास्त्रप्रवर्तकानां सर्वधर्मशिक्षकाणामाचार्याणामभावात् सदसच्छास्त्रविवेकाभावेन लोकानां प्रवृत्तौ स्वाच्छन्द्यात् यथेच्छं बहवो सच्छास्त्राधिगमनेन नास्तिक्येन चोपपातकवन्तो धर्माधर्माविवेकध्वान्तमुष्टदृष्टयो नितान्तदुःखदभवगिरिदरीभ्रान्ता वेदान्तादिकृतान्ताज्ञानाच्छास्त्रेष्वकृतान्ताः कृतान्ताख्यव्याधस्य वेधमृगा भविष्यन्ति अतस्तद्वारणाय लोकानुग्राहिणा हरिणा विश्वम्भरायां धर्मरक्षारम्भस्तम्भास्सम्प्रदायाः प्रादुष्कृताः ।

तत्र असच्छास्त्राभ्यासस्योपपातकत्वं तु स्मर्यते याज्ञवल्क्येन ब्रह्महत्यादिप्रायश्चित्तप्रकरणे ( अ० ३ श्लो० ३६ )—

( सम्प्रदायधर्मनिवृत्तिः )

"असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।
भार्याया विक्रयश्चैषामेकैकमुपपातकम्" ॥

अत्रैव मिताक्षरायां स्मृत्यन्तरे । असच्छास्त्राधिगमनं नास्तिकता कुशीलता मद्यपस्त्रीनिषेवणमित्युपपातकानीति । तेन नास्तिक्यमप्युपपातकम् ।

मनुरप्याह ( अ० ११ श्लो० ६६ )—

"नास्तिक्यं चोपपातकमि"ति ।

अपि च पारम्परिकोपदेष्टॄणां धर्मशासकानामभावेन सर्वधर्मसमुच्छेदात् सर्वजनानामत्यधर्मबहुलतया महानेवानर्थोऽस्मिन् प्रपञ्चे स्यात् । अतस्तद्वारणं सम्प्रदायप्रयोजनम् । अत एव चतुर्थे मनुः ( श्लो० १७० )—

"अधार्मिको नरो यो हि यस्य चाप्यनृतं धनम् ।
हिंसारतश्च यो नित्यं नेहासौ सुखमेधते" ॥

इत्यादिना अधर्मफलं निरूप्य, तद्वारणाय साम्प्रदायिकान् सदाचार्यान् प्रत्याह (श्लो० १७५)—

"सत्यधर्मार्य्यवृत्तेषु शौचे चैवारमेत्सदा ।
शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयत" ॥ इति ।

तथा दक्षस्मृतावत्रिस्मृतौ च—

(भस्मान्तसूतकम्)

"क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ।
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः ॥
श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेदि"ति ।

सर्वप्रशासकजगद्गुरुभूतसाम्प्रदायिकाचार्याभावात् शिक्षणभयाभावेन क्रियाहीनत्वाज्ज्ञानानुत्पत्त्या व्यसनाद्यासक्तत्वात् श्रद्धाशून्यत्वाच्च बहवो भस्मान्तसूतकिनो मा भूवन्नित्यपि सम्प्रदायप्रयोजनम् ।

(असम्प्रदायाध्ययननिन्दा)

वाग्रूपाणां सर्वेषां शास्त्राणां यथाव्यवस्थं सुप्रवृत्तिः सम्प्रदायैरेवेति तु लोकानुभवसिद्धम् । स्वयमेव वेदाद्यर्थानवबोधस्य सर्वजनीनत्वात्, शास्त्रसिद्धं च, लिखितपाठादिनिषेधात्, तादृशविद्यायाः साधुतमफलाजनकत्वाच्च । यथा छन्दोगा आमनन्ति—

"आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयती"ति ।

स्वयमेव लिखितपाठस्य निषेधं त्वाह स्वशिक्षायां पाणिनिः ॥

"गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः" ॥ इति ।

माधवीये प्रथमाध्याये नारदोऽपि—

"पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ ।
भ्राजते न सभामध्ये जारगर्भ इव स्त्रियाः" ॥ इति ।

अतो वेदोपनिषन्मीमांसाप्रभृतीनां प्रस्थानानां सर्वशास्त्राणां च प्रवृत्तिरपि सम्प्रदायप्रयोजनम् ।

सम्प्रदायाभावे हि तत्प्रवृत्तिविच्छेदेन देवलोकेऽपि महत्तरोऽनर्थः स्यात् । देवानां वागुपजीवित्वात् । यथा तैत्तिरीयब्राह्मणे आम्नायते—

"वाचं देवा उपजीवन्ति विश्व" इत्यादि ।

(श्रुतिस्मृतिनयने तज्ज्ञाने फलं च)

किञ्च, इह लोकेऽपि श्रुतिस्मृत्युच्छेदादनर्थः स्यात् । श्रुतिस्मृतिविहीनानां निन्दा त्वाहात्रिः (श्लो० ३४०)—

"श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्तिते ।
काणः स्यादेकहीनोऽपि द्वाभ्यामन्धः प्रकीर्तितः ॥
न श्रुतिर्न स्मृतिर्यस्य न शीलं न कुलं यतः ।
तस्य श्राद्धं न दातव्यमन्धकार्यत्रिरब्रवीदि"ति ॥

श्रुतिस्मृतिज्ञाने फलं त्वाहाङ्गिराः—

"कृत्वा पापं हि शौचं वै ब्राह्मणो वेदपारगः ।
स्मृत्यर्थं विन्दते योऽपि तस्मात् पापात्प्रमुच्यते ॥
नैव कुर्यां पुनरिति निवृत्त्यात्मा भवेद्यदि ।
वह्निर्वेदागमाभ्यासः सर्वं पापं विशुद्ध्यति ॥
यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् ।
एवं दहति वेदज्ञः कर्मजं दोषमात्मनः" ॥ इति ।

(अर्थज्ञान सम्प्रदायात्)

ननु वेदाध्ययने पारम्परिकत्वमात्रमपेक्षितम्, तच्च यतः कुतश्चापि सम्भवति न तत्र रूढ्या सम्प्रदायशब्देन प्रसिद्धानां विष्णुस्वाम्यादिसम्प्रदायानामुपयोग इति चेदुच्यते, अक्षरग्रहणस्य यतः कुतश्चित्सम्भवेऽपि तावन्मात्रेणाध्ययनविधिव्यापार-पूर्त्यभावेनार्थज्ञानार्थमुक्तः सम्प्रदायोपयोगः ॥

(लेशतो भाट्टप्राभाकरमतभेद)

यत्तु केचित्, विधेरक्षरग्रहणमात्रपर्यवसायित्वं वदन्ति ।

तत्र भाट्टास्तावत्—

अध्ययनविधेरक्षरग्रहणमात्रपर्यवसायित्वे अदृष्टार्थत्वकल्पनापत्त्या तस्योपस्थितार्थ-ज्ञानरूपदृष्टफलकत्वमेव युक्तम् । दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । उक्तं च—

लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना ।
विधेयस्तु नियमार्थत्वान्नानर्थक्यं भविष्यतीति ॥

एतेन विश्वजिन्न्यायेन स्वर्गार्थत्वकल्पनं प्रत्युक्तम् । तथा अर्थज्ञानस्यात्यन्तमप्राप्त-त्वाभावान्न तद्विधानं योग्यम् ।

विधिरत्यन्तमप्राप्ताविति युक्तेरित्यपि निरस्तम् ।

अर्थज्ञानांशेऽपूर्वविधित्वाऽसम्भवेऽपि नियमविधित्वस्य सुखेन सम्भवात् । अवघात-नखविदलानान्यतरेण वैतुष्यसम्भवेऽपि अवघातेन वितुषीकृततण्डुलैरेव क्रत्वपूर्वसिद्धि-

वद्ध्ययनलिखितपाठाद्यन्यतमेनार्थज्ञानसम्भवेऽपि अध्ययनलब्धार्थज्ञानेनैव तत्सिद्धि-रिति कथने प्रतिबन्धकाभावात् । तस्मादध्ययनविधिनैवार्थज्ञानस्याप्यावश्यकत्वं लभ्यत इत्याहुः । तेन व्यवहारे भट्टनय इति वदद्भिरपीदमेव स्वीकार्यम् ।

प्राभाकरास्तु—

"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इति विधिवाक्ये "सम्माननोत्सञ्जना-चार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इत्याचार्यकरणरूपेऽर्थे । विहितेनोपनयी-तेत्यात्मनेपदेन नियोज्यस्याचार्यत्वकामस्य तमध्यापयीतेत्यग्रिमवाक्येन "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" इति मानवस्म-रणेन चोपनयनपूर्वकमुपनिषदादिसहितवेदाध्यापनं विधीयते । तच्चोपनयनसंस्कृतस्य माणवकस्याकिञ्चित्करत्वे न सम्भवतीति तेनैव तस्याध्ययनमपि लभ्यते । श्रूयमाणम-ध्ययनविधिवाक्यं तु नित्यानुवादरूपं स्यात् ।

उक्तं चाधिकरणमालायाम्—

"अथवाऽध्यापनात्सिद्धेर्नैवास्त्यध्ययने विधिरि"ति ।

अथाध्ययनस्यापि प्रयोजने विचार्यमाणे दृष्टत्वाच्छीघ्रोपस्थितिकत्वाच्चार्थज्ञानमेव तत्सिद्ध्यति । स्वसमवेतत्वेनान्तरङ्गत्वाच्च । न त्वाचार्यकरणम्, बहिरङ्गत्वात् । तथा चाध्यापनविधिनैवाध्ययनमर्थज्ञानं च लभ्यत इत्याहुः । प्रपञ्चस्तु न्यायमालाविस्तरा-दिषु, भाष्यप्रकाशाद्यास्माकीनग्रन्थेषु चावधेयः ।

इत्थं च मीमांसकमतद्वयेऽप्यर्थज्ञानस्य तदाक्षिप्तविचारशास्त्रयोश्च वैधत्वात्तच्छास्त्रा-नुसारेण तदावश्यकत्वमस्त्येव ।

( स्वाचार्योक्तो विशेष )

किञ्चास्मदाचार्या अपि—

"काण्डद्वयार्थसिद्ध्यर्थं स्वाध्यायविधिरुच्यते ।
वाक्यत्रयं तथा वेदेऽनारभ्याधीतमेव हि ॥
एकार्थता तु सर्वत्र विशेषोऽप्युच्यते स्फुटः ।
स्वाध्यायशब्दो वेदे हि रूढो योगोऽपि वर्तते ॥
सुष्ठ्वासमन्तादध्येयः शोभनं नियमैर्युतम् ।
देशे काले गुरौ स्वस्मिन्येऽपेक्ष्यन्ते गुणा इह ॥
आ सर्वतः पुनस्तत्र यथा शङ्का न जायते ।
शब्दे ह्यर्थे ह्यनुष्ठाने तथाऽध्येयो हि वैदिकैः" ॥

इत्याद्याहुः । अतः स्वाध्यायविध्यनुरोधात्, वाक्यान्तरे ज्ञेयश्चेति पृथगर्थज्ञानविधा-नाच्च, "स्थाणुरयं भारहारः किलाऽभूदधीत्य वेदं न विजानाति योऽर्थम्" इत्यर्थज्ञान-

शून्यस्य निन्दाश्रवणात् "अनर्थज्ञोऽल्पकण्ठश्च" इत्यधमत्वस्मरणाच्चाधीतस्य वेदस्यार्थ-ज्ञानमावश्यकम्। अत एव महाभाष्ये च पस्पशान्हिक इदमुदाहृतम्—

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥ इति।

निगदेन पाठमात्रेण। न तज्ज्वलति निष्फलं भवतीति कैयटः। निरुक्ते तु यद्गृ-हीतमविज्ञातमिति पाठः। गृहीतं शब्दतः अविज्ञातमर्थत इति विवरणम्। तच्चार्थज्ञानं पूर्वोत्तरमीमांसादिसाध्यम्।

यथाह द्वादशाध्याये मनुः ( श्लो० १०६ )—

"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः"॥ इति।

अत्रैव ऋषिदृष्टत्वात् आर्षं वेदं धर्मोपदेशं च तन्मूलस्मृत्यादिकं यस्तदविरुद्धेन मीमांसादिन्यायेन विचारयति स धर्मं जानाति, नतु मीमांसाऽनभिज्ञः। धर्मे करणं वेदो मीमांसा चेतिकर्तव्यतास्थानीयेति कुल्लूकभट्टादयो व्याख्यातारः।

उक्तं च भट्टवार्तिककृता—

"धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यती"ति॥

एवमुत्तरमीमांसाविषयेऽपि।

गीतायां—

"ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैरि"ति॥

श्रीभागवतेऽपि ( स्कं० १ अ० ५ श्लो० ४ )—

"जिज्ञासितमधीतं च यत्तद्ब्रह्म सनातनमि"ति॥

तथा ( श्लो० ३ )—

"जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम्" इति।

पूर्णप्रज्ञभाष्ये च स्कान्दे—

"नारायणाद्धि निष्पन्नं ज्ञानं कृतयुगे स्थितम्।
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम्॥
गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः॥

शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥
निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ॥
सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।
मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ॥
इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ।
सूत्रेषु येषु सर्वेऽपि निर्णयाः समुदीरिताः ॥
शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ।
एवंविधानि सूत्राणि कृत्वा व्यासो महाशयः ॥
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः" ॥ इत्यादि ।

(सूत्रव्याख्यानद्वारा वेदार्थबोधन रूढिप्रसिद्धसम्प्रदायप्रयोजनम्)

एवं मीमांसाद्वयानुसारेणैव वेदार्थोऽवगन्तव्य इति सर्वसदास्तिकसम्मतम् । मीमांसार्थश्च नेदानीन्तनैः स्वतोऽवगन्तुं शक्य इति सर्वजनीनम् । सूत्रमात्रावलोकने तदर्थानवबोधदर्शनात् । अतस्तदुभयभाष्यकरणादिना वास्तविकतदर्थबोधनपूर्वकं तन्निर्णयानुसारेण पारमार्थिकवेदार्थबोधनमनन्यसाधारणं रूढिप्रसिद्धसम्प्रदायानां प्रयोजनम् ।

(अन्यथा व्याख्यातृमायावादादीना मोहकत्वे प्रमाणानि)

ननु तथापीतरैरपि कतिभिश्चिन्मीमांसादिभाष्यकरणात् तदर्थबोधनस्य तद्वाराऽपि सम्भवान्नेदमनन्यसामान्यं विष्णुस्वाम्यादिसम्प्रदायप्रयोजनं भवितुमर्हतीति चेत्, मैवम्; पारमार्थिकार्थबोधनस्य सत्सम्प्रदायैकसाध्यत्वात् । इतरेषां तु कलियुगेऽसुरप्रभृतिमोहनार्थं शिवकेशवविनिर्मितत्वेन बहूनां प्रस्थानानां वास्तविकवेदार्थख्यापकत्वाभावात् । तथाहि—कौर्मे पूर्वभागे द्वादशाध्याये हिमाचलं प्रति देवीवाक्यम्—

"नच वेदादृते किञ्चिच्छास्त्रं ब्रह्माभिधायकम् ।
योऽन्यत्र रमते सोऽसौ न सम्भाष्यो द्विजातिभिः ॥
यानि शास्त्राणि दृश्यन्ते युगेऽस्मिन् विविधानि तु ।
श्रुतिस्मृतिविरुद्धानि तेषां निष्ठा हि तामसी ॥
कापालं पञ्चरात्रं च यामलं वाममार्हतम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥
ये कुशास्त्राभियोगेन मोहयन्तीव मानवान् ।
मया सृष्टानि शास्त्राणि मोहायैषां भवान्तरे" इति ॥

अत्र पञ्चरात्रशब्दो महाभारतमोक्षधर्मादिप्रशंसितनारदपञ्चरात्रातिरिक्तकापिलादिपञ्चरात्रविषय इत्यन्यत्र विस्तरः ।

तथा तत्रैव षोडशाध्याये देवदारुवनस्थानां गौतमशप्तानां मुनीनां प्रसङ्गे शिवं प्रति नारायणवाक्यानि—

"न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शङ्कर ।
सङ्गच्छते महादेव धर्मो वेदाद्विनिर्बभौ ॥
तथापि भक्तवात्सल्याद्रक्षितव्या महेश्वर ।
अस्माभिः सर्व एवैते गन्तारो नरकानपि ॥
तस्माद्वै वेदबाह्यानां रक्षणार्थाय पापिनाम् ।
विमोहनानि शास्त्राणि करिष्यावो वृषध्वज ॥
एवं सम्बोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः" ॥

मनुस्मृतावपि द्वादशाध्याये ( श्लो० ९४ )—

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् ।
अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ॥
या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥
उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् ।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥
चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिद्ध्यति ॥

अतो मोहार्थं भगवदाज्ञप्तैः शिवादिदैवतैरवतीर्य निर्मितानि व्याख्यानादीन्यर्वाचीनानीति सद्भिर्नादर्तव्यानि ।

रुद्राय तथाज्ञापनं तु पुनर्वराहपुराणेऽपि स्फुटम्—

"त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ।
अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ॥
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु" ॥ इत्यादि ।

तथा पद्मपुराणेऽपि विष्णुनामसहस्रे शिवः स्वस्मै भगवताज्ञप्तं स्वयं पार्वतीं प्रत्याह—

"त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदा ।
द्वापरादौ युगे भूत्वा कलया मानुषादिषु ॥
स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु ।
मां च गोपाय येन स्यात् सृष्टिरेषोत्तरोत्तरा" ॥ इति ।

पुनः पाद्मोत्तरखण्डे उमामहेश्वरसम्वादे तामसशास्त्रकथनं प्रतिज्ञाय कानिचिदसच्छास्त्राण्युक्त्वा—

"मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥
अपार्थं श्रुतिवाक्यानां दर्शितं लोकगर्हितम् ।
कर्मस्वरूपत्याज्यत्वमत्रैव प्रतिपाद्यते ॥
सर्वकर्मपरिभ्रष्टं विकर्मत्वं तदुच्यते ।
परेशजीवयोरैक्यं मयात्र प्रतिपाद्यते ॥
ब्रह्मणश्च परं रूपं निर्गुणं वक्ष्यते मया ।
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे ॥
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ।
मयैव वक्ष्यते देवि जगतां नाशकारणात्" ॥ इति ।

एवमन्यत्रापि द्रष्टव्यम् ।

प्रकृतमनुसरामः । तस्मात्पारम्परिकवास्तविकवेदार्थज्ञानार्थं कृतयुगे रुद्रसम्प्रदायादिशब्दैः प्रसिद्धा इदानीं विष्णुस्वाम्यादिभिर्भगवदाज्ञयाऽवतीर्णैः सदाचार्यैरुद्धृताः सम्प्रदाया आवश्यका एव ।

( सन्मार्गानुसारेण नित्य ब्रह्मविचारः कार्यः )

किञ्च, धर्मसिन्धौ ( परि० ३ पूर्वार्द्धे ) आह्निकप्रकरणे दिवसस्य द्वितीयभागे वेदशास्त्राभ्यासः—

"पठेदध्यापयेद्वेदान् जपेच्चैव विचारयेत् ।
अवेक्षेत च शास्त्राणि धर्मादीनि द्विजोत्तमः" ॥ इति ।

लघुविष्णुरपि द्वितीयाध्याये ( श्लो० ५ )—

"भुक्तोपविष्टो विश्रान्तो ब्रह्म किञ्चिद्विचारयेत् ।
इतिहासं प्रयुञ्जीत द्विकालसमये गृही"ति ॥

अयं विचारश्च धर्मब्रह्मविचारशास्त्रमीमांसाद्वयनिर्णायकविष्णुस्वाम्यादिसम्प्रदायाधीन एवेति तु पूर्वमेवोपपादयाम । अतः प्रत्यहं ब्रह्मविचारसिद्धिरपि सत्सम्प्रदायप्रयोजनम् ।

अत एव पराशरमाधवीये विष्णुपुराणे—

"अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ।
सच्छास्त्रादिविनोदेन सन्मार्गादविरोधिना ॥
दिनं नयेत्ततः सन्ध्यामुपतिष्ठेत्समाहितः" ॥ इति ।

अत्र भोजनान्तरमपि सम्प्रदायविरोधेनैव सच्छास्त्रादिविनोद उच्यते । मार्गशब्दस्य सम्प्रदायपर्यायत्वमपीति तु स्वमार्गः परमार्गः शैवमार्गो वैष्णवमार्ग इत्यादिविद्व्यवहारप्रसिद्धम् । पुरस्तात् भवन्मार्गे तिलकं कीदृशमित्यनुयुञ्जानस्य तवापि चाभिमतमिति किमनेन ?

( मन्त्रोपदेशाद्वैष्णवत्वादि धर्मसिद्धिः सम्प्रदायप्रयोजनम् )

अपि च,

"वैष्णवत्वादिधर्माणां सिद्धिर्मन्त्रोपदेशतः ।
असम्प्रदायवैफल्यात्सम्प्रदायप्रयोजनम्" ॥

( वैष्णवत्वं वैष्णवाद्गुरोर्मन्त्रग्रहणादेव )

तथाहि—

वैष्णवत्वं हि वैष्णवसाम्प्रदायिकगुरुसकाशाद्भगवन्मन्त्रग्रहणादेव सिद्ध्यति ।

यथाह नारदपञ्चरात्रप्रथमरात्रनवमाध्याये पार्वतीगजवक्त्रनारदान्प्रति शिवः— ( श्लो० २० )—

"कृष्णमन्त्रोपासकानां शुद्धं पादोदकं सुत ।
पुनाति सर्वतीर्थानि वसुधामपि पार्वति ॥
कृष्णमन्त्रो द्विजमुखाद्यस्य कर्णं प्रयाति च ।
तं वैष्णवं जगत्पूतं प्रवदन्ति पुराविदः ॥
मन्त्रग्रहणमात्रेण नरो नारायणात्मकः ।
पुनाति लीलामात्रेण पुरुषाणां शतं शतम्" ॥ इत्यादि ।

तथा तत्रैव ( श्लो० २६ )—

"सस्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
फलं स लेभे पूजानां व्रती सर्वव्रतेषु च ॥

विष्णुमन्त्रं यो लभेच्च वैष्णवाच्च द्विजोत्तमात् ।
कोटिजन्मार्जितात् पापान्मुच्यते नात्र संशयः" ॥ इति ।

ब्रह्मवैवर्ताद्यखण्डैकादशाध्याये—

"गुरोर्मुखाद्विष्णुमन्त्रो यस्य कर्णे प्रविश्यति ।
तं वैष्णवं महापूतं जीवन्मुक्तं वदेद्विधिः" ॥ इति ।

( कण्ठरवेणासम्प्रदायमन्त्रनैष्फल्यम् )

नन्वेवं वैष्णवाद्गुरोः सकाशान्मन्त्रग्रहणमभिधीयते, तच्च यस्मात्कस्मादपि द्विजात् सम्भवतीति नैतन्मात्रेण सम्प्रदायस्यानन्यसाधारणं प्रयोजनमायाति । सम्प्रदायपद-घटिततादृगावश्यकताबोधकवाक्यानुपलम्भादिति चेत्, मैवम्; गौतमीये तन्त्रे एको-नत्रिंशाध्याये ( श्लो० ५ )—

"धर्मार्थकाममोक्षाणामालयः साम्प्रदायिकः ।
सम्प्रदायविहीना ये मन्त्रास्ते निष्फला मताः" ॥ इति वचनात् ।

साम्प्रदायिकाचार्यभिन्नाद्यस्मात्कस्मादपि वैष्णवाद्गृहीतस्य मन्त्रस्य नैष्फल्यकथनेन सम्प्रदायसेवनस्यावश्यकत्वात् ।

( मन्त्रस्यावश्यकता )

मन्त्रावश्यकता तु, ( अ० ३ श्लो० ६५,६६ )—

"अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणाम् ।
कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः ॥
मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि ।
कुलसङ्ख्यां च गच्छन्ति कर्षन्ति च महद्यशः" ॥

इत्यन्वयव्यतिरेकाभ्यां तृतीयाध्याये मनुनाऽपि दर्शिता ।

किञ्च, आङ्गिरसः स्मरणेऽपि—

"यावतो ग्रसते पिण्डान् हव्यकव्येष्वमन्त्रवित् ।
तावतो ग्रसते प्रेत्य दीप्ताञ्छूलानयोमयान्" ॥

इत्यमन्त्रविदो हव्यकव्यानधिकार आमुष्मिकं दुष्फलं चोक्तम् । तस्मान्मन्त्रग्रहण-मावश्यकम् । न चात्र मन्त्रशब्देन मीमांसकादिप्रसिद्ध्यनुरोधाद्वैदिकमन्त्रमात्रं गृह्यत इति शङ्क्यम्; तथासति ब्राह्मणभागस्यानादरणीयत्वप्रसङ्गात् ।

( वैष्णवदीक्षाया आवश्यकता )

अथ मन्त्रशब्देन सोऽपि लक्ष्यत इति चेत्, तर्हि, एकशेषेण वैष्णवदीक्षामन्त्रा अपि वेदादिसिद्धाः कुतो न ग्रहीतुं शक्याः ?

"अदीक्षितस्य वामोरु कृतं सर्वमनर्थकम् ।
पशुयोनिमवाप्नोति दीक्षाहीनो नरो मृतः ॥
विना श्रीवैष्णवीं दीक्षां प्रसादं सद्गुरोर्विना ।
विना श्रीवैष्णवं धर्मं कथं भागवतो भवेत्" ॥

इत्यादिपाद्मोत्तरखण्डादिवाक्यानुरोधात् । श्रीवैष्णवीं श्रीयुक्तां वैष्णवीमित्यर्थः । शाकपार्थिवादिवत्समासः । मान्यत्वादेवं वचनम्, श्रीकृष्णादिवत् ।

मन्त्रसारे—

"दीक्षिताय विशेषेण प्रसीदेन्नान्यथा हरिः ।
ब्राह्मणः क्षत्रियो वापि वैश्यः शूद्रोऽथवा पुनः ॥
एवं स्त्रियो वा यत्नेन गुरुमेव समाश्रयेत्" ॥ इति ।

तत्त्वसारे—

"अवश्यं वैष्णवीं दीक्षां विशेत्सर्वप्रयत्नतः ।
दीक्षिताय विशेषेण संसिद्धिर्नात्र संशयः" ॥ इति ।

(अवैष्णवस्योपदेशकत्वनिषेध.)

अथ "युगे युगे तु दीक्षा स्यादुपदेशः कलौ युगे" इत्यादिवाक्यानुसारात् पूर्वोक्तपञ्चरात्रब्रह्मवैवर्तादिवचनेषु वैष्णवगुरुमुखान्मन्त्रश्रवणमात्रस्यैव वैष्णवत्वजनकत्वकथनाच्च बहुशिष्टसम्मत उपदेशपक्ष एवेदानीमाद्रियते; तदापि—

"मन्त्रोपदेशमात्रेण नरा मुक्ताश्च भारते ।
पूर्वैश्च कोटिपुरुषैः परैः सार्द्धं हरेरहो ॥
कोटिजन्मार्जितात्पापान्मन्त्रग्रहणमात्रतः ।
मुक्ताः शुद्ध्यन्ति यत्पूर्वं कर्म निर्मूलयन्ति च ॥
पुत्रान् दारांश्च शिष्यांश्च सेवकान् बान्धवांस्तथा ।
यो दर्शयति सन्मार्गं सद्गतिस्तद्भवेद्ध्रुवम्" ॥ इति ।

ब्रह्मवैवर्तब्रह्मखण्डाध्याये ब्रह्माणं प्रति नारदवाक्यैरेवमादिभिरुक्तवक्ष्यमाणवचनान्तरैश्चावश्यकताबोधनाद्भगवन्मन्त्रग्रहणमावश्यकमेव ।

(पुन कण्ठरवेण सम्प्रदायावश्यकता)

नन्वेवं मन्त्रग्रहणे सम्प्रदायावश्यकत्वमुच्यते । न तु वैष्णवसम्प्रदायावश्यकत्वम् । अतो यतः कुतश्चिदपि साम्प्रदायिकाच्छैवादेः सकाशादपि वैष्णवमन्त्रग्रहणं शक्यवचनमिति नैतदुपदेशोऽप्यनन्यसामान्यं वैष्णवसम्प्रदायानां प्रयोजनं सिद्ध्यतीति चेत्; अलमलं तूष्णीं मैवमनर्थं ब्रूयाः । अवैष्णवोपदिष्टो वैष्णवमन्त्रो नरकसाधनमिति वद्द्भिर्वचनसहस्रैः कर्णबधिरीकारात् ।

तथा हि—सारसङ्ग्रहे पञ्चरात्रे—

"न्यासे वाप्यर्चने वापि मन्त्रमेकान्तिनः श्रयेत् ।
अवैष्णवोपदिष्टेन मन्त्रेण नरकं व्रजेत् ॥
अवैष्णवाऽऽहृतं मन्त्रं यः पठेद्वैष्णवो द्विजः ।
कल्पकोटिसहस्राणि पच्यते नरकाग्निना" इति ॥

तत्रैव पद्मपुराणे—

"अवैष्णवोपदिष्टं च पूर्वमन्त्रं परित्यजेत् ।
पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेन्मनुम्" इति ॥

पुनः पाद्म एव—

"सहस्रशाखाध्यायी च सर्वयज्ञेषु दीक्षितः ।
कुले महति जातोऽपि न गुरुः स्यादवैष्णवः ॥
यस्तु मन्त्रद्वयं सम्यगध्यापयति वैष्णवः ।
स आचार्यस्तु विज्ञेयो भवबन्धविनाशकः" ॥ इति ।

वादावल्यां पञ्चरात्रे—

"यो वक्ति न्यायरहितं विना न्यायं शृणोति यः ।
तावुभौ नरकं घोरं व्रजतः कालमक्षयम्" ॥ इति ।
"महाकुलप्रसूतोऽपि सर्वयज्ञेषु दीक्षितः ।
सहस्रशाखाध्यायी च न गुरुः स्यादवैष्णवः" ॥ इति ।
"अवैष्णवोपदिष्टेन मन्त्रेण नरकं व्रजेत् ।
पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेद्गुरोः" ॥ इति ।

पाद्मोत्तरखण्डे द्वात्रिंशाध्याये—

"अवैष्णवोपदिष्टं तु पूर्वमन्त्रवरद्वयम् ।
पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेद्गुरोः" ॥ इति ।

एवमादिष्वनेकवचनेष्ववैष्णवान्मन्त्रग्रहणस्य नरकाद्यनिष्टप्राप्तिसाधनत्वकथनेनाधर्मत्वबोधनाद्वैष्णवसाम्प्रदायिक एव गुरुरावश्यकः । न चैवमपि वचनेषु साम्प्रदायिकवैष्णवादुपदेशग्रहणस्यानुक्तत्वेन वैष्णवत्वमात्रमेव गुरुविशेषणमस्तु, नतु साम्प्रदायिकत्वमपीति शङ्क्यम् । दत्तोत्तरत्वात् । पाद्मगौतमतन्त्रयोः—

"सम्प्रदायविहीना ये मन्त्रास्ते निष्फला मताः" इति वाक्यात् ।

अपरे तु—

"न जातु मन्त्रदा नारी न शूद्रो नान्तरोद्भवः ।
नाभिशस्तो न पतितः कामकामोऽप्यकामिनाम् ॥

सप्तपुरुषातिविज्ञेये सन्ततैकान्तनिर्मले ।
कुले जातो गुणैर्युक्तो विप्रः श्रेष्ठतमो गुरुः" ॥

इति भारद्वाजसंहितावचनान्यप्युदाहरन्ति, तेनापि परम्परया सम्प्रदायेन विख्याताचार्यभावस्यैव गुरुत्वं युक्तं नान्यस्यैवेति सिद्ध्यति ।

किञ्च, गौतमतन्त्रेऽपि त्रिंशाध्याये सम्प्रदायलब्धोपदेशत्वमेव मन्त्रस्य सिद्धिहेतुत्वेनोच्यते ।

तथाहि तत्र ( श्लो० ५ )—

"इदानीं कथय ब्रह्मन्! मन्त्रसिद्धेस्तु लक्षणम् ।
सिद्ध्युपायः कतिविधः कथयस्वानुकम्पया" ॥

इति गौतमप्रश्ने नारदः ( श्लो० ६ )

मनोरथानामक्लेशं सिद्धेरुत्तमलक्षणम् ।

इत्यादिनोत्तममध्यमलक्षणान्युक्त्वा, क्रमप्राप्तं सिद्ध्युपायमाह ( श्लो० १५ )—

"सिद्धमन्त्रस्तु यः साक्षात् स शिवो नात्र संशयः ।
सिद्धिलक्षणमित्युक्तं तदुपाय इहोच्यते ॥
पितृमातृविशुद्धा ये शुद्धाचारा जितेन्द्रियाः ।
सम्प्रदायेनोपदिष्टास्तेषां सिद्धिर्द्रुतं भवेत्" ॥ इति ।

तत्रैवोपसंहारे ( श्लो० ४२ )—

"दीयमानस्य मन्त्रस्य दशैता मन्त्रसंस्क्रियाः ।
याः कृत्वा सम्प्रदायेन मन्त्री वाञ्छितमश्नुते" ॥ इति ।

तस्माद्भगवन्मन्त्रोपदेशेन वैष्णवत्वसम्पादनमपि सर्वथाऽनन्यसामान्यमेवाऽस्मत्सम्प्रदायानां प्रयोजनम् ।

( तत एव नित्यार्चनादि )

अपि चैवं मन्त्रस्य सम्प्रदायैकलभ्यत्वे सिद्धे तमन्तरालब्धमन्त्रस्य च निष्फलत्वे सिद्धे सम्प्रदायोपसरणमावश्यकमेव । अन्यथा नित्यत्वेन निरूपितानामपि देवार्चनजपादीनामसम्भवापत्तेः । तथाहि पराशरमाधवीये ( अ० १ ) कौर्मे—

"यो मोहादथवाऽऽलस्यादकृत्वा देवतार्चनम् ।
भुङ्क्ते स याति नरकं सूकरेष्वभिजायते" ॥ इति

देवतार्चनं नित्यं विधीयते ।

तत्रैव हारीतोऽपि—

"कुर्वीत देवतापूजां जपयज्ञादनन्तरम्" ॥ इति ।

द्वितीयाध्याये मनुरपि ( श्लो० १७६ )—

"नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ।
देवताभ्यर्चनं चैव समिदाधानमेव च" ॥ इति

देवार्चनस्य नित्यत्वमाह ॥

( ब्राह्मणानामन्नममृतम् )

आपस्तम्बोऽप्यष्टमाध्याये देवार्चनजपादिनैव ब्राह्मणस्यान्नेऽमृतत्वमाह—

"अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम् ।
वैश्यस्य त्वन्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् ॥
वैश्वदेवेन होमेन देवताभ्यर्चनैर्जपैः ।
अमृतं तेन विप्रान्नमृग्यजुःसामसंस्कृतम्" ॥ इति ।

तत्रापि विष्ण्वर्चनं त्वत्यावश्यकमेवेति पुरस्तात्प्रपञ्चयिष्यामः ।

( अर्चनं स्वैर्मन्त्रैः )

तच्चार्चनं स्वमन्त्रैरेव । आचारमाधवे—

"निष्पीड्य स्नानवस्त्रं वै समाचम्य च वाग्यतः ।
स्वमन्त्रैरर्चयेद्देवान् पत्रैः पुष्पैस्तथाम्बुभिः" ॥

इति कूर्मपुराणात् ।

मन्त्राश्च सम्प्रदायैकलभ्या इत्युक्तं प्राक् ।

( भगवत्सेवनेऽधिकारः प्रसादश्च सम्प्रदायात् )

किञ्च, भगवत्सेवनेऽधिकारोऽपि वैष्णवसम्प्रदायैकलभ्य इति गौतमतन्त्रादिषु स्फुटम् । अपि च । अर्चने भगवत्प्रसादोऽपि सम्प्रदायैकाधीनः ( स्कं० ५ अ० १२ श्लो० १२ )—

"रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा ।
न च्छन्दसा नैव जलाग्निसूर्यैर्विना महत्पादरजोऽभिषेकम्" ॥

इत्यादिश्रीभागवतादिवचनेभ्यः । अर्चनातिशायनस्यापि सेवाप्रकारनिर्बन्धकसम्प्रदायतन्त्रत्वाच्च । उदाहृता हि धर्मसिन्धौ पूर्वार्धे स्मृतिः—

"अर्चकस्य तपोयोगादर्चनस्याऽतिशायनात् ।
आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति" ॥ इति ।

गौतमतन्त्रेऽपि ( अ० २ श्लो० ११६ )—

"भक्त्या तु पूजयेद्देवं सोऽभीष्टं फलमाप्नुयात्" ।

इत्यभक्तिपूजनस्य व्यर्थत्वमुक्तम् । पुनस्तत्रैव त्रयोदशाध्याये साम्प्रदायिकगुरोः सकाशान्मन्त्रोपदेशग्रहणनिरूपणानन्तरम्—

"ततः प्रभृतिमन्त्रज्ञो गुरुशासनसंस्थितः ।
यथा मन्त्रे तथा देवे यथा देवे तथा गुरौ ॥
पश्येदभेदतो मन्त्री एवं भक्तिक्रमो मुने ।
अभक्तिभजनाल्लोके देवताक्लेशदायकः" ॥ इति ।

भक्तिश्च सम्प्रदायादेवेत्याद्यन्यत्र विस्तरः ॥

(जपे तदुपयोग जपावश्यकता जप्यभेदश्च)

अथ जपमप्यनेकविधं भगवतः शरणत्वभावनपूर्वकं मुक्तिफलकं कर्तव्यत्वेनाह षष्ठाध्याये मनुः (श्लो० ८३)—

"अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।
आध्यात्मिकं च सततं वेदान्ताभिहितश्च यत् ॥
इदं शरणमज्ञानामिदमेव विजानताम् ।
इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ॥
अनेन क्रमयोगेन परिव्रजति यो द्विजः ।
स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति" ॥

दशमाध्याये आपस्तम्बोऽपि तपोवृद्धिहेतुत्वेन जपानामावश्यकत्वमाह—

"अपमानात्तपोवृद्धिः सम्मानात्तपसः क्षयः ।
अर्चितः पूजितो विप्रो दुग्धा गौरिव गच्छति ॥
आप्याययेद्यथा धेनुस्तृणैरमृतसम्भवैः ।
एवं जप्यैश्च होमैश्च पुनराप्यायते द्विजः" ॥ इति ।

अत्र जप्यैरिति बहुवचनाद् गायत्र्यादयः साम्प्रदायिकवैष्णवादिमन्त्राश्च सङ्गृह्यन्ते । बृहत्पराशरोऽपि एतानि द्वितीयाध्याये कण्ठरवेणाह जपप्रकरणे—

"जपस्याथ प्रवक्ष्यामी"त्युपक्रम्य—

"जप्यानि ब्रह्मसूक्तानी"त्यारभ्य—

"पौराणिकानि चाऽन्यानि तथा सैद्धान्तिकानि चे"त्यन्तेन ।

अत्र शैववैष्णवादिमन्त्राणामेकीभावेनोक्तानामपि सम्प्रदायभेदेन जप्यत्वं सूक्तवाके एकीकृत्योक्तानामपि देवतानां दर्शपूर्णमासयागभेदेन प्रस्तरप्रहरणे तत्तद्देवताग्रहणवदिति प्रासङ्गिकम् ।

तस्मात्स्वोपदिष्टमन्त्राणां जीवस्य भगवदेकशरणत्वबोधकानां जपद्वारा मुक्तिप्रापणं साधनदशायामपि तद्द्वारा तपोवृद्धिकरणञ्च सम्प्रदायप्रयोजनम् ॥

(पत्रादिलिखितमन्त्रनिषेध परम्पराग्रह)

न च लिखितपत्रादितोऽपि मन्त्रलाभसम्भवेन नेदं सम्प्रदायप्रयोजनमिति शङ्क्यम् । सम्प्रदायहीनमन्त्रे नैरर्थक्यस्य पूर्वमेवोपपादितत्वात् ।

( स्कं० ३ अ० ८ श्लो० ३ )—

"आसीनमुर्व्यां भगवन्तमाद्यमि"त्यादिपौराणिकोपदेशेषु ।

( बृहदारण्य० पृ० ४९५ )—

"दध्यङ्ङाथर्वणोऽश्विभ्यामुवाचे"त्यादिषु श्रौतोपदेशेषु च गुरुपरम्परायाः प्रदर्शनेनापि तथा निश्चयात् ।

"यदृच्छया श्रुतं वापि छद्मनापि छलेन वा ।
पत्रे स्थितं वा गाथायां वर्जयेत्तदनर्थवत्" ॥

इति तन्त्रोक्तनियमस्यापि सर्वशिष्टादृतत्वाच्च ।

( सम्प्रदायमन्त्रग्रहणे विधिफलानि )

अथ सम्प्रदायान्मन्त्रग्रहणे लौकिकालौकिकानि तज्जन्यप्रयोजनान्यनेकविधान्याह गौतमतन्त्रप्रथमाध्याये कृष्णमन्त्रं प्रशंस्य तद्ग्राहकाणां ब्रह्मादीनां तज्जन्यं फलं चोक्त्वा नारदः ( श्लो० १८ )—

"मन्त्राणां परमो मन्त्रो गुह्यानां गुह्यमुत्तमम् ।
मन्त्रराजमिमं ज्ञात्वा कृतार्थो जायते नरः ॥
पुत्रवान् धनवान् वाग्मी लक्ष्मीवान्पशुमान्भवेत् ।
सुभगः सम्मतः श्लाघ्यो यशस्वी कीर्तिमान्भवेत् ॥
सर्वलोकाऽभिरामः स्यात्सर्वज्ञश्च भवेन्नरः ।
अनेन त्रिषु लोकेषु याता मुक्तिं मुमुक्षवः ॥
मन्त्रेणानेन मन्त्रज्ञो भक्तिः स्यात्प्रेमलक्षणा ।
समस्ततीर्थपूतश्च समस्तक्षेत्रपावनः ॥
रवेरिव दुराधर्षः शुचेरिव शुचिः सदा ।
शङ्करस्येव सिद्धीशो विष्णोरिव सदाश्रयः ॥
बहुना किमिहोक्तेन रहस्यं शृणु गौतम ! ।
निर्वाणफलदो मन्त्रः किमन्यैर्बहुजल्पितैः" ॥ इति ।

( वैष्णवानां यमयातनाऽभाव )

किञ्च, वैष्णवत्वे सति सर्वा अपि मुक्तयः करस्था एव सर्वमुक्त्यधिका भक्तिरपि सुलभैव, किमुतान्यत् कुतस्तराञ्च तेषां यमयातनादिकम् । अत एव विष्णुपुराणे तृतीयांशे सप्तमाध्याये ( श्लो० १० )—

"स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदन प्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम्" ॥ इत्यादि ।

श्रीभागवते षष्ठस्कन्धतृतीयाध्याये स्वदूतान्प्रति यमः—

"तान्नोपसीदत हरेर्गदयाभिगुप्तान्नैषां वयं नच वयः प्रभवाम दण्डे" ॥ इत्यादि ।

स्वप्नेश्वरभाष्ये च वचनम्—

"नरके पच्यमानस्तु यमेन परिभाषितः ।
किं त्वया नार्चितो देवः केशवः क्लेशनाशनः" इति ॥

( मोक्षोऽपि भगवच्छरणगमनादेव )

किञ्च, मोक्षोऽपि साम्प्रदायिकगुरुद्वारा भगवच्छरणगमनादेव । अत एव गोपालपूर्वतापनीये मुमुक्षोः शरणगमनं विधीयते—

"यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै गोपायति कृष्णः यस्तं देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमनुव्रजेत्" ॥ इति ।

गीतायामपि सप्तमाध्याये ( श्लो० १४ )—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति ॥

पुनर्द्वादशाध्याये—

"तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्" ॥

पुनरष्टादशे—

"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति ।

लघ्वत्रिस्मृतौ नवमाध्याये—

"विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन् ।
शिशुपालो गतः स्वर्गं किं पुनस्तत्परायणः" इति ॥

इदं भक्तिमीमांसाभाष्येऽपि प्रथमान्हिकषष्ठसूत्रव्याख्याने उदाहृतम्, इत्थम्—

प्रयोजनान्यनन्तानि तत्सन्तानं कियन्मया ।
सर्वसत्फलसन्तानसम्प्रदायस्य वर्ण्यताम् ॥ १ ॥
विद्विषां रोषपोषार्थं तोषार्थं विदुषां सताम् ।
अज्ञमोहप्रमोषार्थं तथाप्युक्तानि कानिचित् ॥ २ ॥

---

## अथ तृतीयोऽवान्तरः प्रश्नः ॥ ३ ॥

## केन केन वैलक्षण्येन सम्मताः ?

( स्वकृत. प्रश्नार्थ. )

इह जिज्ञासाबोधकः किंशब्दो वैलक्षण्ये सामानाधिकरण्येनान्वेति । वैलक्षण्यं त्वसाधारणो धर्मः । प्रयोजकत्वं च तृतीयार्थः । तत्र प्रकृत्यर्थस्याधेयतासम्बन्धेनान्वयः । प्रत्ययार्थप्रयोजकत्वस्य तु सम्मता इत्येकदेशसंम्मतौ निरूपकतासम्बन्धेनान्वयः । सम्मतिश्चात्र तत्तत्सम्प्रदायानुयोगिकपरस्परप्रतियोगिकभेदप्रकारिकाभिप्रेता स्यादिति प्रकरणानुरोधादवगम्यते । 'तथा च पूर्ववाक्ये भेदशब्दोपात्ततत्तत्सम्प्रदायविशेषविषयकतादृशसम्मतिप्रयोजका साधारणधर्मविषयिणी बुभुत्सा अनुयोजिकात्मसमवेतेति ज्ञायते ॥

### उत्तरम् ।

( उत्तरकारिकासु सम्प्रदायानां परस्परवैलक्षण्यदिग्दर्शनादिकम् )

वैलक्षण्यं बहुविधं सम्प्रदायेषु वर्तते ।
आचारेषु च चिह्नेषु साधनेषु फलेषु च ॥ १ ॥
भक्त्यादीनां प्रकारेषु सिद्धान्तेषु च विस्तरात् ।
तद्यथा तुलसीकाष्ठघटितां मालिकां गले ॥ २ ॥
दधत्येके सदा देव पूजाद्यवसरेऽपरे ।
ऊर्ध्वपुण्ड्रे च मुद्रादौ सेवादिषु हरेस्तथा ॥ ३ ॥
प्रकारभेदा बहवस्तत्तद्ग्रन्थेषु दर्शिताः ।
शुद्धाद्वैतं तथा द्वैतं विशिष्टाद्वैतमप्यथ ॥ ४ ॥
द्वैताऽद्वैतं चेति भेदा अपि वेदादिनिर्णयात् ।
विलक्षणत्वमन्योन्यमेवं ग्रन्थेषु विस्तरात् ॥ ५ ॥
तेषु तेषु विनिर्णीतमनन्ताः सन्ति ते भुवि ।
अत्यन्तविस्तरभयात्तत्सर्वमिह सर्वथा ॥ ६ ॥
वक्तुं न शक्यते स्याचेज्जिज्ञासा ते समुत्कटा ।
तत्तद्ग्रन्थान् समभ्यस्य तत्तदाचार्यसन्निधौ ॥ ७ ॥
कृत्वोपसृतिं तत्सर्वं वैलक्षण्यं विबुध्यताम् ।
जीवा नाना प्रकृतयः सात्त्विकादिविभेदतः ॥ ८ ॥
सर्वेषामुद्धृतिस्तेषां तत्तद्योग्योपदेशतः ।
कर्तव्या सम्प्रदायैरित्यन्योन्यमविरोधिता ॥ ९ ॥

---

## अथ तुरीयोऽवान्तरः प्रश्नः ॥ ४ ॥

## भेदेषु भवत्सम्मतिर्न वा ?

### उत्तरम् ।

( उत्तरकारिकायां वेदादिविरुद्धमप्रमाण तदविरुद्ध प्रमाणमित्याचार्याः । )

वेदशास्त्राविरुद्धेषु भेदेष्वस्त्येव सम्मतिः ।
न कस्याप्यास्तिकस्य स्यात्तद्विरुद्धेषु सम्मतिः ॥

( धर्मब्रह्मणोर्वेदैकगम्यत्वात्तथा )

ननु वेदाद्यनुरोधाननुरोधाभ्यामेव सम्प्रदायभेदेषु सम्मतिस्वीकारे किं बीजमिति चेदुच्यते—

सत्सम्प्रदायभेदा हि मुख्यतया धर्मब्रह्मनिर्णयार्थमेव प्रवृत्ताः । धर्मब्रह्मणोश्च वेदैकगम्यत्वम् । तत्तन्मीमांसायां यथायथं चोदनालक्षणादिसूत्रैः शास्त्रयोनित्वादिसूत्रैश्च तयोर्वेदैकमुख्यप्रमाणकत्वस्य सिद्धान्तितत्वात् । अत एवाचाराध्याये ब्रह्मचारिप्रकरणे याज्ञवल्क्यः ( अ० १ श्लो० ३२ )—

"यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः" इति ॥

( धर्मस्य वेदैकमूलकत्वम् )

किञ्च, धर्मस्य वेदैकमूलकत्वं मनुरप्याह द्वितीयाध्याये ( श्लो० ६ )—

"वेदोऽखिलो धर्ममूलमिति" ।

पुनर्द्वादशाध्याये—

"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" ॥ इति ।

याज्ञवल्क्योऽपि ( अ० १ श्लो० ३ )—

"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
"वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" इति ।

श्रीभागवतेऽपि षष्ठस्कन्धे—

"वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः" इति ।

पुनरेकादशस्कन्धे—

"कालेन नष्टा प्रलये वाणीयं वेदसञ्ज्ञिता ।
मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः" इति ।

कूर्मपुराणेऽपि पूर्वभागे षोडशाध्याये शिवं प्रति नारायणः—

न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शङ्कर!
सङ्गच्छते महादेव धर्मो वेदाद्धि निर्बभौ" इत्यादि ।

इत्थमन्यत्रापि सहस्रशो द्रष्टव्यम् ।

(ब्रह्मणो वेदैकप्रमेयत्वम्)

एवं ब्रह्मणोऽपि प्राधान्येन वेदैकप्रमेयत्वम् ।

बृहदारण्यके—

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" ।

कठशाखायां—

"सर्वे वेदा यत्पदमामनन्ति" ।

शाकल्यब्राह्मणे—

"तं त्वौपनिषदं पुरुषं पृच्छामि" ।

माण्डूक्ये—

"ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम्" ।

गीतायां—

"वेदैश्च सर्वैरहमेव वेद्यः" । इत्यादि ।

उत्तरमीमांसासाधनाध्याये गुणोपसंहारपादे (सू० १)—

"सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" ।

एकादशे—

"मां विधत्तेऽभिधत्ते मामि"ति ।

कौर्मे पूर्वभागे द्वादशाध्याये हिमाचलं प्रति देवीवचः—

"न च वेदादृते किञ्चिच्छास्त्रं ब्रह्माभिधायकम् ।
योऽन्यत्र रमते सोऽसौ न सम्भाष्यो द्विजातिभिः" ॥ इति ।

एवमादिभिस्तैस्तैरनेकैः श्रुतिस्मृतिन्यायपुराणवचनैर्निरूपितमेवेत्यलं सर्वशिष्टसम्मतेऽस्मिन्नर्थे बहुविस्तरेण ।

(निष्कर्ष)

तस्माद्धर्मब्रह्मणोर्मुख्यतया वेदैकप्रमेयत्वेन सम्प्रदायानां च तदुभयनिर्णयार्थमेव प्रवृत्तत्वेन वेदानुकूलेष्वेव तेषु सम्मतिस्तद्विरुद्धेषु च तेष्वसम्मतिर्युक्तैवेति श्रीः ।

(स्मृतिकारवत्परस्परसम्मति.)

किञ्चैवमेव प्राचां स्मृतिकारमहर्षीणां परस्परविरुद्धप्रायश्चित्तादिस्मरणेऽपि । नहि

परस्परस्योक्तौ विसम्मतिरस्ति, किन्तु व्रतादीनां क्वचित्समुच्चयात् क्वचिद्विकल्पाच्च पुंसां स्वरुच्यनुसारेणान्यतमे प्रवृत्तिरेवाभिप्रेता।

आह च लघुपाराशरस्मृतिव्याख्यायां माधवः—

"मुनिनैकेन यत्प्रोक्तस्तदन्यो न निषेधति।
प्रत्युतोदाहरेत्तस्मात्सर्वोक्तिः सर्वसम्मता" ॥ इति।

तथैव भगवदाज्ञया समग्रं जगदुद्दिधीर्षतां निरतिशयकारुणिकानां परमाचार्याणां वेदादिमूलकाऽनादिसिद्धसत्सम्प्रदायभेदः प्रवर्ततेऽनेकविधविचित्रप्रकृतिजीवानां रुच्यनुसारेणान्यतमे प्रवृत्त्या तत्तदिष्टावाप्तिरेव सिसाधयिषितत्वेनाऽभिप्रायगोचरो नत्वितरेतरराद्धान्तेषु विसम्मतिरिति वेदाद्यनुकूलेषु शिष्टसम्मतभेदेषु सर्वत्र सर्वेषां समुज्जागर्ति सम्मतिरिति शिवम्।

अतः—

खेदारण्यस्य लोकानां ये दावाग्नय उत्थिताः।
वेदादिमूलका मार्गभेदास्तेष्वस्ति सम्मतिः ॥ १ ॥

---

## पञ्चमः प्रश्नः।

अथास्मिन् प्रश्ने उपन्यस्तयोः सम्मतिभावाऽभावकोट्योरेकतरस्वीकारे क्रमेण दोषनिःक्षेपकं वाक्यद्वयं पञ्चमषष्ठप्रश्नत्वेन लिखितम्। तत्राद्यं प्रश्नवाक्यम्—

### सम्मतिश्चेत्तदाचरणं कुतो न?

### उत्तरम्।

(उत्तरकारिका)

वेदानुसारिभेदेषु प्रोक्तोऽभ्युपगमस्तु नः।
तथापि न स्वधर्मातिरिक्ताचरणमिष्यते ॥ १ ॥
कृतेर्विधिनिषेधाभ्यां शास्त्रे स्वेतरधर्मयोः।
तथास्तिकानां सर्वेषां भिन्नेष्वपि परस्परम् ॥ २ ॥
तत्तच्छाखीयपाठेषु तत्तत्सूत्रोक्तकर्मसु।
सत्त्वेऽपि सम्मतेः पूर्वं स्वशाखाध्ययनं मतम् ॥ ३ ॥
सदैवाचरणं चापि स्वस्वशाखीयकर्मणाम्।
स्वकीयमेवाचरणं तथास्ते सम्प्रदायिनाम् ॥ ४ ॥
एवं सम्मतिसत्त्वेऽपि नान्यधर्मकृतिः क्वचित्।
प्राप्यतेऽतोऽत्ययुक्तोऽपि ह्येवं प्रश्नस्तु चातुरी ॥ ५ ॥

(धर्माचरणे स्वसदाचार प्रमाणम्)

तथाहि—सर्वेषां वेदाद्यविरुद्धेषु सर्वसदाचारेषु सम्मतिसत्त्वेऽपि धर्माचरणे स्वसदाचार एव प्रमाणत्वेनोक्तो याज्ञवल्क्येन (अ० १ श्लो० ७)—

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्" ॥ इति ।

मनुरपि द्वितीयाध्याये (श्लो० १२)—

"वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्" ॥ इति ।

अत्र स्वस्येति पदं सदाचारेणैव सम्बद्ध्यते नतु प्रियमित्यनेन । चकारेण व्यवधानात् । आत्मन इत्यनेन पौनरुक्त्यापत्तेश्च सदाचारसम्प्रदायशब्दयोश्च परस्परपर्यायत्वमिति प्राश्वः । धर्मप्रवृत्तिश्च तत्कार्यमिति ॥

(धर्माचारयोर्भेदः)

अत एव धर्माचारयोर्भेदमाह लघुपराशरः प्रथमाध्याये—

"............आचारो धर्मपालकः ।
आचारहीनदेहानां भवेद्धर्मः पराङ्मुखः" ॥

एतत्स्मृतिव्याख्यायामितः पूर्वं (अ० १ श्लो० ३४) चातुर्वर्ण्यसमाचारमित्यस्य व्याख्याने माधवोऽप्याह—

समीचीनः शिष्टाभिमत आचारो यस्य धर्मस्य कारणत्वेन वर्तते सोऽयं यजनयाजनादिकर्मलक्षणो धर्मः समाचारः । अत एवाचारधर्मयोर्हेतुहेतुमद्रूपेण भेदं वक्ष्यति "आचारो धर्मपालक" इति । श्रुतिश्च धर्माचारौ भेदेन तथा व्यपदिशति । यथाकारी यथाचारी तथा भवतीत्यादि । इत्थङ्कारम् । (अ० १ श्लो० ११०)—

"एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम्" । इति

(प्रश्न० १ खं० १)—

आचाराल्लभते धर्ममाचारादेव धनमाचारादेव सुखमाचारादेव मोक्षं प्राप्नुयादिति । एवमादिषु मनुस्मृतिगौतमसूत्रादिवचनेष्वपि भेदनिर्देशादाचारशब्दः सम्प्रदायपर्याय एवावगम्यते । सन्ध्यावन्दनादिरूपस्याचारस्य यजनयाजनादिवद्धर्मान्तःपातित्वेन भेदनिर्देशायोगादित्यन्यदेतत् ॥

(धर्माचरण स्वसम्प्रदायादेवेत्यत्र पुन प्रमाणानि)

एवमाचारस्य धर्मप्रमाणत्वबोधकवचनेषु सामान्यतः सम्प्रदायपर्यायाचारशब्दप्रयोगेऽपि स्वस्वसम्प्रदाय एव स्वस्वाचरणीयधर्मे प्रमाणत्वेन निर्दिष्टो बोध्यः । पूर्वोक्तं

याज्ञवल्क्यवचने सर्वस्मृतिप्रधानमनुवचने च कण्ठरवेण तथैवोक्तेः । तस्मात्सर्व-सम्प्रदायेषु सम्मतिसत्त्वेऽपि धर्माचरणं तु स्वस्वसम्प्रदायानुसारेणैव युक्तम् ॥

अत एवाचारमाधवे प्रथमाध्याये—

"वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्" ॥

इति वेदोदितमपि स्वकं स्वसाम्प्रदायिकमेव नित्यं कुर्यात्, नत्वितरसम्प्रदायप्राप्तमपि । धर्माणां सम्प्रदायभेदेन व्यवस्थितत्वादिति भावः ।

अत्रैव तृतीयाध्याये यमः—

"वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ।
स्वधर्मनिरताः शान्ताः क्रियावन्तस्तपस्विनः ॥
तेभ्यो हव्यं च कव्यं च प्रसन्नेभ्यः प्रदीयताम्" इति ॥

किञ्च, अत्रिस्मृतावपि—

"तानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः ।
प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्युपस्थिताः" ॥ इति ।

दक्षस्मृतावपि—

गृहस्थोऽपि क्रियायुक्तो न गृहेण गृही भवेत् ।
तथैव पुत्रदारैश्च स्वकर्मपरिवर्जितः" ॥ इति ।

क्रियायुक्तः स्वाश्रमानुरूपशास्त्रीयक्रियायुक्तः । स्वकर्म स्वसाम्प्रदायिकं कर्म । अन्यथा क्रियायुक्तस्य कर्मवर्जितत्वासम्भवेन वचनव्याघातापातात् । एतेनोक्तवक्ष्यमाणवचनेषु स्वधर्मादिशब्दैः प्रातिस्विकवर्णाश्रमधर्ममात्रं ग्राह्यं, न तु स्वसाम्प्रदायिकधर्मोऽपीति कुचोद्यमपि निरस्तं वेदितव्यम् । सङ्कोचे मानाभावाच्च । मनुयाज्ञवल्क्यजैमिन्यादिभिः सम्प्रदायस्यापि धर्मे प्रमाणत्वादरणाच्च ।

तथा पुनः स एवाह—

"विभागशीलसम्पन्नः क्षमायुक्तो दयालुकः ।
स्वकर्मणि सदा युक्तो गृहस्थः शेषभुग्भवेत्" ॥ इति ।

(अन्यसाम्प्रदायिककर्मकरणे दोष)

अन्यच्च—स्वसाम्प्रदायिकं कर्म त्यक्त्वाऽन्यसाम्प्रदायिककर्मकरणे दोषं स्मरत्यत्रिः—

"येऽप्यपेताः स्वधर्माद्ये परधर्मे व्यवस्थिताः ।
तेषां शास्तिकरो राजा स्वर्गलोके महीयते ॥

आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते ।
परधर्मो भवेत्त्याज्यः स स्वयं परदारवत्" ॥ इति ।

दक्षोऽपि ( श्लो० १८ )—

"स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः ।
अज्ञानादथवा लोभात्स तेन पतितो भवेत्" ॥ इति ।

नारायणभट्टकृतायां धर्मप्रवृत्तौ वसिष्ठोऽपि—

स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः ।
अज्ञानादथवा लोभात्स तेन पतितो भवेत् ॥ इति ।

( स्वरुच्या कञ्चिदेक सम्प्रदायमाश्रयेत् )

अतः स्वमतपरमतोत्कर्षापकर्षप्रयोजकं प्रमाणशून्यं शुष्कवादं त्यक्त्वा स्वरुच्यनुसारेण कञ्चिदेकं सम्प्रदायमाश्रयेत्, न तु एकतरसम्प्रदायानवलम्बेन शुष्ककर्मवादतर्कपाखण्डादिरतः स्यादित्याहोद्धवं प्रत्येकादशस्कन्धे भगवान् ( अ० १८ श्लो० ३० )—

"वेदवादरतो न स्यान्न पाखण्डी न हैतुकः ।
शुष्कवादविवादे न कञ्चित्पक्षं समाश्रयेत्" ॥ इति ।

अतः सर्वैः स्वसाम्प्रदायिकधर्माचरणमेव विधेयम् । अत एव कृच्छ्रादिसाधारणेतिकर्तव्यतां व्याख्यायाह विज्ञानेश्वरः—

"एवमन्येष्वपि विरोधिपदार्थेषु विकल्प आश्रयणीयोऽविरोधिषु समुच्चयः । शाखान्तराधिकरणन्यायेन सर्वस्मृतिप्रत्ययत्वात्कर्मणः" इति ।

( तद्धर्मैरेव मोक्षादि )

तस्मादामरणमपि स्वसम्प्रदायानुसार्येव धर्माचरणं श्रेयस्तदेव च मोक्षसाधनं भवति । यथाह गीतायां भगवान्—

"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" इति ।

नारदपञ्चरात्रेऽपि द्वितीयरात्रे सप्तमाध्याये नारदेन मोक्षकारणानि पृष्टस्तानि वदन् शिवः ( श्लो० ४० )—

"स्वधर्माचरणं शुद्धं विधर्माच्च निवर्तनम् ।
वेदोक्ताचरणं विप्र ! परं निर्वाणकारणम्" ॥ इति ।

( प्रथमं स्वशाखाध्ययन कर्माणि च तदनुसारात् )

नापि हि तत्तदाचरणाभावमात्रेण तत्रासम्मतिः शक्या वक्तुम् । अन्यथा स्वशाखायाः प्रथमतोऽध्ययनं ब्रह्मयज्ञं तदुक्तकर्माणि च तन्मन्त्राद्यनुसारेण कुर्वतामपि शाखान्तरीयेषु तेष्वसम्मतिः प्रसज्येत । विधीयते हि स्वशाखाया एव प्रथमतोऽध्ययनादिकम्, यथाह माधवीये ( अ० १ ) वसिष्ठः—

"पारम्पर्यागतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा" ।। इति ।

स्वशाखापरित्यागं च स एव निषेधति—

"यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ।
स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः ।।
स्वीया शाखोज्झिता येन ब्रह्म तेनोज्झितं परम् ।
ब्रह्महैव स विज्ञेयः सद्भिर्नित्यं विगर्हितः ।।
अधीत्य शाखामात्मीयां परशाखां पठेदिति" ।।

अत एव सायनमाधवीयभाष्ये स्वाध्यायब्राह्मणव्याख्याने स्वाध्यायशब्दः "स्वस्याध्यायः स्वाध्यायः" इति विग्रहेण स्वशाखापरतया व्यवस्थापितः ।

आस्तां किमिहानेनाऽप्रकृतेन विचारेण ।।

( अन्यसाम्प्रदायिकचिह्नादिधारणनिषेध )

तस्मादन्यशाखीयकर्मवदन्यसम्प्रदायप्रोक्तप्रकारकं चिह्नधारणभगवत्सेवादिकमपि शिष्टा नाचरन्ति उक्तवचनेषु तन्निषेधात् ।

( अनाचरणेऽपि सम्मत्यनुच्छेद. )

यदि त्वनाचरणमात्रेणैवासम्मतिं मन्यते भवान्, तर्हि सर्वेषामपि स्वान्यशाखीयं कर्मानाचरतां तत्र तत्रासम्मतिमभ्युपगच्छतस्तव सर्वेष्वपि वेदबहिर्मुखत्वादयो दोषा अभिमता भवेयुः ।

किञ्च, सर्वेषां वर्णानामाश्रमाणां च परस्परस्य विहितान् धर्मान् अननुतिष्ठतामितरेतरधर्मेष्वसम्मतिं मन्यमानेन भवता सर्वत्रैव वर्णाश्रमधर्मच्युतत्वमभ्युपगन्तव्यं स्यात् । यदि च शास्त्रप्राप्तत्वात्परस्परधर्मानाचरणस्य न दोषप्रयोजकत्वं नाप्यन्योन्यधर्मेष्वसम्मतत्वं चेति ब्रूषे, तर्ह्युक्तमनुयाज्ञवल्क्यादिवचनबलात्प्रातिस्विकधर्माचरणे स्वसम्प्रदायस्यैव प्रमाणत्वं सिद्ध्यतीत्यन्यत्र सम्मतिसत्त्वेऽप्याचरणं तु स्वसम्प्रदायानुसारेणैवेत्यत्र न कोऽपि शङ्कावकाशः ।

अत एव महाभारते आजगरे युधिष्ठिरवाक्यम्—

"तर्कोऽप्रतिष्ठितः श्रुतयो विभिन्ना नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ।।" इति ।

"साधूनां समयश्चापि प्रमाणं वेदवद्भवेत्" ।। इति मिताक्षरादिबहुप्रामाणिकनिबन्धलिखितब्रह्माण्डवाक्ये कलौ तु सम्प्रदायस्यैव विशेषतः प्रामाण्यं च बोध्यत इति श्रीः । तथा च, सम्मत्याचरणयोर्व्याप्यभावात्सम्मतश्चेत्तदाऽऽचरणं कुतो नेति

प्रश्नस्तु प्रष्टुश्चातुर्यख्यापनायैवेति दिक् । तस्माच्छाखाधिकरणन्यायेन सर्वैः स्वस्वसम्प्रदायानुसारेणैव धर्माचरणं विधेयमित्यैव युक्ततरं न त्वितरानुसारेण ॥

( रुचिभेदान्नानामताश्रय. )

जीवानां रुचिभेदेन विविधमतानुसरणं तु भवद्ग्रन्थेष्वप्युच्यते—

"रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्" इति ।

तृतीयस्कन्धे च भगवान् कपिलः ( अ० २९ श्लो० ७ )—

"भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते" इति ।

सम्प्रदायभेदेन भक्तिभेदेन भक्तिभेदं प्रतिज्ञाय तत्र तत्र प्रवृत्तौ जीवानां स्वभावभूतगुणवैचित्र्यमेव हेतुत्वेनाह—

"स्वभावगुणमार्गेण पुंसां भावो विभिद्यते" इति ।

नैतावता सर्वेषां सर्वत्रासम्मतिगन्धोऽपि, इति सर्वं क्षेमम् ॥

---

## अथावान्तरषष्ठप्रश्नरूपं द्वितीयं वाक्यम् ।

## असम्मतिश्चेत्कुतोऽङ्गीक्रियते ? ॥ ६ ॥

### उत्तरम् ।

"सम्मतिर्वैदिकेषूक्ता ततोऽयं सर्वथा वृथा ।
हेतुपर्यनुयोगोऽथावैदिकेष्वस्त्यसम्मतिः ॥ १ ॥
तत्र चेत्पृच्छ्यते हेतुः सविकल्पद्वयोत्तरे ।
वेदशास्त्रविरोधाख्यः पूर्वमेवोदितो मया" ॥

तस्मान्नायं प्रश्नः पुनरुत्तरमर्हतीति श्रीः ॥

मार्गकुले किल कलया कलहाकुलतां तु कलयितुं प्रश्नः ।
रचितोऽनुचितोऽन्योन्यं कलहायेरन् वृथा कथं सन्तः ॥ १ ॥

अथास्यावान्तरस्य षष्ठप्रश्नस्यैव कुक्षावेतद्वाक्यं वक्तुर्विवित्साख्यापकं लिखितमुपलभ्यते ॥

## ( षष्ठप्रश्नावयवः )

## किं वर्णनिष्ठः ॥ ६ ॥

( वर्णो ब्राह्मणादि, तन्निष्ठत्व च सम्प्रदायस्य तदधिकारकत्वम्

### उत्तरम् ।

( स्वकृतस्तदर्थं )

"इह किमिति पृथक्पदात् सम्प्रदायस्य वर्णनिष्ठत्वमस्ति न वेत्येव जिज्ञासितमाहोस्वित् कस्मिन् वर्णे निष्ठा यस्येति समस्तपदाज्जिज्ञासाबोधककिंशब्दस्य वर्णे सामानाधिकरण्येनान्वयात् सम्प्रदायाधिकृतो वर्णविशेषः ?" ॥

( तत्र प्रष्टव्यांशे संशय. )

तत्राद्ये, वर्णविशिष्टेषु मनुष्येषु सम्प्रदायप्रवृत्तेः प्रत्यक्षसिद्धत्वेन संशयघटकस्याभावकोटेरनुदयेन प्रथमकोटेरत्र विवादानध्यासिततया संशयस्यैवानुदयात्तस्यैकधर्मिकविरुद्धकोटिद्वयावगाहिज्ञानरूपत्वात् व्यर्थः प्रश्नः ॥—

( अथाद्यकोटावुत्तरम् )

अथ किमाश्रमनिष्ठ इत्यग्रिमवाक्यानुरोधाज्ज्ञायते धर्मा हि द्विविधा एव, वर्णधर्मा आश्रमधर्माश्चेति भेदादिति प्रष्टुर्मतम् ॥ तत्र भगवन्मन्त्रग्रहणतत्सेवादीनां सम्प्रदायधर्माणां वर्णधर्मत्वमाश्रमधर्मत्वं वेत्येव विचिकित्सितं तस्येति ॥ तत्राप्युच्यते—

( धर्माणामनेकविधत्व षड्विधत्वञ्च )

न हि धर्माणामुक्तरीतिकद्वैविध्यमेव शास्त्रसम्मतम् ॥ तदतिरिक्तानामपि जातिधर्मकुलधर्मदेशधर्मादीनां तत्र तत्र निरूपणात् ॥ किञ्च वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषत इत्यत्र धर्माणां षड्विधत्वं विज्ञानेश्वरेणोक्तम्, तद्यथा—"वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति" ॥

( तत्र सम्प्रदायधर्माणां साधारणधर्मत्वम् )

तत्र. सम्प्रदायधर्माणां साधारणधर्मत्वम्, सम्प्रदायसम्मततुलसीकाष्ठमालाद्याचाराणां प्रायेण सर्ववर्णेष्वविशिष्टत्वात् ॥ विज्ञानेश्वरेणाप्यहिंसाशौचाचारादीनां साधारणधर्मत्वं विलिख्य तेषामाचार्यकरणपूर्वकत्वकथनात् । इदञ्चाचार्यकरणं साम्प्रदायिकगुरूपसर्पणरूपमेव ॥ उपनयनकालिकस्य तस्य स्त्रीशूद्रादिष्वसम्भवेन साधारणधर्मत्वाभावात् ॥ तथा बाह्यान्तरभेदेन द्विविधमपि शौचं सम्प्रदायैकलभ्यमित्युपपादितं प्राक् ॥

( अहिंसा-शौचादि )

मनुरप्याह ( अ० १ श्लो० ६३ )—

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥" इति ।

याज्ञवल्क्योऽपि गृहस्थप्रकरणे वर्णधर्मानुक्त्वाऽऽह ( अ० १ श्लो० २६ )—

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया शान्तिः सर्वेषां धर्मपालनम्" ॥ इति ।

इहान्तरशौचेन्द्रियनिग्रहौ सम्प्रदायोपजीव्यकौ । एवमन्यत्रापि तद्धर्माणां साधारणधर्मत्वमनेकत्र सिद्धमित्यलम् ॥

( अथ द्वितीयकोटावुत्तरकारकादि ).

अथ द्वितीयपक्षावलम्बनेन वर्णस्य किंशब्दसामानाधिकरण्यात् सम्प्रदायाधिकृतं किं वर्णमात्रमुत तद्विशेष एवेत्येव जिज्ञासितं स्यात्तदा तु साधारणधर्मत्वस्थापनेनैव दत्तोत्तरमथापि ब्रूमः—

"कृपालोर्दीननाथस्य सर्वोद्धरणकारिणः ।
सर्वेशितुर्हरेर्मार्गाः प्रायः सर्वाधिकारकाः ॥ १ ॥
दैत्यवद्विषताश्चापि नृणां सर्वाधिकारकाः ।
हरेर्मन्त्रग्रहे ज्ञाने नानाभक्तिषु मोक्षणे ॥ २ ॥
चतुर्णामपि वर्णानां श्रुता शास्त्रेऽधिकारिता ।
सम्प्रदायेषु तत्सिद्ध्यै ते सर्वेऽप्यधिकारिणः" ॥ ३ ॥

( शरणागतौ सर्ववर्णाधिकारः )

तथा हि—सर्वेषामपि वर्णानां स्वशरणागतिवशान्मोक्षलक्षणपरगतिप्राप्तिं प्रवक्ति भगवान् ( गी० अ० ९ श्लो० ३२ )—

"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ १ ॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथे"ति ॥

व्यपाश्रयः शरणागतिरिति व्याख्यातारः ॥

( भगवन्मन्त्रग्रहे )

किञ्च भगवन्मन्त्राणामपि बहूनां गोपालादीनां सर्ववर्णाधिकारकत्वं तत्र तत्र स्मर्यते ॥ यथोऽक्तं नारदपञ्चरात्रे तृतीयरात्रप्रथमाध्याये ( श्लो० १३ )—

सर्वेषु वर्णेषु तथाऽऽश्रमेषु नारीषु नानासु यजन्मुखेषु ।
दाता फलानामभिवाञ्छितानां द्रागेव गोपालकमन्त्र एषः" इत्यादि ॥

पुनः कृष्णमन्त्रान्तरमुपक्रम्य गौतमीयतन्त्रे ( अ० २४ श्लो० २३ )—

"रक्तपद्मायुतं हुत्वा द्विजो ज्ञानमवाप्नुयात् ।
सर्वलोकैकशान्तिं च क्षत्रियो नात्र संशयः ॥ १ ॥
अन्येषां यद्यदिष्टं तत्साधयेन्मनुनाऽमुने"ति ॥

भगवन्मन्त्रे तु चातुर्वर्ण्याधिकारो दर्शितस्तत्रैव प्रथमाध्यायेऽपि—

"एते समफलाः सर्वे समन्त्रा इति नः श्रुतम् ।
येन सर्वफलावाप्तिः सर्वेषां बन्धुरेव सः ॥ १ ॥
सर्ववर्णाधिकारश्च नारीणां योग्य एव यः ।
तं ब्रूहि भगवन्मन्त्रमल्पायासफलप्रदम्" ॥ २ ॥

इत्यादिना वैष्णवमन्त्रोपदेशग्रहणाधिकारश्चातुर्वर्ण्यस्य दर्शितः ॥

(दीक्षायाम्)

एवं दीक्षाधिकारोऽपि मन्त्रसारे—

"दीक्षिताय विशेषेण प्रसीदेन्नान्यथा हरिः ।
ब्राह्मणः क्षत्रियो वाऽपि वैश्यः शूद्रोऽथवा पुनः ॥ १ ॥
एवं स्त्रियो वा यत्नेन गुरुमेव समाश्रयेदि"ति ॥

वादावल्यां विष्णुयामले—

"ब्राह्मणान् क्षत्रियान् वैश्यान् सच्छूद्रान् सत्स्त्रियोऽपि वा ।
विष्णुभक्तिरतान् साधून् दीक्षयेद्विधिना गुरुरि"ति ॥ १ ॥

(दर्भमन्त्रादीना मुहुर्मुहुरुपयोग)

न चानेकेभ्य उपदेशेन मन्त्राणां नैर्बल्यं शङ्कनीयम् (अ० १)

"दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।
न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः" ॥

इति माधवीये शङ्खवचनात् ॥

(भगवत्सेवनादिषु सर्ववर्णाधिकार)

किञ्च मन्त्रोपदेशानन्तरं भगवत्सेवनादिषु साम्प्रदायिकधर्मेषु चतुर्णामपि वर्णाना-मधिकारस्मरणादपि सम्प्रदायस्य चतुर्वर्णनिष्ठत्वं स्पष्टमेवोरीकृतं महर्षिभिः । तथा हि निर्णयसिन्धौ तृतीयपरिच्छेदे देवीपुराणे—

"ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च पृथिवीपते ।
स्वधर्मतत्परो विष्णुमाराधयति नान्यथा" इति ॥

नारदपञ्चरात्रे (रात्र० २ अ० ७) मुक्तिकारणान्युपक्रम्य शिवः—

"चतुर्णामपि वर्णानां गुरुकृष्णार्चनं परम् ।
द्विजानां वैष्णवानाञ्च सेवनं मुक्तिकारणमि"ति ॥

गौतमतन्त्रे च षोडशाध्याये भगवत्सेवाप्रकारमुक्त्वा निगद्यते ॥ (श्लो० ९१)—

"एवमभ्यर्च्य जगतां पतिं शुद्धमनीषया ।
धर्मार्थकाममोक्षाणां दायादो भवति ध्रुवम् ॥ १ ॥

विप्रो देवाधिपो भूयात् साक्षाद्भूमिपुरन्दरः ।
क्षत्रियो राजवर्यश्च वैश्यो धनसमृद्धिमान् ॥ २ ॥
शूद्रः सुखानि सर्वाणि भुक्त्वाऽच्युतपुरं व्रजेत् ।
एवं ते कथितं विप्र संसारभयनाशनम् ॥ ३ ॥
अर्चनं त्रिविधं यत्ते मूलाविद्यानिकृन्तनमि"ति ॥

( स्त्रीशूद्रयो पूजाधिकारानधिकारौ )

न च स्त्रीशूद्रयोर्भगवत्सेवनेऽधिकारोऽथ दूरात् पूजनाधिकारसत्त्वेऽपि स्पर्शादौ त्वनधिकार एव—

"शूद्रो वाऽनुपनीतो वा सधवा विधवाङ्गना ।
दूरादेवास्पृशन्पूजां प्रकुर्याच्छिवकृष्णयोः" ॥

इति वाक्यादिति शङ्क्यम् ॥ स्पर्शनिषेधस्य शालग्रामविषयकत्वेन भगवत्प्रतिमादौ स्त्रीशूद्रयोरपि पूजाधिकारात् ॥ निर्णयसिन्धौ—

"शालग्रामं न स्पृशेत्तु हीनवर्णो वसुन्धरे ।
स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः ॥ १ ॥
मोहाद्यः संस्पृशेच्छूद्रो योषिद्वापि कदाचन ।
स्वपते नरके घोरे यावदाभूतसम्प्लवम् ॥ २ ॥
यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे ।
दूरादेवास्पृशन्पूजां कारयेत्सुसमाहितः" ॥

इति वाराहोक्तेः शालग्रामशिलामात्रे निर्बन्धो न प्रतिमादौ—

"सर्ववर्णैस्तु सम्पूज्याः प्रतिमाः सर्वदेवताः" इति तत्रैवोक्तेरिति निर्णीतम् । धर्मसारेऽपि ( परि० ३ )—

"स्त्री शूद्रो वा स्पर्शसहितं शालग्रामचक्राङ्कितबाणलिङ्गानि नार्चयेत्" इत्यादिना तदेव स्वीकृतम् ॥

अथ सेवार्थं भगवत्स्वरूपग्रहणेऽपि चतुर्णामपि वर्णानामधिकारो दर्शितः । कृत्यकल्पतरौ देवीपुराणे—

"चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिरि"ति ॥

( पवित्रकरणादौ सर्ववर्णाधिकार )

इदं सिन्धुद्वयेऽप्युदाहृतम्, एवं पवित्रकरणादिषु नैमित्तिकेष्वपि साम्प्रदायिकधर्मेषु चातुर्वर्ण्याधिकारः स्मर्यते निर्णयसिन्धौ ( परिच्छे० २ ) पवित्रकप्रकरणे विष्णुरहस्ये—

"ब्राह्मणः क्षत्रियो वैश्यस्तथा स्त्री शूद्र एव च ।
स्वधर्मावस्थिताः सर्वे भक्त्या कुर्युः पवित्रकमि"ति ॥

( भगवद्भक्तौ सर्ववर्णाधिकार )

एवं सम्प्रदायैकसाध्यायां भगवद्भक्तावपि चतुर्णामपि वर्णानामधिकारः स्मर्यमाण-स्तेषां सम्प्रदायाधिकारं बोधयति । यथा सारसङ्ग्रहे स्कन्दपुराणे—

"विष्णुभक्तिसमायुक्तो मिथ्याचारोऽप्यनाश्रमी ।
पुनाति सकलान् लोकान् सहस्रांशुरिवोदितः ॥ १ ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः ।
विष्णुभक्तिसमायुक्तो ज्ञेयः सर्वोत्तमोत्तमः ॥ २ ॥
दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा ।
समाश्रयेदादिदेवं श्रद्धया शरणं हि यः ॥ २ ॥
निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मनः" इति ।

श्रीमद्भागवते सप्तमस्कन्धे सप्तमाध्याये प्रह्लादः—

"सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः ।
भूतैर्महद्भिः स्वकृतैः कृतानां जीवसञ्ज्ञिनः ॥ १ ॥
देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव च ।
भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम् ॥ २ ॥
नालं द्विजत्वं देवत्वमृषित्वं वाऽसुरात्मजाः ।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥ ३ ॥
न दानं न तपो नेज्या न शौचं न व्रतानि च ।
प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥ ४ ॥
ततो हरौ भगवति भक्तिं कुरुत दानवाः ।
आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥ ५ ॥
दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः ।
खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥ ६ ॥
एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ।
एकान्तभक्तिर्गोविन्दे यत्सर्वत्र तदीक्षणमि"ति ॥

अत्र चतुर्णां वर्णानां देवासुरादीनां च भगवद्भक्तावधिकार उक्तः ॥ भक्तिसाधनं च प्रथमतः साम्प्रदायिकगुरूपसर्पणमात्मनिवेदनं ततस्तदनुसारेण सत्सङ्गभगवत्सेवादिकं चेतः पूर्वमेव ( श्लो० ३० )—

"गुरुशुश्रूषया भक्त्या सर्वलब्धार्पणेन चे"त्यादिनोक्तम् ।

एवमेवैकादशस्कन्धेऽपि ( अ० १७ श्लो० १ )—

"यस्त्वयाऽभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः ।
वर्णाश्रमाचारवतां सर्वेषां द्विपदामपि" ॥

इत्युद्धवेनाऽपि भगवद्भक्तौ चातुर्वर्ण्याधिकार उक्तः । तत्रैव द्वादशाध्याये भगवान् श्लो० ३ )—

"सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः ।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ १ ॥
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ।
रजस्तमप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ ॥ २ ॥
बहवो मत्पदं प्राप्तास्त्वाष्ट्रका यादवादयः ।
वृषपर्वा बलिर्बाणो मयश्चाऽथ विभीषणः ॥ ३ ॥
सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ।
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथाऽपरे" ॥ ४ ॥

सर्वेषामपि स्वभक्तावधिकारं वक्ति । निर्णयसिन्धौ ( परि० २ ) माघस्नान-पाद्मे—

"सर्वेऽधिकारिणो ह्यत्र विष्णुभक्तौ यथा नृपे"ति ।

( ब्रह्मज्ञाने सर्ववर्णानामधिकारस्तत्र प्रथम ब्राह्मणस्य )

अथ सम्प्रदायसाध्ये ब्रह्मज्ञानेऽप्यस्ति सर्वेषां वर्णानामधिकारोऽतः क्रमात् प्रत्येकं निरूप्यते । तत्र प्रथमं ब्राह्मणेष्वपि ब्रह्मविदामेवात्युत्कर्षमाह मनुः ( अ० १ ९६ )—

"भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ १ ॥
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिन" इति ॥ २ ॥

एवमन्यत्राप्यनेकत्र ब्रह्मविद उत्कर्षो वचनसहस्रैरुक्तः ॥

( ज्ञानभक्तिश्च विप्रलक्षणम् )

किञ्च ब्राह्मणस्य भगवद्धर्मावश्यकता श्रीभागवतादिष्वनेकत्रोच्यते ( स्क० ७ ९ श्लो० १० )—

"विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनो वचने हितार्थप्राणं पुनाति स कुलं न तु भूरि मान" इति ॥

एकादशस्कन्धे ( अ० १७ ) वर्णधर्मानुपक्रम्य भगवान् ( श्लो० १५ )—

"शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् ।
मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः" इति ॥

सप्तमस्कन्धेऽपि ( अ० ११ ) वर्णधर्मानुपक्रम्य नारदः ( श्लो० २१ )—

"शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् ।
ज्ञानं दयाऽच्युतात्मत्वं सत्यञ्च ब्रह्मलक्षणम्" इति ॥

अत्रैव श्रीधरकृतव्याख्यायां वर्णानामभिव्यञ्जकरूपान् धर्मानाह । शम इति चतुर्भिरच्युतात्मत्वं श्रीविष्णुपरत्वं सर्वेषामिति व्याख्यातमतः श्रीहरिभक्तत्वमपि शुद्धकुलोद्भवविप्रस्य स्वाभाविकम् । स्वर्णाभिव्यञ्जकत्वात् ॥

( क्षत्रियस्य तदावश्यकता )

एवं क्षत्रियस्याऽपि आन्वीक्षिक्यादिवद्ब्रह्मविद्याभ्यासस्याऽवश्यकतां वक्ति मनू राजधर्मानुपक्रम्य सप्तमे ( श्लो० ४३ )

"त्रिविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः" इति ॥

आत्मविद्यां ब्रह्मविद्यां चाभ्युदयव्यसनयोर्हर्षविषादप्रशमनहेतुं शिक्षेदिति व्याख्यातमन्वर्थमुक्तावल्याम्—

"शाश्वतीमित्यात्मविद्यान्तानां सर्वासां विशेषणम्, विद्यायां नित्यत्वं च प्रारम्परिकगुरुसदुपदेशापरपर्यायसम्प्रदायलब्धत्वमेव" । अत एव पारम्पर्यागतत्वेन नित्यामिति कुल्लूकभट्टः । न चैवमप्यभिषिक्तस्यैव तदावश्यकत्वं न तु क्षत्रियसामान्यस्येति वाच्यम् । ( लघुपराशरे अ० २ श्लो० १ ) "वर्णधर्मान् प्रवक्ष्यामी"त्युपक्रम्य ( श्लो० ३ )—

"प्रजानां रक्षणं दानमरीणां निग्रहस्तथा ।
यजनाध्ययने राज्ञि विषयासक्तिवर्जनम्" इति ॥

अत्रोपक्रमानुरोधेन राजशब्दस्य गर्भादेकादशे राज्ञ इत्यादिवत्, क्षत्रियसामान्यपरत्वात्तद्धर्मेषु च ब्रह्मविद्यैकसाध्यस्य विषयासक्तिवर्जनस्य परिगणितत्वेन तेष्वपि सत्सम्प्रदायानुसारेण ज्ञानस्याऽऽवश्यकत्वं निश्चीयते ॥ अपि चाभिषिक्तविषये याज्ञवल्क्यस्मृतावपि राजादिधर्मप्रकरणे ( अ० १ श्लो० १ )—"महोत्साहः स्थूललक्षः" ( श्लो० ३ ) इत्यारभ्य—"त्रय्यां चैव नराधिपः" इत्यन्तं राजस्वरूपवर्णने स्थूललक्षो वृद्धसेवकः सत्त्वसम्पन्नः शुचिर्धार्मिकोऽव्यसनः प्राज्ञ इत्यादिभिः सम्प्रदायसेवनकार्यभूतैर्विशेषणै राज्ञस्तदधिकारो गम्यते । इदञ्च मिताक्षरापर्यालोचनात्सम्यगेव स्फुटति ॥ माधवीये राजधर्मप्रकरणे ( अ० २ ) मार्कण्डेयः—

"स्थानवृद्धिक्षयज्ञानषाड्गुण्यविजितात्मना ।
भवितव्यं नरेन्द्रेण न कामवशवर्तिना" ॥

इति कामासक्तिवर्जनमुखेन ज्ञानावश्यकत्वं वक्ति ॥

( अविरुद्धविप्रधर्मातिदेश' )

अपि च ब्राह्मणस्य सम्प्रदायलभ्यभगवद्धर्मतज्ज्ञानतत्सेवाद्याचाराणामावश्यकत्वं साधितमेव, तच्च क्षत्रियेऽपि प्राप्नोति । माधवीये वामनपुराणे ( अ० २ )—

"क्षत्रियस्यापि कथिता य आचारा द्विजस्य हि" इति तदतिदेशादिहापि क्षत्रियपदेन सम्प्रदायोपसेवनं हि नह्यभिषिक्तमात्रस्य धर्मः, किन्तु क्षत्रियसामान्यस्यैवेति बोध्यते । अपरञ्च भगवदर्चनस्य सत्सम्प्रदायैकसाध्यत्वं दिङ्मात्रेण प्रतिपादितं प्राक् कस्मै प्रयोजनायेत्यस्योत्तरे ग्रन्थान्तरेषु चेदं स्फुटतरम्, तस्य च ब्राह्मणवत् क्षत्रियादीनामपि कलियुगेऽप्यावश्यकत्वम् । यथाह लघुपराशरो द्वितीयाध्याये कलौ गृहस्थस्य धर्मानुपक्रम्य ( श्लो० १३ )—

"क्षत्रियोऽपि कृषिं कृत्वा देवान् विप्रांश्च पूजयेत् ।
वैश्यः शूद्रस्तथा कुर्यात्" इति ॥

( वैश्यशूद्रयोस्तदधिकार )

तथेति वैश्यशूद्रयोरपि देवार्चनाद्यतिदिश्यते । किञ्च, माधवीये वैश्यधर्मप्रकरणे आश्वमेधिके—

"वणिग्धर्ममनुश्चन्वै देवब्राह्मणपूजकः ।
स वणिक् स्वर्गमाप्नोति पूज्यमानोऽप्सरोगणैः" इति ॥

अतस्तयोरपि ब्रह्मक्षत्रवत् सम्प्रदायोपयोगः ॥

( तत्र वैश्यस्य )

तत्र वैश्ये तु "शरदि वैश्य"मित्यध्ययनाङ्गभूतोपनयनविधिश्रवणेन "गर्भात्तु द्वादशे विशः" इति स्मरणेन चाध्ययनाधिकारसिद्ध्या पराशरव्याख्यायाम् वराहपुराणे ( अ० २ )—

"स्वाध्यायं यजनं दानं कुसीदं पशुपालनम् ।
गोरक्षां कृषिवाणिज्यं कुर्याद्वैश्यो यथाविधि" इति ॥

मार्कण्डेयेऽपि—

"दानमध्ययनं यज्ञो वैश्यस्याऽपि त्रिधैव सः" इति ॥

एवमादिषु प्रत्यक्षतोऽध्ययनविध्युपलब्धेश्च सूत्रानुसारेणोपनिषदध्ययनपूर्वकब्रह्मज्ञानार्थे सम्प्रदायोपयोगः ॥

अत एव तृतीयाध्यायेऽध्यात्मप्रकरणे याज्ञवल्क्यः ( श्लो० १३५ )—

"स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ।
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः" इत्याह ॥

द्विजातिभिरिति बहुवचनात् त्रिभिरपि वर्णैरित्यर्थः । एवमन्यत्रापि ब्रह्मक्षत्रवत् सन्न्यासार्थमपि वैश्यस्य ज्ञानावश्यकत्वमुच्यते । यथाऽऽचारमाधवे (अ० २) स्मृत्यन्तरम्—

"ऋणत्रयमपाकृत्य निर्ममो निरहङ्कृतिः ।
ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्" इति ॥

किञ्च, श्रीमद्भागवते (स्क० ७ अ० ११) वर्णधर्मानुपक्रम्य (श्लो० २३)—

"देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम् ।
आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम्" इति ॥

अतो वैश्यस्याऽपि ब्रह्मसूत्रानुसार्युपनिषदर्थज्ञानद्वारा ब्रह्मज्ञानसम्पत्तये भगवत्सेवादिसम्पत्तये च सम्प्रदायसेवनमावश्यकम् ॥

(शूद्रस्य ब्रह्मज्ञानाद्यधिकार पुराणादिद्वारा तत्सम्पादन वेदानधिकारश्च)

एवं शूद्रस्याऽप्यस्ति गुरूपदेशद्वारा ब्रह्मज्ञानाद्यधिकारः । अत एवाध्यात्मविद्यया शूद्रस्यापि मान्यत्वमाह याज्ञवल्क्यो गृहस्थप्रकरणे (अ० १ श्लो० ८)—

"विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ।
एतैः प्रभूतैः शूद्रोऽपि वार्द्धके मानमर्हति" इति ॥

न चास्य वेदानधिकारात्तदुपजीव्येऽध्यात्मविषयेऽनधिकारः शङ्क्यः । श्रुत्युच्चारमन्तरा भाषयैव गुरुणोपदिश्यमाने आध्यात्मिके शूद्रस्याप्यधिकार इत्यनेनैव याज्ञवल्क्यवचनेन ज्ञापनात् । इतिहासादिद्वारापीदं सम्भवति । विष्णुनामसहस्रे "शूद्रः सुखमवाप्नुया"दित्यत्र शङ्कराचार्यैरपि स्वभाष्ये तस्य श्रवणाधिकारस्वीकारात् "श्रावयेच्चतुरो वर्णान्" इति भारतोक्तेः "सुगतिमियाच्छ्रवणाच्च शूद्रयोनिरि"ति हरिवंशोक्तेश्च । एवमितरत्रापि पुराणेतिहासादिषु तत्र तत्रोच्यमानानि शूद्रस्यापि स्वस्वश्रवणादिफलानि तस्य तच्छ्रवणाद्यधिकारं तद्द्वारा ज्ञानसम्पादनाधिकारं च बोधयति । तथाऽऽचारमाधवे शान्तिपर्वणि—

"शास्त्रे स्वाहानमस्कारौ मन्त्रः शूद्रेऽभिधीयते ।
ताभ्यां शूद्रः पाकयज्ञैर्यजेत ब्रह्मवान् स्वयम्" इति ॥

अत्र ब्रह्मवत्त्वं हि न वेदवत्त्वमुपनयनाभावात्, किन्तु सम्प्रदायसेवनेनावगतब्रह्मस्वरूपज्ञातृत्वमेव । स्वयं शास्त्रदर्शनानधिकारात्, "एकदेशे परोक्ते त्वि"ति वाक्येन माध्वभाष्यप्रथमसूत्रोदाहृतेन गुरुमुखाद्ब्रह्मश्रवणेऽधिकारनिश्चयाच्च । न च वेदार्थत्वाद्ब्रह्मणः श्रवणेऽनधिकारः शङ्क्यः, वेदश्रवणानधिकारित्वेऽपि भारतादिद्वारा वेदार्थस्य श्रवणेऽधिकारित्वोक्तेः । यथोक्तं श्रीभागवते (स्क० १ अ० ४ श्लो० २५)—

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥
इति भारतमाख्यानं कृपया मुनिना कृतम्" इति ॥

(श्लो० २८)—

"भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः" इति च ॥ अत एव—

"कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रः पतति जातितः" इति ॥

बृहत्पराशरोऽक्षरविचारेणैव पातित्यमाह, नतु परमुखाच्छ्रुतस्य धर्मादेरर्थमात्रस्य विचारेण । अन्यथाऽक्षरपदं निरर्थकं स्यात् ॥ एवमेव धर्माऽब्धिसारेऽपि (परि० ३)—

"आगमोक्ता विष्णुशिवादिमन्त्राः नमोऽन्ताः प्रणवरहिताः" पुराणादिश्रवणनिदिध्यासनादि कृत्वा ब्रह्मज्ञानमपि स्त्रीशूद्रैः सम्पाद्यम्, उपनिषच्छ्रवणे तु नाधिकार इत्युक्तं काशीनाथोपाध्यायेन । अतः शूद्रस्यापि ब्रह्मज्ञानार्थं सम्प्रदायसेवनमावश्यकम् ॥

यत्तु मनुः (अ० ४ श्लो० ८०)—

"नो शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥
यो ह्यस्य धर्ममाचष्टे यश्चैवादिशति व्रतम् ।
सोऽसंवृतं नाम तमः सह तेनैव मज्जती"त्याह ॥

तत्तूपनिषदुच्चारणपूर्वकज्ञानोपदेशयजनादिवैदिकधर्मोपदेशविषयम् । समन्वयाध्यायतृतीयपादे (सू० ३४)—

"शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते ही"त्यधिकरणे व्यासेन तथैव निर्णीतत्वात् ॥

अन्यच्च, शूद्रधर्मेषु मन्वाद्युक्तं शौचमपि न सम्प्रदायमन्तरा सिद्ध्येदान्तरशौचाभावात् ॥

(वृत्तस्थविट्शूद्रयोर्वधे प्रायश्चित्त वृत्तस्वरूपञ्च)

याज्ञवल्क्यस्मृतावुपपातकप्रायश्चित्तप्रकरणे (अ० ३ श्लो० २।३)—

"ऋषभैकसहस्राः" इति "वैश्यहाब्द"मित्यनयोर्मिताक्षरायां वृत्तस्थविट्शूद्रयोर्वधे ब्रह्महत्याऽष्टमांशषोडशांशौ मनुवचनात् प्रतिपाद्य वृत्तस्वरूपजिज्ञासायां वृत्तशब्देन चात्मगुणादिकमुच्यते—

"गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः ।
प्रवर्तनं हितानाञ्च तत्सर्वं वृत्तमुच्यते" ॥

इति स्मरणादित्युदाहरता विज्ञानेश्वरेण वृत्तान्तःपातिनी गुरुपूजा शूद्रस्यापि दर्शिता। न हि च तस्योपनयनमस्ति येन तस्योपनीयाध्यापक एकदेशाध्यापको वा गुरुः स्यात्॥ अतः सम्प्रदायगुरुरेवेह सम्भवति॥

( दीक्षया शूद्रस्योत्कर्ष )

एवं साम्प्रदायिकगुरुसकाशाद्वैष्णवदीक्षाग्रहणे शूद्रस्यापीतरशूद्रापेक्षयोत्कर्षबोधनायोच्यते, धर्मसिन्धौ (प० ३) पूर्वार्धे—

दीक्षायुक्तैस्तथा शूद्रैर्मद्यपानविवर्जितैः।
कर्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्चनमि"ति॥

एवमितराण्यपि शूद्रस्य वैष्णवसम्प्रदायोपसेवनावश्यकताख्यापकानि बहूनि निःसन्दिग्धवचनानि महाभारतश्रीभागवतादिष्वार्षग्रन्थेषु शूद्रकमलाकरादिप्रामाणिकानार्षग्रन्थेषु च बहूनि समुपलभ्यन्ते, तथापि विस्तरभयात् स्वल्पप्रश्नोपरि बहुलिखनप्रयासाद्विरम्यते॥

तस्मादत्यावश्यकभगवन्मन्त्रग्रहणार्थं तद्भक्तिसम्पत्त्यर्थं यथाधिकारमुपनिषदाद्यनुसारिज्ञानसिद्ध्यर्थं ततो मोक्षार्थं च चतुर्णामपि वर्णानां सत्सम्प्रदायोपसरणमेव शरणं तदेव च त्रिविधतापार्तिदुस्तरसरस्वत्तरणाय तरणिरिति युक्तं सम्प्रदायस्य चतुर्वर्णनिष्ठत्वम्। एवं सम्प्रदायस्य सर्ववर्णसाधारणत्वेऽपि भगवत्सेवने वैदिकमन्त्रोच्चारणादिकं शूद्रानधिकारकं तु त्रैवर्णिकमात्रविषयकम्, कलौ ब्राह्मणमात्रविषयकं वा। इतरत्तु साधारणमेवेति विशेषः।

"एवं स्वधर्मशिक्षायै भगवद्भक्तिसिद्धये।
स्वाधिकारानुसारेण ब्रह्मज्ञानाय मुक्तये॥
तन्मूलभूतभगवन्मन्त्रसङ्ग्रहणाय च।
चतुर्णामपि वर्णानां सम्प्रदायोपसेवनम्॥
अतो हरेः सम्प्रदायभुजच्छायाविनिर्भयाः।
महर्षिभिः सर्ववर्णनिष्ठाः शास्त्रेषु वर्णिताः"॥

---

## ( सप्तमः प्रश्नः )

## अथास्य षष्ठप्रश्ननिवेशितस्य किंवर्णनिष्ठ इति वाक्यस्य शाखा-भूतमेव वाक्यं स्वतन्त्रतयाऽवान्तरसप्तमप्रश्नत्वेन लिखितं तद्यथा

## वर्णनिष्ठश्चेत्सम्प्रदायपूर्वको वर्णो वर्णपूर्वकः सम्प्रदायो वा ? ।

### उत्तरम् ।

( प्रश्नार्थे विकल्प पक्षद्वयेऽप्युत्तरञ्च )

किमत्र पूर्वत्वं नाम अवश्यक्लृप्तनियतपूर्ववृत्तित्वं पूर्वकालिकत्वमात्रं वा तत्राद्यश्चेत् सम्प्रदायानां "वेदान्तकृद्वेदविदेव चाह"मित्यादिस्मृतिभिर्भगवत्कर्तृकत्वप्रतिपादनेन वर्णानामपि "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः" इति "मुखबाहूरुपज्जाना"मित्यादिश्रुतिस्मृतिभिस्तथात्वप्रतिपादनेन चोभयोरपि सृष्ट्यारम्भे परमेश्वरकर्तृकत्वनिश्चयाद्वर्णसम्प्रदाययोरन्यतरस्यान्यतरकारणकत्वशङ्कायाः किञ्चिज्ज्ञबालकबुद्धावप्यनुदयेन एवाऽयुक्ततरः ॥ अथ च यदि सर्ववर्णानामप्यावश्यको वैष्णवसम्प्रदायस्तर्हि सम्प्रदाय-ग्रहणादेव तेषां तत्तद्वर्णवैशिष्ट्यसिद्धिरुत प्रथमतस्तद्वर्णविशिष्टानामेव सम्प्रदायग्रहणमभि-प्रेयत इत्येव तव विचिकित्सितं स्यात् । तदा तु एतत्समानयोगक्षेमोऽसावपि प्रश्नो भवन्तं प्रति कुतो न प्रसरेत् ॥ द्विजमात्राधिकारकस्य गायत्रीमन्त्रस्योपदेशादेव द्विजत्वसिद्धिं स्वीकुर्वतां सर्वशिष्टानां मते गायत्र्युपदेशपूर्वकं द्विजत्वं द्विजत्वपूर्वकस्तदुपदेशो वेति ॥ तथा सर्वेष्वपि वर्णेषु प्रसह्य भस्मरुद्राक्षधारणादिशिवदीक्षाचिह्नाग्रहं कुर्वतो भवतोऽपि मते तद्धारणपूर्वको वर्णो वर्णपूर्वकं तद्धारणं वेति च ॥ अतः स्वयं प्रदेयेनैतादृशप्रश्नानामुत्तरे-णैव प्रकृतेऽपि सन्तुष्यतां समानयोगक्षेमत्वादित्यलम् । अनेनैव द्वितीयपक्षोऽपि दत्तोत्तरः । नित्यत्वाप्रतिद्रुहिणं प्रतिकल्पं चावर्तमानानामुभयेषामपि सृष्टिकाल एव भगवता प्रकटितत्वेन समकालिकत्वसिद्ध्याऽन्यतरस्मिन् पूर्वकालिकत्वकथनस्य गगन-कुसुमसगन्धसगन्धत्वात् ॥ अतो न वर्णानां सम्प्रदायपूर्वकत्वं, नापि सम्प्रदायस्य तत्पूर्वकत्वं वेति भव्यम् ॥

---

## (अथ सप्तमप्रश्नावयवः)

### अथ स्वतन्त्रप्रश्नकल्पमपीदं वाक्यमस्य सप्तमप्रश्नस्यैव कुक्षि-निवेशितमुपलभ्यते, तद्यथा—

### किमाश्रमनिष्ठः? ।

(स्वकृतस्तदर्थ.)

आश्रमा ब्रह्मचर्यादयः, तन्निष्ठत्वं च सम्प्रदायस्य तदधिकारकत्वम् । किंपदात्त-द्विषयिणी जिज्ञासा प्रष्टुरात्मसमवेताऽस्तीति ज्ञायते तत्र ॥

(प्रष्टव्यांशे संशय. कोटिद्वयेऽप्युत्तरकारिकाश्च)

#### उत्तरम् ।

अथ पूर्ववदत्राऽपि किमिति बुभुत्साबोधकं पृथक् पदमाश्रित्य सम्प्रदायोपलक्षित-तद्धर्माणामाश्रमधर्मत्वमस्ति न वेत्येव जिज्ञासितमाहोस्वित्कस्मिन्नाश्रमे निष्ठा यस्येति समासमाश्रित्य सम्प्रदायाधिकृताश्रमविशेषः ? तत्राद्यपक्षस्य किं वर्णनिष्ठ इति प्रश्नाद्य-कल्पसमानयोगक्षेमत्वात्तदुत्तरेणैव दत्तोत्तरत्वात् ॥ द्वितीयश्चेत् प्रथमकल्पोत्तरे साधा-रणधर्मत्वकथनेनैव प्राप्तप्रतिवचनः । अथाऽप्युच्यते—

"हरेर्मन्त्रग्रहस्तस्य पूजनं वेदचिन्तनम् ।
एकपक्षावलम्बेनातृष्णाशमदमादिकम् ॥
ब्रह्मज्ञानं ततो मुक्तिः कृष्णभक्तिः सुनिर्मला ।
सर्वेष्वप्याश्रमेष्वस्तीत्यखिलाश्रमनिष्ठता ॥
बोधिता सम्प्रदायानां तत्र तत्र महर्षिभिः ।
स्पष्टा सा बुद्ध्यते सर्वैः सच्छास्त्रश्रमहर्षिभिः" इति ।

(भगवन्मन्त्राणां सर्वाश्रमाधिकारकत्वं प्रसङ्गात्सृष्ट्यादिन्यासा. जीवस्य सच्चिद्रूपत्वे प्रमाणं च)

तत्र भगवन्मन्त्राणां सर्वाश्रमाधिकारकत्वं नारदपञ्चरात्रे—

"सर्वेषु वर्णेषु तथाऽऽश्रमेषु नारीषु नानासु यजन्मखेषु ।
दाता फलानामभिवाञ्छितानां द्रागेव गोपालकमन्त्र एषः" ॥

इत्यादिभिर्दर्शितम् । गौतमतन्त्रेऽपि अष्टादशाध्याये कञ्चिद्भगवन्मन्त्रमुक्त्वा—

"अर्चयेन्मनसा कृष्णं सहस्रं प्रत्यहं जपेत् ।
वत्सराल्लभते मोक्षं यद्गत्वा नो निवर्तते ॥
वर्णिनां च गृहस्थानां न्यासिनामप्ययं विधिरि"ति ॥

पुनस्तत्रैव द्वितीयाध्याये मन्त्रान्तरोपक्रमे न्यासमुपक्रम्य (श्लो० ३४)

"प्रणवाभ्यां पुटं कृत्वा नमोऽन्तान् दशवर्णकान् ।
दशाङ्गुष्ठादिवामान्तं न्यासः स्यात् सृष्टिरीरितः ॥
वामाङ्गुष्ठादिदक्षान्तं संहृतिः परिकीर्तिता ।
उभयोः करयोर्ज्येष्ठा पूर्विका स्थितिरीर्यते ॥
संहृतिर्दोषसङ्घानां हारिणी परिकीर्तिता ।
विद्याप्रदा स्यात्सृष्ट्यन्ता वर्णिनां शुद्धचेतसाम् ॥
स्थित्यन्ता स्याद्गृहस्थानां त्रयी काम्यानुरूपतः ।
सहजानौ वानप्रस्थे स्थित्यन्तं कश्चिदिच्छति ॥
संहारान्तो मुनीनां च विरक्तस्य च सर्वशः ।
न्यासत्रयं सदा कार्यमशक्तावेकमेव हि" इति ॥

तत्रैव सप्तमाध्याये—

"अनेन ध्यानयोगेन मन्त्रा सिद्ध्यन्ति नान्यथे"त्यन्तेन सामान्यतो भगवन्मन्त्रेषु ध्यानमुक्त्वोच्यते ( श्लो० १७ )—

"परेण च स्वमात्मानं कृष्णाख्येन विभावयेत् ।
अहं कृष्णो न चान्योऽस्मि ब्रह्मैवाऽहं न शोकभाक् ॥
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान् ।
त्वमेवाऽहमहं त्वं च सच्चिन्मात्रवपुर्भवेत् ॥
आवयोरन्तरा कृष्ण नश्यत्वाज्ञाबलात्तव ।
अहं तीर्णो भवं घोरं कृत्यं किञ्चिन्न मेऽस्त्विवति ॥
तथापि देहि मे नाथ आज्ञां तव निषेवणे ।
जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ॥
केनाऽपि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ।
एवं सम्प्रार्थ्य मनसा कुर्यात्पूर्वाह्णिकीं क्रियाम् ।
दीक्षितस्य विधानेन तथा च ब्रह्मचारिणाम् ॥
वानप्रस्थस्थितानाञ्च शौचादिद्विगुणक्रिया ।
सन्न्यासिनां विशेषेण कृत्यं चतुर्गुणं भवेदि"ति ॥

एवं चतुर्णामप्याश्रमिणां भगवन्मन्त्रग्रहणे तदर्चने चाधिकारः प्रकाशितः ।

( सर्वाश्रमेषु मनुदर्शितः सम्प्रदायोपयोग. )

अथ मनुरपि द्वादशाध्याये ( श्लोक० ७३ )—

"यथा यथा निषेवन्ते विषयान् विषयात्मकाः" इत्यादिना वैराग्यसाधकान् भवक्लेशान्निरूप्य जातवैराग्यं मुमुक्षुं प्रति "नैश्रेयसकरं कर्म विप्रस्येदं निबोधते"त्यादिना

सम्प्रदायेतरसाधनासाध्ये नैश्रेयसमुपक्रम्य समासतस्तत्स्वरूपं च निरूप्य तत्र प्रकृतात्मज्ञानस्य मुख्यसाधनत्वेन "पितृदेवमनुष्याणां वेदश्चक्षुः सनातनमि"त्यादिना वेदशास्त्रं तत्प्रयोजनादिकथनपुरःसरं स्तुत्वा तत्साध्यज्ञानजन्यमोक्षस्य सर्वेष्वप्याश्रमेष्वधिकारोऽस्तीत्याह—

"वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते" इति ॥

अत्र जीवन्मुक्तिफलोपदेशाद्वेदशास्त्रतत्त्वार्थावबोधादिद्वारा तत्सिद्ध्यर्थं सम्प्रदायाश्रयणमपि सर्वाश्रमेषूपदिष्टम् । एतत्पूर्वप्रसङ्गे आत्मज्ञानस्य साधनत्वोक्त्या मुक्तेर्भक्तिमार्गीयत्वं फलति, अतोऽस्ति सर्वेष्वप्याश्रमेष्ववश्यं सत्सम्प्रदायोपयोगः ॥

(ज्ञानाद्यभावे आश्रमलिङ्गवैयर्थ्यं सर्वेषामावश्यक सत्त्वादिदशकञ्च)

किञ्च, आश्रममात्रं सम्प्रदायं विना निरर्थकम्, लिङ्गमात्रस्य ब्रह्मज्ञानादिधर्मासाधकत्वात्तस्य च सम्प्रदायैकसाध्यत्वात् । यथाह याज्ञवल्क्योऽध्यात्मप्रकरणे (अ० ३ श्लो० १०)—

"नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः ।
अतो यदात्मनोऽपथ्यं परेषां न तथा चरेदि"ति ॥

अत्र धर्मशब्देनात्मनोपासनं विज्ञानेश्वरो व्याचख्यौ । अत्रैव मनुः—

"भूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे वसन् ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणमि"ति ।

अयं च सम्प्रदायगुरूपसत्त्याशयशुद्धिविधिशेष आश्रमनिन्दार्थवादो न तु तेषामकर्तव्यत्वम्, विहितत्वात् ॥ तस्मादाश्रमेष्वपि सत्यादीन्येव दश उत्तरोत्तरोत्कृष्टानि मोक्षफलकानीत्याशयेनास्यैवाग्र उच्यते (श्लो० ११)—

"सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः ।
संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः" इति ॥

विद्या हि साम्प्रदायिकगुरुभिः सम्प्रदीयमानमात्मज्ञानम् । तस्मात्सर्वाश्रमिभिः सत्सम्प्रदायः सेव्य एव । अन्यथा तु माधवीये (अ० ३) श्राद्धवर्ज्यब्राह्मणेषु यमः—

"पिशुनः कूटसाक्षी च दीर्घरोगी वृथाश्रमी"ति निन्दितत्वमेव स्यात् । आश्रमवैयर्थ्यं तु प्रातिस्विकधर्मानाचरणवत् ब्रह्मावबोधकसूत्रभाष्यकारसम्प्रदायप्रवर्तकाननुसारेण केवललिङ्गधारणेऽपि वेदितव्यम्—

(याज्ञवल्क्योक्ताचार्याणां पुन पुनरवतारो भाष्यादिकरण सर्वाश्रमिणा सम्प्रदायोपयोगश्च)

अत एवाध्यात्मप्रकरणसमाप्तौ याज्ञवल्क्यः (श्लो० १३१)—

"तत्राष्टाशीतिसाहस्राः" इति त्रिभिः पुनःपुनरवतारेण प्रवृत्तनिवृत्तोभयविधकर्मप्रवर्तनेन सत्सम्प्रदायप्रवर्तकान् मुनीन् निरूप्य ( श्लो० १३४ )—

"यतो वेदाः" इति वेदपुराणविद्योपनिषत्सिद्धान्तकारिकासूत्रभाष्यादिसर्ववाङ्मयप्रवृत्तिं तत एवोक्त्वा ततः किं तैस्तत्प्रवर्तितैः सम्प्रदायैरित्याकाङ्क्षायां वर्णिप्रभृतीनां चतुर्णां तादृशसम्प्रदायद्वारैव सम्पादितैरध्ययनादिभिः प्रातिस्विकधर्मैस्तत्तदाश्रमचिह्नधृतिपुरःसरैरुपकृतानि सम्प्रदायद्वारैव परमात्मनः श्रवणमननिदिध्यासनानि विधेयानि न त्वन्यथा फलसम्पत्तिरित्याशयेनाह ( श्लो० १३५ )—

"वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः ।
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः" ॥

( श्लोकः १३६ )—

"स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु ।
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः" ॥

पूर्वोक्तसम्प्रदायप्रवर्तकऋषिप्रवर्तिता वेदानुवचनादय आत्मज्ञानं फलन्ति । ते च यथायथं ब्रह्मचार्यादीनां चतुर्णामप्यत्र निर्दिष्टाः । यथा वेदानुवचनं श्रद्धा च सर्वेषां ब्रह्मचर्यं प्राधान्येन वर्णिनां यज्ञो गृहमेधिनां तप उपवासश्च वैखानसानां यज्ञरहिताः सर्वे दमः आशयशुद्धिसाध्यत्वेनोपदिष्टं स्वातन्त्र्यं च यतीनामिमे सर्वेऽप्यात्मज्ञानस्य हेतवः । ननु किं स्वभावादेव हेतव आहोस्वित् सम्प्रदायाश्रयणेनैवेति चेत्तत्राह **स ह्याश्रमैः** इति । स आत्मा । हि निश्चयेन । एवमेवोक्तसम्प्रदायसरण्यैव । समस्तैरशेषैरप्याश्रमैः साधकतमैस्तत्तदाश्रमिभिः विजिज्ञासितव्यः । तुशब्दो जिज्ञासायां सम्प्रदायभिन्नप्रकारं वारयति । अत एवेह विज्ञानेश्वरोऽपि उक्तमार्गेणैव सकलाश्रमिभिर्जिज्ञासितव्य इत्याह । कथं जिज्ञासितव्य इति चेदुच्यते । प्रथमं द्विजातिभिः साम्प्रदायिकगुरुसकाशाच्छ्रोतव्यः । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छे"दित्यत्र मुण्डके असाम्प्रदायिकगुरूपसत्तिनिषेधद्योतनात् । ततो मन्तव्यः पूर्वोपक्रान्तेन स्वगुरूक्तसूत्रभाष्यादिना दर्शितैः प्रमाणाविरुद्धतर्कैर्विचारयितव्यः । पश्चान्निदिध्यासितव्यः ।

अथैवं साधनसम्पत्त्यनन्तरं तु द्रष्टव्यः । तुः उक्तसाधनं विना दर्शनासम्भवं द्योतयति । एवं सम्प्रदायाश्रयणादेव फलसम्पत्तिर्न त्वन्यथेत्याशयेनाह ( श्लो० १३७ )—

"य एवमेनं विन्दन्ति ये चारण्यकमाश्रिताः ।
उपासते द्विजाः सत्यं श्रद्धया परया युताः ॥
क्रमात्ते सम्भवन्त्यर्चिरहः शुक्लं तथोत्तरमि"त्यादि ॥

एवमुक्तसम्प्रदायप्रकारेणायमेवार्थो मिताक्षरायामपि सर्वेषां निपुणधियां प्रतिभासतीत्यलं बहुलविलेखेन ॥

( शमदमब्रह्मज्ञानादिसम्बन्धकरणपूर्वकश्रवणकीर्तनादिसेवा च सर्वेषां धर्मः भक्तिसहकृतवर्णाश्रमधर्मान्मोक्षश्च )

अपरश्चास्ति सर्वेषामप्याश्रमिणां शमदमादिपूर्वकब्रह्मज्ञानस्य सम्प्रदायानुसारेण ब्रह्मसम्बन्धकरणपूर्वकभगवच्छ्रवणकीर्तनस्मरणसेवादास्यादेश्चावश्यकत्वम् । यथाह श्रीभागवते सप्तमस्कन्धे युधिष्ठिरेण सर्ववर्णाश्रमादिधर्मान् पृष्टो नारदः ( अ० ११ श्लो० ८ )—

"सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥
सन्तोषः समदृक्सेवा ग्राम्येहोपरमः शनैः ।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥
श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥
नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यती"ति ॥

पुनरेकादशस्कन्धेऽपि सप्तदशाध्याये भगवानाह ( श्लो० ३३ )—

"शौचमाचमनं स्नानं सन्ध्योपासनमार्जनम् ।
तीर्थसेवा जपोऽस्पृश्याऽभक्ष्यासम्भाष्यवर्जनम्" ॥

( श्लो० ३४ )—

"सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन ।
मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः" ॥

अत्रापि ज्ञानेन सर्वभूतेषु भगवद्भावः सर्वाश्रमसाधारणधर्मतयोक्तः, अत एवेह सर्वाश्रमसाधारणं धर्ममाह शौचमिति द्वाभ्यामिति श्रीधरस्वामिनाऽवतारितम् । पुनस्तत्रैवाष्टादशाध्याये भिक्षुधर्मान्तं निरूप्य ( श्लो० ४२ )—

"भिक्षोर्धर्मः शमोऽहिंसा तप इज्या वनौकसः ।
गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥
ब्रह्मचर्यं तपः शौचं सन्तोषो भूतसौहृदम् ।
गृहस्थस्याप्यृतौ गन्तुः सर्वेषां मदुपासनम् ॥
इति मां यः स्वधर्मेण भजन्नित्यमनन्यभाक् ।
सर्वभूतेषु मद्भावो मद्भक्तिं विन्दतेऽचिरात् ॥

भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ।
सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥
इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः ।
ज्ञानविज्ञानसम्पन्नो न चिरात्समुपैति माम् ॥
वर्णाश्रमवतां धर्म एष आचारलक्षणः ।
स एव मद्भक्तियुतो निःश्रेयसकरः परः ॥
एतत्तेऽभिहितं साधो भवान् पृच्छति यच्च माम् ।
यथा स्वधर्मसंयुक्तो भक्तो मां समियात् परम्" ॥

इति स्वसेवायाः सर्ववर्णाश्रमसाधारणत्वं सर्ववर्णाश्रमधर्माणां स्वभक्तिसहकारेणैव मोक्षजनकत्वं सर्वेषां मोक्षाधिकारित्वं चोक्तं भगवता । अतः सर्वेष्वप्याश्रमेषु भगवत्सेवादिकमावश्यकमेव, अन्यथा तु न मोक्षः स्यात् । अत एव पराशरमाधवीये आह्निकनिरूपणान्ते कूर्मपुराणे—

"नान्यो विमुक्तये पन्था मुक्त्वाऽऽश्रमविधिं स्वकम् ।
तस्मात् कर्माणि कुर्वीत तुष्टये परमेष्ठिनः" ॥ इति ।

श्रुतयश्च "नान्यः पन्था विद्यतेऽयनाये"त्याद्यास्तदेव वदन्ति । अतश्चतुर्णामप्याश्रमिणां श्रवणादिद्वारा ब्रह्मज्ञानार्थं सेवादिरूपतद्भक्त्यर्थं तत्र फलमुखाधिकारसम्पादकमहामन्त्रद्वारा शरणगमनात्मनिवेदनाद्यर्थं च सम्प्रदायोपसेवनमत्यावश्यकमेवातोऽस्ति खलु सत्सम्प्रदायः सर्वाश्रमनिष्ठः । एवम्,

(एकैकाश्रमे पृथक् पृथक् सम्प्रदायोपयोग तत्रादावुपकुर्वाणकब्रह्मचारिणः)

"सर्वाश्रमेष्वपि विनाश्रममेव मोक्ष-
शिक्षाप्रदायकपुरातनसम्प्रदायान् ।
सेव्यान्वचः प्रचयतः प्रणिगद्य सद्यः
प्रत्याश्रमं तदुपयोगमुदीरयामः" ॥

तत्रादौ ब्रह्मचारिणो विचार्यते । तत्रास्ति ब्रह्मचारिण उपकुर्वाणकनैष्ठिकभेदेन द्वैविध्यम्, तत्रोपकुर्वाणकविषये तावद् ब्रूमः ।

(तस्य भक्तिज्ञानसाम्प्रदायिकाचार्योपासनमोक्षहरिसेवादीनि)

एकादशस्कन्धे (अ० १७ श्लो० ३५) ब्रह्मचारिधर्मान्निरूप्यान्ते—

"एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् ।
मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥
अथानन्तरमावेक्षन् यथाजिज्ञासितागमः ।
गुरवे दक्षिणां दत्वा स्नायाद्गुर्वनुमोदितः" ॥ इति ।

तस्य समग्रेऽपि स्वव्रताचरणे स्वभक्तिसहकारावश्यकता भगवतोच्यते । भक्तिस्तु सम्प्रदायैकसाध्येति निरूपितं प्राक् । अत एव तत्रापि ( श्लो० २५ )—

"अभ्यर्कार्चार्यगोविप्रगुरुवृद्धसुरान् शुचिः ।
समाहित उपासीत सन्ध्ये च यतवाग् जपन्नि"ति ॥

गुरुशब्दनिर्दिष्टाद्वेदाद्यध्यापकाचार्याद्वृद्धशब्दनिर्दिष्टात्पित्रादितश्च भेदेन निर्दिश्याचार्यशब्दोक्तस्य भगवद्भक्तिज्ञानसम्पादकस्य साम्प्रदायिकाचार्यस्याप्युपासनं वर्णिनो विदधाति, सप्तमस्कन्धेऽपि ( अ० १२ श्लो० १० ) ब्रह्मचारिधर्मानुपक्रम्य—

"कल्पयित्वात्मना यावदाभासमिदमीश्वरः ।
द्वैतं तावन्न विरमेत्ततो ह्यस्य विपर्ययः" ॥ इति ।

स्त्र्यादिसङ्गवर्जने हेतुं वदता भगवता नारदेन द्वैतनिवृत्त्युद्यमे ब्रह्मचारिणः कर्तव्यता बोध्यते । तदुपसंहारेऽपि,

"अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् ।
भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत्" ॥
एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ।
चरन् विदितविज्ञानं परब्रह्माधिगच्छति" ॥ इति ।

एवं साक्षाद् ब्रह्मविज्ञानं तत्साध्यः पुरुषोत्तमप्राप्तिलक्षणो मोक्षश्च ब्रह्मचारिणोऽप्यभिधीयते । तत्साधनाय तस्य भगवत्सेवाऽप्युच्यते तत्रैव ( श्लो० २ )—

"सायं प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमानि"ति ॥

सुरोत्तमो विष्णुरिति व्याख्यातारः । मनुरपि द्वितीयाध्याये ब्रह्मचारिधर्मानुपक्रम्य ( श्लो० १७६ )—

"नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ।
देवताऽभ्यर्चनं चैव समिदाधानमेव च" ॥

इति नित्यं हरिप्रतिमार्चनमाह । कुल्लूकभट्टेनाप्येतदूरीकृतम्, किञ्च वेदाध्ययनात्पृथग्वारुण्याद्युपनिषद्विद्याध्ययनमावश्यकत्वद्योतनाय फलकथनपूर्वकं याज्ञवल्क्यो विदधाति ब्रह्मचारिप्रकरणे ( अ० १ श्लो० ३७ )—

"इतिहासांस्ततो विद्याः शक्त्याऽधीते हि योऽन्वहमि"त्यादि । संवर्तश्च ब्रह्मचारिधर्मान्निरूप्य (श्लो० ३२ )—

"एष धर्मः समाख्यातः प्रथमाश्रमवासिनाम् ।
एवं संवर्तमानस्तु प्राप्नोति परमां गतिम्" इति ॥

मोक्षाधिकारित्वमाह । परमा गतिर्हि मोक्षः ।

( अथ ब्रह्मचारिप्रभृतीनां सन्न्यासः )

अथ ब्रह्मचर्याश्रमेऽपि सद्गुरूपसत्तिसार्वदिकवेदान्ताभ्यासादिना सम्यक् सञ्जातदृढवैराग्यस्य मध्यमाश्रमद्वयाकरणेनैव सन्न्यासो माधवादिभिः श्रुत्यादिविहितत्वाद्व्याख्यायते । तथा च जाबालश्रुतिः "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा" इति, "इतः पूर्वं ब्रह्मचर्यं समाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेदि"त्यविरक्तं जडं प्रति आश्रमसमुच्चयपक्षस्योक्तत्वात् । इदानीं विरक्तं प्रति यदि वेतीदं पक्षान्तरमुच्यते । इतरथेति वेदान्ताभ्यासद्वारा दृढवैराग्यसम्भवे—

अङ्गिरा अप्याह—

"संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः ॥
प्रव्रजेद्ब्रह्मचर्येण प्रव्रजेच्च गृहादपि ।
वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽतिदुःखितः" ॥ इति ।

लघुविष्णुरपि चतुर्थाध्याये ( श्लो० १ )—

"ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा मुनिः ।
विरक्तः सर्वकामेभ्यः परिव्रज्यां समाश्रयेदि"ति ॥

एतच्च संसारनिःसारत्वदर्शनदृढवैराग्यसारदिदृक्षादिकमनुपासितसाम्प्रदायिकसद्गुरुकस्य कदाचिदपि कथञ्चिदपि न सम्भवति । उक्तरीत्या बहुश्रुतिषु तस्य तदेकसाध्यत्वप्रतिपादनात् । अतो ब्रह्मचारिणोऽपि साम्प्रदायिकगुरुसेवनं विधिसिद्धमस्त्येवेति सिद्ध्यति । येन तत्सेवनात्तस्य कदाचिद्दृढतरवैराग्यसम्भवे सन्न्यास उपदिष्टः । तस्माद्ब्रह्मज्ञानभगवद्भक्तितत्सेवादिशिक्षार्थमुपकुर्वाणकस्य सम्प्रदायोपयोगो दर्शितः ॥

( नैष्ठिकब्रह्मचारिण सम्प्रदायोपयोग तत्राऽपुनरावृत्तिवचनानि )

एवमेव नैष्ठिकविषयेऽपि बोध्यम् । तथा हि श्रीभागवते एकादशस्कन्धे ( अ० १७ श्लो० ३० )—

"यद्यसौ छन्दसां लोकमारोक्ष्यन् ब्रह्मविष्टपम् ।
गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः" ॥

इत्यादिना नैष्ठिकब्रह्मचारिधर्मानुपक्रम्य ( श्लो० ३१ )

"अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ।
अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः" इति ॥

सर्वत्र ब्रह्माभेदबुद्धिं करणीयत्वेन विदधाति । मनुरपि द्वितीयाध्याये ( श्लो० २४३ )—

"यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले ।"

इत्यादिना नैष्ठिकधर्मानुपक्रम्य ( श्लो० २४४ )—

"सङ्गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतमि"ति ॥

तथोपसंहारे ( श्लो० २४९ )—

"एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः ।
स गच्छत्युत्तमं स्थानं न चेहा जायते पुनः" ॥

इति तस्य मोक्षलक्षणं फलं वदन् ब्रह्मज्ञानस्यावश्यसम्पाद्यत्वं बोधयति । न चेदं ब्रह्मचर्यस्य फलमिति शङ्क्यम् । "ऋते ज्ञानान्न मुक्तिरि"ति नियमविरोधात् ॥ ब्रह्मचर्यस्य तु तत्रोपोद्बलकत्वमेव । एवमेव याज्ञवल्क्योऽपि नैष्ठिकस्य मोक्षमाह ( अ० १ ) ब्रह्मचारिप्रकरणान्ते ( श्लो० ४२ )—

"अनेन विधिना देहं साधयन्विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति न चेहा जायते पुनरि"ति ॥

न चात्र मनुयाज्ञवल्क्यवचनयोर्ब्रह्मसद्मब्रह्मलोकशब्दाभ्यां सत्यलोक एवेति शङ्क्यम् । कुल्लूकभट्टविज्ञानेश्वरकृतव्याख्याविरोधान्मूलेऽपुनरावृत्तिकथनालिङ्गबाधाच्च ।

"आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" ॥

इति तत्र पुनरावृत्तिस्मरणात् । न च तस्य ऋणत्रयनिवृत्त्यभावान्मोक्षाभावः शङ्क्यः, तन्मोक्षस्य शास्त्रसिद्धत्वात् । यथाह मनुः ( अ० ५ श्लो० १५९ )—

"अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्" ॥ इति ।

अतोऽस्ति नैष्ठिकस्याप्यवश्यमेव मोक्षसाधकभक्तिज्ञानाद्यर्थं सम्प्रदायोपयोगः । अन्यथोक्तेन प्रकारेणात्मानं निष्ठामुपक्रान्तिकालं नयतीति नैष्ठिक इति मिताक्षरोक्तलक्षणव्याकोपात् । एवं ब्रह्मचारिणः सम्प्रदायोपयोगो व्याख्यातः ॥

( अथ गृहस्थस्य सम्प्रदायोपयोग समर्पणभक्तिज्ञानादिक च )

अथ गृहस्थस्यापि तदुपयोगं व्याख्यास्यामः । तत्र श्रीभागवते सप्तमस्कन्धे ( अ० १४ श्लो० २ ) युधिष्ठिरेण गृहस्थधर्मान्पृष्टो नारदः—

"गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् यथोचिताः ।
वासुदेवार्पणं साक्षादुपासीत महामुनीन्" ॥

इत्यादिना सर्वस्यात्मीयस्य भगवते समर्पणं तत्समर्पणद्वारभूतानां सत्सम्प्रदायप्रवर्तकानामाचार्यरूपमहामुनीनामुपासनं तत्सकाशाद्भगवत्कथाश्रवणादिकञ्च विधीयते, अग्रे चेदं महामुन्युपासनं सन्मार्गप्रवर्तकानां तत्तत्सम्प्रदायप्रवेशमूलकं सामान्यं वेति संशयवारणाय ( श्लो० १४ ) "पदवीं महतामियादि"ति स्पष्टतया महत्प्रवर्तितसम्प्र-

दायाश्रयणमुच्यते, ततः पञ्चदशाध्यायेऽपि ज्ञानसन्तोषादिकं च प्रशंस्य ( श्लो० २२ ) "असङ्कल्पाज्जयेत्कामामि"त्यादिना कामादीनामेकैकशो जयोपायं निरूप्य ( श्लो० २५ )—

"एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ।
यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ ॥
मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जरशौचवत्" ॥

इति सम्प्रदायानुसारेण भगवज्ज्ञानसम्पादके गुरौ भक्तेरेकस्या एव सर्वजयोपायत्वं तदभावे सर्ववैयर्थ्यं चोक्तम् । एवमेकादशस्कन्धेऽपि ( अ० १७ श्लो० ३८ ) "गृहार्थी सदृशीं भार्यामि"त्यादिना गृहिधर्मानुपक्रम्य ( श्लो० ४२ )—

"शिलोञ्छवृत्त्या परितुष्टचित्तो
धर्मं महान्तं विरजं जुषाणः ।
मय्यर्पितात्मा गृह एव तिष्ठन्
नातिप्रसक्तः समुपैति शान्तिम्" ॥

इति विरजः साम्प्रदायिकधर्माश्रयणं भगवते आत्मसमर्पणं च शान्तिकारणत्वेनोच्यते, तथा ( श्लो० ५१ )—

"कुटुम्बेषु न सज्जेत न प्रमाद्येत्कुटुम्ब्यपि ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥
पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गमः ।
अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा ॥
इत्थं परिमृशन्मुक्तो गृहेष्वतिथिवद्वसन् ।
न गृहैरनुबध्येत निर्ममो निरहङ्कृतः ॥
कर्मभिर्गृहमेधीयैरिष्ट्वा भावेन भक्तिमान् ।
तिष्ठेद्वनं वोपविशेत्प्रजावान्वा परिव्रजेत्" ॥

इति गृहस्थस्यापि भगवत्सेवादौ प्रमादाभावो ब्रह्मज्ञानं तत्साधकतत्त्वविमर्शो भगवद्भक्तिश्च नैश्रेयससाधनतयोच्यते । एतच्छून्यस्य संसारबन्धनपूर्वकं नरकाख्यं फलमप्यनुपदमेवोच्यते ( श्लो० ५५ )—

"यस्त्वासक्तमतिर्गेहे पुत्रवित्तैषणातुरः ।
स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते" ॥

इत्यादिना ( श्लो० ५७ ) "मृतोऽन्धं विशते तमः" इत्यन्तेन ॥

( मनूक्तस्तदुपयोग सर्वेषां दीक्षाग्रहणपूर्वकमुपनिषद्विद्याभ्यासश्च )

किञ्च, मनुरपि तृतीयाध्याये गृहस्थधर्मानुपक्रम्य भगवद्बुद्ध्या सर्वभूतसन्तोषकस्य ब्रह्मरूपतापत्त्यार्चिर्मार्गगत्या मोक्षमाह ( श्लो० ९३ )—

"एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति ।
स गच्छति परं स्थानं तेजोमूर्तिपथाऽर्जुन" ॥ इति ।

पुनश्चतुर्थाध्यायेऽपि सर्वयज्ञापेक्षया ज्ञानयज्ञस्य प्राधान्यमाह स एव (श्लो० २२)—

"एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः ।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥
वाच्येके जुह्वति प्राणं प्राणे वाचं च सर्वदा ।
वाचि प्राणे च पश्यन्तो यज्ञनिर्वृत्तिमक्षयाम् ॥
ज्ञानेनैवापरे विप्रा यजन्त्येतैर्मुखैः सदा ।
ज्ञानमूलां क्रियामेषां पश्यन्तो ज्ञानचक्षुषा" इति ॥

एवं सर्वसत्कर्मणां ज्ञानमूलकत्वमुक्तम्, पुनस्तत्रैव ज्ञानसम्पत्त्यर्थं वेदाभ्यासं ततो ज्ञानसम्भवे पूर्वजन्मस्मरणादिकं ब्रह्मभावान्मोक्षलक्षणसुखं चाह ( श्लो० १४८ )—

"वेदाभ्यासेन सततं शौचेन तपसैव च ।
अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम् ॥
पौर्विकीं संस्मरन् जातिं ब्रह्मैवाभ्यसते पुनः ।
ब्रह्माभ्यासेन चाजस्रमनन्तं सुखमश्नुते" इति ॥

अपि च ब्रह्माद्वैतज्ञानसिद्ध्यर्थं साम्प्रदायिकगुरुसकाशाद्दीक्षाग्रहणपूर्वकमुपनिषद्विद्याभ्यासस्य सर्वाश्रमेष्वावश्यकत्वमाह षष्ठे स एव ।

"ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः ।
विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये" ॥ इति ।

एतद्विद्यासेवनस्य दीक्षापूर्वकत्वं पूर्वश्लोके स्फुटम्, अत्र ब्राह्मणैर्ब्रह्मचारिभिः ऋषिभिः परिव्राजकैः उपक्रमानुरोधाद्वानस्थैश्चेति मेधातिथिकुल्लूकभट्टाद्याशयः । अत्र गृहस्थस्यापि तदावश्यकत्वं सिद्धमेव ।

( प्रत्यह ब्रह्मविद्याभ्यासेन जपयज्ञसिद्धि , इह पुनरावृत्तिनिषेधवाक्यानि, ज्ञानसहकृतकर्मभिर्मोक्षश्च )

किञ्च ब्रह्मविद्यायाः प्रत्याहाभ्यासेनैव जपयज्ञसिद्धिं स्मरत्याचाराध्याये याज्ञवल्क्यो गृहप्रकरणे ( श्लो० ५ )—

"वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत्" ॥ इति ।

अन्यच्च, ब्रह्ममीमांसाद्यनुसारेण वेदार्थविचारस्य प्रत्यहकर्तव्यतामपि स एवाह तत्रैव ( श्लो० ३ )—

"हुत्वाग्नीन् सूर्यदैवत्यान् जपेन्मन्त्रान् समाहितः ।
वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च" ॥

प्रजापतिः—

"प्रवृत्तिं वचनात्कुर्वन् निवृत्तिमपि कर्मणाम् ।
एवं व्यवहरेन्नित्यं गृहस्थोऽपि हि मुच्यते" ॥

अत्रिः—

"यश्चैतैर्लक्षणैर्युक्तो गृहस्थोऽपि भवेद्द्विजः ।
स गच्छति परं स्थानं जायते नेह वै पुनः" ॥

पुनरत्रिः शौचविधिं निरूप्य—

"वेदाभ्यासरतः क्षान्तो नित्यं शास्त्राण्यवेक्षयेत् ।
शौचमृद्वारिभिरतो गृहस्थोऽपि हि मुच्यते" ॥

लघुविष्णुरपि द्वितीयाध्याये ( श्लो० १ )—

"अथातः सम्प्रवक्ष्यामि"

इति गृहस्थधर्मानुपक्रम्य तान्निरूप्य चान्ते प्राह ( श्लो० ४५।४६ )—

"श्रौतस्मार्तं तु यत्किञ्चित् व्यसनं धर्मसाधनम् ।
गृहे तद्वसता कार्यमन्यथा दोषमृच्छति ॥
एवं दान्तो गृही तु स्याच्छान्तः शुक्लाम्बरः शुचिः ।
प्राजापत्यं परं स्थानं प्राप्नोति विजितेन्द्रियः" इति ॥

सम्वर्त्तोऽपि ( श्लो० ३२ )—

"अथो द्विजः समावृत्तः सवर्णां स्त्रियमुद्वहेत्" ॥

इत्यादिना गृहस्थधर्मानुपक्रम्य—

"कृत्वा गार्ह्याणि कर्माणि स्वभार्यापोषणं नरः ।
ऋतुकालाभिगामी स्यात् प्राप्नोति परमां गतिम्" ॥

इति मोक्षाधिकारित्वमाह । बृहत्पराशरोऽपि द्वितीयाध्याये ( श्लो० ८ ) "अथ सन्ध्यां प्रवक्ष्यामी"त्युपक्रम्य सन्ध्यास्नानादि सप्रपञ्चं निरूप्य ( श्लो० २१७ )—

"कुर्याद्योऽहरहश्चैवं सम्यग्ज्ञात्वा विधानतः ।
समाप्नुयाद्गृहस्थोऽपि ब्रह्मणः पदमव्ययम्" ॥

इति ज्ञानपूर्वककर्मकरणे मोक्षमाह । तथा च साक्षान्मोक्षफलकब्रह्मज्ञानसम्पत्त्यर्थमुक्तविधब्रह्मविद्याभ्यासस्तद्द्वारा विष्णूक्तं शान्तत्वं दान्तत्वं जितेन्द्रियत्वं च न सम्प्रदायमन्तरा सम्भवति । प्राजापत्यत्रिसम्वर्त्तोक्तो मोक्षश्च क्षान्तिवेदाभ्यासादिपुरःसरतदुपयोग्युत्तरमीमांसादिसहकृतकर्मभिरेव बोद्धव्यः । केवलकर्मभिर्मोक्षाङ्गीकारे "तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय तमेव विदित्वाऽतिमृत्युमेति"

ऋते ज्ञानान्न मुक्तिः। ब्रह्मसंस्थोऽमृतत्वमेति। "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तम्" (स्क० १० उ०)

"मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते।",
"तं भजन्निर्गुणो भवेत्" ॥

इत्यादिविरोधापत्तेः।

भक्तिज्ञानभगवत्सेवाधिकारादिकं च सत्साम्प्रदायिकगुरुकृपैकसाध्यमित्युक्तं प्राक्।

(तस्य देवपूजा मुख्या, तत्र हरिसेवैव मुख्या)

अपि च मनुः (अ० ४ श्लो० १५२)—

"मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम्।
पूर्वाह्ण एव कुर्वीत देवतानाञ्च पूजनम्॥
दैवतान्यभिगच्छेत्तु धार्मिकांश्च द्विजोत्तमान्" ॥

इति देवार्चनादिकं तत्सिद्ध्यर्थं धर्मोपदेष्टृसत्साम्प्रदायिकोपसर्पणञ्च विदधाति। लघुपराशरोऽपि (अ० २ श्लो० १)—

"अतः परं गृहस्थस्य धर्माचारं कलौ युगे" ॥

इत्यादिना गृहस्थधर्मकथनमुपक्रम्य—

"जप्यं देवार्चनं होमं स्वाध्यायं चैवमभ्यसेत्" ॥ इति तदेव वदति ॥

तत्रापि विष्णवर्चनमेव सर्वेष्वपि वर्णेष्वाश्रमेषु चावश्यकत्वात् प्रधानम्। तथा च ब्रह्मवैवर्तब्रह्मखण्डैकादशाध्याये नारदं प्रति परमेष्ठी—

"वैष्णवानां हरेरर्चा तपस्या च श्रुतौ श्रुता।
वैष्णवस्त्वं गृहे तिष्ठ कुरु कृष्णपदार्चनम्॥
अन्तर्बाह्ये हरिर्यस्य तस्य किं तपसा सुत।
नान्तर्बाह्ये हरिर्यस्य तस्य किं तपसा वृथा॥
तपसा हरिराराध्यो नान्यः कश्चन विद्यते।
यत्र तत्र कृतं कृष्णसेवनं परमं तपः" ॥ इति।

तथा ब्रह्मवैवर्त एव प्रकृतिखण्डे सावित्रीं प्रत्याह विधिरेव—

"वत्से चतुर्षु वेदेषु धर्मेषु संहितासु च।
पुराणेष्वितिहासेषु पञ्चरात्रादिकेषु च॥
अन्येषु धर्मशास्त्रेषु वेदाङ्गेषु च सुव्रते।
सर्वेष्टं सारभूतं च मङ्गलं कृष्णसेवनम्" ॥

इति कृष्णसेवनस्यैव परमतपस्त्वेन सर्वेष्टादिरूपत्वेन च कथनात्तदेवावश्यकम्।

तस्य च कायिकादिव्यापाररूपस्यापि शिष्टा भक्तित्वं मन्यन्ते ॥ उक्तञ्च गारुडसमाप्ति-दशायां विष्णुभक्त्यध्याये—

"भज इत्येष वै धातुः सेवायां परिकीर्तितः ।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी" ॥ इति ।

अलमग्रे प्रपञ्चनीयस्येह प्रपञ्चनेन । अत उक्तब्रह्मवैवर्तवचनेषु स्पष्टतया गृहस्थस्यापि हरिसेवाऽऽवश्यकत्वकथनात्तत्सिद्ध्यर्थमपि तस्य सत्सम्प्रदायसेवनमावश्यकम् ।

(स्वकर्मत्यागे दोषः)

अन्यथा तु भगवत्सेवाद्यभावात् स्वकर्मशून्यत्वेनाश्रमवैयर्थ्यं स्यात् । यथाह दक्षः—

गृहस्थोऽपि क्रियायुक्तो न गृहेण गृही भवेत् ।
तथैव पुत्रदारैश्च स्वकर्मपरिवर्जितः" ॥ इति ।

पुनः स एव—

"विभागशीलसम्पन्नः क्षमायुक्तो दयालुकः ।
स्वकर्मणि सदा युक्तो गृहस्थः शेषभुग् भवेत्" ॥ इति ।

शेषभुक् भगवत्प्रसादभुक्, इदं भगवन्निवेदितग्रहणविषयकप्रश्नस्योत्तरे प्रपञ्चयिष्यामः ।

(सप्तविधस्नानानि, तत्र मानसं मुख्यम्)

अथ द्वितीयाध्याये बृहत्पराशरः ( श्लो० ८२ )—

"मान्त्रं पार्थिवमाग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसं चेति सप्तस्नानान्युपक्रमात्" ॥

इति सप्तविधस्नानान्युपक्रम्य तल्लक्षणानि वदन् ( श्लो० ८५ )—

"यद्ध्यानं मनसा विष्णोर्मानसं कथ्यते बुधै"रित्याह ।

अग्रे च ( श्लो० ८६ )—

"स्नानानां मानसं स्नानं मन्वाद्यैः परमं स्मृतम् ।
कृतेन येन मुच्यन्ते गृहस्था अपि सद्द्विजाः" ॥

इति हरिध्यानेनैव गृहमेधिनामपि मुक्तिं वक्ति । एवं गृहस्थस्याप्युपयोगो व्याख्यातः ।

(अथ वानप्रस्थस्य साम्प्रदायोपयोगः)

अथ वानप्रस्थस्यापि तदुपयोगं व्याख्यास्यामः । तत्रैकादशस्कन्धेऽष्टादशाध्याये श्रीभगवान्—

"वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वे"त्यादिना वानप्रस्थधर्मानुपक्रम्य ( श्लो० ९ )—

"एवं चीर्णेन तपसा मुनिर्धमनिसन्ततः ।
मां तपोमयमाराध्य ऋषिलोकादुपैति मामि"ति ॥

ऋषिलोकान्महर्लोकात् । एवं वानप्रस्थस्यापि भगवदाराधनं साधनत्वेन तत्प्राप्तिरेव च फलत्वेन स्मर्यते । तदतिरिक्तफलाभिलाषिणस्तु निन्दा तत्रैवानुपदम्—

"यस्त्वेतत्कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत् ।
कामायाल्पीयसे युञ्ज्याद्बालिशः कोऽपरस्ततः" ॥ इति ।

अत्र ब्रह्मलोकान्तवैभवोऽल्पीयःकामत्वेन श्रीधरस्वामिना व्याख्यातः ।

( मनुयाज्ञवल्क्योक्तस्तदुपयोग )

अथ मनुरपि षष्ठे ( श्लो० १ )—

"एवं गृहाश्रमे स्थित्वा विधिवत्स्नानको द्विजः ।
वने वसेत्तु नियतो यथावद्विजितेन्द्रियः" ॥ इति ।

पूर्वमेव सत्साम्प्रदायिकगुरूपासनात्पक्वकषायस्यैव वन्याश्रमेऽधिकारं निरूप्य तद्धर्मानुपक्रम्य ( श्लो० २९ )—

"एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन् ।
विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः" ॥

इत्यन्यपदेन वैष्णवदीक्षाणामपि सेवनं तत्पूर्वकं ग्रन्थतोऽर्थतश्चोपनिषदभ्यासं च ज्ञानसिद्धये विदधाति । याज्ञवल्क्योऽपि वानप्रस्थप्रकरणे ( अ० ३ श्लो० ७ )—

"योगाभ्यासेन वा तथा ।"

इत्युपनिषदभ्यासेनैव दिने कालक्षेपमाह । विज्ञानेश्वरेणोक्तमनुवाक्यैकवाक्यतया तथैव व्याख्यानात् । अपि च मनुः ( अ० ६ श्लो० ८ )—

"स्वाध्याये नित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः ।
दाता नित्यमनादाता सर्वभूतानुकम्पकः" ॥

इति दयादिकमवश्यसम्पाद्यत्वेन वदति । याज्ञवल्क्योऽपि तृतीयाध्याये वानप्रस्थप्रकरणे ( श्लो० ४ )—

"दान्तस्त्रिषवणस्नायी निवृत्तश्च परिग्रहात् ।
स्वाध्यायवान् दानशीलः सर्वसत्त्वहिते रतः" ॥

इति तदेवानुशास्ति । इदञ्च मनूक्तं नियतमनोबुद्धित्वरूपं तत्त्वपूर्वं ब्रह्मज्ञानं विना न भवति । "मनः सत्येन शुद्ध्यति", "विद्यातपोभ्यां भूतात्मा", "बुद्धिर्ज्ञानेन शुद्ध्यती"ति तेनैव पूर्वं स्मृतत्वात् । पुनर्मानवशास्त्र एव ( अ० ६ श्लो० २५ )—

"अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः ।
शरणेष्वममश्चैव वृक्षमूलनिकेतनः" ॥

इदं सुखार्थेष्वप्रयत्नत्वं निर्ममत्वं च न ज्ञानमन्तरा भवति । उक्तस्थले याज्ञवल्क्योऽपि ( श्लो० ९ )—

"यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति ।
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च" ॥ इति ।

इदमपि ज्ञानैकसाध्यम् ।

( तस्य मोक्ष शोकभयाभावश्च )

पुनर्मानवे मुनिधर्मोपसंहारे मोक्षलक्षणं तस्य फलमनुशास्ति स एव ( श्लो० ३२ )—

"आसां महर्षिचर्याणां त्यक्त्वान्यतमया तनुम् ।
वीतशोकभयो विप्रो ब्रह्मलोके महीयत" ॥ इति ।

न चात्रापि ब्रह्मलोकशब्देन सत्यलोकः शङ्क्यः । कुल्लूकभट्टीये ब्रह्मैव लोकस्तत्र पूजां लभते मोक्षमाप्नोतीत्यर्थः । केवलकर्मणो वानप्रस्थस्य कथं मोक्ष इति चेन्न । विविधाश्चोपनिषदीरात्मसंसिद्धये श्रुती"रित्यनेनास्यात्मज्ञानसम्भवादिति व्याख्यानात् । इदं मोक्षलक्षणं फलं ज्ञानमन्तरा न सम्भवेत् । वीतशोकभयत्वं च यथा सामगानां भूमविद्यायां श्रूयते । "तरति शोकमात्मविदि"ति । कठवल्लीष्वपि द्वितीयवल्ल्याम्—

"अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती"ति ॥

पुनरत्रैव—

"महान्तं विभुमात्मानं मत्वा धीरो न शोचती"ति ॥

मुण्डकेषु च तृतीयमुण्डकप्रथमखण्डे—

"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति ॥

एवं भयविषयेऽपि "अथ सोऽभयंगतो भवति" । "द्वितीयाद्वै भयं भवती"त्याद्यास्तैत्तिरीयबृहदारण्यकादिश्रुतयस्तत्र तत्र प्रसिद्धा एव । विज्ञानेश्वरस्तु वानप्रस्थस्य सालोक्यमुक्तिमाह ॥

( स्मृतिषु तस्य भगवत्सेवापूर्वाश्रमधर्मातिदेशश्च )

अथ तस्य भगवत्सेवाकर्तव्यतां त्वाह याज्ञवल्क्यस्तृतीयाध्याये वानप्रस्थधर्मप्रकरणे ( श्लो० २ ) "जटालोमभृदात्मवान्" इति । इह आत्मवानात्मोपासनाभिरतः स्यादिति मिताक्षरा । आत्मशब्दस्त्वेतादृशप्रकरेषु भगवत्पर एव । "गौणश्चेन्नात्मशब्दादि"ति सूत्रे सिद्धवत्कारेण हेतुं वदता बादरायणेन तथा बोधनात् । लघुविष्णुरपि तृतीयाध्याये ( श्लो० २ )—

"गृहस्थो ब्रह्मचारी वा वनवासं यदा व्रजेत् ।
चीरवल्कलधारी स्यादि"ति वानप्रस्थधर्मानुपक्रम्य—
"त्रिसन्ध्यं स्नानमातिष्ठेत्सहिष्णुर्भूतजान् गुणान् ।
पूजयेदतिथींश्चैव ब्रह्मचारी वशङ्गतः ॥
प्रतिग्रहं न गृह्णीयात्परेषां किञ्चिदात्मवान् ।
दाता चैव भवेन्नित्यं श्रद्दधानः प्रियंवदः ॥
केशरोमनखश्मश्रु न छिन्द्यान्न च कर्तयेत् ।
त्यजन् शरीरसौहार्दं वनवासरतः शुचिरि"ति ॥

अत्र सर्वदुःखसहनादि सौहार्दत्यागान्तं ज्ञानैकसाध्यम् । आत्मवत्त्वञ्चोक्तमिताक्षरैक-वाक्यतया भगवत्सेवावत्त्वमेव । किञ्च, गृहस्थस्य भगवत्सेवाया आवश्यकत्वमुपपादि-तमेव "वैष्णव त्वं गृहे तिष्ठ कुरु कृष्णपदार्चनमि"त्यादिवचनैः । तच्च वानप्रस्थस्यापि प्राप्नोत्येव ॥ मिताक्षरायां वानप्रस्थप्रकरणे ( श्लो० ११ ) "वायुभक्ष" इत्यस्य व्याख्याने, स्नानाचमनादिधर्मा ब्रह्मचारिप्रकरणाद्यभिहिताश्चाविरोधिनोऽस्यापि भवन्ति ॥ "उत्तरेषां चैव तथा विरोधी"ति गौतमस्मरणादित्युक्तेः । तेन भगवत्सेवा-दयोऽपि गृहस्थानां ब्रह्मचारिणां चोक्ता वैष्णवधर्मा वानप्रस्थस्यापि सिद्ध्यन्तीत्यलम् ।

( ब्रह्मसम्बन्धकरण, वेदान्ताध्ययनञ्च )

अपि च मुनेरपि भगवत्सेवाधिकारजनकं ब्रह्मसम्बन्धकरणमुच्यते । आचारमाधवे वानप्रस्थधर्मान् प्रक्रम्य कूर्मपुराणे—

"महाप्रस्थानिकं वासौ कुर्यादनशनं तु वा ।
अग्निप्रवेशमन्यद्वा ब्रह्मार्पणविधौ स्थितः" ॥ इति ।

ब्रह्मसम्बन्धस्य सेवाधिकारजनकत्वं तु—

"एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।
मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते" ॥

इत्येकादशस्कन्धादिवचनैः सिद्धमेव । अथ सम्वर्त्तः—

"उषित्वैवं गृहे विप्रो द्वितीयादाश्रमात्परम् ।
वलीपलितसंयुक्तस्तृतीयं तु समाश्रयेदि"त्यादिना

वानप्रस्थधर्मानुपक्रम्य—

"कुर्यादध्ययनं नित्यमग्निहोत्रपरायणः ।
इष्टिं पार्वायणीयां च कुर्याच्च प्रतिपर्वसु" ॥

इति मुनेरपि अध्ययनमनुशास्ति ॥ इदञ्चाध्ययनमुपनिषदामेव । सर्वविद्याध्ययनस्य

ब्रह्मचर्याश्रमकार्यत्वात् । मन्वादिभिरपि तथैवोक्तत्वाच्च ॥ अत एव पराशरमाधवीये द्वितीयाध्याये वानप्रस्थधर्मानुपक्रम्य कूर्मपुराणे—

"अथर्वशिरसोऽध्येता वेदान्ताभ्यासतत्परः ।
यमान्सेवेत सततं नियमांश्चाप्यतन्द्रितः ॥
जितेन्द्रियो जितक्रोधस्तत्त्वज्ञानविचिन्तकः ।
ब्रह्मचारी भवेन्नित्यं न पत्नीं प्रतिसंश्रयेत्" ॥ इति ।

एवं वानप्रस्थस्य सम्प्रदायोपयोगो व्याख्यातः ।

( यते सम्प्रदायोपयोग , तत्र हरिध्यान दण्डादीनां वैष्णवचिह्नत्वञ्च )

अथ यतेस्तदुपयोगं व्याख्यास्यामः । तत्र पराशरमाधवीये ( अ० २ ) संन्यासग्रहणविधौ त्रिदण्डाद्येकविंशतिवस्तुग्रहणं ग्रामसीमान्ताद्यन्यतमगमनं व्याहृतिभिः पयःप्रभृतिप्राशनं सावित्रीप्रवेशमग्निविहरणं ब्राह्ममुहूर्तान्तजागरं प्रातरग्निहोत्रानन्तरं प्राजापत्येष्टिकरणपूर्वकमात्मन्यग्न्यारोपणान्तं निरूप्योच्यते । इष्टिं परिसमाप्याग्नींश्चात्मनि समारोप्य प्रैषमुच्चारयेत् । तदाह कात्यायनः—

"आत्मन्यग्नीन् समारोप्य वेदिमध्यस्थितो हरिम् ।
ध्यात्वा हृदि त्वनुज्ञातो गुरुणा प्रैषमारभेदि"ति ॥

अत्र हरिध्यानोक्त्या दण्डकाषायादीनां च पूर्वं विष्णुलिङ्गत्वोक्त्या संन्यासिनोऽपि वैष्णवसम्प्रदाय एवावश्यकः । अग्रेऽपि "लिङ्गं तु वैष्णवं तेषां त्रिदण्डं सपवित्रकमि"ति स्मृत्युपन्यासेन त्रिदण्डादीनां वैष्णवलिङ्गत्वं दर्शितम् । किञ्च, पितामहोऽपि—

"परः परमहंसस्तु तुर्याख्यः श्रुतिरब्रवीत् ।
यमैश्च नियमैर्युक्तो विष्णुरूपी त्रिदण्डभृदि"ति ॥

संन्यासिनो विष्णुरूपत्वं वदन् तस्य विष्णुभक्तिज्ञानावश्यसम्पन्नतां द्योतयति ।

( भक्तिज्ञानाभ्यां भगवद्रूपता )

तद्भक्तिमत्त्वे एव सति "यो यच्छ्रद्धः स एव स" इति न्यायेनताद्रूप्यसम्भवात् । अत एव भगवान् ( अ० ७ श्लो० १६ )—

"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ" ॥

इत्युपक्रम्य तेषां स्वरूपं दर्शयन् ( श्लो० १८ )—

"ज्ञानी त्वात्मैव मे मतमि"ति स्वभक्तस्य ज्ञानयुक्तस्य स्वरूपत्वं निरूपयति । न च निखिलस्यापि प्रपञ्चस्य ब्रह्मात्मकत्वाभिप्रायेण विष्णुरूपत्वकथनमिति शङ्क्यम् । तस्य 'भूतानि विष्णुर्भुवनानि विष्णुरि'त्यादिविष्णुपुराणादिवाक्यैः सर्वत्र सत्त्वेन संन्यासिनि

विशेषाभावात्। अथ अत्यन्तभक्तिमत्तया विष्णुं रूपयति निरूपयति स विष्णुरूपी-त्यर्थादरणेऽपि तस्य तद्भक्त्यावश्यकता सिद्धैव। तस्माद्वैष्णवसम्प्रदायस्यास्त्येवावश्य-मुपयोगः संन्यासिनोऽपि यथार्थहरिभक्तिज्ञानसम्पत्त्यर्थम्। अन्यथा तदसिद्धेः पूर्वं व्युत्पादितवान्।

( वैराग्यतारतम्येन कुटीचरादिभेदो मननिदिध्यासनहरिभक्त्यादिकं च )

अथ ननु वेदान्ताभ्यासानन्तरमेव संन्यासोपदेशात्। संन्यासिनस्तु न तदभ्यास-कारणभूतसम्प्रदायस्योपयोगः कश्चिदिति चेन्नैवम्। प्रव्रजितस्यापि कुटीचरादेः साम्प्र-दायिकसद्गुरूपसेवनेन वेदान्तमभ्यस्यतो मन्वानस्योत्तरोत्तरवैराग्यदार्ढ्येन बहूदकत्वाद्यु-त्तरोत्तरस्वसंस्थासेवनायावश्यं सम्प्रदायोपयोगात्। वैराग्यदार्ढ्येनोत्तरोत्तरसंस्थास्वधि-कारस्तु दर्शित आचारमाधवे पुराणे—

"विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च।
सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचरः॥
शक्तो बहूदके तीव्रतरायां हंससञ्ज्ञिते।
मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधन" इति॥

किञ्च, मनुरपि षष्ठे ( श्लो० ३३ )—

"वनेषु च विहृत्यैवमि"त्यादिना यतिधर्मानुपक्रम्य ( श्लो० ४३ )—

"उपेक्षकोऽसङ्कुसुको मुनिर्भावसमाहित" इति शरीराद्युपेक्षार्थं बुद्धिस्थैर्याय च मननद्वारा ब्रह्मैकतानवृत्तित्वं यतेरपि सम्पाद्यत्वेन वक्ति। तथा ( श्लो० ४९ )—

"अध्यात्मरतिरासीनो निरपेक्षो निरामिषः" इति भगवद्भक्तिमपि तस्य विदधाति। अध्यात्मरतिपदात्। एवं विजानन्नात्मरतिरात्मक्रीड इति छान्दोग्यभूमविद्यैकवाक्यत्वात्। आत्मानं ब्रह्माधिकृत्य रतिर्यस्य सोऽध्यात्मरतिरिति कुल्लूकभट्टादिभिर्व्याख्यानाच्च। निर्णीयते चैतद्भक्तिमीमांसायां ( अ० १ सू० १० ) सांमुख्येतरापेक्षितत्वादित्यधिक-रणे। एकादशस्कन्धेऽपि अष्टादशाध्याये यतिधर्मेषु भगवान् ( श्लो० २० )—

"आत्मक्रीड आत्मरत आत्मवान् समदर्शनः।
विविक्तक्षेमशरणो मद्भावो विमलाशयः॥
आत्मानं चिन्तयेदेकमभेदेन मया मुनिः।
अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया॥
बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः।
तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिरि"ति॥

स्वभक्तिं सदा सर्वत्र तद्भावपूर्वकं ज्ञाननिष्ठया बन्धमोक्षादिचिन्तनं च पाराशरिणां विदधाति।

अतो भक्तिज्ञानसम्पत्त्यर्थं तस्यापि सत्सम्प्रदायोपसत्तिरावश्यकी । अन्यथा राग-द्वेषाद्यनपक्षयेण मोक्षासम्भवात् । तत्रैव ( श्लो० ६० )—

"इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते" इत्युक्तेः ॥

एवं ( श्लो० ६१ )—"अवेक्षेत गतिर्नृणा"मित्यादिनोक्तानि परमात्मसूक्ष्मत्वाद्यवे-क्षणान्यपि सत्सम्प्रदायद्वारकाण्येव । गुरुमेवाभिगच्छेत् गीती शीघ्री आचार्याद्धैव विद्याविदितासाधिष्ठं प्रापयतीत्यादिश्रुतिस्मृतिषु विधेर्निन्दास्तुत्योश्च दर्शनात् । इहैव ( श्लो० ७२ ) "ध्यानेनानीश्वरान् गुणानि"ति ध्यानोपदेशात् साम्प्रदायिकगुरूपसत्ति-मन्तरा श्रवणासम्भवेन तदुपजीव्यकमननाभावे निदिध्यासोपदेशनैरर्थक्याच्च । एवमेव सम्वर्त्तोऽपि,

( ब्रह्मविद्याध्ययन तदर्थं तस्यापि पूर्वविलक्षणा गुरुसेवायोग्यजनसङ्गश्च )

"उषित्वैनं वने सम्यग्विधिज्ञः सर्ववस्तुषु ।
चतुर्थमाश्रमं गच्छेद्धुतहोमो जितेन्द्रियः ॥
अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् ।
वेदाभ्यासरतो नित्यमात्मविद्यापरायणः" इति ॥

तथा—

"एकाकी चिन्तयेन्नित्यं मनोवाक्कायसंयतः" इति ॥

तथा—

"संसेव्य चाश्रमान् सर्वाञ्जितक्रोधो जितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति वेदशास्त्रार्थविद्द्विजः" इति ॥

यतेर्वेदान्तविद्यायाः श्रवणं तच्चिन्तनं तद्विद् एव मोक्षं चाह ॥ श्रीभागवते एका-दशस्कन्धे चाष्टादशाध्याये भिक्षुधर्मेषु ( श्लो० ३४ )—

"आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ।
तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते" ॥

इति वेदान्तविद्यया तत्त्वविमर्शार्थमेव प्राणधारणमुक्त्वा ( श्लो० ३८ )—

"दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ।
अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥
तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः ।
यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥
यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ।
ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥

"सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ।
अविपक्वकषायोऽस्मादमुष्माच्च विहीयते" ॥

इति भगवद्धर्मजिज्ञासापूर्त्यै यतेरपि गुरूपसत्तिं ब्रह्मचर्यादिभ्यस्तत्परिचर्यावैलक्षण्यं ज्ञानार्थमेवं करणस्यावश्यत्वबोधनाय एतच्छून्यस्यात्यन्तमनिष्टफलं चाह भगवान्, तस्मादुक्तसर्वसिद्ध्यर्थं यतेरपि वैष्णवसत्सम्प्रदायोपसेवनमावश्यकम् । एवमेव लिङ्गपुराणेऽपि—

"आश्रमत्रयमुत्सृज्य प्राप्तस्तु परमाश्रमम् ।
यतिः सम्वत्सरस्यान्ते प्राप्य ज्ञानमनुत्तमम् ॥
अनुज्ञाप्य गुरुं चैव चरेद्धि पृथिवीमिमाम् ।
त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ॥
पिधाय बुद्ध्या द्वाराणि ध्यानेनैकमना भवेदि"ति ॥

मत्स्यपुराणेऽपि—

"गुरोरपि हिते युक्तः स तु सम्वत्सरं वसेत् ।
नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ॥
प्राप्य चान्ते ततश्चैव ज्ञानयोगमनुत्तमम् ।
अविरोधेन धर्मस्य चरेत पृथिवीमिमामि"ति ॥

इह सम्वत्सरमित्येतदुपलक्षणम्, यावज्ज्ञानं तावन्निवसेत् । गुरुसमीपवासस्य ज्ञानार्थत्वादिति माधवः । न च मनुदक्षादिभिर्यतेरेकाकित्वेनैव चरणविधानाद्गुर्वाश्रयणमपि तस्यानुचितमिति वाच्यम् । सङ्गनिषेधस्य अज्ञसङ्गविषयकत्वात् । अत एव माधवीये, यदा तु श्रवणादिसम्पत्त्यभावादात्मज्ञानसिद्धौ स्वयमशक्तः स्यात्तदा तत्र शक्तेन द्वितीयेन सह विचरेत् । तथा च श्रुतिः—

"वर्षासु ध्रुवशीलोऽष्टौ मास एकाकी यतिश्चरेद् द्वौ वा चरेत्" । चरेतामित्यर्थ इत्युच्यते । अतो ज्ञानिनस्तु साधारणस्यापि सङ्गस्तेन कर्तव्य एव किं पुनर्गुरोः । उक्तवचनेषु तद्विधानात् ।

(परभक्तिब्रह्मसंस्पर्शगुरुसेवादयो बहवो यतिधर्मा विष्णवर्चनाद्ब्रह्मशरीरप्रवेशश्च)

अत्रिरप्याह—

"अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
भावशुद्धिः परे भक्तिः सन्तोषः शौचमार्जवम् ॥
आस्तिक्यं ब्रह्मसंस्पर्शः स्वाध्यायः समदर्शनम् ।
अनौद्धत्यमदीनत्वं प्रसादस्थैर्यमार्दवम् ॥

सस्नेहं गुरुशुश्रूषा श्रद्धा क्षान्तिर्दमः शमः ।
उपेक्षा धैर्यमाधुर्ये तितिक्षा करुणा तथा ॥
ह्रीः स्तवो ज्ञानविज्ञाने योगो लघ्वशनं धृतिः ।
स्नानं सुरार्चनं ध्यानं प्राणायामो बलिस्तुतिः ॥
भिक्षाटनं जपः सन्ध्या त्यागः कर्मफलस्य च ।
एष स्वधर्मो विख्यातो यतीनां नियतात्मनाम्"

इति स्पष्टं परभक्तिब्रह्मसंस्पर्शादिकं तदर्थं गुरुशुश्रूषादिकञ्च वक्ति । अत्रोक्तं सुरार्चनमपि विष्णवर्चनमेव, यतो यतेर्ब्रह्मशरीरप्रवेशः श्रूयते—

"ते ब्रह्मलोके तु परान्तकाल" इत्यादौ, स च प्रवेशो विष्णवर्चनेनैव भवति । यथोक्तं माधवीये (अ० १)—

"येऽर्चयन्ति सदा विष्णुं शङ्खचक्रगदाधरम् ।
सर्वपापविनिर्मुक्ता ब्रह्माणं प्रविशन्ति त" इति ॥

अत एव श्रीभागवते सप्तमस्कन्धे त्रयोदशाध्याये—

"एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः ।
सर्वभूतसुहृच्छान्तो नारायणपरायण" ॥

इति श्रीहरिपरायणत्वमेवोक्तम् ।

(प्रणवस्य भगवद्धामत्वविष्णुरूपत्वादिकम्)

किञ्च, संन्यासिनां मुख्यतया प्रणव एवोपास्यः । तस्य च द्वितीयाध्याये बृहत्पराशरः प्रणवप्रकरणे (श्लो० ५)—

"तस्याश्चैव तु ओङ्कारो ब्रह्मणा समुपासितः" ।

इत्यादिना कर्तृत्वादिधर्मपूर्वकं पुरुषोत्तमधामत्वाक्षरत्वादिकम्, तथा (श्लो० २१)—

"सनत्कुमारसिद्धान्ते प्रणवो विष्णुरुच्यते ।
यस्मिंस्तस्य च विश्रान्तिस्तत्परं ब्रह्मसञ्ज्ञकम्" ॥

(श्लो० ३५)—

"ध्येयं न जप्यं न च पूजनीयं यस्मान्न देवाद्वरणीयमन्यत् ।
दुस्तारसंसारपयोधिमग्ने ताराय विष्णुः परमः स पूज्यः" ।

इति विष्णुरूपत्वं च सम्यगुपपाद्य मध्ये (श्लो० १६)—

"त्रिस्वभावस्थितो देवो मन्तव्यो ब्रह्मवादिभिः ।
पर्यवस्यति यत्रैव विश्वमुत्पद्यते यतः ॥
निर्मात्रकः समात्रोऽपि सादिरेव निरादिकः ।
स जप्यः सर्वदा सद्भिर्ध्यातव्यश्च विधानत" ॥

इति तस्य मन्तव्यत्वं जप्यत्वञ्च विदधाति । अतस्तदुपासकाः सर्वेऽपि ब्रह्मवादिनः सद्यतयो वैष्णवा एव । अत एवाथर्वणोपनिषद्यपि वैष्णवचिह्नस्योर्ध्वपुण्ड्रस्य धारणं परिव्राजकस्यापि विधीयते । गृहस्थो ललाटादिद्वादशस्थलेष्वनामिकाङ्गुल्या विष्णुगायत्र्या केशवादिद्वादशनामभिर्वा धारयेत् । ब्रह्मचारी वानप्रस्थो ललाटकण्ठहृदयबाहुमूलेषु वैष्णव्या गायत्र्या कृष्णादिपञ्चनामभिर्वा धारयेत् । यतिस्तर्जन्या शिरोललाटहृदयेषु प्रणवेन धारयेदिति । एवं सामान्यतः संन्यासाश्रमे वैष्णवसत्सम्प्रदायानामावश्यकतयोपयोगो व्याख्यातः । अथ तद्भेदेषु चतुर्ष्वप्येकैकशस्तदुपयोगं व्याख्यास्यामः ॥

( कुटीचरादयश्चत्वार संन्यासिभेदा )

अथ चतुर्विधैरपि यतिभिः सम्प्रदायः सेवनीयः । तत्साध्यानां वेदान्तज्ञानादीनां सर्वेषामावश्यकत्वात् । तेषां चातुर्विध्यं तु हारीतः—

"चतुर्विधा भिक्षवस्तु प्रोक्ताः सामान्यलिङ्गिनः ।
तेषां पृथक् पृथक् ज्ञानं वृत्तिभेदात्कृतं श्रुतम् ॥
कुटीचको बहूदकश्च हंसश्चैव तृतीयकः ।
चतुर्थः परमो हंसो यो यः पश्चात्स उत्तम" इति ॥

पितामहोऽपि—

चतुर्विधाः भिक्षवस्तु प्रख्याता ब्रह्मणो मुखात् ।
कुटीचरो बहूदको हंसश्चैव तृतीयकः ॥
चतुर्थः परहंसश्च सञ्ज्ञाभेदैः प्रकीर्तिता" इति ॥

( तत्र कुटीचरस्य लक्षण सम्प्रदायोपयोगश्च )

तत्र कुटीचरस्य तदुपयोगः प्रथमं दर्श्यते । तत्र प्रजापतिः—

"कुटीचरो नाम स्वगृहे वर्तमानः शुचिरकलुषः आहिताग्निषु भिक्षां भुञ्जानोऽपगतकामक्रोधलोभमोहोऽहङ्कारवर्जी तप आत्मानुग्रहं कुरुते ।" वृद्धपराशरोऽपि—

"कुटीचरा नाम पुत्रादिभिः कुटीं कारयित्वा कामक्रोधलोभमोहमदमात्सर्यभयादीन् हित्वा विधिवत्संन्यासं कृत्वा त्रिदण्डजलपवित्रकाषायवस्त्रधारिणः स्नानशौचाचमनजपस्वाध्यायब्रह्मचर्यध्यानतत्पराः पुत्रादेरेव भिक्षाकालेऽन्नं यात्रामात्रमुपयुञ्जानास्तस्यां कुट्यां नित्यं सन्त आत्मानं मोक्षयन्त इति । अत्र कामाद्यपगमस्तत्तदध्यासापरपर्यायदेहादिविषयकाहङ्कारादिवर्जनमान्तरशौचं प्रणवादेरर्थावबोधपुरःसरो जपः सुष्ठ्वासमन्ताच्छब्दार्थादिविषयकसर्वसन्देहनिवृत्तिपूर्वकोऽध्यायो हरिध्यानादिकं चेति सम्प्रदायैकसाध्यं वस्तुजातं विधाय तादृशानुष्ठातुरेव आत्ममोक्षणमुपदिष्टमिति तस्य सम्प्रदायोपयोगोऽवगम्यते । अन्यथा कामाद्यपगमप्रभृतिसाधनासम्पत्त्या फलतयेप्सितस्य मोक्षपुरुषार्थस्य भङ्गः स्यात् ॥

तानि विनापि तत्सिद्धौ तु तेषां शास्त्रोक्तसाधनत्वव्याघातः प्रकृते कथनवैयर्थ्यं चापद्येत ।

( बहूदकस्य तदुपयोग प्रसङ्गाल्लक्षणञ्च )

अथ बहूदकस्य तदुपयोगो दर्श्यते । तत्र स्कन्दः—

"बहूदकश्च संन्यस्य बन्धुपुत्रादिवर्जित" इत्युपक्रम्य तद्धर्मान्वदन्नाह—

"शिखां यज्ञोपवीतञ्च देवताराधनं चरेदि" ति ।

वृद्धपराशरोऽपि—

"तत्र बहूदका नाम त्रिदण्डकमण्डलुपव्रपवित्रपत्रकषायवस्त्रधारिणो वेदान्तार्थावबोधकाः साधुवृत्तेषु ब्राह्मणगृहेषु भैक्षचर्यां चरन्त आत्मानं मोक्षयन्त" इति ॥

पितामहोऽपि—

"बहूदकः स विज्ञेयः सर्वसङ्गविवर्जितः ।
बन्धुवर्गे न भिक्षेत स्वभूमौ नैव सम्वसेत् ॥
निश्चलस्थाणुभूतश्च सदा मोक्षपरायणः ।
न कुड्यां नोदके सङ्गं कुर्याद्वस्त्रे च चेतसा ॥
नागारे नासने नान्ने नास्तरे च त्रिदण्डके ।
स्वमात्रायां न कुर्यद्वै रागं दण्डादिके यतिरि" ति ॥

अत्र संन्यासिनः प्रणवाधिदैविकसर्वेश्वरनारायणाख्यपरब्रह्मातिरिक्तोपासनाभावात् देवताराधनशब्देन विष्ण्वर्चनमेवाभिधीयते । वेदान्तार्थावबोधनं चात्यावश्यकम् । कामादिवर्जनवदस्यापि साधनत्वप्रतीत्या तदन्तराऽऽत्ममोक्षायोगात् । "ऋते ज्ञानान्न मुक्तिरि"त्याम्नानाच्च ॥ पितामहवचनेऽपि "सदा मोक्षपरायण" इत्यनेन साक्षान्मोक्षोपयोगिब्रह्ममीमांसाशास्त्राभ्यासस्य सदा कर्तव्यत्वविधिर्बोध्यते ॥ तत्साधकस्य वृत्तिनैश्चल्यस्य वाक्पाणिपादचापल्यवर्जनेन शरीरस्थैर्यस्य च कर्तव्यता बाधकानाञ्च भैक्ष्यनिवासादिद्वाराऽपि सम्भावितानां स्वबन्धुभूम्यादिसर्ववस्तुसङ्गानां शरीरमानसानां वर्जनं कुड्यादिस्वमात्रासु च ममताऽनुद्भवाय मानससङ्गत्यागश्च चोद्यते । एतच्च सर्वं तत्कालेऽपि सम्प्रदायसेवनाधीनमिति सर्वमनवद्यम् ।

( हंसस्य देवताराधनवेदान्ताभ्यासादिद्वारा तदुपयोग )

अथ हंसस्यापि तदुपयोगं प्रकाशयामः । तत्र स्कन्दपुराणे—

"हंसः कमण्डलुं शिक्यमि"त्यादिना हंसधर्मानुपक्रम्योच्यते—

"देवतानामभेदेन कुर्याद्ब्रह्मनं समर्चयेदि"ति ॥

"एतं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती विद्वत्संन्यासे प्रमाणम्" ।

अत्र क्त्वान्तल्यबन्ताभ्यां विदित्वा व्युत्थायेत्यव्ययाभ्यामात्मवेदनत्रिविधैषणाव्युत्थानयोः संन्यासपूर्वकालिकत्वद्योतनात् । पञ्चमाध्यायप्रथमपादे "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती"त्यत्र तथैव पूर्वकालिकत्वस्य जैमिनिनाङ्गीकृतत्वाच्च । अथ तत्रैव ब्राह्मणे "एवमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति विविदिषोः संन्यासे प्रमाणम्" । जाबालश्रुतावपि "एतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेदि"ति पूर्वोपक्रान्तप्राचीनत्रिदण्डादेः सर्वस्याप्सु त्यागेन पारमहंस्यं प्रतिपाद्य तस्याप्यात्मान्वेषणं विधीयते । तैत्तिरीयोपनिषदि "न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयदि"त्यग्निहोत्रयज्ञदानादीनां पूर्वोक्तानां तपसां निन्दापुरस्सर पारमहंस्यं विधाय तस्य परमहंसस्य विविदिषोरात्मविद्याधिकारो दर्शितः "ॐ इत्येतमात्मानं युञ्जीते"ति ॥ तस्मादुभयविधावपि पारमहंस्यसंन्यासावनेकश्रुतिसिद्धौ माधवेनाप्येवमेव पराशरद्वितीयाध्यायव्याख्याने परमहंसद्वैविध्यमङ्गीकृतमेवेति न कोऽपि चोद्यावकाशः ।

( विविदिषोरक्षमालादिधृतिजपवेदान्ताभ्यासध्यानात्मान्वेषणादिभिस्तदुपयोग )

अथ तत्र विविदिषोस्तु भक्तिज्ञानादिसम्पत्त्यर्थं वैष्णवसम्प्रदायनिष्ठाया आवश्यकत्वम् । अत एव तत्साधकजपशेषभूताया अक्षमालाया ग्रहणमपि परमहंसस्य विधीयते स्कन्दपुराणे—

> "कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम् ।
> अक्षमालां च गृह्णीयाद्वैणवं दण्डमव्रणम् ॥
> माधूकरमथैकान्नं परहंसः समाचरेदि"ति ॥

जपकरणं चास्य स्पष्टमेव यमो विदधाति—

> "स्नात्वा शुचिः शुचौ देशे कृतजप्यः समाहितः ।
> भिक्षार्थी प्रविशेद्ग्रामं रागद्वेषविवर्जित" इति ॥

एतस्य च वैष्णवसम्प्रदायावश्योपयोगस्तदेकसाध्याऽवश्यकबहुकार्यप्रतिपादनेन जाबालश्रुतावपि दर्शितः—

"एतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छन् यथाजातरूपधरो निर्द्वन्द्वो निःपरिग्रहः । तत्त्वब्रह्ममार्गे सम्यक् सम्पन्नः शुद्धमानसः प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन् करपात्रेण लाभालाभौ समौ भूत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतवानस्य प्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नामे"ति ।

अत्रात्मान्वेषणं कर्तव्यत्वेनोक्त्वा तदुपरोधकत्यागपुरःसरं तत्त्वब्रह्ममार्गे तत्त्वसूत्रानुसारिणि परब्रह्मणः पुरुषोत्तमस्य मार्गे सम्प्रदाये सम्यक् सम्पत्तिः श्रद्धापूर्वकचिराभ्यासेन जीवादिवस्तुतत्त्वव्युत्पत्तिस्ततो मनःशुद्धिः पुनर्मनननिदिध्यासनार्थं देहस्योपयोगात् तद्धारणमात्राय भिक्षाटनं लाभालाभयोर्हर्षशोकत्यागो भरतादिवत्सङ्गवारणायैकान्तवासो वेदान्तचिन्तनातिरिक्तकायिकादिप्रयत्नपरिहाणं क्रमेण देहादिविषयकममतोज्झितिस्तदर्थं च सदा शुक्लस्य भगवतो ध्यानं एतत्सर्वसिद्ध्यर्थं च गुरूपदिश्यमानायामध्यात्मविद्यायामेव नितरां स्थितिस्तयैव चाशुभकर्मनिर्मूलनं च निरूपितमिति स्पष्टतर एवाऽस्य वैष्णवसम्प्रदायोपयोगः। यदि चेदं वचनं विद्वद्विषयमभविष्यत् शुभाशुभानामुभयविधानामपि कर्मणां तर्हि निर्मूलनमवक्ष्यत्। इह त्वशुभानामेव निर्मूलनं वदन्ती श्रुतिर्विविदिषुदशायां ज्ञानोत्पत्तिबीजभूतानां सम्प्रदायसेवनविष्ण्वर्चनादिशुभकर्मणां विधातव्यतां ध्वनयति। एवमारुणिश्रुतावपि—

"आरुणिः प्रजापतेर्लोकं जगाम तं गत्वोवाच, केन भगवन् कर्माण्यशेषतो विसृजानीति तं होवाच प्रजापतिरि"त्युपक्रम्य, "ब्रह्माण्डं च विसर्जयेद्दण्डमाच्छादनं कौपीनं परिग्रहेच्छेषं विसृजेच्छेषं विसृजे"दित्यन्तेन पुत्राद्यैहिकानां चतुर्दशलोकानां दण्डादित्रयातिरिक्तसर्ववस्तूनां त्यागं विधाय ततो लौकिकाग्नीनामुदराग्नौ गायत्र्या वागग्नौ चारोपणमाज्ञाप्य पुनर्हेयानि चेतराणि निरूप्योच्यते—

"ऊर्ध्वगमनं विसृजेत् त्रिसन्ध्यादौ स्नानमाचरेत् सन्धिं समाधावात्मन्याचरेत् सर्वेषु वेदेष्वारण्यमावर्तयेदुपनिषदमावर्तयेदि"ति। अत्र ह्यारण्यकानामुपनिषदां चावृत्तिर्न हि पुनः पुनरक्षरोच्चारणमात्ररूपा विधीयते, किन्तु सानुभवार्थपरिचिन्तनपुरःसरैव। अन्यथा साक्षात् ब्रह्मज्ञानरूपविवक्षितफलाजननात्। अतस्तदर्थावगमाय परिचिन्तनपूर्वकावृत्तिकालेषु च तत्रोत्पद्यमानाऽसम्भावनाविपरीतभावनाऽमन्दसन्देहसन्दोहसन्दानाद्यर्थं च सम्प्रदायोपसेवनं परमहंसस्याप्यावश्यकमेव। परमहंसधर्मेषु च विश्वामित्रोऽपि ह्यात्मान्वेषणादिकं विदधाति "अथ परं परिव्राजकलिङ्गं सर्वतः परिमोक्षमेके सत्यानृते सुखदुःखे वेदानिमँल्लोकममुं च परित्यज्यात्मानमन्विच्छेदि"ति।

(अक्षरस्य सूत्रत्व वैष्णवत्वे सत्येव परमहस्य तस्य श्रवणादि च)

अथ केचिदिमानि पिप्पलायनशाखावाक्यानि चोदाहरन्ति, यथा—

"यदक्षरं परम्ब्रह्म तत्सूत्रमिति धारयेत्।
सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम्॥
तत् सूत्रं विदितं येन स विप्रो वेदपारगः।
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥
तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवानि"ति॥

अत्रापि सूत्रमणिगणन्यायेन सर्वाधारस्य श्रीपुरुषोत्तमधामत्वेन परमपदस्याक्षरब्रह्मणः पुरुषोत्तमसूचकत्वादिना सूत्रत्वं निरूप्य तत्त्ववेदिनस्तद्धारणं विधीयते । एतच्चाक्षरब्रह्मणः सर्वाधारत्वभगवद्धामत्वादिकं पुरुषोत्तमाक्षरविवेकं चावगन्तुं सर्ववेदोपनिषद्गीतासूत्रभागवतादिप्रमाणभेरीपरिकरप्रघुष्टोऽस्माकं वैष्णवसम्प्रदाय एव सर्वैरपि परमहंसैः सर्वथाऽऽदरणीयः । इतरार्वाचीनसिद्धान्तेषु तादृशतद्विवेकानुपलम्भस्य प्रत्यक्षसिद्धत्वात् । द्वादशस्कन्धे ( अ० १३ )—

"श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियम्
यस्मिन्पारमहंस्यमेकममलं ज्ञानं परं गीयते" ॥

इत्यादिश्रीभागवतादिपुराणवचनैरपि वैष्णवप्रियप्रमाणेष्वेव पारमहंस्यनिरूपणस्यावगम्यमानत्वात् । तेनैव च पारमहंस्यस्य वैष्णवत्वानतिरेकाध्यवसायात् । तत्रैव प्रथमस्कन्धे पञ्चमाध्याये ( श्लो० १० )—

"न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ।
तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्युशिक्षया" ॥

इत्यवैष्णवग्रन्थेषु तेषां रमणाभावस्मरणाच्च । किञ्च, पुनः प्रथमस्कन्धेऽष्टमाध्याये ( श्लो० २० )—

"तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगवितानार्थं कथं पश्येमहि स्त्रियः" इति ॥

परमहंसेषु स्वभक्तिविस्तारस्यैव भगवदवतारप्रयोजनत्वेनाभिधानात् तेषामेवावैष्णवत्वे भगवदवतारवैयर्थ्यप्रसङ्गः स्यात् । एवमितराण्यपि परमहंसानां सर्वथा वैष्णवत्वबोधकानि श्रीभागवतवचनानि शतशः सन्तीति तत्र तत्र द्रष्टव्यानि । तस्मात् सर्वशास्त्रसम्मतमेव तेषामनन्यवैष्णवत्वमतोऽस्त्येव विविदिषो, परमहंसस्य तु ज्ञानभक्तिसम्पत्त्यर्थमव्यवच्छिन्न एव वैष्णवसम्प्रदायोपयोगः सर्वशिष्टसम्मतः । अत एव माधवोऽपि पराशरव्याख्यायां वेदान्तश्रवणादिकां परमहंसवृत्तिं चेदाश्रयति तदा वृत्तितः परमहंस इति निरूपयन् तथाऽग्रेऽपि विद्वद्विविदिषुभेदेन परमहंसद्वैविध्यं सप्रमाणं निर्णीय विविदिषोऽस्तु श्रवणमननादिकर्तव्यसद्भावात्तदुपकारित्वेन दण्डधारणादिनियम उत्पद्यत इति कथयन् स्पष्टमेव श्रवणादेः कर्तव्यत्वं परमहंसस्यापि प्रतिपादयति तदर्थं सम्प्रदायावश्यकता तस्याप्यस्त्येवेति नात्र कोऽपि शङ्कावकाशः ।

( विदुष स्पष्ट भक्तिज्ञाने श्रुतिस्मृतिसूत्रेष्वात्मरति. )

अथात्र परमहंससामान्यस्य वैष्णवत्वावश्यकताप्रतिपादनेन विद्वत्परमहंसस्य तत्कालावच्छेदेन श्रवणाद्यर्थं सम्प्रदायानुपयोगेऽपि तदेकजनितयोर्भगवद्भक्तिपूर्णज्ञानयोर्जीवन्मुक्तिदशायामपि तस्मिन् सत्त्वादस्त्येव तस्यापि वैष्णवसम्प्रदायवर्तित्वम् । बहुभिर्वचनैस्तस्यानन्यवैष्णवत्वाभिधानात् । तस्य भक्तिमत्त्वं त्वाह भगवान्—

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते" ॥ इति ।

छान्दोग्येऽपि भूमविद्यायाम्—

"स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति, तस्य सर्वेषु लोकेषु कामचारो भवती"ति ।

अत्र रतिशब्दस्य भक्तिपरत्वमेवेति तु मीमांसितं भक्तिमीमांसाप्रथमाध्याये ( सू० १० ) "सांमुख्येतरापेक्षितत्वादि"ति सूत्रे भगवता शाण्डिल्येन । स्पष्टं चेदं स्वमेश्वरभाष्ये । उक्तश्रुत्यर्थं स्मरति दक्षः—

"यश्चात्ममिथुनो नित्यमात्मक्रीडस्तथैव च ।
आत्मानन्दश्च सततमात्मन्येव समाहितः" इत्यादि ॥

अग्रे च—

"ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनामि"ति ।

तस्य कर्तव्यशेषाभावस्तु माधवीये स्मृत्यन्तरे—

"ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किञ्चित्कर्तव्यमस्ति चेन्न स सर्वविदि"ति ॥

बह्वृचब्राह्मणे—

"एतद्ध स्म वै तद्विद्वांस आहुः कावषेयाः किमर्था वयं यक्ष्यामहे किमर्था वयमध्येष्यामहे" इति ॥

दक्षोऽप्याह—

"नाध्येतव्यं न कर्तव्यं न भेतव्यं कदाचन ।
यो वै सर्वसुनिष्णातो यतिर्भवति नान्यथे"ति ।

एतादृशस्य तस्य हरिभक्तिज्ञानसम्पन्नत्वेनैव ताद्रूप्यमाह पितामहः—

"परः परमहंसस्तु तुर्याख्यश्रुतिरब्रवीत् ।
यमैश्च नियमैर्युक्तो विष्णुरूपी त्रिदण्डभृदि"ति ॥

( हरिचिन्तनबहुला बौधायनोक्ता यतिधर्मा ध्यानात्पुरुषोत्तमप्राप्तिश्च )

यतस्तस्य सर्वदा हरिचिन्तनमेव विदधाति बौधायनः—

"विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
कालेऽपराह्णभूयिष्ठे भिक्षाटनमथाचरेत् ॥
ऊर्ध्वं जानोरधो नाभेः परिधायैकमम्बरम् ।
द्वितीयमान्तरं वासः पात्री दण्डी च वाग्यतः ॥

सव्ये चादाय पात्रं तु त्रिदण्डं दक्षिणे करे ।
उपतिष्ठेत सूर्यं तु ध्यात्वा चैकत्वमात्मना ॥
उक्त्वा विरजसं मन्त्रमाकृष्णेन प्रदक्षिणम् ।
कृत्वा पुनर्जपित्वा च ये ते पन्थान इत्यपि ॥
योऽसौ विष्ण्वाख्य आदित्ये पुरुषोऽन्तर्हृदि स्थितः ।
सोऽहं नारायणो देव इति ध्यात्वा प्रणम्य तम् ॥
भिक्षापात्रादिशुद्ध्यर्थमुपमुच्याप्युपानहौ ।
ततो ग्रामं व्रजेन्मन्दं युगमात्रावलोककः ॥
ध्यायन् हरिं च तच्चित्त इदं च समुदीरयेत् ।
विष्णुस्तिर्यगधोर्ध्वं मे वैकुण्ठो विदिशं दिशम् ॥
पातु मां सर्वतो रामो धन्वी चक्री च केशवः ।
अभिगम्य गृहाद्भिक्षां भवत्पूर्वं प्रचोदयेदि"त्यादि ॥

एवं मनुरपि षष्ठे ( श्लो० ७२ )—

"………ध्यानेनानीश्वरान् गुणान् ।
उच्चावचेषु भूतेषु दुर्ज्ञेयामकृतात्मभिः ॥
ध्यानयोगेन सम्पश्येद्गतिमस्यान्तरात्मनः" ॥

इति भगवद्ध्यानमुक्त्वा तेनैव सर्वसंसारत्यागपूर्वकं पुरुषोत्तमप्राप्तिलक्षणं फलं तस्याह ( श्लो० ७९ )—

"विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनमि"ति ।

उपसंहारेऽपि ( श्लो० ८५ )—

"स विधूयेह पाप्मानं परं ब्रह्माधिगच्छती"ति ॥

इत्थमन्यत्रापि शतशः सहस्रशः श्रुतिस्मृतिपुराणादिभिर्मस्करिणां विष्णुभक्तिमत्त्वादिकं समुद्घुष्यत इत्यलं विस्तरेण । एवं चतुर्विधानामपि यतीनां वैष्णवसम्प्रदायस्यावश्यकोपयोगः । सप्रमाणं निर्णीतः ।

( ज्ञानादिराहित्ये चिह्नमात्रधारणस्य वैयर्थ्यं दुष्फलजनकत्वञ्च )

सम्प्रदायसेवनाभावे ज्ञानभक्त्यादिसिद्धिर्नैव स्यादिति तु सविस्तरं पूर्वं प्रपञ्चितं द्वितीयप्रश्नोत्तरे च प्रपञ्चयिष्यते । तथा च सम्प्रदायाभावे ज्ञानरहितस्य केवलचिह्नधारिणः फलं त्वाम्नायते माधवीये—

"काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ।
स याति नरकान् घोरान् महारौरवसञ्ज्ञितानि"ति ॥

कालिकापुराणे—

"वैणवा ये स्मृता दण्डा लिङ्गमात्रप्रबोधकाः ।
लिङ्गव्यक्त्यै हि धार्यास्ते न पुनर्धर्महेतवः ॥
कायजा ये बुधैर्नित्यं नृणां पापप्रमोक्षणात् ।
जितेन्द्रियैर्जितक्रोधैर्धार्यास्ते तत्त्वदर्शिभिरि"ति ॥

ये कायजास्त्रयो दण्डास्ते पापविमोक्षणाय धार्या इत्यन्वय इति व्याख्या । किञ्च, सम्प्रदायाभावे वागादिदण्डरहितस्याजितकामक्रोधस्य संन्यासित्वमेव नास्ति ।

यतस्तद्युक्तस्य जितकामक्रोधस्यैव त्रिदण्डित्वं वदति मनुः—

"वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च ।
यस्यैते नियता बुद्धौ स त्रिदण्डीति चोच्यते ॥
त्रिदण्डमेतं निक्षिप्य सर्वभूतेषु मानवः ।
कामक्रोधौ तु संयम्य ततः सिद्धिं निगच्छती"ति ॥

दक्षोऽप्याह—

"वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च ।
यस्यैते नियता दण्डास्त्रिदण्डीति स उच्यते" इति ॥

अतः केवलबाह्यचिह्नस्य निरर्थकत्वेनान्तरज्ञानभक्त्यादिसम्पत्त्यर्थं वैष्णवसम्प्रदायोऽवश्यमेव सर्वदा सर्वैरपि सेव्यः सन्मतिभिः सुकृतिभिर्यतिभिरिति सम्यक् प्रमाणैः सिद्धम् ॥ बाह्यस्यापि तेषां त्रिदण्डादिरूपचिह्नस्य वैष्णवचिह्नत्वं तु पूर्वमेवोपपादितं "लिङ्गं तु वैष्णवं तेषां त्रिदण्डं सपवित्रकमि"त्यादिवचनैरिति सर्वं निरवद्यम् ।

"एवं सत्सम्प्रदायानां वैष्णवानामिहोदितः ।
सर्वाश्रमेषूपयोगोऽत्यावश्यकतया मया" ॥

## ( अष्टमः प्रश्नः )

अथ स्वतन्त्रप्रश्नकल्पस्यापि अनुयोजकेन सप्तमप्रश्नकुक्षावेव प्रसह्य निक्षिप्तस्य "किमाश्रमनिष्ठ" इति वाक्यस्यावान्तरार्थविषयकमपि वाक्यं स्वातन्त्र्येणावान्तराष्टम-प्रश्नतयोल्लिखितम्, तद्यथा—

### आश्रमनिष्ठश्चेत्तदा सम्प्रदायपूर्वक आश्रम आश्रमपूर्वकः सम्प्रदायो वा ?

उत्तरम् ।

( प्रश्ने विकल्पपूर्वकमाश्रमाणां मार्गाणां च भगवत्कर्तृकत्वोपपादनरूपमुत्तरम् )

अत्रापि पूर्वत्वं नाम कारणत्वं विवक्ष्यत आहोस्वित् पूर्वकालिकत्वमात्रम्? नाद्यः । उक्तवक्ष्यमाणैः, "वेदान्तकृद्वेदविदेव चाहम्", "वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" इत्यादिभिर्गीतामनुस्मृत्यादिप्रमाणमूर्धन्यग्रन्थवचनशतैः सम्प्रदायानामीश्वर-प्रादुष्कृतत्वसिद्ध्या एवमाश्रमाणामपि द्वितीयस्कन्धे ( अ० ६ श्लो० १८ )—

"पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः ।
अन्तस्त्रिलोक्यास्त्वपरो गृहमेधो बृहद्व्रत" इति ॥

एकादशस्कन्धे ( अ० १७ श्लो० १३ )

"गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ।
वक्षःस्थलाद्वने वासो न्यासः शीर्षणि संस्थितः" ॥

इत्यादिश्रीभागवतादिवचनैर्भगवन्निर्मितत्वनिश्चयेन चान्यतरस्मिन्नन्यतरकारणकत्वस्य वक्तुमयुक्तत्वात् । नान्त्यः । उभयोरपि सृष्ट्यारम्भकाले परमेश्वरप्रकटितत्वेन समकालिकत्वसिद्धावेकतरस्य पूर्वकालिकत्वकथनानौचित्यात् । अथाश्रमग्रहणानन्तरं सम्प्रदायग्रहणं तद्ग्रहणानन्तरं वाऽऽश्रमग्रहणमित्येव विचिकित्सितं स्यात्, तदा तूभय-मपि स्वीकुर्मः अनुभवसिद्धत्वात् । तथाहि, गृहस्थाश्रमे ब्रह्मचर्यावस्थानुष्ठितसाम्प्रदायिक-धर्मोत्तरकालिकत्वं तदुत्तरानुष्ठेयतद्धर्मापेक्षया पूर्वकालिकत्वं चास्त्येव । एवमुत्तरत्रापि वेदितव्यम् । अथैवं तर्हि ब्रह्मचर्यस्य तु न सम्प्रदायपूर्वकत्वमिति व्यभिचारः । नैष दोषः, "आबाल्यं हरिभक्ति"रिति सर्वशिष्टप्रसिद्धेर्ध्रुवप्रह्लादनारदादिषु सत्सम्प्रदायग्रह-णपूर्वकमत्यन्तबाल्येऽपि भगवद्भक्तिभरस्य बहुपुराणप्रसिद्धत्वाच्च । तस्मात्प्रष्टुः पाण्डित्य-ख्यापक एवायमीदृशश्चोद्योदय इति शिवम् । एवम्—

"अज्ञानां कष्टदैरष्टप्रश्नैः शिष्टोपहासदैः ।
युक्तोऽनिष्टो विनिर्दिष्टोत्तरः प्रश्न इहादिमः" ॥

इति प्रथमाष्टकम् ।

---

## ( अथ द्वितीयः प्रधानप्रश्नः )

### कियत्कालात्प्रवृत्तः ? ।

( स्वकृत. प्रश्नवाक्यार्थं )

अत्र कालादिति गम्यमानप्रभृतियोगे पञ्चमी । "अपादाने पञ्चमी"ति सूत्रे कार्तिक्याः प्रभृतीति महाभाष्यप्रयोगेण प्रभृत्यारभ्यादिपदयोगे तत्स्वीकारात् ।। तथा चावधित्वं पञ्चम्यर्थः । अथ जिज्ञासाबोधकात् किंशब्दात् "किमिदंभ्यां वो घः" इति शास्त्रानुशिष्टेन यत्तदेतेभ्यः "परिमाणे वतुबि"त्यतोऽनुवृत्तेन परिमाणार्थकेन वतुपा निष्पन्नः कियच्छब्दश्च समानाधिकरण्येन कालेऽन्वेति ।। तथा च सम्प्रदायप्रवृत्त्यावधिभूतकालमारभ्य वर्तमानकालपर्यन्तकालनिष्ठं परिमाणं सङ्ख्याविशेषविशिष्टसंवत्सरयुगादिरूपं प्रष्टुर्बुभुत्सितमिति प्रतीयते ।

### उत्तरम् ।

"अनादिसिद्धवेदोक्ताः सम्प्रदायाः अनादयः ।
प्रश्नः प्रवृत्तिकालस्यानादित्वात्तत्र नोचितः ।।
प्रतिकल्पं जगत्सृष्टौ प्रवर्तन्ते हरीच्छया ।
वेदवद्वेदसिद्धास्ते तिरोदधति च क्षये" ।।

( पूर्वं भगवानेव सम्प्रदायकर्ता )

"सम्प्रदायप्रणेता तु सृष्ट्यादौ भगवान्स्वयम् ।
अन्ये तदाज्ञयाऽऽचार्या व्यासाद्यास्तत्प्रवर्तकाः ।।
ब्रह्मरुद्रादयो देवा नारदाद्या महर्षयः ।
स्मर्यन्ते सम्प्रदायेषु वैष्णवेषु प्रतिष्ठिताः" ।।

तत्र प्रथमतः सम्प्रदायप्रवर्तकत्वं तु स्वस्यैवाह भगवान् ( अ० १५ श्लो० १५ )

"वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्" इति ।।

तत्र वेदान्तकृत्त्वं नाम वेदान्तमूलकसत्सम्प्रदायप्रवर्तकत्वमेव । अत एव श्रीधरस्वामिनाऽपि वेदान्तकृत्तत्सम्प्रदायप्रवर्तकश्च ज्ञानदो गुरुरहमित्यर्थ इति व्याख्यातम् । ननु स्वयमेव कुतः प्रावर्तयतेति चेत् सम्प्रदायानां वेदमूलकत्वात्तदर्थानां यथार्थज्ञानस्य चान्येष्वशक्त्या स्वयमेव प्रवर्तितवानित्याशयेन अग्र एवोच्यते "वेदविदेव चाहमि"ति । मनुस्मृतावपि प्रथमाध्याये ( श्लो० ६ )—

"ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुद" ।।

इत्यादिना सृष्टिनिरूपणमुपक्रम्य ( श्लो० २० )—

"वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" इति सम्प्रदायोत्पत्तिरपि परमेश्वरादेवोदिता । संस्थाश्च सम्प्रदायाः । अग्रेऽष्टमाध्याये ( श्लो० १६२ ) "निरादिष्ट इति स्थितिरि"त्यत्र कुल्लूकभट्टेन इति शास्त्रसम्प्रदाय इति स्थितिशब्दस्य व्याख्यानात् स्थितिसंस्थयोश्चैकार्थ्यात् ।

( ब्रह्मादयो व्यासाद्याश्च तदुपदिष्टसम्प्रदायप्रवर्तकाः अत एव तेषामाचार्यत्वम् )

अथ भगवदाज्ञया ब्रह्मादीनामपि अस्ति भगवदुपदिष्टब्रह्मविद्यासम्प्रदायप्रवर्तकत्वम् । अत एवोपनिषत्सु तत्र तत्र ब्रह्मविद्यायाः परम्पराप्राप्तत्वं श्रूयते । यथा मुण्डकोपनिषदि—

"ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता, स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह, अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरसे ब्रह्मविद्यां, स भारद्वाजाय सत्यवाहाय प्राह, भारद्वाजोऽङ्गिरसे परावरामि"ति ।

अस्यैव भाष्ये शङ्कराचार्या अपि विद्यासम्प्रदायकर्तृत्वपारम्पर्यलक्षणसम्बन्धमादावेवाहेति व्याकुर्वन्तः कण्ठरवेणैव ब्रह्मादीनां ब्रह्मविद्यासम्प्रदायकर्तृत्वमाहुः । एवमेव बृहदारण्यकभाष्यारम्भेऽपि—

"नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्य" इति तदेवाहुः । तथा तदनुयायिभिरितरैरपि शङ्कराचार्यकृतोपदेशसहस्रीव्याख्यादिषु "समस्तब्रह्मविद्यासम्प्रदायप्रवर्तकाचार्येभ्यो नम" इत्याद्युक्तमेव । एवमन्यत्राप्युपनिषत्सु तद्व्याख्यानेषु चानेकत्र स्पष्टतया सम्प्रदायनिरूपणं तत्प्रवर्तकनिरूपणं चास्ति तत्तत्र तत्र द्रष्टव्यम् । एवं सम्प्रदायप्रवर्तकानां महर्षीणां वेदोक्तत्वं पराशरस्मृत्यारम्भे माधवोऽप्याह "वाजसनेयिशाखायां वंशब्राह्मणे वेदसम्प्रदायप्रवर्तकगुरुशिष्यपरम्परायां पराशरस्य पुत्रपौत्रौ श्रूयेते घृतकौशिकः पराशर्यायणात् पराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्यादि"ति । किञ्च, अस्माकं परमाचार्यस्य व्यासस्यापि सम्प्रदायप्रवर्तकत्वं तत एव इतरमुन्यपेक्षयोत्कर्षं च स एव कण्ठरवेणाह तत्रैव "शृणु पुत्र प्रवक्ष्यामि शृण्वन्तु मुनयस्तथे"त्यस्य व्याख्याने । अत्र मुनिसम्बोधनेनैव पुत्रस्य सम्बोधने सिद्धेऽपि सम्प्रदायप्रवर्तकत्वेन विशेषतस्तत्सम्बोधनमिति । एवं प्रामाणिकग्रन्थान्तरेष्वपि सहस्रशो द्रष्टव्यम् । एवं सम्प्रदायप्रवर्तकत्वादेव वेदानां तदनुकूलतन्त्राणां च विचारेण ब्रह्मादीनां देवानां व्यासादीनां महर्षीणां चाचार्यत्वं श्रीभागवतादिषूच्यते द्वादशस्कन्धे एकादशाध्याये ( श्लो० ४ )—

"नमस्कृत्वा गुरून् वक्ष्ये विभूतीर्वैष्णवीरपि ।
याः प्रोक्ता वेदतन्त्राभ्यामाचार्यैः पद्मजादिभिरि"ति ॥

( बहव एव देवा ऋषयश्च भगवन्मन्त्रग्राहिणः प्रसङ्गाद्भगवता सह ध्येया ऋषयः )

अपि च, बहवो देवा महर्षयश्च वैष्णवसम्प्रदायवर्तिनः सन्तीति ज्ञायते । तेषां वैष्णवसाम्प्रदायिकमन्त्रग्राहित्वस्य पाद्मब्रह्मवैवर्तनारदपञ्चरात्रगौतमीयतन्त्रादिष्वनेकत्र निरूपितत्वात् । सम्प्रदायशून्यमन्त्राणां नैष्फल्यस्य पूर्वमेवोपपादितत्वात् । तन्मन्त्रग्रहणेनैव साम्प्रदायिकवैष्णवत्वसिद्धेरपि पूर्वं व्युत्पादितत्वाच्च । तत्र प्रथमं गौतमतन्त्रे प्रथमाध्याये कृष्णमन्त्रं प्रशस्य ( श्लो० १४ )—

"अनेनाराधितः कृष्णः प्रसीदत्येव तत्क्षणात् ।
तस्य सङ्क्षेपतो वक्ष्ये फलं सम्यक् शृणुष्व मे ॥
पद्मयोनिरवापाऽग्र्यं दैवराज्यं शचीपतिः ।
अवापुस्त्रिदशाः स्वर्गं वागीशत्वं बृहस्पतिः ॥
पक्षिणामधिकः सोऽभूद्गरुडोऽपि द्विजोत्तमः ।
कश्चित्कृष्णं समाराध्य धनेशत्वमवाप्नुयात् ॥
मन्त्रेण कृष्णमाराध्य चन्द्रः सर्वजनप्रियः ।
करोति स्ववशे कामः सर्वाँल्लोकाननेन चे"ति ॥

पुनस्तत्रैव द्वितीयाध्याये ( श्लो० ६७ )—

"भक्त्या ते प्रणिपत्त्या च कथितो मन्त्रनायकः ।
गुह्याद्गुह्यतरो ह्येष वाञ्छाचिन्तामणिः स्मृतः ॥
शौनकाद्याश्च मुनयस्तथाऽन्ये देवमुख्यकाः ।
मन्त्रराजपरिज्ञानात् सद्यः सत्साम्यतां गताः"

इत्यनेकेषां ब्रह्मादीनां देवानां बहूनां महर्षीणां च वैष्णवमन्त्रोपदेशग्राहित्वमुक्तम् । पुनस्तत्रैव चतुर्थाध्याये भगवन्मन्त्रजपकाले ध्यानं प्रक्रम्य—

"नारदेन च सिद्धेन विश्वामित्रेण धीमता ।
पराशरेण व्यासेन भृगुणाङ्गिरसेन च ॥
दक्षिणे सनकाद्यैश्च सिद्धेन कपिलेन च ।
वास्तुवागीशहारीतयाज्ञवल्क्योशना क्रतुः ॥
मार्कण्डेयभरद्वाजपुलस्त्यपुलहादिभिः ।
वशिष्ठाद्यैर्मुनीन्द्रैश्च स्तूयमानं सुरासुरैः ॥
ब्रह्मलोकगतैः सिद्धैर्नागलोकगतैरपि ।
अन्यैरपि सुरश्रेष्ठैः स्तूयमानं स्मरेद्धरिम् ॥
एवं सञ्चिन्तयेन्मन्त्री चेतसा कृष्णमव्ययम् ।
संसारसागरं घोरमपि वत्सपदायते" ॥

इत्यनेकेषां महर्षीणां वैष्णवत्वं तेनैव तल्लोके भगवत्स्तुतिसामर्थ्यं च दर्शितम् । तत्रैव सप्तविंशाध्याये ( श्लो० ६० )—

"चूडामणिमथो वक्ष्ये मन्त्रराजं सुदुर्लभम् ।
यज्ज्ञानान्मुनयः सर्वे भूयास्त्रैलोक्यदर्शिनः" इति ॥

तथा एकोनत्रिंशाध्याये ( श्लो० ६० )—

"अथापरं मन्त्रवरं वक्ष्ये सर्वसमृद्धिदम् ।
यमुपास्य सुराणां तु पालकोऽभूच्छतक्रतुरि"ति ॥

( परशिवशेषब्रह्मादीना हरिमन्त्रग्रहणप्रकार. परशिवस्यापि ब्रह्मभालोद्भवत्वम् )

एवं शिवादीनां साम्प्रदायिकभगवन्मन्त्रग्रहणेन वैष्णवत्वं नारदपञ्चरात्रेऽप्युच्यते । यथा तत्र प्रथमरात्रे त्रयोदशाध्याये उपबर्हणाख्यगन्धर्वं प्रत्याह भगवान् (श्लो० २६)—

"मया प्रदत्तमन्त्रश्च पुरा मृत्युञ्जयस्तथा ।
मृत्युञ्जयाय गोलोके शुद्धसत्त्वगुणाय च ॥
पुनः सनत्कुमाराय धर्माय ब्रह्मणे तथा ।
कपिलाय च शेषाय गणेशाय महामते ॥
नारायणर्षये चैव धर्मपुत्राय धीमते ।
पुनर्महाविष्णवे च विश्वानि यस्य लोमसु ॥
कालाधिष्ठातृदेवाय तस्मै सर्वान्तकाय च ।
उपेन्द्राय च कामाय भृगवेऽङ्गिरसे तथा ॥
सरस्वत्यै च पद्मायै राधायै विरजातटे ।
सावित्र्यै विष्णुमायायै पार्षदेभ्यश्च पुत्रके"ति ॥

पुनस्तत्रैव द्वितीयाध्याये भगवन्मुख्यमन्त्रग्रहणार्थमुपसन्नं स्वशिष्यं नारदं प्रति महादेवः—

"मया श्रीकृष्णमन्त्रश्च कृष्णालये मुने पुरा ।
गोलोके विरजातीरे नीरे क्षीरनिभेऽमले ॥
शतलक्षजपं कृत्वा पुण्ये वृन्दावने वने ।
श्रीकृष्णानुग्रहेणैव मन्त्रः सिद्धो बभूव मे ॥
ब्रह्मभालोद्भवोऽहं च सर्वादिसर्गतो मुने ।
प्राप्तं मृत्युञ्जयं ज्ञानं कृष्णाच्च परमात्मनः ॥
सिद्धो मृत्युञ्जयोऽहं च नित्यनूतनविग्रहः ।
ब्रह्मणः पतनेनैव निमिषो मे यथा हरेः ॥
एवं तेषां पार्षदानां नास्ति मृत्युर्यथा हरेः ॥

यस्मिन्देहे लभेन्मन्त्रं वैष्णवो वैष्णवादपि ।
पूर्वकर्माश्रितं देहं त्यक्त्वा स पार्षदो भवेत् ॥
पञ्चवक्त्रेण सततं तन्नामगुणकीर्तनम् ।
करोमि भार्यया सार्धं पुत्राभ्यां चाऽपि नारद ॥
तद्दिनं दुर्दिनं मन्ये मेघाच्छन्नं न दुर्दिनम् ।
यद्दिनं कृष्णसंल्लापकथापीयूषवर्जितम् ॥
तत्क्षणं निष्फलं मन्ये श्रीकृष्णकीर्तनं विना ।
आयुर्हरति कालश्च पुंसां तत्कीर्तनेन च ॥
तं क्षणं मङ्गलं मन्ये सर्वहर्षकरं परम् ।
तस्मात्पापाः पलायन्ते वैनतेयादिवोरगाः ॥
ब्रह्मणापि पुरालब्धस्तस्मात्तन्मन्त्र एव च ।
पद्मनाभनाभिपद्मे शतलक्षं जजाप सः ॥
तदा ललाप ज्ञानञ्च निर्मलं सृष्टिकारणम् ।
अणिमादिकसिद्धिं च चकार तत्प्रभावतः ॥
सृष्टिं च विविधां कृत्वा विधाता च बभूव सः ।
वरं तस्मै ददौ कृष्णो मत्समस्त्वं भवेति च ॥
शेषस्तत्कलया पूर्वं बभूव कश्यपात्मजः ।
तस्मात्सम्प्राप तन्मन्त्रं सिद्धिः कोटिजपेन च" ॥

(इन्द्रादिदेवाना बहुमहर्षीणाञ्च हरिदासत्वम्)

इति रुद्रब्रह्मशेषाणां वैष्णवमन्त्रग्रहणमुक्तम् । सारसङ्ग्रहे पाद्मे—

"ब्रह्माणं रुद्रमिन्द्रं च यमं वरुणमेव च ।
नारायणस्य दासास्ते ये चान्येऽण्डस्य मध्यगाः ॥
यः परः पुरुषो विष्णुर्नारायण उदाहृतः ।
दासभूतमिदं तस्य ब्रह्माद्यं सकलं जगदि"ति ॥

पूर्वप्रकरणक्रिययान्वयः । पुनस्तत्रैव रामायणे हनूमान्—

"दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मज" इति ॥

पुनर्नारदपञ्चरात्रे प्रथमरात्रद्वितीयाध्याये सनत्कुमारं प्रति पद्मासनः (श्लो०५५)—

"धन्योऽहं भवतः पुत्राज्ज्ञानिनां च गुरोर्गुरोः ।
विष्णुभक्ताच्च धर्मिष्ठात् सत्पुत्राच्च पिता सुखी ॥

धन्योऽसि पण्डितोऽसि त्वं हरिभक्तोऽसि पुत्रक ।
ममापि सफलं जन्म जीवनं च त्वया बुध" ॥

इति सनत्कुमारादीनामपि वैष्णवत्वम् । एवमन्यत्रापि गोपालतापनीयाद्युपनिषत्सु श्रीभागवतविष्णुपुराणपाद्मब्रह्मवैवर्तगारुडादिषु महाभारते च मोक्षधर्मादिषु तत्र तत्र शिवादीनामतिप्राचां वैष्णवत्वं भगवन्मन्त्रग्रहणं तद्भक्तिस्तत्सेवादिसम्प्रदायिकधर्माचरणं चानेकत्र निरूपितमेव विस्तरादस्तीति तत्स्वत एव सर्वत्रोपलप्स्यत एवानेकसच्छास्त्र-गिरिविपिनविहारकेसरिभिः सुधीभिरित्यलं लेखनश्रमेण—

"अनादिकालिकास्तस्मात्सम्प्रदायास्तु वैष्णवाः ।
अनादिसिद्धवेदोक्ताः प्रतिकल्पप्रवर्तिनः ॥
वैष्णवैर्ब्रह्मरुद्राद्यैर्दैवतैर्नारदादिभिः ।
महद्भिर्मुनिभिश्चान्यैः प्राक्तनैरुपसेविताः" ॥

---

## (नवमः प्रश्नः)

## अथास्य द्वितीयस्य मुख्यप्रश्नस्यावान्तरा अष्टौ प्रश्नाः कृता-स्तत्राद्यः प्रश्नः ।

### तत्र बहुकालात्प्रवृत्तश्चेन्मन्वादिग्रन्थेष्व-दृष्टत्वात्तद्विलक्षणत्वाच्च कथं प्रमाणम् ?

### उत्तरम् ।

"नूनं मनुस्मृतिर्दृष्टा नान्यत्किञ्चित्त्वया यतः ।
वेदोक्तसम्प्रदायेषु ब्रूषे मन्वाद्यदृष्टताम् ॥
स्वरूपासिद्धमत्रोक्तं हेत्वाभासद्वयं त्वया ।
तद्दूषणादयं प्रश्नो भवेद्दत्तोत्तरोऽचिरात्" ॥

(उत्तरकारिके मनुस्मृतौ सम्प्रदायवर्णनं च)

अस्ति हि मनुस्मृतौ सम्प्रदायवर्णनम् । तथाहि षष्ठाध्याये ( श्लो० ७४ )—

"सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते" ॥

इति सत्सम्प्रदायसम्पत्त्यैव मोक्षं तदभावे संसारं च वदति । दर्शनशब्दो हि सम्प्र-दायापरपर्यायेषु लोके मतशब्देन प्रसिद्धेषु सिद्धान्तेषु योगरूढो ज्ञानसाधकतमत्वात् । इदं विष्णुस्वामिदर्शनमिदं रामानुजदर्शनं षडास्तिकदर्शनानि षण्नास्तिकदर्शनानीत्यादि-विद्वद्व्यवहाराच्च । विद्यारण्यादिकृतेषु सर्वदर्शनसङ्ग्रहादिषु प्रामाणिकग्रन्थेष्वपि तथैव

लेखाच्च। न चात्र दर्शनशब्देन ज्ञानं शक्यम्, फलरूपत्वात्। तदुत्पत्तेः प्राक् संसारस्य स्वतः सिद्धत्वेन तद्रहितस्य पुनः संसारप्राप्तिकथनवैयर्थ्याच्च। एतदग्र एव "साधयन्तीह तत्पद"मित्यत्र व्याख्यायां पूर्वश्लोकोक्तदर्शनस्य मोक्षे बहिरङ्गसाधनत्वं वैराग्यादेश्चान्तरङ्गसाधनत्वमिति बोधनाच्च। अत उक्तार्थक एवेह दर्शनशब्दः। किञ्च, सम्प्रदायशब्दस्यावयवार्थविचारेणाऽपि पारम्परिकविद्यादानरूपत्वं प्रपञ्चितं प्राक्। तच्च कण्ठरवेणैव प्रशंसति मनुश्चतुर्थे (श्लो० २२७)। "दानधर्मं निषेवेते"त्यादिना दानावश्यकमुक्त्वा (श्लो० २२९) "वारिदस्तृप्तिमाप्नोती"त्यादिना दानविशेषफलानि वदन् सर्वान्ते (श्लो० २३२)—

"·········ब्रह्मदो ब्रह्मसार्ष्टिताम्।
सर्वेषामेव दानान्ते ब्रह्मदानं विशिष्यते" इति॥

"ब्रह्मदोऽध्यापको व्याख्याता चे"ति कुल्लूकभट्टः। व्याख्यातृत्वं च कुतर्कनिरासपूर्वकं तात्त्विकवेदार्थबोधकभाष्यादिकर्तृत्वमेव।

(साम्प्रदायिकाचार्यान्प्रति मनु साम्प्रदायिकाचार्याभिप्रायेणानेकत्र स्मृत्यादिष्वाचार्यशब्दप्रयोगश्च)

किञ्च, साम्प्रदायिकानाचार्यान् प्रत्याह चतुर्थ एव (श्लो० १७५)—

"सत्यधर्मार्यवृत्तेषु शौचे चैवारमेत्सदा।
शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयत" इति॥

अत्रैव सत्यधर्मसदाचारशौचेषु सदा रतिं कुर्यादिति व्याख्यानम्। न च सम्प्रदायिकाचार्याणामेव शास्त्रेष्वप्रसिद्धत्वात् स्मृतिषु तत्र तत्राचार्यशब्देनोपनायकस्यैव ग्रहणाच्च तान् प्रति नोपदेशो युज्यत इति वाच्यम्। अनेकस्मृतिवचनेषु सम्प्रदायप्रवर्तकाचार्यविषयत्वेनाप्याचार्यशब्दप्रयोगस्यावगम्यमानत्वात्। तथाहि याज्ञवल्क्यस्मृतौ व्यवहाराध्याये दायविभागप्रकरणे (श्लो० १)—

"विभागं चेत्पिता कुर्यादि"त्यस्य मिताक्षरायां "तथोत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्या"इति गौतमवचनम्। अत्र निर्विशेषेणाचार्यशब्दप्रयोगेण सत्सम्प्रदायप्रवर्तकाचार्याः प्रागप्यासन्नेवेत्यवगम्यते। न चात्राचार्यशब्दो वक्तुरुपनायकपरः शङ्क्यः। तस्य बहुत्वासम्भवेन बहुवचनविरोधात्। किञ्च, 'इत्याचार्या' इत्युपन्यासो हि वचनीये प्रामाणिकत्वावगमाय स्वसमानकालिकविदुषाम्। स च यदि वक्तुरुपनायकपरोऽत्राचार्यशब्दः स्यात् तत्सम्मतोऽर्थो न सर्वेषां तात्कालिकविदुषां माननीयः सम्भवतीति निरर्थकः स्यात्। मान्यत्वेन बहुवचनप्रयोगस्तु न क्वापि स्मृतिपुराणेषु दृश्यते। अतः सम्भवद्बहुभावाः शिष्यबाहुल्येन सर्वसम्मताः सम्प्रदायाचार्या एव अत्राभिप्रेता इति निश्चीयते। एवमेव दत्ताप्रदानिकप्रकरणे (श्लो० १) "स्वकुटुम्बाविरोधेने"त्यस्य मिताक्षरायां नारदवचनम्—

"आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतमि"ति ॥

अत्रापि आचार्यपदं पूर्ववत् । तथा तत्रैव तृतीयाध्याये ( श्लो० २ ) "एवं माता-महाचार्ये"त्यत्र मिताक्षरायाम् "आचार्याणां च प्रेतानां नित्यमुदकक्रिया कार्येति" बहुवचननिर्देशः । पराशरमाधवीये प्रथमाध्याये गौतमः "ऐकाश्रम्यं वाऽऽचार्याः सम्प्रत्यक्षविधानाद्गार्हस्थ्यस्ये"ति । इत्थं ग्रन्थान्तरेष्वपि निरीक्षणीयम् ।—

( स्मृतिष्वेषामुपनायकादिभ्यो भेदेन निर्देशः सर्वाश्रमसाधारणा दशधर्माश्च )

एवमेव द्वितीयाध्याये उपनयनपूर्वकसम्पूर्णवेदतदेकदेशाध्यापकादीन् ( श्लो० १४० ) "उपनीय तु यः शिष्यमि"त्यादिना निरूप्य ततः पृथक् ( श्लो० १४४ )—

"यः पूरयत्यवितथं ब्रह्मणा श्रवणावुभौ ।
स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचने"ति ॥

पूर्वोक्तसर्वापेक्षया ब्रह्मणा कर्णपूरकाचार्यप्रशंसाऽपि मनुना कृताऽत्रोपनायकादिभ्यः पृथक् साम्प्रदायिकाचार्यत्वस्य प्रामाणिकत्वावगमायाऽनुसन्धेया । तथा व्यवहारमि-ताक्षरायामपि दण्डपारुष्यप्रकरणे ( श्लो० १ ) "असाक्षिकहते चिह्नैरि"त्यस्य व्याख्याने "गुर्वाचार्यनृपेषु चे"ति नारदस्मृतौ गुर्वाचार्ययोर्भेदेन निर्देशः । तस्मादस्ति साम्प्रदायिकाचार्याणामपि सृष्ट्यारम्भातपरम्पराप्राप्तत्वेन सर्वशास्त्रसम्मतत्वम् । अत एव हारीतः—

"आचार्यं संश्रयेत्पूर्वमनवद्यं वैष्णवं द्विजम् ।
शुद्धसत्त्वगुणोपेतं नवेज्याकर्मकारकम् ॥
सत्सम्प्रदायसंयुक्तम् . . ..... ॥"

इत्यादिना मोक्षसाधनेषु सत्साम्प्रदायिकवैष्णवाचार्यप्रतिपत्तेः प्राथमिकत्वमुक्त्वा तल्लक्षणजिज्ञासायामाह—

"आलोक्य सर्वशास्त्राणि पुराणानि च वैष्णवः ।
तदर्थमाचरेद्यस्तु स आचार्य इतीर्यत" इति ॥

अतः स्पष्टेऽस्मिन् विषये बहुशास्त्रप्रसिद्धे किं बहुना । किञ्च, ब्रह्मविद्याप्राप्तिरेव सम्प्रदायस्य प्रधानप्रयोजनत्वेन प्रमाणपुरःसरं प्रपञ्चिता प्राक् । तां च सर्वाश्रमसा-धारणत्वेन वक्ति मनुः ( अ० ६ श्लो० ९१ )—

"चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ।
दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥

दशलक्षणानि धर्मस्य ये विप्राः समधीयते ।
अधीत्य चानुवर्तन्ते ते यान्ति परमां गतिम् ॥
दशलक्षणकं धर्ममनुतिष्ठन् समाहितः ।
वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विज" इत्यादि ॥

अत्र "विषयेभ्यश्चक्षुरादिधारणमिन्द्रियनिग्रहः, शास्त्रादितत्त्वज्ञानं धीः, आत्मज्ञानं विद्ये"ति मन्वर्थमुक्तावली । याज्ञवल्क्योऽपि तृतीयाध्याये आशौचप्रकरणे ( श्लो० ३४ )—

"भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मते"ति ॥

एवमादिषु स्मृत्यन्तरेष्वपि अनन्यसाध्यानां सम्प्रदायकार्याणां ब्रह्मविद्याप्राप्त्यादीनां निरूपणं वर्तत एवेति विस्फारितनेत्राभ्यां वीक्षणीयम् । अत उक्तादिष्वनेकेषु मनुवचनेषु सम्प्रदायतदाचार्यतद्धर्मादीनां निरूपणदर्शनान्न तत्रादृष्टत्वम् ।

( मन्वनुक्तत्वेऽपि बहूनां सद्य प्रव्राजादिधर्माणा प्रामाणिकत्व प्रश्नोक्तवैलक्षण्यबाधश्च )

ननु तथापि साम्प्रदायिकानां भगवत्सेवाप्रकारतुलसीकाष्ठमालाधारणप्रभृतीनां यावद्धर्माणां मनुस्मृतौ स्पष्टतयाऽनुपलभ्यमानत्वात्तेषां त्वप्रामाणिकत्वं सुस्थमेवेति चेत् तर्हि मनूक्तेष्वेव धर्मादिषु प्रामाणिकत्वं तदनुक्तेषु चाप्रामाणिकत्वं मन्यमानेन भवता जाबालादिश्रुत्युक्तोऽपि "यदहरेव विरजेत्तदहरेव प्रव्रजेदि"त्याश्रमोल्लङ्घनपक्षो न स्वीकर्तव्यः । मनुना "आश्रमादाश्रमं गच्छे"दिति पक्षस्यैवोक्तत्वात् । एवमेव च मन्वनुक्तानां मृतपत्यन्वारोहणादीनामपि सर्वशिष्टसम्मतानामनेकेषां धर्माणामप्यप्रामाणिकत्वमेवोरीकार्यम् । तथा भस्मरुद्राक्षधारणशिवार्चनैकदण्डसंन्यासादीनां भवत्साम्प्रदायिकधर्माणामपि स्वमुखेनैवाप्रामाण्यं दर्शितमेव । मनुस्मृतौ तद्ग्रन्थस्याप्यभावात्, यदि तु श्रुत्यादिसिद्धत्वान्नाप्रामाणिकत्वं तेषां मनुषे तदा तु साम्प्रदायिकधर्माणामपि तादृशत्वान्नाप्रामाणिकत्वमिति सर्वं सुस्थम् । एतावता मन्वादिग्रन्थेष्वदृष्टत्वादिति हेतुर्निरस्तः । यच्चोक्तं तद्विलक्षणत्वादिति, नैतत्सारम् । मनुसम्मतेऽर्थे तदुक्ताद्वैलक्षण्योपपादनस्य आकाशालिङ्गनकल्पत्वात् । किञ्च, वैष्णवमन्त्रग्रहणतुलसीकाष्ठमालाधारणोर्ध्वपुण्ड्रकरणभगवत्सेवादीनां साम्प्रदायिकधर्माणां श्रुतिसिद्धानां तत्र तत्र स्मृतिषु निरूपणात्तद्वचनानां च माधवविज्ञानेश्वरहेमाद्रिनारायणकमलाकरभट्टादिभिः प्रामाणिकस्मार्तैरपि स्वस्वनिबन्धेषूदाहरणाच्च । प्रश्ने मन्वादीत्यादिशब्दः साजात्यात्स्मृतिसङ्ग्राहकतया प्रतीयमानो निरर्थक एव । यदि त्वादिशब्देन साम्प्रदायिकधर्मद्वेषिणः शाक्यस्मृतिभगवतीसूत्रादयो नास्तिकग्रन्था एवाभिप्रेतास्तदा तु न किमपि ब्रूमः । अस्मद्धर्माणां तेष्वदृष्टत्वस्य तद्वैलक्षण्यस्य च यथार्थत्वात् ।

"अतः प्रमाणमूर्धन्यवेदाद्यैर्वर्णितेष्विह ।
प्रवर्तितेषु हरिणा सम्प्रदायेष्वनादिषु ॥
कथं प्रमाणमित्येष हेत्वाभासद्वयाश्रयात् ।
प्रश्नः शास्त्रादर्शनाद्वा विद्वेषाद्वेति भाति नः" ॥

---

## अथ द्वितीयस्य द्वितीयोऽवान्तरः प्रश्नः

## ( दशमः प्रश्नः )

## स्वल्पकालाच्चेद्धर्मादिनिर्णयस्तद्विधिस्तत्फलानि च सर्वत्रोपलभ्यमानत्वात्कथं प्रवृत्तः ?

### उत्तरम् ।

अत्र यद्यर्थकाच्चेदित्यव्ययात्, स्वल्पकालात्प्रवृत्तिपक्ष एवायं प्रश्नो भवतोऽभिप्रेत इति ज्ञायते ।

( प्रश्ने गतार्थत्वादिदोषा )

अस्माभिश्च बहुकालादेव तत्प्रवृत्तिः श्रुत्यादिसिद्धत्वादङ्गीक्रियते । अतः प्रकृतविकल्पे प्रथमकल्पसमर्थनेनैवायं दत्तोत्तरः । अस्मिन् प्रश्ने उपलभ्यमानत्वादित्यनेनान्वयार्थं धर्मादिनिर्णयस्य तद्विधेस्तत्फलानां चेति षष्ठीप्रयोगे कर्तव्येऽपि प्रथमान्तप्रयोगस्तु आर्षग्रन्थाभ्यासबाहुल्यात् षष्ठ्यर्थे प्रथमाङ्गीकारेणेति भाति । आस्तामेतत्, ईदृशानि संस्कृतोच्चारणकौशल्यान्येतेषु प्रश्नेष्वनेकत्र सन्त्येव । तानि चावलोकनक्षण एव विदुषां स्वतः प्रतिभास्यन्तीति किं परच्छिद्रोद्घाटनेन ।

( धर्मादिसत्त्वेऽपि लोकाना तत्र प्रवर्तनाय सम्प्रदाया )

नन्तु मास्तु स्वल्पकालात्प्रवृत्तिः, तथापि सम्प्रदायस्य सा लोके धर्मादिप्रवर्तनायैवेति वक्तव्यम् । अथ धर्मादिषु प्रवृत्तिस्तु तन्निर्णयं तद्विधिं तत्फलानि च पश्यतां स्वयमेव भविष्यतीति प्रयोजनाभावान्निरर्था सम्प्रदायप्रवृत्तिरिति चेदेतदपि निरस्तपूर्वं "कस्मै प्रयोजनाय"त्यस्योत्तरे प्रयोजनप्रकारान् प्रदर्शयता मया तथाप्युच्यते, न हि प्रवृत्तिहेतवोऽपि निर्णयादयो दुर्ज्ञेयेषु वेदशास्त्रादिषु विद्यमानाः प्रवर्तकमाचार्यरूपद्वारमन्तरा स्वतो मनुष्यान् प्रवर्त्तयितुं शक्ताः । अन्यथा सर्व एव स्वत एव विदितवेदशास्त्रादितत्त्वास्तात्त्विकं धर्ममेवाऽऽचरेयुः । स्वत एव ब्रह्मज्ञानं सम्पाद्य संसारतो मुच्येरंश्च । तथा च सति लोके अधर्मपदार्थोच्छेदः । पापिनामेवाभावादमुत्र नरकनैरर्थक्यं सर्वेषामेव अत्युत्तमे मोक्षाख्यफले त्वदधिके साक्षाद्भूतभगवत्सेवन एव वा प्रवृत्तिसम्भवेनावान्तरस्वर्गादिफलवैयर्थ्यं च प्रसज्येत ।

"गुरुमेवाभिगच्छेद् गच्छेदाचार्यसंसदमि"त्यादय आचार्यकरणविधयः "आचार्यवान् पुरुषो वेदे"त्यादयः श्रौतनियमाश्च वृथैव स्युः । अत एतद्वारणाय रिरंसया बहुबुभूषता भगवता पुरैवाविद्याशक्तितः सर्वेषां स्वतो ज्ञानाशक्तिः कृता । सर्वथाज्ञानाभाववारणाय धर्माभाववारणाय च ज्ञानसम्पादका धर्मानुशासकाः सम्प्रदायाश्च प्रकटीकृताः । अन्यथाऽराजकदेशे चोरोपद्रवादिना सर्वमर्यादाभङ्गवत् सम्प्रदायप्रवर्तकधर्मधुरन्धराचार्यशून्यत्वेऽपि तत्त्वतो धर्मब्रह्मणोर्निर्णयज्ञानाद्यनुदायात्सर्वविप्लवः स्यात् । प्रशासकाभावात् ।

तस्मात्प्रश्नोक्तस्य निर्णयादित्रयस्य वेदशास्त्रेषु सत्त्वेऽपि लोके तत्प्रवृत्त्यर्थं सम्प्रदाया आवश्यकाः ।

( आचारो धर्मे प्रमाण, अन्त करणप्रवृत्त्या च धर्मस्तस्य दुर्ज्ञेयता वैष्णवज्ञेयता च )

अत एव प्रथमाध्याये मनुः ( श्लो० १०९ )—

"आचाराद्विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत् ॥
एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् ।
सर्वस्य तपसो मूलमाचारं जगृहुः परमि"ति ॥

एवं पुनर्द्वितीयाध्याये ( श्लो० ६ )—

"वेदोऽखिलो धर्ममूलः स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मानस्तुष्टिरेव च" ॥

तथा ( श्लो० १२ )—

"वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणमि"ति ॥

श्रुत्यादिवत्सम्प्रदायस्यापि साक्षाद्धर्मप्रमापकत्वं प्राह । आचारसदाचारसम्प्रदायानां त्वेकार्थत्वमेवेत्युक्तं प्राक् । अतः श्रुत्याद्यनुसारिण्यपि धर्मे लोकानां प्रवर्तनं प्रशासकसम्प्रदायैकसाध्यम् । उचिततरं चैतत् । सत्साम्प्रदायिकशुद्धान्तःकरणमहानुभावहृदयेष्ववभातवस्तुन एव धर्मत्वात् । यथाह माधवीये आचारकाण्डे ( अ० १ ) विश्वामित्रः—

"यमार्याः क्रियमाणं तु शंसन्त्यागमवेदिनः ।
स धर्मोऽयं विगर्हन्ते तमधर्मं प्रचक्षत" इति ॥

मनुरपि—

"विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधते"ति ॥

न हि सर्वैरपि साधारणैर्धर्मो निर्णेतुं शक्यः । यथाह महाभारते धृष्टद्युम्नः—

"अधर्मो धर्म इति च व्यवसायो न शक्यते ।
कर्तुमस्मद्विधैर्ब्रह्मन्नतो न व्यवसाम्यहमि"ति ॥

नापि साधारणैः स उपदेष्टुं शक्यः । यथोक्तं तत्रैव राजधर्मे—

"न कल्माषो न कपिलो न कृष्णो न च लोहितः ।
अणीयान् क्षुरधारायाः को धर्मं वक्तुमर्हती"ति ॥

एतच्च वचनं साधारणजनविषयम् । अन्यथा धर्मोपदेशस्यैवोच्छेदप्रसङ्गात् ।

तस्मात् परम्परातोऽधिगतवेदादिसर्वतत्त्वानां सत्सम्प्रदायधुरन्धराणामाचार्याणामेव धर्मानुशासने शक्तिरिति निश्चीयते । अत एव वैष्णवसम्प्रदायाचार्यं भगवन्तं नारदमुद्दिश्याह श्रीभागवते सप्तमस्कन्धैकादशाध्याये युधिष्ठिरः ( श्लो० ४ )—

"नारायणपरा विप्रा धर्मं गुह्यं परं विदुः ।
करुणाः साधवः शान्तास्त्वद्विधा न तथाऽपरे" इति ॥

[नार]ायणपराणां वैष्णवाचार्याणामेव वास्तविकधर्मतत्त्वज्ञानं, न त्वितरेषामिति भाति । तेन साक्षान्मोक्षसाधकभगवत्सेवादिधर्मवद्वर्णाश्रमादिधर्मेष्वपि तेषामेव प्रशासकत्वं युक्तमिति श्रीः ।

( ज्ञानं विना कर्म निरर्थकं, ज्ञानिन एव हव्यकव्याधिकारश्च )

किञ्च, सम्प्रदायमन्तरा जनानां ज्ञानं नैवोत्पद्येतेति समर्थितमधस्तात् । तथा च सति अनुष्ठिता अपि सर्वे धर्मज्ञानशून्यतया वीर्यवत्तरत्वाभावान्न यथार्थं फलं साधयेयुः । "यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेवास्य वीर्यवत्तरं भवति" ।
( स्क० १० अ० २४ श्लो० ५ )—

"ज्ञात्वाऽज्ञात्वा च कर्माणि जनो यमनुतिष्ठति ।
विदुषः कर्मसिद्धिः स्यात्तथा नाऽविदुषो भवेत्" ॥

इत्यादिश्रुतिस्मृतिभ्यस्तथा निश्चयात् । विद्वत्त्वञ्च सम्प्रदायमन्तरा नैव सिद्ध्यति । अत एव व्यवहारमिताक्षरायां साधारणमातृकाप्रकरणे ( श्लो० २६ )—

"विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यत" इत्यस्य व्याख्याने "विद्वाञ्छ्रुताध्ययनसम्पन्नः सदाचार" इति विद्वत्पदं व्याकुर्वता विज्ञानेश्वरेणापि तथैव बोध्यते । अपि च श्राद्धादिधर्मेषु अर्हतमतयोच्यमाना ब्राह्मणा अपि क्वचिदपि नोपलभ्येरन् । वेदान्तानुसाराज्ज्ञाननिष्ठस्यैव तेषुं मुख्यत्वस्मरणात् । यथा श्रीभागवते सप्तमस्कन्धस्य पञ्चदश उच्यते ( श्लो० २ )—

"ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छता ।
दैवे च तदभावे स्यादितरेभ्यो यथार्हत" इति ॥

मनुरपि तृतीयाध्याये ( श्लो० १३२ )—

"ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च ।
न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुद्ध्यत" इत्यादि ॥

आचारमाधवे तृतीयाध्याये आपस्तम्बो धर्मसूत्रे—

"ब्राह्मणान् भोजयेद्ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्य सम्बन्धानि"ति । तत्रैव यमः—

"ये सोमपा विरजसो धर्मज्ञाः शान्तबुद्धयः" ॥

इत्युपक्रम्य—

"निष्णातः सर्वविद्यासु शान्तो विगतकल्मषः ।
गुरुवेदाग्निपूजासु प्रसक्तो ज्ञानतत्परः ॥
विमुक्तः सर्वदा धीरो ब्रह्मभूतो द्विजोत्तमः" ॥ इत्याह ।
"वेदविद्याव्रतस्नाता ब्राह्मणाः पङ्क्तिपावनाः" ॥

इत्युपसंहारः ।

याज्ञवल्क्योऽपि ( अ० १ ) श्राद्धप्रकरणे ( श्लो० ३ )—

"अग्र्यः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा" ॥

इति श्राद्धार्हब्राह्मणेषु ब्रह्मविदं मुख्यतया गणयति । न चात्र ब्रह्मशब्देन वेदमात्रं शङ्क्यम्, सर्ववेदाग्र्यश्रोत्रियज्येष्ठसामप्रभृतीनां वेदविदां पृथगुपदेशात् । अत्रैव वेदार्थविच्छब्देन साधनावस्थानिष्ठोऽपि साम्प्रदायिकद्विजो मुख्येषूक्तः । आचार्यकरणादिसम्प्रदायसेवामन्तरा मीमांसाद्यनवगमेन तात्त्विकवेदार्थज्ञानानुदयात् । एषां मुख्यत्वं त्वनुपदोक्तस्वस्रीयादीनां विज्ञानेश्वरेण मन्वेकवाक्यतया गौणत्वलेखनात् स्पष्टमुद्भाति । प्रजापतिरपि—

"ब्रह्मकर्मरताः शान्ता अपापा अग्निसंश्रिताः ।
कर्मनिष्ठा ज्ञाननिष्ठा वेदार्थज्ञाः कुलोद्भवाः ॥
मातृपितृपराश्चैव ब्राह्मवृत्त्युपजीविनः ।
अध्यापका ब्रह्मविदो ब्राह्मणाः श्राद्धसम्पदि" इति ॥

( श्राद्धे ब्रह्मोद्यकथा. दक्षिणकर्णे त्रिवारमुपदेश वैष्णवसिद्धान्तज्ञानादद्वैतमोक्ष )

एवमितरत्रापि दृश्यन्ते वचांसि । अथ पुनर्मनुः ( अ० ३ श्लो० २३१ )—

"यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरः ।
ब्रह्मोद्याश्च कथाः कुर्यात् पितॄणामेतदीप्सितमि"ति ॥

"ब्रह्मोद्याः परमात्मनिरूपणपरा" इति मन्वर्थमुक्तावली ।

माधवोऽपि तृतीयाध्याये श्राद्धप्रयोगे मौनित्वं च ब्रह्मोद्यकथाव्यतिरिक्तविषयम् । अत एव यमः—

"ब्रह्मोद्याश्च कथाः कुर्युः पितृणामेतदीप्सितमि"ति ॥

तथाच सम्प्रदायप्रवृत्त्यभावे ज्ञानानुद्भवात्तदेकसाध्यानि तत्र तत्रोक्तानि मोक्षान्तानि सर्वाणि कार्याणि न स्युरिति दिक् ।

न च ज्ञानं प्रति वैष्णवसम्प्रदायस्यान्यथासिद्धत्वं शङ्क्यम् । सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्ततयाऽस्य विश्वस्य स्थित्यादये हरिविरञ्चिहरेति सञ्ज्ञा दधानस्यैकश्रीपुरुषोत्तमस्यैव "तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते", "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया", "उत्तमः पुरुषस्त्वन्यः", "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इत्यादिश्रुतिस्मृतिभिः परब्रह्मत्वात्तज्ज्ञानस्य भक्तिप्रवर्तकवैष्णवसम्प्रदायैकसाध्यत्वात्, इतरत्र सविस्तरमेवमुपपादितत्वाच्च । अत एव गौतमतन्त्रेऽपि त्रयोदशाध्याये ( श्लो० १८ )—

"दक्षकर्णे वदेन्मन्त्रं त्रिवारं पूर्णमानस" इति ।

भगवन्मन्त्रोपदेशस्य कर्तव्यतामुक्त्वा तदनन्तरं शिष्याय वेदान्तसिद्धान्तबोधनं गुरोर्विदधाति । तादृशस्यैव च शिष्यस्य शुद्धाद्वैतविज्ञानान्मोक्षं निर्दिशति । ( श्लो० २० )—

"मन्त्रकुण्डलिदेवानामेकात्मत्वं प्रकाशयेत् ।
सिद्धान्तं वैष्णवं यत्नाद्बोधयेत्तस्य सद्गुरुः ॥
एवं चोपदिशेच्छिष्यं तथा तन्मयतां व्रजेत् ।
यथा ग्रामगतं तोयं विष्ठामूत्रादिदूषितम् ॥
गङ्गायां मिलितं तत्तु गङ्गैव भवति ध्रुवम् ।
तथा मातृमानमेयत्रयातीतो भवेच्छिशुः ॥
शिष्योऽपि पूर्णतां मत्वा गुरुं यत्नेन तोषयेदि"ति ॥

तस्मात्—

"धर्मादिनिर्णयं तस्य विधिं फलयुतं जनान् ।
वेदाद्युक्तं ग्राहयित्वा प्रवर्तयितुमत्र तान् ॥
ततो ज्ञाने ततो भक्तौ धरोद्धारधुरन्धराः ।
प्रादुष्कृताः सम्प्रदायाः पुरैव परमात्मना" ॥

---

## ( एकादशः प्रश्नः )

## अथास्यैव द्वितीयावान्तरप्रश्नस्य पुनः प्रपञ्चनरूपो द्वितीयप्रधानप्रश्नावान्तरस्तृतीय प्रश्नः ।

## किञ्च, वेदपुराणेतिहासादिषु प्रचुरतया धर्मनिर्णय-स्तत्फलनिर्णयश्च वर्तत एव पुनर्नवीनरीत्या-ऽशास्त्रीयया किं प्रयोजनम् ?

इति वक्तव्यम्—

### उत्तरम् ।

अनुपदमुपन्यस्तेन प्रश्नेन गतार्थोऽपि स्वाभिलषितप्रश्नसङ्ख्याप्रपूर्तये स एव प्रश्नः पुनः प्रकारान्तरेणोपन्यस्तः । अस्ति चात्र किञ्चिद्वैलक्षण्यं यत्साम्प्रदायिकरीतौ नवीनत्वं अशास्त्रीयत्वं चोपक्षिप्तमिति ।

( प्रश्नवैयर्थ्यं यथायोग्य मधुरवाचानुशासन, तथैव मोक्षोऽन्यथाबन्धः )

तत्र पूर्वं वेदादिषु प्राचुर्येण धर्मनिर्णयसत्त्वात्तत एव लोकप्रवृत्तिसम्भवे पुनः सम्प्रदायप्रवृत्तिः किमर्थेत्यस्योपरि पुनर्वदामः । सर्वजीवबोधविधानसमर्थया मधुरया वाचा वेदान्तफलोपभोगार्थं त्रिविधानामप्यधिकारिणां ज्ञानोत्पादनं प्रयोजनम् ।

वेदादीनामुत्तममात्रवेद्यत्वात् गुरुरूपद्वारमन्तरा स्वयम्प्रवर्तकत्वासम्भवाच्च स्वयं ज्ञातुमशक्यत्वाच्च । अत एतद्गुरोरेव कार्यम्, यथाह मनुः ( अ० २ श्लो० १५९ )—

"अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् ।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥
यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा ।
स वै सर्वमवाप्नोति वेदान्तोपगतं फलम्" इति ॥

अत्र प्रथमश्लोके आचार्यान् प्रत्युपदेशः, द्वितीयश्लोकस्तु सर्वान् प्रत्युपदिश्यते । वाङ्मनसोः शुद्धिश्चानृतादिरागद्वेषादित्यागलक्षणा वेदान्तोपगतं फलं सर्वेशानत्वादिकं मोक्षमिति यावदित्येतत् सर्वं कुल्लूकभट्टीये स्पष्टम् । सम्प्रदायधुरन्धराणां सर्वप्रशासकानामाचार्याणामभावे तु अराजकदेशे चोराद्युपद्रववत् सर्वत्रैव परस्परमात्सर्यादिवशाद्वितण्डादिभिर्वेदार्थभूतयोरपि धर्मब्रह्मणोरनिर्णये धर्मासेवनाज्ज्ञानानुदयेनेन्द्रियानिग्रहाच्च न केऽपि मुच्येरन् । यथाह द्वादशाध्याये मनुः ( श्लो० ५२ )—

"इन्द्रियाणां प्रसङ्गेन धर्मस्यासेवनेन च ।
पापान्संयान्ति संसारानविद्वांसो नराधमा" इति ॥

( आत्मचिन्तादिक सात्त्विकलक्षण इन्द्रियनियमसद्ग्रन्थाभ्यासादिभिरेव ज्ञान मोक्षश्च )

अतो बन्धहेतुभूतेन्द्रियप्रसङ्गादिवारणाय विद्वत्त्वं सम्पाद्यम् , तच्च सदाचार्योक्तरीतिक-निष्कामधर्माचरणेन सात्त्विकत्वसिद्धौ सम्प्रदायलब्धात्मचिन्तयैव भवति । यथाह स एव ( अ० १२ श्लो० ३१ )—

"वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः ।
धर्मक्रियात्मचिन्ता च सात्त्विकं गुणलक्षणम्" इति ॥

एवमेव सम्प्रदायोपसत्तिपूर्वकश्रवणमननादिना निरस्तरागद्वेषादेरेव विद्वत्त्वसिद्धि-रित्यभिप्रेत्याहाध्यात्मप्रकरणे याज्ञवल्क्यः ( श्लो० ८६ )—

"मलिनो हि यथाऽऽदर्शो रूपाऽऽलोकस्य न क्षमः ।
तथाऽविपक्वकरण आत्माज्ञानस्य न क्षमः ॥
कटूर्वारौ यथापक्वे मधुरः सन् रसोऽपि न ।
प्राप्यते ह्यात्मनि तथा नापक्वकरणेऽज्ञते"ति ॥

मोक्षधर्मेऽपि तथा निष्कामकर्मकरणान्निष्पापस्यैव भगवत्साक्षात्कार उच्यते—

"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
तत्रादर्शतलप्रख्ये पश्यत्यात्मानमात्मनी"ति ॥

मनुरपि चतुर्थाध्याये ( श्लो० १६ )—

"इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः" ।

इतीन्द्रियप्रसङ्गस्य निवार्यत्वमुक्त्वोक्तरीत्या तन्निवृत्तिहेतोर्ब्रह्मज्ञानस्य सिद्धिस्तु सम्प्रदायप्रवर्तकसदाचार्यैर्जनबुद्धिसौकर्यानुरोधेन कृतानां सन्निबन्धानां तदनुसारेण वेदादीनां च तादृशगुरुसमीपे निरन्तराभ्यासेनैवेत्याह ( श्लो० १९ )—

"बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥
यथा यथा हि पुरुषः शास्त्रं समधिगच्छति ।
तथा तथा विजानाति विज्ञानं चास्य रोचत" इति ॥

एवं साधनदशायामपि सम्प्रदायानुसाराद्वेदार्थज्ञाने सिद्धे पङ्क्तिपावनत्वं स्यात् ।

यथाह स एव तृतीयाध्याये तानेवोपक्रम्य ( श्लो० १८६ ) "वेदार्थवित्प्रवक्ता चे"ति । ईदृशस्यैव च मुक्तिं वक्ति तृतीयाध्यायेऽध्यात्मप्रकरणे याज्ञवल्क्यः । ( श्लो० ६ )—

"सन्निरुद्ध्येन्द्रियग्रामं रागद्वेषौ प्रहाय च ।
भयं हत्वा च भूतानाममृतीभवति द्विज" इति ॥

(ब्रह्मविदुष एव कर्मोपयोगित्व विद्यया मोक्षोऽज्ञानिन कर्म स्वाभिप्रायकृतं कर्म व्यर्थम्)

एतादृशस्यैव सर्वकर्मोपयोगित्वं त्वाह मनुः—

"एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ।
पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपी"ति ॥

याज्ञवल्क्योऽपि—

"अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवे"त्यादि ॥

अत्र "श्रोत्रियः श्रुताध्ययनसम्पन्नः ब्रह्मविद्ब्रह्मज्ञानवान् वेदार्थविद्धर्मज्ञानवान्" इति माधवः। एवं गुरूपसत्त्या निश्चितवेदान्ततत्त्वस्यैव संन्यासादिसाधनमन्तरापि मोक्षं सर्वोत्कृष्टत्वं चाह द्वादशाध्याये मनुः ( श्लो० १०२ )—

"वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥
अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥
तपो विद्या च विप्रस्य निःश्रेयसकरं तपः ।
तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुत" इति ॥

आपस्तम्बोऽपि दशमाध्याये—

"मातृवत्परदारांश्च परद्रव्याणि लोष्टवत् ।
आत्मवत्सर्वभूतानि यः पश्यति स पश्यति" इति ॥

अतो विद्वत्त्वमावश्यकम्, वेदशास्त्रेषु प्रचुरतया निर्णीतस्यापि धर्मस्यानुष्ठाने वैफल्य-वारणार्थत्वात्। अविद्वत्कृतकर्मणां वैफल्यस्मरणात्। यथाह द्वितीयाध्याये बृहत्पराशरः ( श्लो० ४६।४७ )—

"एकांशेनापि यन्न्यूनं कुर्यात्कर्म द्विजोत्तमः ।
तेनासौ हन्यते कर्ता मृतो गर्तत्वमृच्छति ॥
कुर्वन्नज्ञो द्विजः कर्म जपहोमादि किञ्चन ।
नासौ तस्य फलं विन्देत्क्लेशमात्रं हि तस्य तदि"ति ॥

पुनस्तत्रैव गायत्रीनिरूपणप्रकरणे ( श्लो० ६२ )—

"अस्मिन् कलौ च विदुषा विधिवत्कर्म यत्कृतम् ।
भवेद्दशगुणं तद्वत्कृतादेर्युगतोऽधिकम् ॥
न च तच्छक्यते कर्तुं मन्त्राम्नायस्य दूषणात् ।
अयथार्थकृतात्पापान्मन्त्रसिद्धिर्गरीयसी"ति ॥

इह मन्त्राम्नायस्य मन्त्रप्रवर्तकसम्प्रदायस्येत्यर्थः। आम्नायसम्प्रदायशब्दयोरेकार्थत्वात्। तृतीयकाण्डे (व० २ श्लो० ७) "अथाम्नायः सम्प्रदाय" इत्यमरोक्तेः। अतः सम्प्रदायस्यैव विद्वत्त्वसिद्धिं प्रति सर्वधर्मप्रवृत्तिं प्रति च हेतुत्वं निश्चीयते। धर्मनिर्णयसत्त्वेऽपि साम्प्रदायिकोपदेशमन्तरा स्वाभिप्रायकृतं कर्म निष्फलमेव। यथोक्तं वृद्धशातातपस्मृतौ (श्लो० २९)—

"स्वाभिप्रायकृतं कर्म यत्किञ्चिज्ज्ञानवर्जितम्।
क्रीडाधर्मेण बालानां तत्सर्वं निष्प्रयोजनमि"ति॥

(बाह्यमाभ्यन्तरञ्च शौचमावश्यक, परम्परातो वेदमीमांसादिविदुक्त एव धर्मः)

किञ्च, ब्रह्मज्ञानजन्यचित्तशुद्धिलक्षणमान्तरशौचं विनाऽपि सर्वधर्माणां नैष्फल्यमेव। यथाह व्याघ्रपादः—

"शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽन्तरम्॥
गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः।
आमृत्योराचरेच्छौचं भावदुष्टो न शुद्ध्यती"ति॥

भावशुद्धेर्ज्ञानैकसाध्यत्वं तु "विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यती"त्यादिमन्वादिवचनोपन्यासेन प्रागेवादर्शि। शौचस्य द्विविधस्यापि सर्वकर्माधिकारहेतुत्वमन्वयव्यतिरेकाभ्यां दक्षो दर्शयति—

"शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रिया" इति॥

इत्थमान्तरशौचादिसर्वेष्टसम्पादकविद्वत्त्वविशिष्टस्यैव सर्वधर्मेष्वधिकारस्तत्र तत्र स्मर्यते। अतः प्रचुरतया धर्मनिर्णये सत्यपि तत्फलसिद्ध्युपजीव्यब्रह्मज्ञानसिद्धिः प्रशासकसत्तया यथाशास्त्रं सर्ववर्णाश्रमादिषु तत्प्रवृत्तिः सर्वधर्मविप्लवाभावश्च सम्प्रदायप्रयोजनम्। अत एवाऽत्रिस्मृतौ साम्प्रदायिकाचार्यलक्षणमर्थतोऽनूद्य तादृशस्यैव धर्मोपदेष्टृत्वं तदुक्तस्यैव च धर्मत्वं स्मर्यते—

"जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते।
विद्यया चापि विप्रत्वं श्रोत्रियस्त्रिभिरेव च॥
वेदशास्त्राण्यधीते यः शास्त्रार्थं च निवेदयेत्।
तदाऽसौ वेदवित्प्रोक्तो वचनं तस्य पावनम्॥
एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः।
स ज्ञेयः परमो धर्मो नाज्ञानामयुतायुतैरि"ति॥

शातातपोऽपि स्मृतिसमाप्तिदशायाम्—

धर्मशास्त्रं समारूढो वेदखड्गधरो द्विजः ।
विद्वान् स्वयं तु यद्ब्रूयात् स धर्मः परमः स्मृतः ॥
अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः सह" ॥

मनुरपि द्वादशाध्याये ( श्लो० ११३ )—

"एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।
स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैरि"ति ॥

इह वेदविच्छब्दोऽयं वेदार्थधर्मज्ञपरः । एतच्च श्रेष्ठोपलक्षणम् । स्मृतिपुराणमीमांसान्यायशास्त्रज्ञोऽपि गुरुपरम्परोपदेशविदपीति व्याकुर्वता मन्वर्थमुक्तावलीकृता सम्प्रदायिकाचार्यो मुख्यतयोक्त एव वाक्यसुधाकरादिभिः । पारम्परिकगुरुसदुपदेशस्यैव सम्प्रदायशब्दार्थत्वेन लिखनात् ।

( तेषां समयः प्रमाणम्, आचारावश्यकता, सदाचारस्य शिष्टानां च लक्षणम् )

यमोऽपि पञ्चमाध्याये—

"वेदाचाररता विप्रा वेदवेदाङ्गपारगाः ।
तैरप्यनुष्ठितो धर्म उक्तश्चैव विशेषतः ॥
कार्यश्चैव विशेषेण त्रिभिर्वर्णैरतन्द्रितैरि"ति ॥

सर्वत्र धर्मशास्त्रेषु निर्णयसत्त्वेऽपि यथायोग्यं तत्प्रवृत्त्यर्थमस्ति सम्प्रदायोपयोगः । तस्य साधुसमयरूपत्वेन सर्वत्र प्रमाणत्वाभिधानात् । यथाह याज्ञवल्क्यः ( अ० १ श्लो० ७ )—

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मन" इति ॥

मनुरपि द्वितीयाध्याये ( श्लो० १२ )—

"वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मन" इति ॥

इदमेवाह माधवीये ( अ० १ श्लो० ३३ ) "युगे युगे" इत्यस्य व्याख्यायां स्मृतिः—

"समयश्चापि साधूनां प्रमाणं वेदवद्भवेदि"ति ॥

आपस्तम्बोऽपि ( सूत्रे )—

"धर्मज्ञसमयः प्रमाणं वेदाश्चे"ति ॥

तत्रैव ( श्लो० ३६ ) "चतुर्णामपि वर्णानामि"त्यत्र ।

आचारलक्षणं चानुशासनिके पर्वणि अभिहितम्—

"आचाराल्लभते चायुराचाराल्लभते श्रियम् ।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥

दुराचारो हि पुरुषो नेहायुर्विन्दते महत् ।
नाश्नन्ति चास्य भूतानि तथा परिभवन्ति च ॥
तस्मात्कुर्यादिहाचारं यदीच्छेद्भूतिमात्मनः ।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥
आचारलक्षणो धर्मः सन्तश्चाचारलक्षणाः ।
साधूनां च यथावृत्तमेतदाचारलक्षणम्" ॥

हारीतोऽपि स्मरति—

"साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु स सदाचार उच्यत" इति ॥

सन्तः शिष्टास्तेषां स्वरूपमाह भगवान् बौधायनः—

"शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिता" इति ॥

आरण्यपर्वणि—

"अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः ।
ऋजवः शमसम्पन्नाः शिष्टाचारा भवन्ति ते ॥
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो यशस्विनः ।
गुरुशुश्रूषवो दान्ता शिष्टाचारा भवन्ति ते" इति ॥

तेनाचारसम्प्रदाययोरैकार्थ्यं पुनः समर्थितम् ।

(शास्त्रसत्त्वेऽपि युक्त्या बोधनायाचार्योपयोग., वेदान्ताम्नास्तिक्यहानि., असच्छास्त्रासद्वादाभ्यासनिषेध)

वेदादौ प्रचुरतया निर्णीतेऽपि धर्मे सम्प्रदायस्यावश्योपयोगोऽपि दर्शितः, अन्यथा प्रवृत्त्यसम्भवात् । याज्ञवल्क्यस्मृतौ आचाराध्याये श्राद्धप्रकरणे (श्लो० ८) श्राद्धवर्ज्यब्राह्मणगणनायां "कर्मदुष्टाश्च निन्दिताः" इत्युच्यते। अत्र कर्मदुष्टाः शास्त्रविरुद्धकारिण इति व्याख्या । यदि शास्त्राण्येव स्वनिष्ठसर्वनिर्णयमात्रेण शक्नुयुः प्रवर्तयितुं न तर्हि कोऽपि तद्विरुद्धकारी स्यात् । तथा च सति परिगणनं व्यर्थं स्यात् । अतोऽवगम्यते सत्स्वपि शास्त्रेषु शिष्यबुद्ध्यनुसारिणा सम्यगुपदेशेन तदुक्तधर्माधर्मप्रवृत्तिनिवृत्तिप्रयोजक आचार्यसम्प्रदाय आवश्यक इति । किञ्चोक्तरीत्याऽवश्यसम्पाद्यस्य ब्रह्मज्ञानस्य सिद्ध्यर्थं मन्दोत्तमप्रज्ञानां बुद्ध्यनुसारेण सङ्क्षेपविस्तराभ्यां तदुपदेशः सम्प्रदायप्रयोजनमन्यथा बोधासम्भवात् । पराशरमाधवीयेऽत एवाहुराचार्याः—

"सङ्क्षेपविस्तराभ्यां हि मन्दोत्तमधिया नृणाम् ।
वस्तूच्यमानमेवान्तःकरणं तेन वर्ण्यत" इति ॥

बोधकस्य प्रशासितुरभावे तु चार्वाकाद्यनेकासच्छास्त्रसंसर्गादिना बहव एव नास्तिक्यमासाद्योपपातकिनः स्युः । तयोरुपपातकत्वं तु वदतो मनुयाज्ञवल्क्यावेकादशाध्याये (श्लो० ६६) "नास्तिक्यं चोपपातकमि"ति । तथा तृतीयाध्याये उपपातकानि प्रक्रम्यासच्छास्त्राधिगमनमिति च । अतस्तदभावोऽपि दृढवेदान्तज्ञानद्वारकः सम्प्रदायप्रयोजनम् । यथाह भट्टः—

"इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेने"ति ॥

अतः सत्साम्प्रदायिकग्रन्थेष्वेव निरन्तरमभ्यासो ब्रह्मज्ञानादिसिद्धये कार्यो न त्वन्यत्रेत्यभिप्रेत्याह मार्कण्डेयः—

"असत्प्रलापमनृतं वाक्पारुष्यं विवर्जयेत् ।
असच्छास्त्रमसद्वादमसत्सेवां च पुत्रके"ति ॥

(स्वमार्गरीतिषु प्रश्नोक्तयोर्नवीनत्वाशास्त्रीयत्वयो. खण्डनम्)

अथ यच्चोक्तं नवीनरीत्याऽशास्त्रीयया किं प्रयोजनमिति तत्र किमिदं नवीनत्वं नाम । किं वेदोक्तप्रकारतो वैलक्षण्यरूपं उत भवदाचार्यशङ्करनीलकण्ठाऽप्पयदीक्षिताद्युक्तापेक्षया वैलक्षण्यरूपं भवद्व्यक्त्यनभिमतत्वरूपं वा ? । नाद्यः । स्वरूपत एवासिद्धेः, अस्मदाचार्यैरपि निबन्धब्रह्मसूत्रभाष्यादिषु ब्रह्मस्वरूपस्य सर्वार्थनिर्णयपूर्वमीमांसाभाष्यादिषु धर्मस्वरूपस्य च सर्वांशतो वेदाद्यनुसारेणैव निर्णीततया वैलक्षण्यगन्धकथनस्यापि दुग्धे सूक्ष्मजन्त्वन्वेषणकल्पनात् । न द्वितीयः । एकतरवादिविरोधमात्रेणैव नवीनत्वसम्भवे नीलकण्ठस्य रामानुजमतस्तेनतया शङ्करनीलकण्ठादीनामपीतरेतरं ब्रह्मसविशेषत्वनिर्विशेषत्वजीवाणुत्वविशिष्टाद्वैतकेवलाद्वैतादिसिद्धान्तभेदप्रयुक्तस्य विरोधस्य जागरूकत्वेन तन्नयेष्वपि परस्परापेक्षया नवीनत्वस्य शक्योक्तिकत्वात् । अथेतरेतरविरोधसद्भावेऽपि तेषामनादिसिद्धश्रुत्याद्यवलम्बेन प्रवृत्तत्वान्न नूतनत्वमिति चेत्तर्ह्यस्मदाचार्याणामपि तथात्वान्न काऽपि क्षतिः । न तृतीयः । तथा सत्यर्वाचीनानां बार्हस्पत्यादिदर्शनान्तरकलुषिताशेषविशेषमतीनां केषाञ्चिद्विद्वेषाद्वेदादिष्वप्यभिरुच्यभावाचत्रापि नूतनत्वमापद्येत । न चैवमास्तिकेन प्रामाणिकेन वक्तुं शक्यमित्यलम् । यच्चोक्तमशास्त्रीययेति । किमत्र शास्त्रशब्देन वेदादिकं विवक्षितं, उत तदेकदेशः ? । अथ प्रकृतकालानुकूल्याल्लब्धशास्त्रभावाः सौगतादिग्रन्था वा ? । नाद्यः । अस्माकं रीतिषु वेदादिशास्त्रमूलकत्वस्यास्मत्परमाचार्येण बादरायणेनैव "शास्त्रयोनित्वात्, श्रुतत्वाच्च, श्रुतेश्च, शब्दमूलत्वादि"त्यादिषु निर्णीतत्वात् । अस्मन्नयोक्तधर्मब्रह्मस्वरूपयोर्वेदादिसत्प्रमाणैकमूलत्वस्यास्मदाचार्यैर्मीमांसाद्वयभाष्यादिषु महता प्रबन्धेन प्रपञ्चितत्वाच्च । न द्वितीयः । तथा सति दर्शपूर्णमासप्रतिपादकस्य श्रुतिभागस्य सोमाप्रतिपादकत्वेन तत्प्रतिपादकस्य

तस्य च दर्शपूर्णमासाप्रतिपादकत्वेनोभयोरप्यशास्त्रीयत्वापातात् । एवं सर्वस्याप्यशास्त्रीयत्वापत्त्या सर्वविप्लवप्रसङ्गाच्च । अथ तृतीयश्चेत्स्वीकुर्मः । अस्मत्साम्प्रदायिकरीतीनां जैनादिशास्त्रसिद्धत्वाभावात् ।

आस्तां चैष आस्माकीनरीतिषु तच्छास्त्रासिद्धत्वरूपो दोषः पतिव्रतासु कुलटावदनेकपुरुषविहाररसविरहितत्वदोषवदिति श्रीः ।

( वेदाद्यर्थानुवादकत्वेऽपि स्मृतिपुराणवद्बोधार्थत्वादाचार्यग्रन्थसार्थक्यम् )

नन्वास्तामेवं तथापि भवदाचार्यैः स्वग्रन्थेषु वेदोक्तमेवानूद्यते उत तद्विलक्षणमुच्यते ? । तत्राद्यश्चेत्, अदृष्टजनकैरपौरुषेयैर्वेदादिभिरेव तद्बोधसम्भवे पुनर्वृथा नवीनपौरुषेयग्रन्थकरणं व्यर्थं विशेषाभावेन पौनरुक्त्यापातात् । द्वितीयश्चेत्तर्हि वेदवैलक्षण्यान्नूतनत्वं पुनरापन्नमेवेति चेत्तर्हि तुल्यमेवेदं चोद्यं शङ्करयादवनीलकण्ठवैद्यनाथाप्पयदीक्षितादीनां भावत्कप्रस्थानप्रवर्तकानां प्रबन्धेष्वपि । अथवाऽल्पमेवेदमुत्तरितम् । वेदार्थमेव पुनर्निरूपयत्सु स्मृतिपुराणाद्यार्षग्रन्थेषु तदनुरोधिषु धर्मादिनिर्णायकेषु हेमाद्रिमाधवविज्ञानेश्वरादीनां ग्रन्थेष्वपि उक्तदोषस्य शक्यप्रसरत्वात् । अथ स्मृतिपुराणादीनां वेदार्थानुवादकत्वेऽपि त्रेतायुगीयानां किञ्चिदल्पबुद्धीनां वेदमात्रान्निर्णेतुमशक्तानामुपकाराय स्मृतयः । द्वापरयुगीयानां तादृशानां धर्मद्वैपर्याच्छ्रुतिस्मृतिभ्यामपि धर्मादिनिर्णयेष्वशक्तानामुपकाराय पुराणानि च प्रववृतिर इति बुद्धिसौकर्यार्थत्वात्तेषु नैष दोषः प्रसरतीति चेत्तर्हि कलियुगीयानामत्यल्पबुद्धीनां विविधबार्हस्पत्यसौगतादिदुर्मतभ्रामितानां श्रुतिस्मृतिपुराणेभ्योऽपि निर्णयकरणाऽनिपुणानां ब्रह्मज्ञानादिसम्पत्तये श्रीमदाचार्यादिभ्यो हरिभक्तिसागरेभ्योऽपि सज्जनहृदयकण्ठशिरोलङ्कारकारीणि तमोहारीणि सूक्तिरत्नानि प्रादुरभूवन्निति महत्तरो भाग्यवैभवो मोक्षप्रयोजकदैवसर्गोत्पन्नानाम् । अतः—

"अनादिवेदसिद्धेषु सम्प्रदायेष्वनादिषु ।
प्रवर्तितेषु श्रुतितो हरिणोद्धारकारिणा ॥
सहसैव नवीनत्वमशास्त्रीयत्वमीरयन् ।
भासि भोः प्राक्तनम्मन्यः परब्रह्माद्यपेक्षया ॥
वेदादौ नैव शास्त्रत्वं भवतोऽभिमतं किमु ।
शक्तो वक्तुमशास्त्रीयत्वं श्रौते कथमन्यथा" ॥

---

## अथ द्वितीयस्य चतुर्थोऽवान्तरः प्रश्नः आचार्यश्च कः ?

### ( द्वादशः प्रश्नः )

#### उत्तरम् ।

( परम्परया वैष्णवमन्त्रोपदेशकत्वादिरूपमाचार्यलक्षणम् )

किमत्र सम्प्रदायप्रवर्तकाचार्यलक्षणमेव विवित्सितं उत तद्व्यक्तिविशेषः ? । तत्राद्यश्चेत्, सारसङ्ग्रहे पाद्मे—

"सहस्रशाखाध्यायी च सर्वयज्ञेषु दीक्षितः ।
कुले महति जातोऽपि न गुरुः स्यादवैष्णवः ॥
यस्तु मन्त्रद्वयं सम्यगध्यापयति वैष्णवः ।
स आचार्यस्तु विज्ञेयो भवबन्धविनाशक" इति ॥

हारीतस्मृतावपि—

"आचार्यं संश्रयेत्पूर्वमनवद्यं वैष्णवं द्विजम् ।
शुद्धसत्त्वगुणोपेतं नवेज्याकर्मकारकम् ॥
सत्सम्प्रदायसम्पन्नं मन्त्ररत्नार्थकोविदम् ।
ज्ञानवैराग्यसम्पन्नं वेदवेदाङ्गपारगम् ॥
शासितारं सदाचारैः सर्वधर्मविदां वरम् ।
महाभागवतं विप्रं सदाचारनिषेविणम् ॥
आलोक्य सर्वशास्त्राणि पुराणानि च वैष्णवः ।
तदर्थमाचरेद्यस्तु स आचार्य इतीरितः" इति ॥

एवमन्यत्रापि—

"आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मात्तस्मादाचार्य ईरितः" इति ॥

पञ्चदशीप्रथमश्लोकव्याख्यायामागमवचनम्—

"परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन ।
योजयति परे तत्त्वे सदीक्षयाचार्यमूर्तिस्थ" इति ॥

( स्वमार्गीयप्राचीनाचार्यपरम्परा तद्बोधकानि शाण्डिल्यसंहितावाक्यानि )

अथ द्वितीयश्चेत्तर्हि "प्रपञ्चप्रादुर्भावावसरमारभ्य प्रवृत्तस्यानादिसम्प्रदायस्य एकयैव व्यक्त्या प्रशासितुमशक्यत्वेन भगवदाज्ञानुरोधेन क्रमाद्बहव एव त आविर्भूताः सन्ती"ति प्रश्नघटकैकवचनविरोधः । अथ बहूनामपि तेषां क्रमेण नामान्येव जिज्ञासा-

विषयाणीति चेत् ब्रूमः । तत्र परमतेषु "नारायणं पद्मभवं वसिष्ठमि"त्यादिवदस्माकमयमाचार्यपरम्परासङ्ग्रहश्लोकः—

"आदौ श्रीपुरुषोत्तमं पुरहरं श्रीनारदाख्यं मुनिम्
कृष्णं व्यासगुरुं शुकं तदनु विष्णुस्वामिनं द्राविडम् ।
तच्छिष्यं किल बिल्वमङ्गलमहं वन्दे महायोगिनम्
श्रीमद्वल्लभनाम धाम च भजेऽस्मत्सम्प्रदायाधिपमि"ति ॥

इयमेव चाचार्यपरम्परा विज्ञानेश्वरादिधृतवचनायां शाण्डिल्यसंहितायां भक्तिखण्डे पञ्चमाध्याये स्पष्टतयोच्यते—

"अथातः श्रूयतां विप्राः सम्प्रदायः पुरद्विषः ।
एकदा शङ्करो देवो गतो गोकुलमण्डलम् ॥
तत्र वृन्दावने रम्ये सच्चिदानन्दमन्दिरे ।
त्रिभङ्गललितं देवं कोटिमन्मथसुन्दरम् ॥
अनौपम्यं वेणुधरं व्रजस्त्रीगणसेवितम् ।
श्रुतिभिर्मुनिभिश्चैव सेव्यमानं मुदान्वितम् ॥
प्रणिपत्य मुदा देवं सामगानादतोषयत् ।
जगतो हि समुद्धर्तुं सम्प्रदायस्य लब्धये ॥
तस्मै ददौ प्रसन्नात्मा तत्रत्यानामनुग्रहात् ।
स लब्ध्वा परमं लाभं स्वधाम सन्न्यवर्तत ॥
परमानन्दसम्मग्नो नृत्यं चक्रे दिगम्बरः ।
समुपासत तं देवं तत्प्रष्टुं भृतकौतुकः ॥
न चाचष्ट तदा देवो हत्वा त्रिपुरमाहवे ।
तदा हर्षसमाविष्टो नारदेन प्रसादितः ॥
जगौ तमेव सन्मार्गं श्रुतं यच्छ्रीपतेर्मुखात् ।
नारदोऽपि महायोगी परमानन्दपूरितः ॥
अलं प्रसादतः प्रादाद्व्यासायामिततेजसे ।
कौण्डिन्याय मया प्रोक्तो गर्गाचार्यमहात्मने ॥
व्यासस्तु वक्ति पुत्राय ब्रह्मराताय विष्णवे ।
अथो कलौ सम्प्रवृत्ते पूर्वाचार्यैरथागतैः ॥
भविष्यति परा भक्तिः किञ्चित्कालं मुनीश्वराः
वेदवेदान्ततत्त्वज्ञैर्वैष्णवैर्ब्राह्मणोत्तमैः ॥
निर्वाहिता ततो भक्तिर्लुप्तप्राया भविष्यति ।
ततोऽपि श्रीपतेरस्य स्वीयानुग्रहतो हरेः ॥

माथुरे मण्डले तत्र गोकुलेऽस्मिन् गिरावपि ।
प्रादुर्भविष्यति महापुरुषैरुपभाविता ॥
तस्याः सम्प्रीतये तत्र सम्प्रदायं रिरक्षिषुः ।
महात्मा सुमहातेजा भगवद्वदनोदितः ॥
प्रादुर्भविष्यति ततः सर्वश्रुतिविशारदः ।
योगी योगीश्वरस्तं वै सम्प्रदायं वद्धिष्यति ॥
भगवानपि तं साक्षादुपदेष्टा निजागमम् ।
आसाद्य गोकुलं धाम भक्तिं संवर्धयिष्यति ॥
गिरिराजं ततः प्राप्य महात्मैकान्तिसंश्रयैः ।
निर्गुणं भक्तिमार्गं हि वर्धयन्विचरिष्यति ॥
निजात्मप्रेमसम्पूर्णैर्भगवद्ध्यानतत्परैः ।
तद्रसाप्लुतचित्तानां स्वाचारपरिवर्तिनाम् ॥
सर्वभूतैकसुहृदां वेदप्रामाण्यमीयुषाम् ।
विरलेष्वेव भविता सम्प्रदायोऽत्यनुत्तमः ॥
आश्चर्याणि चरित्राणि कृत्वा नानाविधान्यसौ ।
स्थापयिष्यति वै तस्याः पारम्पर्याक्रमं कुलम् ॥
समुद्धृत्य ततो जीवान् हरेः प्रीतिं करिष्यति ।
ततः कतिपये काले कालदोषप्रभावतः ॥
विलयं यास्यति पन्थाः कापथ्येनाकुलः परः ।
परदोषान्वितैः पुम्भिर्निजाचार्यपराङ्मुखैः ॥
इत्येवं हि समाख्यातः सम्प्रदायः पुरद्विषः ।
अयमेव परः पुण्यो भक्तिशास्त्रैकसम्मतः ॥
एतन्माहात्म्यमतुलं नालं वक्तुं चतुर्मुखः ।
अयं हरेः श्रीव्रजदेवतायाः अनुगृहीतः किल सम्प्रदायः ।
आविर्बभौ वेणुगृहीतवेदैर्विभावयध्वं त्रिपुरारिसम्मतम् ॥

अत्र विष्णवे विष्णुस्वामिनाम्ने इत्यर्थः भगवद्वदनोदितः श्रीवल्लभाचार्यः । श्रीमद्गोवर्धनधरवदनवैश्वानररूपत्वात् ।

( पुष्टिमार्गे पुरुषोत्तमस्य प्रथमाचार्यत्वं महादेवस्य द्वितीयाचार्यत्वं भक्तत्वं च )

तत्र परब्रह्मणः प्रथमाचार्यत्वं "वेदान्तविद्वेदविदेव चाहं" ( स्कं० ११ )-

"योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
इमं विवस्वते योगं प्रोक्तवानहमव्ययम्" ॥

( अ० ४ श्लो० २६ )—

"गोपकन्यासहस्रैस्तु पद्मपत्रायतेक्षणैः ।
अर्चितं भावकुसुमैस्त्रैलोक्यैकगुरुं परमि"ति ॥

एवमादि गीताश्रीभागवतगौतमतन्त्रादिवचनेष्वपि स्फुटम् । द्वितीयश्च पुष्टिमार्गस्याचार्यः शिव एवेति श्रुतिष्वप्युच्यते—

"त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादि"ति ॥

अस्यार्थं तु अग्रिमप्रश्नोत्तरेषु किञ्चिद् व्याख्यास्यामः । एवमेव श्रुत्यन्तरेष्वपि, यथा बृहन्नारायणोपनिषदि "अणोरणीयानि"त्यनुवाके—

"यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यत जायमानꣳ स नो देवः शुभया स्मृत्या संयुनक्तु ॥
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ।
ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोम्" ॥

इत्यादिषु स्पष्टतयोच्यते । तथा श्रीभागवतेऽपि चतुर्थस्कन्धे द्वितीयाध्याये ( श्लो० २ )—

"कस्तं चराचरगुरुं निर्वैरं शान्तविग्रहम् ।
आत्मारामं कथं द्वेष्टि जगतो दैवतं महत्" ॥

इति सर्वगुरुत्वं भगवद्भक्तत्वं चोच्यते । पुनस्तत्रैव षष्ठाध्याये ( श्लो० ३२ )—

"तस्मिन्महायोगमये मुमुक्षुशरणं सुराः ।
ददृशुः शिवमासीनं त्यक्तामर्षमिवान्तकम्" ॥

इति प्रशान्तस्य मुमुक्षुभिर्ज्ञानार्थमुपसत्तव्यस्य श्रीमहादेवाचार्यस्य वर्णनमुपक्रम्य ( श्लो० ३४ )—

"विद्यातपोयोगपथमास्थितं तमधीश्वरम् ।
चरन्तं विश्वसुहृदं वात्सल्याल्लोकमङ्गलम्" ॥

इति विश्वसौहृदाल्लोकमङ्गलस्य ब्रह्मविद्यामूलकसम्प्रदायस्य प्रवर्तकत्वमुक्त्वा तदुपदेशे मुख्यः को वा शिष्य इत्याकाङ्क्षायामुच्यते ( श्लो० ३६ )—

"उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम् ।
नारदाय प्रवोचन्तं पृच्छते शृण्वतां सताम् ॥
कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानुनि ।
बाहुप्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया ॥

तं ब्रह्मनिर्वाणसमाधिमाश्रितं व्युपाश्रितं गिरिशं योगकक्षाम् ।
सलोकपाला मुनयो मनूनामाद्यं मनुं प्राञ्जलयः प्रणेमुः" ॥

इति नारदस्यैव मुख्यशिष्यत्वं तत्सम्प्रदानकब्रह्मोपदेशादिकं च निरूपितम् । तस्माच्छ्रीमहादेवस्याऽप्यास्माकीनवैष्णवसम्प्रदायमुख्याचार्यत्वम् ।

( ब्रह्मादय स्वमार्गगा परगुरौ शिवैक्यभावनादि )

ब्रह्मादीनां च बहुश एतत्कृतसम्प्रदायवर्तित्वमेव । तृतीयस्कन्धे चतुर्थाध्याये शैववर्णनमुपक्रम्य ( श्लो० २८ )—

"ब्रह्मादयो यत्कृतसेतुपाला" इत्युक्तेः ।

किञ्च, वैष्णवसम्प्रदायाचार्यत्वादेव शिवैक्यभावनं परगुरौ प्रातः कर्तव्यमिति विधीयते । गौतमतन्त्रे सप्तमाध्याये ( श्लो० ७ )—

"ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेद्गुरुदैवतमि"त्युपक्रम्य ( श्लो० १० )—
"शिवेनैक्यं समुन्नीय ध्यायेत्परगुरुं धिया ।
मानसैरुपचारैश्च सन्तर्प्य मनसा सुधीः ॥
स्तोत्रैः स्तुत्वा नमस्कुर्यान्मन्त्रं देवे समन्वयेत् ।
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ॥
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ॥
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः" इति ।

( नारदस्याचार्यत्व शुद्धपञ्चरात्रकर्तृत्व शिवशिष्यत्व पत्यादिभ्यो मन्त्रग्रहणनिषेधश्च )

एवं नारदस्याप्याचार्यत्वम् । अत एव श्रीभागवते प्रथमस्कन्धे तृतीयाध्याये ( श्लो० ८ )—

"तृतीयमृषिसर्गं च देवर्षित्वमुपेत्य सः ।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः" ॥

इति भगवदवतारत्वं नैष्कर्म्यसम्पादकात्युत्तमपञ्चरात्राख्यवैष्णवसाम्प्रदायिकग्रन्थकारत्वं चोच्यते । तस्य शिवशिष्यत्वं त्वाह स एव पञ्चरात्रे प्रथमरात्रप्रथमाध्याये ( श्लो० ९ )—

"ज्ञानामृतं ज्ञानसिन्धोः सम्प्राप्य शङ्कराद्गुरोः ।
परावराच्च परमाद्योगीन्द्राणां गुरोर्गुरोः ॥
वेदेभ्यो दधिसिन्धुभ्यश्चतुर्भ्यः सुमनोहरम् ।
तज्ज्ञानमन्थदण्डेन सन्निर्मथ्य नवं नवम् ॥
नवनीतं समुद्धृत्य नत्वा शम्भोः पदाम्बुजम् ।
विधिपुत्रो नारदोऽहं पञ्चरात्रं समारभ" इति ॥

अत एव च ब्रह्मवैवर्ते ब्रह्मखण्डीयचतुर्विंशाध्याये—

"देहि मे कृष्णमन्त्रञ्च यन्मनोवाञ्छितं मम ।
तत्सम्बन्धि च यज्ज्ञानं यत्र तद्गुणवर्णनम्" ॥

इति नारदेन विज्ञापितोऽब्जयोनिः ।

"पत्युर्मन्त्रं पितुर्मन्त्रं न गृह्णीयाद्विचक्षणः ।
विरक्ताश्रमिणां चैव न पुत्रसुखदायकम्" ॥

इत्यादिकं हेतुपूर्वकमुक्त्वा—

"महेश्वरस्तव गुरुः प्राक्तनीनः पुरातनः ।
गच्छ वत्स शिवं शान्तं शिवदं ज्ञानिनां गुरुम् ॥
तत्रैव भगवन्मन्त्रं ज्ञानं लब्ध्वा पुरातनात् ।
नारायणकथां श्रुत्वा शीघ्रमागच्छ मद्गृहम्" ॥

इत्युक्त्वा शिवं प्रति नारदं प्रेषयामासेत्युक्तिरपि सङ्गच्छते ।

(व्यासादीनां श्रीमदाचार्यवंशपर्यन्तानामाचार्यत्वम्)

एवं व्यासशुकयोरप्याचार्यत्वं तु पुराणादिषु प्रसिद्धतरम् । इयं शुकपर्यन्ताचार्यपरम्परा गोपालतापनीयाद्युपनिषत्सु सविस्तरं महाभारतब्रह्मवैवर्तपाद्मगारुडविष्णुपुराणश्रीभागवतादिष्वपि तत्र तत्र प्रख्यातैव, तथा नारदपञ्चरात्रेऽपि सैव स्फुटतया निरूपिता । एवं विष्णुस्वामिप्रभृतीनां श्रीमद्वल्लभाचार्यश्रीविठ्ठलाचार्यपर्यन्तानां निरूपकाणि श्रुतिस्मृतिपुराणादिवचनानि तत्र तत्र चरित्रचिन्तामण्यादिग्रन्थेषूपन्यस्तान्येव । इहाप्युदाहृतायां शाण्डिल्यसंहितायामेतत्सर्वं कण्ठरवेणैव स्पष्टमक्लिष्टं निर्दिष्टमिति सम्यगिष्टसिद्धिरष्टस्वपिकाष्टासु दुष्टकामादिकष्टाविशिष्टानां शिष्टानाम् । अथ श्रीमदाचार्योत्तरं त्वियदवधि—

"दुर्वादान् दलयंस्तमः कवलयन् पङ्कानि सङ्क्षालयन्
सेवाद्यं कलयन् हरेः कुजनताचेतश्चयं ज्वालयन् ।
भक्तिं वैदिकयुक्तिभिः क्षितितले सर्वत्र सञ्चालयन्
श्रीमद्वल्लभवंश एष जयति स्वीयान् जनान्पालयन्" ॥

अतः सर्वं क्षेमम् । इत्थञ्चास्मन्मार्गाचार्याणाम्—

"परम्परा परा प्रोक्ता परमात्मपुरःसरा ।
चिराच्चराचराभीष्टा धरायां भक्तितत्परा ॥
गोपीपतिसमारम्भां श्रीविष्णुस्वामिमध्यमाम् ।
श्रीमदाचार्यपर्यन्तां स्तुतो गुरुपरम्पराम्" ॥

---

## अथ द्वितीयस्य पञ्चमोऽवान्तरः प्रश्नः

## ( त्रयोदशः प्रश्नः )

## तत्र वर्णनिर्देशो देशनिर्देशो वंशपरम्परानिर्देशश्च वक्तव्यः

उत्तरम् ।

अथ पूर्ववदिहापि कस्मिन्वर्णे देशे वंशे चोत्पन्न आचार्यो भवितुमर्हतीत्येव पृच्छ्यते—

"आहोस्विद्भवत्सम्प्रदायप्रवर्तका आचार्याः केषु वर्णदेशवंशेषूत्पन्नाः ? इति ॥

( ब्राह्मणस्यैव धर्मशासनाधिकारो वेदान्तविद उत्कर्षश्च )

तत्राद्यश्चेत्, न हि देशविशेषवंशविशेषयोर्नियम आचार्यत्वप्रयोजकः शास्त्रसिद्धोऽस्ति । तथापि ब्राह्मणवर्णोत्पन्नो मन्वादिप्रशंसितत्रैवर्णिकनिवासार्हार्यावर्तादिनीवृदुद्भूतो मातृपितृकुलशुद्ध एवाचार्यो भवितुमर्हतीति बहुशिष्टसम्मतम् । तत्र वर्णान्तरव्यावर्तनायाद्यं विशेषणम् । मन्वादिभिर्ब्राह्मणस्यैव धर्मप्रशासनाधिकारस्मरणात् यथाह प्रथमाध्याये मनुः ( श्लो० ९८ )—

"उत्पत्तिरेव विप्रस्य मूर्तिधर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥
ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।
ईश्वरः सर्वभूतानां धर्मकोषस्य गुप्तये" इत्यादि ॥

याज्ञवल्क्योऽपि प्रथमाध्याये दानप्रकरणे ( श्लो० १ )—

"तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च" ॥

इति वेदतदुपदिष्टधर्मयो रक्षणार्थं ब्राह्मणानामेव सृष्टत्वमभिधाय तत्रापि साधारणविप्रापेक्षया अध्यात्मविद्याप्रशासकानां सत्साम्प्रदायिकानामेव मुख्यतया वेदधर्मयो रक्षकत्वमित्याशयेनानुपदमेवाह ( श्लो० २ )—

"सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः ।
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमा" इति ॥

अत्र तमब्ग्रहणं साधारणवेदान्तिव्यावृत्त्या तद्विद्याप्रवर्तकाचार्यग्रहणार्थमिति भाति इत्थमेव मनुरपि ( अ० १ श्लो० ९६,९७ )

"भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥

ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिन" इति॥

एवमितरत्रापि दृश्यम्।

(ब्रह्मावर्तार्यावर्तादिस्वरूप, तत्रैव त्रैवर्णिकवासस्तत्रोत्पन्नो
विप्रो धर्मोपदेष्टा निषिद्धदेशश्च)

अथ म्लेच्छदेशादिनिषिद्धदेशोत्पन्नत्वव्यावर्तनार्थं द्वितीयं विशेषणम्। मन्वादिभिर्ब्रह्मावर्तादेरेव पुण्यदेशत्वस्य तत्रैव त्रैवर्णिकनिवासयोग्यत्वस्य तदुत्पन्नब्राह्मणस्यैव धर्मप्रशासकत्वस्य च निरूपणात्। तथाहि द्वितीयाध्याये मनुः (श्लो० १७)—

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षत" इति॥

तथा (श्लो० १९)—

"कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः॥
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥
हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः॥
आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः॥
एतान् द्विजातयो देशान् संश्रयेरन्प्रयत्नतः।
शूद्रस्तु यस्मिन् कस्मिन्वा निवसेद्वृत्तिकर्षितः" इति॥

बृहत्पराशरस्मृतावपि प्रथमाध्याये (श्लो० ४२)—

"हिमपर्वतविन्ध्याद्योर्विनशनप्रयागयोः।
मध्ये तु पावनो देशो म्लेच्छदेशस्ततः परः॥
देशेष्वन्येषु या नद्यो धन्याः सागरगाः शुभाः।
तीर्थानि यानि पुण्यानि मुनिभिः सेवितानि च॥
वसेयुस्तदुपान्तेषु शमिच्छन्तो द्विजा यतः।
मुनिभिः सेवितत्वेन पुण्यदेशः प्रकीर्तितः॥

यत्र पानमपेयस्य देशेऽभक्ष्यस्य भक्षणम् ।
अगम्यागमनं यत्र तं देशं परिवर्जयेत् ॥
एवं देशः समाख्यातो याज्ञिको हि द्विजन्मनाम् ।
एवमेवानुवर्तेरन् देशं धर्मानुकाङ्क्षिणः ॥
उषित्वा यत्र तत्रापि स्वाचारं न विवर्जयेत् ।
षट्कर्माणि प्रकुर्वीरन्निति धर्मस्य निश्चय" इति ॥

एवं पराशरमाधवीयेऽपि द्वितीयाध्याये कूर्मपुराणे—

"नाधार्मिकैर्वृते ग्रामे न व्याधिबहुले भृशम् ।
न शूद्रराजे निवसेन्न पाखण्डिजनैर्वृते ॥
हिमवद्विन्ध्ययोर्मध्यं पूर्वपश्चिमयोः शुभम् ।
मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेद्द्विज" इति ॥

इत्थमपरत्रापि प्रेक्ष्यम्—

( विगुणोऽप्याचार्यवश्यो गुरु· स्यात्, अश्रोत्रियोऽपि श्रोत्रियपुत्र उत्तमः,
प्राचीनाचार्योणा वर्णोद्देशाश्च )

अथ साङ्कर्यादिदोषवारणाय तृतीयं विशेषणम् । इयांस्त्विह विशेषः । यन्मुण्डकश्रुत्याद्युक्तेषु श्रोत्रियत्वब्रह्मनिष्ठत्वतात्त्विकब्रह्मविद्याप्रवचनत्वादिषु साम्प्रदायिकाचार्यगुणेषु मध्ये किञ्चिन्न्यूनगुणविशिष्टोऽपि पारम्परिकाचार्यवंश्यो वसुधायां यावदुपलभ्येत न तावत्तादृशस्याऽप्यन्यस्याऽऽचार्यत्वमसन्नये इति तृतीयाध्याये मनुना ( श्लो० १३६ )—

"अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः ।
अश्रोत्रियो वा पुत्रः स्यात् पिता स्याद्वेदपारगः ॥
ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता ।
मन्त्रसम्पूजनार्थं तु सत्कारमितरोऽर्हती"ति ॥

अश्रोत्रियपुत्रस्य साक्षाच्छ्रोत्रियस्याप्यपेक्षया स्वयमश्रोत्रियस्यापि श्रोत्रियपुत्रस्योत्कर्षं वदता स्वनिष्ठस्योत्कर्षाधायकगुणस्यापेक्षया पितृपरम्परानिष्ठस्य तस्याधिक्यबोधनात् । परे त्विह वैष्णवा भारद्वाजसंहितावचनमप्याहुः—

"न जातु मन्त्रदा नारी न शूद्रो नान्तरोद्भवः ।
नाभिशस्तो न पतितः कामकामोऽप्यकामिनाम् ॥
सप्तपुरुषातिविज्ञेयाः सन्ततैकान्तनिर्मले ।
कुले जातो गुणैर्युक्तो विप्रः श्रेष्ठतमो गुरुरि"ति ॥

अथ द्वितीयश्चेत्तर्ह्युच्यते । तत्र प्रथमाचार्यस्य सर्वकारणस्य सर्वेश्वरस्य श्रीपुरुषो-

त्तमस्य तु वर्णनिर्देशेनालम् । अथ शिवनारदयोर्व्यासादीनां स्ववंशसहितः श्रीमदाचार्यपर्यन्तानां च ब्राह्मणेष्वेव प्रादुर्भावोऽस्तीति निर्दिष्टो वर्णः । अथ देशा निर्दिश्यन्ते । तत्राद्याचार्यस्य तु स्वरोमरन्ध्रनिक्षिप्तानेकब्रह्माण्डमण्डलस्य न वयं देशनिर्णये शक्ताः । शिवस्य तु भगवद्धाम वा कैलासादिर्वासः । नारदस्य तु शबलाश्वादीनां शिष्यत्वकरणानन्तरं दक्षशापस्वीकारिणो न देशविशेषनियमः, किन्तु तस्य सर्वत्र पर्यटनमेव । "त्वं पर्यटन्नर्क इव त्रिलोकीमन्तश्चरो वायुरिवात्मसाक्षी", "कदाचिन्नारदो योगी लोकानुग्रहकाङ्क्षया । पर्यटन् सकलाँल्लोकानि"त्यादिषु श्रीभागवतब्रह्माण्डपुराणमहाभारतादिषु तत्र तत्र वर्ण्यते । एवं व्यासस्य यमुनाद्वीपप्रादुर्भूतस्य बदरिकाश्रमः स्थितिदेश इति । तथा शुकाचार्यस्य व्यासवेश्मन्याविर्भूतस्य जन्मतः प्रव्रजानां न स्थितौ विषयविशेषनियम इति च तत्र तत्र पुराणेतिहासादिषु प्रसिद्धमेव ।

(द्रविडादिदेशप्रशंसा, प्रयागमध्यदेशादिषु श्रुतयः)

अथ श्रीविष्णुस्वामिप्रभृतीनां श्रीमद्वल्लभाचार्यपर्यन्तानां प्रायो द्रविडकर्नाटकान्ध्रप्रान्ता एव देशा ऐतिह्यप्रसिद्धाः ।

एकादशस्कन्धेऽपि पञ्चमाध्याये ( श्लो० ३८ )—

"कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम् ।
कलौ खलु भविष्यन्ति नारायणपरायणाः ॥
क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः ।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ।
कावेरी च महापुण्या प्रतीची च महानदी ॥
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ।
प्रायो भक्ता भविष्यन्ति वासुदेवेऽमलाशयाः" ॥

इत्यादौ नारायणपरायणानामाचार्याणां प्रादुर्भावदेशाः प्राधान्येन द्रविडादय एव करभाजनाख्ययोगीश्वरेणाभिहिताः । अथ श्रीमदाचार्याणामग्निकुण्डात्प्रादुर्भावदेशोऽपि चम्पारण्याख्यः शाण्डिल्यसंहितायां श्रीहरेर्नामसहस्रे कलियुगीयावतारनामसु "चम्पारण्यकृतोदय" इत्यनेन तथात्वेनोक्तः । एवं तेषां स्थितिदेशा अपि श्रीव्रजप्रयागालर्कपुरवाराणसीचरणाद्रिमुख्यास्तत्र तत्र पुराणेतिहासादिषु शाण्डिल्यसंहितासनत्कुमारसंहितागर्गसंहितादिषु च प्रशंसिता एव । श्रुतिष्वपि ( ऋक्संहि० अष्ट० ८ अ० ३ )—

"सितासिते सरिते यत्र सङ्गथे तत्राप्लुतासो दिवमुत्पतन्ति ।
ये वै तन्वां३ विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते" ॥

( ऋक्संहि० अष्ट० ७ अध्या० ५ )—

"यत्र गङ्गा च यमुना च यत्र प्राची सरस्वती ।
यत्र सोमेश्वरो देवस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव" ।

तैत्तिरीयोपनिषदि—

"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमᳬ सचतापरुष्णिये"त्यादिषु मोक्षादिकारणतया श्राव्यन्ते । अतस्तेष्वेव श्रीमदाचार्याणां बहुशः स्थितिः । मन्त्रवर्णोऽपि गङ्गायमुनान्तरालदेशवास्तव्यानां भगवन्मननवतां महात्मनां प्रत्यहं सन्ध्यावन्दनादिषु नमस्करणीयत्वं श्रावयति—

"नमो गङ्गायमुनयोर्मध्ये ये वसन्ति ते मे प्रसन्नात्मानश्चिरं जीवितं वर्धयन्ति, नमो गङ्गायमुनयोर्मुनिभ्यश्च नमो नमो गङ्गायमुनयोर्मुनिभ्यश्च नम" इति ।

( पुण्यनद्यादिभगवदर्चातत्कीर्तनोत्साहवैष्णवसम्मर्दादियुक्ता देशा अतिपावनाः वासार्हास्तीर्थविशेषाश्च )

अथ श्रीमदाचार्यवंश्यास्तु उक्तमन्वादिवचनैः प्रशंसिते ब्रह्मावर्तादौ यत्र तत्र पुण्यनद्यादियुक्तेषु श्रीमत्पुरुषोत्तमप्रतिमातत्सेवाप्रवाहतत्कीर्तनमहोत्सवतद्भक्तसद्वैष्णवसमुदायादिभिरतिपावनतमेषु देशेषु समासते । तादृशदेशानां पुण्यतमत्वं तु श्रीभागवतादिषूच्यते । तथाहि, सप्तमस्कन्धे चतुर्दशाध्याये युधिष्ठिरं प्रति नारदः—

"अथ देशान्प्रवक्ष्यामि धर्मादिश्रेयआवहान् ।
स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ॥
बिम्बं भगवतो यत्र सर्वमेतच्चराचरम् ।
यत्र हि ब्राह्मणकुलं तपोविद्यादयान्वितम् ॥
यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् ।
यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः ॥
सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत ।
कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः ॥
नैमिषं फाल्गुनं सेतुः प्रभासोऽथ कुशस्थली ।
वाराणसी मधुपुरी पम्पा बिन्दुसरस्तथा ॥
नारायणाश्रमो नन्दा सीतारामाश्रमादयः ।
सर्वे कुलाचला राजन् महेन्द्रमलयादयः ॥
एते पुण्यतमा देशा हरेरर्चाऽऽश्रिताश्च ये ।
एतान्देशान्निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ॥
धर्मो ह्यत्रेहितः पुंसां सहस्राधिफलोदय" इति ॥

नारदपञ्चरात्रे च प्रथमरात्रे दशमाध्याये उपबर्हणाख्यगन्धर्वं प्रति पद्मयोनिः (श्लो० ६८)—

"कृष्णसङ्कीर्तनं तूर्णं पुनाति श्रुतिमात्रतः ।
श्रोतारञ्च प्रवक्तारं पुरुषैः सप्तभिः सह ॥
यत्रैव प्रभवेद्वत्स तन्नामगुणकीर्तनम् ।
तत्र सर्वाणि तीर्थानि पुण्यानि मङ्गलानि च ॥
तत्कीर्तनध्वनिं श्रुत्वा सर्वाणि पातकानि च ।
दूरादेव पलायन्ते वैनतेयमिवोरगाः ॥
तद्दिनं सफलं धन्यं यशस्यं सर्वमङ्गलम् ।
श्रीकृष्णकीर्तनं यत्र तत्रैव नायुषो व्ययः ॥
सङ्कीर्तनध्वनिं श्रुत्वा ये च नृत्यन्ति वैष्णवाः ।
तेषां पादरजःस्पर्शात् सद्यःपूता वसुन्धरा ॥
तत्कीर्तनं भवेद्यत्र कृष्णस्य परमात्मनः ।
स्थानं तच्च भवेत्तीर्थं मृतानां तत्र मुक्तिदम् ॥
नात्र पापानि तिष्ठन्ति पुण्यानि सुस्थिराणि च ।
तपस्विनाञ्च व्रतिनां व्रतानां तपसां फलमि"ति ॥

सारसङ्ग्रहे च वाराहपुराणे वसुमतीं प्रति भगवान्—

"जाह्नव्यादीनि तीर्थानि पापनिष्कृतिहेतवे ।
काङ्क्षन्ति हरिदासानां स्पर्शनं हरिदासवत् ॥
निवसन्ति महात्मानो यत्र चैकान्तिनो द्विजाः ।
देवा देवर्षयो नित्यं तं देशं पर्युपासते ॥
यत्र भागवता नित्यं पञ्चकालपरायणाः ।
निवसन्ति सदा युक्तास्तत्क्षेत्रं नैमिषं विदुः ॥
मद्भक्तजनसम्मर्दपादपांसुविसर्जनात् ।
चतुःसागरपर्यन्तं पावनं स्याद्वसुन्धरे" इति ॥

एवं निर्दिष्टो देशः । अथ वंशपरम्परां निर्दिशामः ॥ तत्र प्रथमाचार्यस्य सर्वकारणस्य परमात्मनो वंशनिर्देशेन कृतम् ।

(परशिवस्यादिसर्गे ब्रह्मभालोद्भवत्ववैष्णवत्व भक्तानामविनाशित्वादिरूपं माहात्म्यम्)

अथ द्वितीयाचार्यस्य परशिवस्य कस्मिंश्चित्कल्पे कमलासनभालोद्भवत्वमेव पुराणादिषु सिद्धतरम् । नारदपञ्चरात्रेऽपि द्वितीयरात्रद्वितीयाध्याये नारदं प्रति स एवाह (श्लो० १९)—

"मया श्रीकृष्णमन्त्रश्च कृष्णालये मुने पुरा ।
गोलोके विरजातीरे नीरे क्षीरनिभेऽमले ॥
शतलक्षजपं कृत्वा पुण्ये वृन्दावने वने ।
श्रीकृष्णानुग्रहेणैव मन्त्रः सिद्धो बभूव मे ॥
ब्रह्मभालोद्भवोऽहं च सर्वादिसर्गतो मुने ।
प्राप्तं मृत्युञ्जयं ज्ञानं कृष्णाच्च परमात्मनः ॥
सिद्धो मृत्युञ्जयोऽहं च नित्यनूतनविग्रहः ।
ब्रह्मणः पतनेनैव निमेषो मे यथा हरेः ॥
एवं तेषां पार्षदानां नास्ति मृत्युर्यथा हरे"रिति ॥

तत्रैव प्रथमरात्रे चतुर्दशाध्याये ब्रह्माणं प्रति स एव ( श्लो० १२ )—

"अहं न पाता न स्रष्टा न संहर्ता च जीविनाम् ।
निर्लिप्तोऽहं तपस्वी च हरेराराधनोन्मुखः ॥
संहारविषयं मह्यं श्रीकृष्णश्च पुरा ददौ ।
दत्वा रुद्राय तदहं तपस्यासु रतो हरेः ॥
तदर्चनेन ध्यानेन तपसा पूजनेन च ।
स्तवेन कवचेनैव नाममन्त्रजपेन च ॥
मृत्युञ्जयोऽहमधुना न च कालाद्भयं मम ॥
कालः संहरते सर्वं मां विना च तथेश्वरम् ।
पुरा सर्वादिसर्गे च कस्यचित्स्रष्टुरेव च ॥
भालोद्भवाश्च ते रुद्रास्तेष्वेकोऽहश्च शङ्करः ।
कल्पश्च ब्रह्मणः पाते लये प्राकृतिके तथा ॥
सर्वे नष्टा विषयिणो न भक्ताश्च यथेश्वरः ।
असङ्ख्यब्रह्मणां पातः कल्पश्चासङ्ख्य एव च ॥
समतीतः कतिविधो भविता वा पुनः पुनः ।
श्रीकृष्णस्य निमेषेण ब्रह्मणः पतनं भवेत् ॥
तत्र प्राकृतिकाः सर्वे तिरोभूताः पुनः पुनः ।
न प्राकृतो न विषयी नित्यदेही च वैष्णवः ॥
हरेर्वरेणामरोऽहं शिवाधारस्ततः शिवः ।
जलप्लुतं च विश्वौघं लये प्राकृतिके ध्रुवम् ॥
आब्रह्मलोकपर्यन्तं परं कृष्णालयं विना ।
सर्वा देव्यो विलीनाश्च कृष्णः सत्यं सुनिश्चितम् ॥

सर्वे पुमांसो लीनाश्च सत्ये नित्ये सनातने ।
अहं कृष्णश्च प्रकृतिः पार्षद्प्रवरो हरेः ॥
नित्यं नित्या विद्यमाना गोलोके च निरामये ।
एक ईशो न द्वितीय इति सर्वादिसर्गतः ॥
न हि पश्यन्ति सद्भक्ताः प्रकृतिं प्राकृते लये ।
तस्य भक्तोत्तमानाञ्च सततं स्मरणेन च ॥
आयुर्व्ययो न हि भवेत् कथं मृत्युर्भविष्यति ।
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ॥
तेषां भक्तोत्तमानाञ्च सततं स्मरणेन च ।
जन्ममृत्युजराव्याधिभयं नाप्युपजायते" इति ॥

एवं नारदस्याप्यरविन्दजनिनन्दनत्वममन्दमार्षग्रन्थेषूद्घुष्यते ।

( व्यासस्य पूर्वपुरुषा: सर्वे वैष्णवा , विष्णुस्वाम्यादिपरम्परालेश प्रश्नाशुद्धिश्च )

अथ व्यासस्यापि पूर्वपुरुषपरम्परा पुरुषु पुराणेतिहासादिषु प्रसिद्धतरा । पञ्चरात्रेऽपि प्रथमरात्रप्रथमाध्याये शुकं प्रति स्वयमेवाह ( श्लोक० २८ )—

"सत्यं विधाता भगवान् परं कृष्णपरायणः ।
कृष्णभक्तो वसिष्ठस्तु तत्सुतो वैष्णवः स्वयम् ॥
वैष्णवस्तत्सुतः शक्तिः कृष्णध्यानैकमानसः ।
पराशरश्च तत्पुत्रः कृष्णपादाब्जसेवया ॥
जीवन्मुक्तो महाज्ञानी योगीन्द्राणां गुरोर्गुरुः ।
अहं वेदविभक्ता च श्रीकृष्णपादसेवया ॥
गुरुर्मे भगवान् साक्षाद्योगीन्द्रो नारदो मुनिः ।
गुरोर्गुरुर्मे शम्भुश्च योगीन्द्राणां गुरोर्गुरुः ॥
तेषां पुण्येन पुत्रस्त्वं पुण्यराशिश्च मूर्तिमान् ।
पद्मानां मम पुंसां च प्रकाशो भास्करः स्वयम् ॥
श्रीकृष्णचरणाम्भोजं पादाब्जं नारदेशयोः ।
सरस्वतीं नमस्कृत्य ज्ञानं वक्ष्ये सनातनमि"ति ॥

एतेन शुकस्यापि सा निर्दिष्टैव । अथ साक्षाच्छुकाचार्यान्तेवासिनं द्रविडप्रान्तवासिनं प्राञ्चमस्मदाचार्यं श्रीविष्णुस्वामिनमारभ्य श्रीमद्वल्लभाचार्यपर्यन्तानामपि यज्ञनारायण-भट्टादयः कतिचित् पूर्वपुरुषा अस्मदुपाख्यानग्रन्थेषु सन्ति निर्दिष्टास्ते द्रष्टव्याः । ननु कतिचिदित्यनेन वंशपरम्पराप्रश्नोत्तरं साकल्येन न लभ्यत इति चेत्तर्हि विधातारमारभ्य एतावदवधि समग्रा वंशपरम्परा तु न केनापि निर्देष्टुं शक्यैवेति चेत्तर्हि भवन्तमेव

पृच्छामो विधिमवधीकृत्य भवत्पूर्वपुरुषाः कति, किंनामानः, किंकर्माणश्चासन्निति। तस्मादलमीदृशैः काकदन्तपरीक्षाकल्पैर्विचारैः। अस्मिन्प्रकृतप्रश्ने वर्णदेशवंशपरम्पराणां जिज्ञासितत्वेऽपि दिशेरुच्चारणक्रियस्य घञन्तरूपं कर्मतया निर्दिश्य वक्तव्य इति। तव्यदन्तवचिप्रयोगस्तु पाण्डित्यात्। कथनं कथनीयमितिवत्। युक्तं तु निर्देशः कर्तव्य इति त्रिष्वपि निर्देशपदं त्याज्यमिति वा। इत्थञ्च—

"कृतदेशादिनिर्देशा उमेशादिमदैशिकाः।
जयन्तु स्वपर्थाचारान्नयन्तु श्रीहरिं निजान्" ॥

---

## (चतुर्दशपञ्चदशषोडशाः प्रश्नाः)

## अथ द्वितीयस्यावान्तराः षष्ठसप्तमाष्टमप्रश्नाः। पेषणयन्त्रनिपतितकणवदेकहेलया निराक्रियन्ते, ते यथा

किञ्च, ब्राह्मणादृतेऽन्यवर्णोऽपि स्वस्याचार्यत्वं कर्तुं शक्नोति न वा?। शक्नोति चेत्तदा शास्त्रविरुद्धम्, नो चेत्तदा कुत आचार्यत्वम्?। तदुपदेश्याश्च हीनवर्णोपदेश्याः कथं कल्याणभागिनः स्युः?।

### उत्तरम्।

(स्वमार्गे तदप्रसक्ति)

अस्माकं सम्प्रदाये श्रीमहादेवाचार्यादारभ्य स्वरूपेण इदानीं स्ववंशरूपेण च स्वसम्प्रदायानुशासनकारिश्रीमद्वल्लभाचार्यचरणपर्यन्तं न कोऽपि ब्राह्मणातिरिक्तवर्ण आर्यतरमाचार्यकार्यमात्मन्याचार्यत्वमवधार्य कृतवान्। युक्तं चैतत्। "वर्णानां ब्राह्मणो गुरुः", "ब्राह्मणो नितरां गुरुरि"त्याद्यनेकवचनेभ्यः। अत इयन्मात्रेणैव द्वितीयप्रश्नावयवभूताः षष्ठसप्तमाष्टमाः प्रश्नाः प्रदत्तोत्तरा इति श्रीः। येषां च सम्प्रदाये स्वेच्छया वा शापादिवशाद्वा क्षत्रादिवर्णेष्ववतीर्णा अपि महानुभावा भगवदाज्ञया भक्तिधर्मोपदेशादिकं कृतवन्तः सन्ति, सन्तस्ते भवन्तमुत्तरवितरणेन मूकीकर्तुं समर्था इति न वयमेतत्पर्यनुयोगार्हाः। इत्थम्—

"सम्प्रदायोत्पत्तिकालाचार्यपङ्क्त्यादिकर्मकः।
दत्तोत्तरो द्वितीयोऽयं प्रश्नः प्रश्नैः सहाष्टभिः" ॥

इति द्वितीयाष्टकम् ॥

---

## अथ तृतीयः प्रधानः प्रश्नः,
## भवतामुपदेश्याश्चत्वारो वर्णास्त्रयो द्वावेको वा ?

### उत्तरम् ।

( उत्तरकारिका. सम्प्रदायस्य पुनश्चतुर्वर्णनिष्ठता )

"जगदुद्धारचतुरो वर्णांस्तु चतुरो हरिः ।
उद्धर्तुं सम्प्रदायं स्वं पुरा प्राह पुरारये ॥
मन्त्रग्रहे भगवतस्ततस्तन्नित्यसेवने ।
यथाधिकारे भगवज्ज्ञाने च गुरुदर्शिते ॥
ततो मुक्तौ च भुक्तौ च चतुर्णामधिकारिता ।
अविशेषान्मुमुक्षाया उपदेश्यास्ततोऽखिलाः" ॥

एतत्सर्वं "किंवर्णनिष्ठ" इत्यस्योत्तरे पूर्वमेव विस्तरात् प्रपञ्चितम्, अयं प्रश्नश्च तस्यैव प्रपञ्चनरूपश्चतुःषष्टिसङ्ख्यापूरणाय पुनः कृत इति तदुत्तरेणैव दत्तोत्तरो वेदितव्य इति शिवम् ।

---

## ( सप्तदशाष्टादशौ प्रश्नौ )

### अथास्य तृतीयप्रश्नस्याङ्गप्रश्नप्रतिपादकान्यष्टौ वाक्यानि, तत्र प्रथमद्वितीये यथा ।

तत्र त्रयो वर्णा द्विजातयस्तेषु गर्भाधानादिसंस्कारपूर्वकं यज्ञोपवीतादिग्रहणं सावित्रीग्रहणं च मुख्यम् ।

तद्दते जातित्वाभावाद्व्रात्यत्वं यथा तथा भवदुपदेशाभावेऽपि किम् ?, तथात्वे सर्वेषां भवदुपदेशाभावाद्व्रात्यत्वं स्नानदानादिकं वृथा स्यात्, तन्न शास्त्रसम्मतं विद्वत्सम्मतं च, नो चेत्कुतो विशेषाग्रहः ? ।

### उत्तरम् ।

( प्रथमप्रश्ने दोषस्तदुत्तरञ्च )

अत्राद्यवाक्ये जिज्ञासाबोधककिमादिपदाभावात् प्रष्टव्यांश एव न स्फुटीभवति । यदि तु त्रैवर्णिकानामेतन्मुख्यं न वेत्येवं विचिकित्सितं तदा तु एकतरनिर्धारफलकविरुद्धकोटिद्वयोद्भावनार्थं न वेति विकल्पबोधकपदलेखोऽपेक्षितः । अत्रोत्तरं तु शास्त्रसिद्धत्वात्त्रैवर्णिकानां गायत्रीग्रहणमपि मुख्यमेवेति को वा प्रामाणिकोऽनुन्मत्तो न ब्रूयात् । इदमेव मुख्यं न त्वन्यत् किमपीति तु न प्रामाणिकेन शक्यं वक्तुम् ।

वक्ष्यमाणरीत्या वैष्णवमन्त्रग्रहणस्याप्यावश्यकत्वात् । यदि तु भवदुपदेशाभावेऽपि किमित्यन्तः प्रथमः प्रश्नः, तदा तु प्रश्नपत्रेऽङ्कनिक्षेपः प्रमादात् । उत्तरं त्वनुपदमुच्यते ।

( द्वितीयप्रश्नाभिप्राय उत्तरकारिकाश्च )

अथावान्तरद्वितीयप्रश्ने गायत्रीग्रहणमन्तरा त्रैवर्णिकानां द्विजत्वासिद्ध्या यथा व्रात्यत्वमत्यनिष्टं स्ववरणायोपदेशस्यावश्यकत्वफलकं भवति तथा भवतां वैष्णवसाम्प्रदायिकानां मन्त्राणामुपदेशाग्रहणेऽपि किं तादृशमनिष्टं येनोपदेशग्रहणावश्यकता सिद्ध्येदित्यभिप्रेत्य यदुक्तं तत्रोत्तरं ब्रूमः—

"श्रीकृष्णदेवमन्त्राणां वैष्णवात्सम्प्रदायतः ।
अभावे तूपदेशस्य वैष्णवत्वं न सिद्ध्यति ॥
असिद्धौ वैष्णवत्वस्य भक्तिज्ञाने सुदुर्लभे ।
अलाभे ज्ञानभक्त्योस्तु हरितोषः कुतस्तराम् ॥
हरिप्रसादशून्यस्य कुतो मुक्तिः कुतः सुखम् ।
अतो मोक्षादिसिद्ध्यर्थं तदावश्यकता मता ॥
किञ्चोक्तं त्रिषु गायत्र्यावश्यकत्वं त्वयाऽपि तु ।
उपदिष्टापि गायत्री स्वार्थज्ञानमपेक्षते ॥
जपेन फलसिद्ध्यर्थं तदर्थस्तु हरिः स्वयम् ।
गायत्रीद्वारतश्चेतोऽर्पणं कृष्णे निगद्यते ॥
इत्थं समन्वयाध्याये निर्णीतमपरत्र च ।
अवश्यमुपदेशोऽतः स स्यात्तस्याः फलाप्तये ॥
तमन्तरा नाधिकारः श्रीहरेः सेवनादिके ।
हेतौ चतुःपुमर्थानामतश्चावश्यको मतः ॥
अन्यानि चास्य धन्यानि फलानि विमलानि तु ।
सकलानि प्रमापूरैः प्रापञ्च्यन्त चिरन्तनैः" ॥

( शरणागतौ श्रुतिस्मृतिपुराणानि )

तथाहि मुमुक्षूणां हि शरणागतिरेव मुख्यसाधनतया गोपालपूर्वतापनीये श्रूयते—

"यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै गोपायति कृष्णः, यस्तं देवमात्मवृत्तिप्रकाशं मुमुक्षुर्वै शरणमनुव्रजेदि"ति ॥

श्वेताश्वतरेऽपि—

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तꣳह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति गीतायामपि ( अ० ९ ) "मां हि पार्थ व्यपाश्रित्ये"ति ।

(अ० ७ श्लो० १४)—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति ॥

(अ० १८)—

"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजे"ति ॥

विष्णुपुराणे (अं० १ अ० ९ श्लो० ५९)—

"तावदार्तिस्तु सा वाञ्छा तावन्मोहस्तथाऽसुखम् ।
यावन्नायाति शरणं त्वामशेषाऽघमोचनमि"ति ॥

श्रीभागवते चैकादशस्कन्धपञ्चमाध्याये (श्लो० ४१)—

"देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तमि"ति ॥

अतः सद्गुरुद्वारा भगवच्छरणागतिरेव प्रथमं मोक्षसाधनम् ।

(वैष्णवान्मन्त्रग्रहण, अवैष्णवात्तन्निषेध , वैष्णवात्तद्ग्रहणे वैष्णवत्व, मोक्षश्च)

इदं च शरणमन्त्रादिवैष्णवमन्त्रग्रहणं वैष्णवसाम्प्रदायिकाचार्यादेवेति विस्तरेण प्रागुपपादितम्—

"अवैष्णवोपदिष्टं तु पूर्वमन्त्रं परित्यजेत् ।
पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेन्मनुम् ॥
सहस्रशाखाध्यायी च सर्वयज्ञेषु दीक्षितः ।
कुले महति जातोऽपि न गुरुः स्यादवैष्णवः" ॥

इत्यादिपद्मपुराणादिवचनैः । नारदपञ्चरात्रेऽपि द्वितीयरात्रे (श्लो० ११)—

"स्मरणं कीर्तनं चैव वन्दनं पादसेवनम् ।
पूजनं सततं भक्त्या परं स्वात्मनिवेदनम् ॥
गृह्णाति भक्तो भक्त्या च कृष्णमन्त्रं च वैष्णवात् ।
अवैष्णवाद्गृहीत्वा च हरिभक्तिर्न वर्धते ॥
चाण्डालादपि पापी स श्रीकृष्णविमुखो नरः ।
निष्फलं तद्धर्मकर्म नाधिकारी स कर्मणाम् ॥
शश्वदशुचिः पापिष्ठो निन्दां कृत्वा हसत्यपि ।
भगवन्तं भागवतमात्मानं नैव मन्यते ॥
गुरुवक्त्रात् कृष्णमन्त्रो यस्य कर्णे विशेदहो ।
तं वैष्णवं महापूतं प्रवदन्ति पुराविदः ॥

मन्त्रग्रहणमात्रेण नरो नारायणात्मकः ।
पुरुषाणां शतैः सार्धं स्वात्मानञ्च समुद्धरेत् ॥
मातामहानां शतकं सोदरं मातरं सुतम् ।
भृत्यं कलत्रं बन्धुं च शिष्यवर्गांस्तथैव च ॥
यदा नारायणक्षेत्रे मन्त्रं गृह्णाति वैष्णवात् ।
विष्णुः पुंसां सहस्रं च लीलया च समुद्धरेत्" ॥

इत्यवैष्णवान्मन्त्रग्रहणनिषेधं वैष्णवगुरुसकाशाद्गृहीतभगवन्मन्त्रत्वमेव सामान्यतो वैष्णवलक्षणं च वक्ति । ब्रह्मवैवर्ते चाद्यखण्डैकादशाध्याये तदेव सामान्यतो वैष्णवत्वं प्रथमसोपानभूतं तथैव लक्ष्यते—

"गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविश्यति ।
तं वैष्णवं महापूतं जीवन्मुक्तं वदेद्विधिरि"ति ॥

एवं मन्त्रग्रहणस्य मुक्तिकारणत्वं तु पञ्चरात्रेऽपि द्वितीयरात्रसप्तमाध्याये शिव आह (श्लो० २७)—

"परं राधेशयोर्मन्त्रग्रहणं वैष्णवाद्द्विजात् ।
शुद्धे नारायणक्षेत्रे परं निर्वाणकारणमि"ति ॥

(वैष्णवत्वाभाववत सत्कर्मानुपयोगित्वादिक, तत्स्थापितप्रतिमानामवन्द्यत्वादिभगवद्दास्यप्रशंसा च)

वैष्णवत्वाभाववतः फलं तूच्यते सङ्ग्रहे भविष्यपुराणे—

"तीर्थस्नानफलं नास्ति भूगोदानफलं तथा ।
अवैष्णवस्य विप्रस्य सर्वं शश्वद्विनश्यति ॥
रूपलावण्यसंयुक्ता महावंशोद्भवा द्विजाः ।
अवैष्णवा न शोभन्ते निर्गन्धा इव किंशुकाः ॥
विद्याविनयसम्पन्ना विशालकुलसम्भवाः ।
विष्णुभक्तिविहीना ये चाण्डालसदृशाः स्मृताः ॥
सर्वभूतदयायुक्तं वैष्णवं द्वेष्टि यो नरः ।
स चाण्डालो महापापी रौरवं नरकं व्रजेदि"ति ॥

परे तु वैष्णवा वचनान्तराण्यप्याहुः—

"अवैष्णवेन विप्रेण स्थापिते मधुसूदने ।
तद्राष्ट्रं भूपतिर्वापि विनाशमुपजायते" ॥

पञ्चरात्रे—

"अमन्त्रमर्चनं कुर्यादकाले पूजयेद्धरिम् ।
ग्रामनाशं च दुर्भिक्षं राजराष्ट्रं विनश्यति ॥

अवैष्णवस्थापितानां प्रतिमानां च वन्दनम् ।
यः करोति स मूढात्मा रौरवं नरकं व्रजेत् ॥
तस्मादवैष्णवान्विप्रान्न कर्मणि नियोजयेत् ।
महाभागवतं तत्र अर्चायां वरयेत्सुधीः ॥
न दासा वासुदेवस्य सर्वलोकेश्वरस्य ये ।
तेषां हि नरके वासः कल्पायुतशतैरपि ॥
स्वजीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर" ॥

नारदपञ्चरात्रे—

"अज्ञानाद्यदि वा ज्ञानादशुभं यत्कृतं मया ।
क्षन्तुमर्हसि देवेश दास्येन च गृहाण माम् ॥
न जाने कर्म यत्किञ्चिन्नापि लौकिकवैदिकम् ।
न निषेधविधिं विष्णो तव दासोऽस्मि केवलम्" ॥

नवमस्कन्धे दुर्वासाः—

"यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किं वा दासानामवशिष्यत" इति ॥

पुराणान्तरे—

"दास्यमेव परो धर्मो दास्यमेव परं हितम् ।
दास्येनैव भवेन्मुक्तिरन्यथा नरकं व्रजेत् ॥
विष्णोर्दास्यपरा भक्तिर्येषां तु न भवेत् क्वचित् ।
तेषामेव हि संसृष्टो निरयो ब्रह्मणा नृप ॥
नारायणस्य दासा ये न भवन्ति नराधमाः ।
जीवन्त एव चाण्डाला भविष्यन्ति न संशयः" इति ॥

अथ श्रीभागवते च सप्तमस्कन्धे नवमाध्याये ( श्लो० १० )—

"विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति सकुलं न तु भूरिमान" इति ॥

( वैष्णवमन्त्रग्रहणे फल तत एव भक्तिज्ञानादि )

एवं वैष्णवत्वस्य सत्साम्प्रदायिकवैष्णवाचार्यसकाशाद्भगवन्मन्त्रोपदेशग्रहणैकसाध्यत्वं वैष्णवत्वाभावे बहुतरमनिष्टं चोपपादितम् । आचार्यसकाशाद्वैष्णवमन्त्रग्राहिणः फलं तु—

"मन्त्रोपदेशमात्रेण नरा मुक्ताश्च भारते ।
पूर्वैश्च कोटिपुरुषैः परैः सार्धं हरेरहो ॥
कोटिजन्मार्जितात्पापान्मन्त्रग्रहणमात्रतः ।
मुक्ताः शुद्ध्यन्ति यत्पूर्वं कर्म निर्मूलयन्ति च ॥
पुत्रान् दाराश्च शिष्यांश्च सेवकान् बान्धवांस्तथा ।
यो दर्शयति सन्मार्गं सद्गतिस्तस्य भवेद्ध्रुवम्" ॥

इति ब्रह्मवैवर्तब्रह्मखण्डे ब्रह्माणं प्रति नारदवाक्यैरेवंजातीयकैर्वचनान्तरसहस्रैश्च तत्र तत्र पुराणादिषु दर्शितमेव, किञ्च, सत्साम्प्रदायिकाचार्योपदेशमन्तरा तात्त्विकं ब्रह्मज्ञानमेव न सिद्ध्येत्, श्रीहरेरेव परब्रह्मत्वात् । तात्त्विकतज्ज्ञानस्य निरतिशयभक्तिप्रवर्तकवैष्णवसिद्धान्तानुसारेणैव सम्भवादित्यादि पुरैव समर्थितम् "भक्त्या मामभिजानाति यावान् यश्चाऽस्मि तत्त्वतः । आचार्यवान् पुरुषो वेदे"त्यादिभिः । अथ कथञ्चिदक्षरब्रह्मविषयकस्य शुष्कज्ञानस्य सम्भवेऽपि क्लेशाधिक्यम्, "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामि"ति गीतावाक्यात् । भक्तिशून्यत्वेन पुरुषोत्तमप्राप्त्यादिलक्षणोत्तमफलासाधकत्वे वैफल्यं च—

"श्रेयः स्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम्" ॥
"ज्ञाने प्रयासमुदपास्ये"त्यादि श्रीभागवतादिवाक्यैः ॥

भक्तिश्च सत्साम्प्रदायिकभगवन्मन्त्रद्वाराऽऽत्मनिवेदनेनैव सिद्ध्यति । एकादशीयैकोनविंशाध्याये "पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमि"ति प्रेमलक्षणभक्तेः परमकारणकथनं प्रतिज्ञाय "श्रद्धामृतकथायां मे" इत्यादिना श्रवणकीर्तनादीन्युपदिशता भगवता समाप्तौ—

एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।
मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते" ॥

इत्यात्मनिवेदनस्याऽधिकाररूपताबोधनात्तदभावेनाधिकाराभावेन कृतस्यापि श्रवणादेर्मुख्यत्वस्याशक्यवचनत्वात् । तेन "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इत्यादिमैत्रेयीब्राह्मणादिश्रुत्युक्तं ज्ञानसाधनं श्रवणादिकमपि मन्त्रोपदेशवत एव साधीय इति तात्त्विकं ज्ञानमपि तादृशस्यैव सिद्ध्येदिति भाति ।

( वैष्णवमन्त्रग्रहणादेव भगवत्सेवादावधिकारः सद्गुरुलक्षणं, कण्ठरवेण सम्प्रदायप्रशंसा च )

किञ्च, भक्तेः "भज इत्येष वै धातुः सेवायां परिकीर्तितः । तस्मात्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी"ति गारुडसमाप्तिदशास्थविष्णुभक्त्यध्यायवाक्ये भगवत्सेवारूपत्वमप्युच्यते—

"भगवत्सेवादौ च भगवन्मन्त्रशून्यस्य नाधिकारः"

इति तु ब्रह्मवैवर्तादिषु शतश उक्तम् । गौतमतन्त्रे च पञ्चमाध्याये ( श्लो० १ )—

"यद्यदुक्तं त्वया ब्रह्मंस्तत्तत्सर्वं श्रुतं मया ।
इदानीं परिपृच्छामि केनात्र चाधिकारिता" ॥

इति गौतमप्रश्नानन्तरं नारदः ( श्लो० २ )—

"दीक्षायां चाधिकारित्वं प्राप्नोति गुरुसेवकः ।
द्विजानामनुपेतानां स्वकर्माध्ययनादिषु ॥
यथाधिकारो नास्तीह सन्ध्योपासनकर्मसु ।
तथाह्यदीक्षितानां तु मन्त्रदेवार्चनादिषु ॥
नाधिकारोऽस्त्यतः कुर्यादात्मानं शिवसंस्कृतम् ।
अत एव हि दीक्षार्थं सर्वज्ञं गुरुमाश्रयेत् ॥
सुन्दरः सुमुखः स्वस्थः सुवासा बहुतन्त्रवित् ।
असंशयः संशयच्छिन्निरपेक्षो गुरुर्मतः ॥
वेदवेदान्तवेदाङ्गसिद्धान्तज्ञानपारगः ।
वाङ्मनःकायचित्तैश्च विष्णोः शुश्रूषणे रतः ॥
विष्णुमन्त्रानुसन्धायी विष्णुविज्ञानवेदकः ।
विष्णौ समर्पकः सम्यक् त्रिविधोपात्तकर्मणः ॥
सम्मतः सत्सु दान्तश्च मन्त्रार्थज्ञानपारगः" ॥

इत्यादिना मन्त्रोपदेष्टृगुरुस्वरूपं निरूपयन् ( श्लो० १० )—

"नमोऽस्तु गुरवे तस्मै प्रत्यक्षाय यदाज्ञया ।
मृद्भसदारुदृपदः फलन्त्यविकलं फलम् ॥
वैष्णवाम्नायसिद्धान्तचिन्तामणिरिवापरः ।
आश्रमी ज्ञानकुशलो गुरुर्भवति नापरः ॥

तथा ( श्लो० १४ )

"सुदूरमपि गन्तव्यं यत्राम्नायविदो जनाः ।
तेऽपि स्तुत्या नमस्याश्च सेव्याश्चाभीष्टमिच्छता ॥
एवंविधो गुरुर्ज्ञेयस्त्वन्यथा शिष्यदुःखदः"

इति हरिभक्तस्य वैष्णवसाम्प्रदायिकाचार्यस्यैव भगवन्मन्त्रोपदेष्टृत्वं उपदेशशून्यस्य भगवत्सेवादावनधिकारं वैष्णवसाम्प्रदायिकानां शिष्यादीनामपि नमस्यत्वं च वक्ति । आम्नायशब्दस्य सम्प्रदायपर्यायत्वात् । "अथाम्नायः सम्प्रदायः" इत्यमरोक्तेः ।

अतो भगवत्सेवादावधिकारासिद्धिरप्यास्माकीनोपदेशाभावे भवतीति दिक् । एवं भक्तेस्तदङ्गज्ञानस्य चास्मदीयभगवन्मन्त्रोपदेशसाध्यत्वं निरूपितम् ।

(भक्त्या हरितोषो निर्गुणपरमुक्तिश्च मुक्तेर्ज्ञानैकसाध्यतानिरास.)

उपदेशमन्तरा भक्तेरसिद्धौ तु भगवत्तोषो दुर्लभः ।

"भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् ।
प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥
भक्त्या तुतोष भगवान् गजयूथपाय" इत्यादि श्रीभागवतादिवचनेभ्यः ।

गीतायामपि—

"ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रिया" इति ॥

भगवत्तोषाभावे च—

"क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्" ॥

इति भगवदुक्तमेव फलं स्यात् ।

कुतस्तरां तेषां भक्तिज्ञानहीनानां भगवत्तोषहीनानां मोक्षादिकं, यतो पुरुषोत्तम-प्राप्तिलक्षणाया निर्गुणपरममुक्तेस्तु भक्त्येकसाध्यत्वमाह भगवान्—

"मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते" ॥

तथा (अ० १२)—

"तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसामि"ति ॥

अत एव भगवान्मनुरपि महाभारते शान्तिपर्वणि (अ० १९४ श्लो० १११)—

"यस्त्यक्त्वा प्राकृतं कर्म नित्यमात्मरतिर्मुनिः ।
सर्वभूतात्मभूतात्मा स्याच्चेत्परतमा गतिरि"ति ॥

"अत्राप्यात्मरतिर्भगवद्भक्त" इति तु भक्तिमीमांसाभाष्यप्रथमाध्याये (सू० १०) "सा मुख्ये"ति सूत्रे स्फुटम् । नृसिंहपुराणे—

भक्त्येकलभ्ये पुरुषे पुराणे मुक्तौ किमर्थं क्रियते न यत्नः" इति ॥

विष्णुपुराणेऽपि (अं० १ अ० २ श्लो० २०)—

"धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयी"ति ॥

छान्दोग्यश्रुतिरप्याह—

"ब्रह्मसंस्थोऽमृतत्वमेती"ति ॥

दशमस्कन्धे च कुरुक्षेत्रप्रसङ्गे गोपीः प्रति भगवान्—

"मयि भक्तिर्हि भूतानाममृतत्वाय कल्पत" इति ॥

एतदेवाभिप्रेत्य सूत्रितं भगवता शाण्डिल्येन ( सू० ३ )—

"तत्संस्थस्यामृतत्वोपदेशादि"ति ॥

न चेदं "तमेव विदित्वाऽतिमृत्युमेति", "तमेवं विद्वानमृत इह भवति", "नान्यः पन्था विद्यतेऽयनाये"त्यादिबृहदारण्यकतैत्तिरीयादिवाक्येषु मुक्तेर्ज्ञानैकसाध्यत्वाम्नानादयुक्तमिति शङ्क्यम् । पूर्वश्रुतौ तं पदसन्निहितैवकारेण भगवदतिरिक्तज्ञानस्यासाधकत्वमेवोच्यते, न तु ज्ञानातिरिक्तस्यासाधकत्वमिति न दोषः । श्रुत्यन्तरे चान्यपदं सकामकर्ममार्गपरम् । एवंपदेन परामृश्यमानपूर्वोक्तप्रकारस्यैव वेदने प्रकारतयाऽन्वयात् । पूर्वार्धे च "वेदाहमेतं पुरुषं महान्तमि"ति वेद्यावच्छेदककोटौ महत्त्वनिवेशेन ज्ञाने आराध्यताबुद्धिसहकारस्य निश्चयात् ।

( परो भक्त्येकलभ्य , ज्ञान भक्तिशेष , भक्त्याभिज्ञान, परभक्तौ मुक्त्यादि )

पुरुषोत्तमस्य भक्त्येकलभ्यत्वं तु स एव स्मरति "नाहं वेदैर्न तपसे"त्यादिना स्वाध्यायकायक्लेशादीनामसाधकत्वमुक्त्वा—

"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।<br>ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे"ति ॥

तथा—

"पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यये"ति ॥

"भक्त्याहमेकया ग्राह्यः" इत्यादि च ॥

किञ्च, ज्ञानस्यापि भक्तिशेषत्वं गीतायाम् ( अ० १५ श्लो० १९ )—

"यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।<br>स सर्वविद्भजति मां सर्वभावेन भारते"ति ॥

तथा ( गी० अ० ९ श्लो० १३ )—

"भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।<br>इति मत्वा भजन्ते मां बुधा भावसमन्विताः" इति ॥

तथा ( गी० अ० १८ श्लो० ५४ )—

"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।<br>समः सर्वेषु भूतेषु मद्भक्तिं लभते परामि"ति ॥

"भक्त्या मामभिजानाती"ति तु अभिज्ञानविषयं न तु ज्ञानविषयम् । एतच्च भक्तिमीमांसायां ( अ० १ सू० १५ )—

"भक्त्या जानातीति चेन्नाभिज्ञस्यासाहाय्यादि"ति द्विसूत्रेऽधिकरणे स्फुटम् । अपि च मोक्षसाधकं तात्त्विकं पुरुषोत्तमज्ञानमपि गौणभक्तिसाध्यम् । यथा स्मर्यते ( अ० १० श्लो० ९ )—

> "मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
> कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥
> तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
> ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति ॥

अस्य ज्ञानस्य संशयच्छेदार्थमुपयोगो गीतायां ( अ० १४ श्लो० ४१ )—

"ज्ञानसञ्छिन्नसंशयमि"त्यादावयमर्थः स्फुट एव । एवं ज्ञाने च सिद्धसर्वात्मभावस्य भगवद्भक्तस्य मुक्तिः सुलभैव । गीतायां ( अ० ५ श्लो० १७ )—

> "तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
> गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः" ॥

इत्यादिभिस्तथा निश्चयात् । परभक्तिसाहित्यमन्तरा तु न मुक्तिः । अत एव भक्तिमीमांसायां द्वितीयाध्यायद्वितीयाह्निके सूत्रयति भगवान् शाण्डिल्यः ( सू० ८४ )—

> "परां कृत्वैव सर्वेषां तथा ह्याहे"ति ॥

अत्रैव स्वप्नेश्वरभाष्ये परां भक्तिं कृत्वैव सर्वेषामुक्तावुपयोगः । तथाहि सहेतुकं भगवानाहेत्यादिना तदेव स्पष्टीकृतम् । तथा चैतावता वैष्णवसाम्प्रदायिकाचार्यवक्त्राद्भगवन्मन्त्रोपदेशग्रहणमन्तरा न कथञ्चिदपि वैष्णवत्वसिद्धिः । नापि परभक्तिज्ञानसम्पादके गौणभक्तिभूते भगवत्सेवादावधिकारः । तदभावे च भक्तिज्ञानयोरसम्पत्त्या भगवत्प्रसादापात्रस्य न पुरुषोत्तमप्राप्तिलक्षणाऽत्युत्तमा मुक्तिरिति परम्परायाः सम्यगुपपादितत्वाद्वैष्णवत्वाभावे बहुतरानिष्टानां च दिङ्मात्रेण दर्शितत्वात् ।

वैष्णवमन्त्रोपदेशाभावे तत्तदनिष्टनिवृत्तिपूर्वकमुक्त्यादिसर्वेष्टसिद्धिरलभ्यैवेति ।

( होमादौ मन्त्रस्यार्थज्ञानमावश्यक, विशेषतो गायत्र्या गायत्र्यर्थो भगवान् स एव परब्रह्म सप्रणवा ब्रह्मज्ञापिका सायुज्यादिमुक्तिफलिका च )

किञ्च, त्रैवर्णिकानां गायत्रीमन्तरा व्रात्यत्वं तु शास्त्रसिद्धं त्वयाऽपि स्वीकृतम् । सा च गायत्री उपदिष्टापि जपादिद्वारा मोक्षादिलक्षणस्वपरमफलसिद्धये स्वार्थज्ञानमपेक्षते । आज्ञातार्थमन्त्रस्य यथार्थफलाजनकत्वात् । यथाह माधवीये प्रथमाध्याये हारीतः—

"मन्त्रार्थज्ञो जपञ्जुह्वंस्तथैवाप्याययन् द्विजः ।
स्वर्गं लोकमवाप्नोति नरकं तु विपर्यय" इति ॥

बृहत्पराशरोऽपि द्वितीयाध्याये गायत्रीनिरूपणप्रकरणे ( श्लो० १३ )—

"गायत्रीं यो न जानाति ज्ञात्वोपास्ते न यो द्विजः ।
नामधारकमात्रोऽसौ न विप्रः शूद्र एव सः ॥
किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः ।
साङ्गैः सावित्रिहीनेन न विप्रत्वमवाप्यते ॥
गायत्रीमेव यो ज्ञात्वा सम्यगभ्यर्चते पुनः ।
इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात्" इति ॥

इहापि ज्ञानपूर्वकमेवोपासनाजपादिकं विधीयते । न चेदं गायत्रीत्वप्रकारकमेव ज्ञानं शक्यं ग्रहीतुम् । तस्योपदेशकाल एव स्वतो जायमानत्वेन जपाद्यङ्गतया पुनर्विधानायोगात् । अप्राप्तप्रापकस्यैव विधित्वात् । अनधिगतार्थगन्तृत्वाच्च प्रमाणस्य । अतोऽर्थतो ज्ञानमेव गायत्र्या जपाद्यङ्गतया विधीयते । गायत्र्यर्थश्च बादरायणेन "जन्माद्यस्य यतोऽन्वयादि"त्यादौ जगज्जन्मादिकारणतया सर्वस्य सविता अर्थेष्वभिज्ञतया स्वराट्तया च वर्यभर्गस्वीयनाभिपद्मस्थादिकविप्रभृतिभ्यो हृदा ब्रह्मप्रकाशकतया सर्वधीप्रचोदकस्त्रिसर्गकरणप्रभृतिविविधक्रीडादिविशिष्टतया देवः सर्वैरवश्यध्येयः श्रीपुरुषोत्तम एव दर्शित इति गायत्रीजपसार्थक्यार्थं तज्ज्ञानमपेक्षितम् । पुरुषोत्तमज्ञानं चोक्तपद्धत्या वैष्णवोपदेशैकसाध्यमित्यतोऽपि तदुपदेश आवश्यकः । गायत्र्याः सप्रणवायाः श्रीपुरुषोत्तमज्ञापकत्वतत्सायुज्यफलकत्वादिकं तु "ॐ इत्येकाक्षरं ब्रह्म अग्निर्देवता ब्रह्म" इत्यार्षं गायत्रं छन्दं परमात्मं सरूपं सायुज्यं विनियोगम्" ।

"आयातु वरदा देवी अक्षरं ब्रह्मसम्मितम् ।
गायत्री छन्दसां मातेदं ब्रह्म जुषस्व मे" ॥

इत्यादिश्रुतिषु स्फुटमेव । अत एवात्र भट्टोजिदीक्षितप्रणीते सन्ध्याभाष्ये "आयातु वरदा देवी"ति गायत्रीमावाहयेत् । वरदा देवीति गायत्र्यभिमानिनी देवता अक्षरं विनाशरहितं सम्मितं सम्यग्वेदान्तप्रमाणनिश्चितं ब्रह्म परं तत्त्वं बोधयितुमिति शेषः आगच्छतु । अयमेवार्थ उत्तरार्धेन स्पष्टीक्रियते । छन्दसां वेदानां मातेव माता गायत्री नोऽस्मान् इदं सकलवेदान्तप्रतिपाद्यं ब्रह्म जुषस्व जोषयतु । उपदिशत्वित्यर्थ इति व्याख्यातम् । अयञ्च सर्ववेदान्तप्रसिद्धः परतत्त्वाख्यः परमात्मा श्रीपुरुषोत्तम एव । तदेव ब्रह्म परमं कवीनाम्—

"अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।
मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" ॥

इत्यादिश्रुतिगीताश्रीभागवतादिवचनेभ्यः। न चोक्तनारायणश्रुतौ तच्छब्देन भगवदतिरिक्तस्य परामर्शः शङ्क्यः। इतः पूर्वं "यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजा" इत्यादौ समुद्रशायित्वाक्षरपदस्थायित्वादीनां भगवल्लीलानां श्रावितत्वात्। अन्यदेतत्।

पुनर्बृहत्पराशरस्मृतौ द्वितीयाध्याये गायत्रीप्रकरणे (श्लो० ९८)—

"जप्ये तु त्रिपदा ज्ञेया पूजने तु चतुष्पदा" इत्यादिना त्रिपदादिभेदाञ्जम्बुकादिभेदांश्चोक्त्वान्ते जपस्य परमं फलमाह (श्लो० १०२)—

"ब्रह्मणः पदमाप्नोति यद्गत्वा न निवर्तते।
विना श्रद्धां प्रमादाद्वा जपं कुर्युरिमं यदि॥
स्मरणादेव तद्विष्णोः पदमाप्नोति वै श्रुतिः"॥

इति भगवत्परमपदप्राप्तिलक्षणं गायत्रीफलं स्मर्यते। इदञ्च भक्तिज्ञानादिसाधनसहकारेणैवेति निश्चीयते। अन्यथा चतुर्लक्षणीस्थसाधनाध्यायस्य तदुदाहृतानेकश्रुतीनां च व्याकोपापत्तेः। अत एव कार्यपादेऽपि बादरायणेन ज्योतिश्चरणाधिकरणे "गायत्री वा इद१ सर्वमि"ति छान्दोग्यपञ्चमप्रपाठके आम्नातां द्विखण्डां गायत्रीविद्यां विषयीकृत्य अग्रे छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनमिति सूत्रयता सूचीसूत्रन्यायेन गायत्र्याः परमात्मनि चेतोऽर्पणसाधनत्वं निर्णीयते इति दिक्—

(भक्तितत्साधनादिषु वैष्णवमन्त्रः फलमुखाधिकारजनक., धर्मपरत्वविज्ञानाध्यात्मवित्त्वादिब्राह्मणलक्षणम्)

तथा च मोक्षस्य साक्षात् साधनयोर्भक्तिज्ञानयोर्मध्ये यथा ज्ञानस्य सम्पादके उपनिषदनुसारिश्रवणमननादौ चित्तशोधककर्मकरणादौ च गायत्र्युपदेश एव फलमुखमधिकारं जनयति। तथैव एकादशस्कन्धैकोनविंशाध्याये भगवता—

"पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम्"॥

इत्युपक्रम्य, उपसंहारे—

"एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्।
मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते"॥

इति कथना"च्छ्रद्धामृतकथायां मे" इत्यादिनोक्ते श्रवणकीर्तनादौ सेवाकरणादौ च परभक्तेः साधने वैष्णवोपदेश एवात्मनिवेदनरूपः फलमुखमधिकारं सम्पादयतीति सोऽप्यवश्यग्राह्य एव। किञ्च, सम्प्रदायोपदेशाभावे शासनाभावेन धर्मपरत्वविज्ञानवत्त्वाध्यात्मिकज्ञातृत्वाद्यभावाद्ब्राह्मण्यमेव यथार्थं न स्यात्। ब्राह्मण्यस्य तन्मूलकत्वं तु महाभारते—

"जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः।
कामक्रोधौ वशे यस्य तं देवा ब्राह्मणं विदुः॥
यस्य वात्मसमो लोको धर्मज्ञस्य मनस्विनः।
सर्वं धर्मेण चरितं तं देवा ब्राह्मणं विदुः॥
क्षमा दया च विज्ञानं सत्यं चैव दमः शमः।
अध्यात्मनिरतं ज्ञानमेतद्ब्राह्मणलक्षणमि"ति॥

(भक्त्या क्रोधादिनाश वैष्णवानुष्ठितकर्मभिर्निरतिशयभगवत्प्रसाद इतरानुष्ठित-भगवदर्पितकर्मणां जन्मान्तरे वा भक्तिप्राप्ति फलम्)

कामक्रोधाद्यभावस्य च भक्तिसाध्यत्वं दर्शितं महाभारते एव श्रीविष्णुनाम-सहस्रादौ—

"न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुरुषाणां भक्तानां पुरुषोत्तम" इति॥

एवं मोक्षधर्मादिष्वपि द्रष्टव्यम्। किमनेन बहुविस्तरेण। तथा च वैष्णवसाम्प्रदायिकं भगवन्मन्त्रोपदेशं विना अवैष्णवत्वलक्षणं व्रात्यत्वं भवत्येव। यत्तूक्तं तथात्वे सर्वेषां भवदुपदेशाभावाद्व्रात्यत्वं स्नानदानादिकं वृथा स्यादिति। तत्स्वीकुर्मः, न हि स्नानदानादीनां सर्वथा वैफल्यं ब्रूमः, किन्तु तादृशनिरतिशयभगवत्प्रसादक्षणफलासाधकत्वमित्येव। यथा सकामैर्निष्कामैर्वाऽनुष्ठितानामग्निहोत्रदर्शपूर्णमासपशुचातुर्मास्याग्निष्टोमादीनामितिकर्तव्यताविचारेण तौल्येऽपि निष्कामानुष्ठितानां तेषां तदन्तरप्रतिपत्त्याद्यधिकरणोक्तरीत्या ज्ञानोत्पत्तियोग्यदेहोत्पादनपूर्वकं मोक्षजनकत्वम्।

सकामानुष्ठितानां च तेषामेव स्वर्गादिजनकत्वं तथाऽत्रापि वैष्णवानुष्ठितानां तादृशभगवत्प्रसादजनकत्वम्। अत एव सारसङ्ग्रहे मन्त्रसारे—

"दीक्षिताय विशेषेण प्रसीदेन्नान्यथा हरिः।
ब्राह्मणः क्षत्रियो वाऽपि वैश्यः शूद्रोऽथवा पुनः॥
एवं स्त्रियो वा यत्नेन गुरुमेव समाश्रयेत्" इति।

अत्रैव तत्त्वसारे—

"दुर्लभं सद्गुरूणां तु सत्सङ्गाद्यदुपस्थितम्।
तदनुज्ञा यदा लब्धा सदीक्षावसरो महान्॥
ग्रामे वा यदि वाऽरण्ये क्षेत्रे वा दिवसे निशि।
आगच्छति गुरुर्दैवात्तदा दीक्षां प्रकारयेत्॥
अवश्यं वैष्णवीं दीक्षां प्रविशेत्सर्वयत्नतः।
दीक्षिताय विशेषेण संसिद्धिर्नात्र संशय" इति॥

तथा भगवानप्याह—

"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥
अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ।
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पत" इति ॥

तथा—

"अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि स" इति ॥

दशमस्कन्धे चाहुर्याज्ञिकब्राह्मणाः (अ० २३-श्लो० ३९)—

"धिग्जन्मनस्त्रिवृद्विद्यां धिग्व्रतं धिग्बहुज्ञताम् ।
धिक्कुलं धिक् क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे" इति ॥

वैष्णवभिन्नानुष्ठितानां तु देवान्तरप्रसादजनकत्वं स्वर्गादिसाधकत्वं वा । ननु स्मार्तादिभिरपि कर्मणामच्छिद्रत्वाय सर्वदेवदेवाय सर्वेश्वराय श्रीविष्णवे कर्मार्पणं क्रियत एव । सङ्कल्पेऽपि बहुभिः श्रीपरमात्मप्रीत्यर्थमित्याद्युच्यत एव । अतस्तत्कृत-कर्मणामपि विष्णुप्रीतिजनकत्वं वाच्यमेवेति चेत् । सत्यम् । तथापि सत्त्वोपहिताय गुणावताराय विष्णवेऽर्पितानामपि कर्मणां न पुरुषोत्तमप्रीत्याधायकत्वम् । उक्त-न्यायात् ।

ननु तर्हि काम्यापेक्षया स्मार्ताद्यनुष्ठितेष्वपि विष्ण्वर्पितेषु कर्मसु को वा विशेष इति चेत् जन्मान्तरेषु उक्तरीत्योपदेशादिद्वारा भक्तिसम्पादकत्वमेवेति वदामः । अत एव दशमस्कन्धे उद्धवः (अ० ४७ श्लो० २४)—

"दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत" इति ॥

भगवांश्चाह—

"जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां मयि भक्तिः प्रजायत" इति ॥

गीतायाञ्च (अ० ७ श्लो० १९)—

"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यत" इति ॥

इहानुष्ठितकर्मणामिहैव फलाऽसम्भवे जन्मान्तरे तज्जनकत्वं तु जातेष्ट्यधिकरणादौ जैमिनिना रंहतिपादादौ बादरायणेन च निर्णीतमेव । यच्चोक्तं तन्न शास्त्रसम्मतं विद्वत्सम्मतं चेति ।

( उक्तविधकर्मफलव्यवस्थादौ शास्त्रसम्मतिविद्वत्सम्मतिविचार )

तत्र शास्त्रसम्मतत्वं दिङ्मात्रेण तत्तद्वचनोपन्यासाद्दर्शितम् । विस्तरतस्तु साक्षात्परम्पराभेदेन सकलवेदेतिहासपुराणादिष्वयमर्थो निर्णीत एवेति समग्रतया तल्लेखनमनोरथस्तु माणवकस्य सकलजलधिसलिलपिपासाकल्प एवातो विरम्यते । अथो विद्वत्पदेन प्राञ्चो महर्षिप्रभृतयो विवक्षिता उतार्वाञ्च एव । तत्राद्यश्चेत्तत्तन्महर्षिग्रन्थेषु वैष्णवसम्प्रदायसग्रहदर्शनादेव प्रत्युक्तो वेदितव्यः । द्वितीयश्चेत् किं सम्मतत्वन्नाम प्रतितन्त्रार्थत्वेनाभ्युपगमरूपं आहोस्वित् स्वयं तद्धर्मानुष्ठानरूपम् ? न प्रथमः । साम्प्रदायिकाचार्यतच्छिष्यतद्ग्रन्थतदध्ययनाध्यापनादिप्रचारं पश्यता केनाऽप्युन्मत्तेनासम्मतत्वस्य वक्तुमशक्यत्वात् । नेतरः । शाखाधिकरणन्यायेन स्वस्वधर्माणामेवानुष्ठेयतया परस्परधर्माननुष्ठानेऽपि तत्तद्धर्मेषु परस्परविसम्मतत्वस्य वक्तुमशक्यत्वेन क्षत्यभावात् ।

( अग्न्याधानसोमपानाद्यभावे व्रात्यत्वादि )

किञ्च, अननुष्ठाने व्रात्यताजनकतया स्मर्यमाणा बहवोऽग्न्याधानसोमपानादयो धर्मा इदानीं न सर्वैरेव विद्वद्भिरनुष्ठीयमाना दृश्यन्ते । न तावता तेषामावश्यकत्वं हीयते । तदभावे व्रात्यत्वप्रतिपादकप्रमाणानि तु यथाऽऽथर्वणे श्रूयते ( मुण्ड० १ खण्ड २ )—

"यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च, अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ती"ति ।

तथा श्रुत्यन्तरे—

"यस्य पिता पितामहो वा सोमं न पिबेत्स व्रात्यः" इति ॥

गर्गः—

"कृतदारो न वै तिष्ठेत्क्षणमप्यग्निना विना ।
तिष्ठेत चेद्द्विजो व्रात्यस्तथा च पतितो भवेत् ॥
यथा स्नानं यथा भार्या वेदस्याध्ययनं यथा ।
तथैवोपासनं दृष्टं न तिष्ठेत्तदयोगत" इति ॥

एतत्सर्वं माधवेनापि पराशरव्याख्याप्रथमाध्याये सङ्गृहीतम् ।

शातातपस्मृतौ च—

"येषामध्ययनं नास्ति ये च केचिदनग्नयः ।
न कुलं श्रोत्रियं येषां सर्वे ते शूद्रधर्मिण" इति ॥

न हीदानीमग्न्याधानं सर्वेऽपि विद्वांसः कुर्वन्ति ।

( राज्ञः प्रतिग्रहीन्नभोजनयोर्निषेध. वैष्णवस्य भक्त्यादिमतो राज्ञ प्रतिग्रहादौ न दोष. )

यमस्मृतौ चतुर्थाध्याये ( श्लो० ५९ )—

"राज्ञां प्रतिग्रहस्त्याज्यो लोकत्रयजिगीषुभिः ।
राज्ञः प्रतिग्रहाच्चैव ब्राह्मण्यं हि विलुप्यते" इति ॥

अत्रिस्मृतौ—

"अधीत्य चतुरो वेदान् सर्वशास्त्रार्थतत्त्ववित् ।
नरेन्द्रभवने भुक्त्वा विष्ठायां जायते कृमिरि"ति ॥

नैतद्वर्जनमिदानीं सर्वविद्वद्भिरादियते । अनेकेषां संन्यासिनामपि साम्प्रतं दृढराजाश्रयपूर्वकं महोपद्रवकारित्वदर्शनात् । बहुष्ववैष्णवादपि राज्ञः सकाशात् प्रतिग्रहग्रहणस्य दर्शनाच्च । वैष्णवराजप्रतिग्रहे तु न दोषः । अत एव पराशरमाधवीये (अ० १ श्लो० ३७) व्याख्यायाम् । अनापदि राजप्रतिग्रहं निन्दति याज्ञवल्क्यः । "न राज्ञः प्रतिगृह्णीयात्".. इत्यादिना राजप्रतिग्रहं विविधदुष्फलोपपादनपुरःसरं प्रतिषिध्यान्ते अवैष्णवराजपरत्वेन सनिषेधः—

"येषां न विषये विप्रा यज्ञैर्यज्ञपतिं हरिम् ।
यजन्ते भूभुजां तेषामेतत्सूनोदितं फलम् ॥
येषां पाखण्डिसङ्कीर्णं राष्ट्रं न ब्राह्मणोत्कटम् ।
एते सूनासहस्राणां दशानां भागिनो नृपाः ॥
येषां न यज्ञपुरुषः कारणं पुरुषोत्तमः ।
ते तु पापसमाचाराः सूना पापौघभागिनः" ॥

इति विष्णुधर्मोत्तरवचनैर्व्यवस्थापितः । प्रासङ्गिकमेतत् ।

(याथार्थ्यबुद्धिरूपसम्मतिविचार वैष्णवविप्राय दानप्रशंसा, अवैष्णवदेशनिन्दावैष्णवराजस्तुतिश्च)

अथेह याथार्थ्यबुद्धिरूपं सम्मतत्वमाश्रियते तदापि—

"न सर्वः सर्वविन्नैव सर्वं सर्वस्य सम्मतमि"तिन्यायेन सर्वेषु प्रतितन्त्रार्थेषु सर्वेषां सम्मत्यभावेऽपि न कस्यापि क्षतिः । बहवश्चाद्यापि अर्वाचीनविदुषां परस्परविसम्मता बहुविवादग्रस्ता धर्मादयो दृश्यन्ते । तथैव किञ्चित्प्राचां माधवविज्ञानेश्वरादीनामपि ग्रन्थेषु । न हि तावता तेषां शास्त्रीयत्वहानिः । यदि च केषाञ्चिदेवासम्मत्यापि प्रतितन्त्रार्थेष्वप्रामाणिकत्वं कथ्येत तर्हि बहुवैष्णवविद्वदसम्मतायां शैवादिदीक्षायामपि तत्प्रसज्येतेत्यलमनेन । यदप्युक्तं नो चेत्कुतो विशेषाग्रह इति । तदपि चेत्कोटेर्दूषणादेव दत्तोत्तरम् । अतो विशेषाग्रहोऽप्युचिततर एव । अत एव बृहन्नारदीयपुराणे पुरुषोत्तममाहात्म्ये त्रयोविंशाध्याये चित्रबाहुकनामकराजोपाख्याने (श्लो० ९)—

"एकस्मिन् दिवसे राजा चित्रबाहुर्महीपतिः ।
दृष्ट्वा समागतं दूरादगस्त्यं मुनिपुङ्गवम् ॥
प्रणम्य दण्डवद्भूमौ विधिना तमपूजयत् ।
कल्पयित्वाऽऽसनं भक्त्या तस्थौ मुनिवराग्रतः ॥
विनयावनतो भूत्वा जगाद मुनिसत्तमम् ।

राजोवाच—

अद्य मे सफलं जन्म ह्यद्य मे सफलं दिनम् ॥
अद्य मे सफलं राज्यमद्य मे सफलं गृहम् ।
यस्त्वं समागतो मेऽद्य गृहे श्रीकृष्णसेवकः ॥
मुक्तोऽहं पापसङ्घाताद्यत्त्वयाऽहं निरीक्षितः ।
तुभ्यं समर्पितं राज्यं गजाश्वरथसंयुतम् ॥
वैष्णवोऽसि मुनिश्रेष्ठ नास्त्यदेयं मया तव ।
मेरुतुल्यं भवेत्स्वल्पं वैष्णवाय समर्पितम् ॥
कपर्दिकाप्रमाणं तु व्यञ्जनं वाऽन्नमुत्तमम् ।
न यच्छति दिने यस्तु वैष्णवाय द्विजन्मने ॥
तद्दिनं विफलं तस्य कथितं वेदपारगैः ।
विष्णुभक्ताश्च ये केचित् सर्वे पूज्या द्विजातयः ॥
तेषां सम्भावना कार्या वाङ्मनःकायकर्मभिः ।
कथितं मम गर्गेण गौतमेन सुमन्तुना ॥
तावत्प्रभा च ताराणां यावन्नोदयते रविः ।
तावदन्ये द्विजन्मानो यावन्नायाति वैष्णवः ॥

अगस्त्य उवाच—

चित्रबाहो महाभाग धन्यस्त्वं साम्प्रतं नृप ।
इमा धन्याः प्रजाः सर्वा यास्त्वं रक्षसि वैष्णवः ॥
तस्मिन् राष्ट्रे न वस्तव्यं यस्य राजा न वैष्णवः ।
वरो वासो वने शून्ये न तु राष्ट्रे ह्यवैष्णवे ॥
चक्षुर्हीनो यथा देहः पतिहीना यथा प्रिया ।
निरक्षरो यथा विप्रस्तथा राष्ट्रमवैष्णवम् ॥
दन्तहीनो यथा हस्ती पक्षहीनो यथा खगः ।
द्वादशी दशमीविद्धा तथा राष्ट्रमवैष्णवम् ॥
दर्भहीना यथा सन्ध्या तिलहीनं च तर्पणम् ।
वृत्त्यर्थं देवसेवा च तथा राष्ट्रमवैष्णवम् ॥
सकेशा विधवा यद्वद्व्रतं स्नानविवर्जितम् ।
शूद्रश्च ब्राह्मणीगामी तथा राष्ट्रमवैष्णवम् ॥
स राजा प्रोच्यते सद्भिर्यः श्रीकृष्णपदाश्रयः ।
तद्राष्ट्रं वर्धते नित्यं सुखी भवति तत्प्रजे"त्यादि

अत्र वैष्णवस्य द्विजस्य सर्वतः प्राधान्यं वैष्णवशून्यदेशस्य चात्यन्तं निन्दाभिधीयते ।

(वैष्णवानां यमदण्डाभावस्तेषामेव भागवतादे कथनश्रवणादावधिकारस्ततो मोक्षश्च)

श्रीभागवतेऽपि षष्ठस्कन्धे यमः ( अ० ३ श्लो० २७ )—

"ते देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः ।
तान्नोपसीदत हरेर्गदयाभिगुप्तान्नैषां वयं न च वयः प्रभवाम दण्डे ॥
तानानयध्वमसतो विमुखान्मुकुन्दपादारविन्दमकरन्दरसादजस्रम् ।
निष्किञ्चनैः परमहंसकुलैरसङ्गैर्जुष्टाद्गृहे निरयवर्त्मनि बद्धतृष्णान् ॥
जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यानि"ति ॥

विष्णुपुराणेऽपि ( अं० १ अ० ९ श्लो० ९८ )—

"जन्मानि घोरयमकिङ्करताडनानि दैन्यानि तानि तपनात्मजदर्शनानि ।
जन्तोरहं मम तरङ्गकुरङ्गतृष्णा कृष्णाङ्घ्रिपङ्कजपराङ्मुखतानुभावः ॥

पाद्मे श्रीभागवतमहात्म्यषष्ठाध्याये ( श्लो० २० )—

"विरक्तो वैष्णवो विप्रो वेदशास्त्रविशुद्धिकृत् ।
दृष्टान्तकुशलो धीरो वक्ता कार्योऽतिनिःस्पृहः" ॥

तथा ( श्लो० ३५ )—

"ब्राह्मणान् वैष्णवांश्चान्यांस्तथा कीर्तनकारिणः ।
नत्वा सम्पूज्य दत्ताज्ञः स्वयमासनमाविशेत्" ॥

तथा ( श्लो० ४४ )—

"सप्ताहव्रतिनां पुंसां नियमान् शृणु नारद ।
विष्णुदीक्षाविहीनानां नाधिकारः कथाश्रवे" ॥

तथा ( श्लो० ५५ )—

"श्रवणेनैव पूतास्ते निष्कामा वैष्णवा यतः" ।

तथा ( श्लो० ९१ )—

"भक्तिः सुताभ्यां सह रक्षिता सा शास्त्रे स्वकीयेऽपि तदा शुकेन ।
अतो हरिर्भागवतस्य सेवनाच्चित्तं समायाति हि वैष्णवानाम्" ॥

सुताभ्यां ज्ञानवैराग्याभ्याम् । अत्र वैष्णवदीक्षावतामेव मोक्षादिसर्वसत्फलोपजीव्ये प्रवचने श्रवणे चाधिकारः । तेषामेव श्रवणादिद्वारा भक्तिज्ञानादिसम्पत्त्या मोक्षलक्षणं फलं चाभिधीयते । तत्र विष्णुपुराणादिषु च, "प्रभुरहमन्यनृणां न वैष्णवानामि"ति

वैवस्वतादिवचनैर्नरकभयाभावश्च तेषामुच्यत इति विशेषाग्रहः शास्त्रसिद्धः । इत्थमन्यत्राप्यनेकत्रार्षग्रन्थेषु उद्घाटितहृदयेक्षणेन वीक्षणीयम्—

"अत आवश्यकतर उपदेशस्तु वैष्णवः ।
भक्तिज्ञानादिसम्पत्त्या सन्तोऽसन्तोषहा हरेः ॥
प्रसन्ने तु जगन्नाथे ब्रह्मरुद्रेश्वरे हरौ ।
किं नस्तद्भृत्यभृत्यानां चेत्यं कृत्यं च शिष्यते" ॥

---

## ( एकोनविंशः प्रश्नस्तदुत्तरारम्भश्च )

## अथ तृतीयप्रश्नस्यावान्तरस्तृतीयः प्रश्नः

## किञ्च, यथा वर्णाश्रमधर्मवर्णनं सर्वत्र ग्रन्थेषु तत्फलवर्णनं च तथा भवत्सम्प्रदायवर्णनं तत्फलवर्णनं च कुतो न ?

### उत्तरम् ।

अत्र सर्वग्रन्थेषु वर्णाश्रमधर्मवर्णनकथनं प्रमादात् । शिक्षाव्याकरणनिरुक्तच्छन्दोलक्षणरूपेष्वङ्गग्रन्थेषु प्रातिशाख्यनिघण्टुब्रह्ममीमांसादिषूपाङ्गग्रन्थेषु आयुर्वेदधनुर्वेदगान्धर्वस्थापत्याख्योपवेदग्रन्थेषूक्तसर्वशास्त्रानुरोधाज्जनबोधानवरोधाय तैस्तैः सूरिभिः प्रणीतेषु परार्धाधिकेषु तेषु तेषु ग्रन्थेषु बहुषु काव्यनाटकादिषु च सर्वत्र नियमेन तद्वर्णनानुपलब्धेर्ग्रन्थत्वेन वर्णाश्रमधर्मनिरूपकत्वेन च व्याप्त्यसिद्धेः । उक्तेषु सर्वेषु ग्रन्थत्वस्य च सर्वविद्वद्व्यवहारसिद्धत्वात् । यदि तु स्मृतिपुराणादय एवात्र सर्वग्रन्थशब्देनाभिप्रेतास्तर्हि तेष्वस्माकं वैष्णवसम्प्रदायस्य तदभिमतसिद्धान्तज्ञानभक्तिभगवत्सेवोर्ध्वपुण्ड्रतुलसीकाष्ठमालाशङ्खचक्रादिधारणप्रभृतिधर्माणां भगवत्प्रसादतत्परपदावाप्तितत्सायुज्यादिलक्षणानां सम्प्रदायफलानां च यथायथं तत्र तत्र वर्णनमहाकल्लोला दरीदृश्यन्त एव बहुग्रन्थार्णवकर्णधारैर्निर्मत्सरैः सद्भिरिति न कोऽपि दोषः ।

( मनुस्मृतौ स्पष्टसम्प्रदायवर्णन विरक्तस्य नि सङ्गतया गृहे स्थितिरूपो वेदसन्यासश्च )

तथाहि षष्ठाध्याये मनुः ( श्लो० ७४ )—

"सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते" ॥ इति ।

अत्र सम्यग्दर्शनं सत्सम्प्रदायशास्त्रम् । तद्ग्रहणेनैव मोक्षः । त्यागेन संसारः ।

दर्शनशब्दः सर्वदर्शनसङ्ग्रहादौ शास्त्रपरः, न तु दर्शनमिह ज्ञानमिति शङ्क्यम् । तस्य फलरूपत्वात् । एतदग्रे "साधयन्तीह तत्पदमि"त्यत्र व्याख्यायां पूर्वोक्तदर्शनस्य साधनत्वेनोक्तेः ।

पुनस्तत्रैव ( श्लो० ८३ )—

"अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ।
आध्यात्मिकं च सततं वेदान्ताभिहितं च यत् ॥
इदं शरणमज्ञानामिदमेव विजानताम् ।
इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छतामि"ति ॥

अधियज्ञादिशब्दवाच्यानां गीतोक्तरीत्या पुरुषोत्तमस्वरूपादीनां जप्यत्वमुक्त्वा पुरुषोत्तमस्यैव सर्वशरणत्वादिकमुपदिष्टम् । इदञ्च जप्यत्वं मन्त्रद्वारैव, केवलस्वरूपेण जप्यत्वायोगात् । वर्णात्मकवस्तुन एव जपसम्भवात् । अतो वैष्णवप्रसिद्धं भगवच्छरणमन्त्रादिग्रहणमपि मनोरभिमतमेव । किञ्च, अत्रैव ( श्लो० ८६ )—

"एष धर्मोऽनुशिष्टो वो यतीनां नियतात्मनाम्" इति चतुर्विधयतिधर्मानुपसंहृत्य—

"वेदसंन्यासिकानां तु कर्मयोगान्निबोधत" ।

इत्यादिपृथक्कथ्यमाना वेदसंन्यासिकाः साम्प्रदायिका एवेति मेधातिथिव्याख्यानानुरोधात्फलति । अस्मत्साम्प्रदायिका हि प्रायशः—

"यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः" ॥

इत्याद्यनुसारेण पुत्रादौ भारं न्यस्य पद्मपत्रवद्गृहे वर्तमाना ज्ञानवैराग्यसम्पन्ना गृहे भगवत्सेवां कुर्वन्ति । एतदेव बहुतया मनुना षष्ठाध्यायसमाप्तिपर्यन्तं निर्णीतम् । अत एव गोविन्दराजोऽपि ज्ञानसहकृतसर्वसत्कर्माणं गृहस्थमेव वेदसंन्यासिकशब्देन व्याचख्यौ । मनुरपि एतदग्रेऽनुपदमेव—

"एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः" ॥

इत्यादिना विस्तरेण गृहस्थं प्रशंसति । तेन तस्यापि गोविन्दराजोक्तरीतिकमेवाभिमतमिति प्रतीयते । अन्यथा गृहस्थप्रशंसाया आकस्मिकत्वप्रसङ्गात् ।

( याज्ञवल्क्यस्मृतौ सम्प्रदाय. सर्वसाधारणधर्मा. भगवद्दर्शन परो धर्म. )

अथ याज्ञवल्क्योऽप्याचाराध्याये दानप्रकरणे ( श्लो० १५ )—

"सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम्" ॥

इति धर्मब्रह्मणोरपि प्रदानं तत्फलं च वर्णितवान् ।

सम्प्रदायश्चैतादृशदानमेवेति तु पूर्वमेवावोचाम । पुनः स एव तृतीयाध्यायाद्यप्रकरणे ( श्लो० ३४ )—

"भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता" ॥

इति सम्प्रदायैकसाध्यानि तपोविद्यादीनि तत्फलानि च वर्णयति । इदमत्र मिताक्षरायां स्फुटम् । अपि च, न हि धर्मपदार्थो वर्णाश्रमसम्बन्धभेदेन द्विविध एवाऽस्ति येन यथा वर्णाश्रमधर्मवर्णनमित्येव दृष्टान्तत्वेन वक्तुं युक्तं स्यात् । किन्त्वनेकविधास्ते महाभारतादिषु मिताक्षराप्रथमश्लोकव्याख्यानादिषु च निरूपिताः । तत्र साम्प्रदायिकधर्माणां साधारणधर्मत्वं प्रागेवोपपादितम् । अत एव याज्ञवल्क्योऽपि ( अ० १ ) गृह्यप्रकरणे ( श्लो० २६ )—

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्" ॥

इत्यान्तरशौचेन्द्रियनिग्रहदमानां पूर्वोक्तरीत्या सम्प्रदायैकसाध्यानां सर्वसाधारणत्वमाह । मनुरपि षष्ठाध्याये ( श्लो० ९१।९२ )—

"चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ।
दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्" ॥

इति सम्प्रदायलभ्यानां विद्यादीनां साधारणधर्मत्वमाह । किञ्च, सत्साम्प्रदायिकगुरुसकाशात् श्रवणमननादिद्वारा भगवत्साक्षात्कारस्य सर्वधर्मेभ्योऽत्युत्कृष्टत्वमाह याज्ञवल्क्यः ( अ० १ श्लो० ८ )—

"इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनमि"ति ॥

एवमितरास्वपि प्रायः सर्वासु स्मृतिषु समाप्तिदशायामस्माकं वैष्णवसिद्धान्तानुरोधि वेदान्तनिरूपणं दृश्यत एव ।

( स्मृतिषु सम्प्रदायशब्दोक्तिपूर्वकं वर्णन, दक्षोक्ता भक्तिज्ञानप्रकारा शुद्धाद्वैतद्वैतादय सिद्धान्तभेदाश्च )

नन्वेवं सत्यपि सम्प्रदायशब्दोच्चारणपूर्वकं तु न क्वापि निरूपणं, नापि वैष्णवसम्प्रदायप्रसिद्धानां परस्परविभाजकानां शुद्धाद्वैतद्वैतद्वैताद्वैतप्रभृतिराद्धान्तानां क्वापि स्मृतिषूच्चारणमिति चेन्नैवम् । शातातपस्मृतौ कुण्डगोलकयोर्लक्षणमुक्त्वा—

"तौ जातौ तु परक्षेत्रे प्रजेति चेष्टतेऽकृती ।
दत्तानि हव्यकव्यानि नाश्नन्ति सम्प्रदायिन" इति ॥

मनुस्मृतावपि (अ० ३ श्लो० १८३)—

"अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च" ॥

इत्यत्र "दशपुरुषपर्यन्तमविच्छिन्नवेदसम्प्रदायवंशजाः पङ्क्तिपावनाः" इति मुक्तावली । गौतमतन्त्रेऽपि (अ० ९ श्लो० ८८)—

"उदयादिलयान्तं च मन्त्रमेनं समभ्यसेत् ।
उदयः शब्दरूपश्च लयश्चार्थः प्रकीर्तितः ॥
ज्ञातृज्ञेयविभागेन तन्मयो भव गौतम ।
मनः संहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ॥
अव्यग्रत्वमनिर्वेदो जयसम्पत्तिहेतवः ।
एवं ते कथिताः सम्यक् त्रिविधा यजनक्रमाः ॥
यान् कृत्वा सम्प्रदायेन मन्त्री वाञ्छितमश्नुत" ॥ इति ।

एवमस्त्यनेकत्र सम्प्रदायशब्दोच्चारणपूर्वकं तद्वर्णनम् । यच्चोक्तं शुद्धाद्वैतद्वैतादीनां वैष्णवसम्प्रदायसिद्धान्तानां स्मृत्यादिष्वप्रसिद्धत्वमिति । तत्राप्युच्यते दक्षस्मृतौ—

"अतः परं प्रवक्ष्यामि योगस्य विधिमुत्तमम्" ॥

इत्यादिना योगनिरूपणमुपक्रम्य तत्स्वरूपादिकमुक्त्वा "नारण्यसेवनाद्योग" इत्यादिना वनवासादिसाधनासाध्यत्वं निश्चित्य—

"अभियोगात्तथाऽभ्यासात्तस्मिन्नेव सुनिश्चयात् ।
पुनः पुनश्च निर्वेदाद्योगः सिद्ध्यति नान्यथा" ॥

इति ज्ञानस्य श्रवणमननादिसाध्यत्वं व्याख्याय—

"यश्चात्ममिथुनो नित्यमात्मक्रीडस्तथैव च ।
आत्मानन्दश्च सततमात्मन्येव समाहितः" ॥

इति भूमविद्याश्रावितप्रकारां भक्तिं च निरूप्य—

"यस्त्वात्मव्यतिरेकेण द्वितीयं नैव पश्यति ।
ब्रह्मभूतः स विज्ञेयो दक्षपक्ष उदाहृतः" ॥

इत्यादिना पुनर्ज्ञानं प्रपञ्च्याथ ज्ञानस्य सम्पादकाः के के प्राञ्चः सिद्धान्ता इत्याकाङ्क्षायामाह—

"अद्वैतं च तथा द्वैतं द्वैताद्वैतं तथैव च ।
न द्वैतं नापि चाद्वैतमित्येतत्पारमार्थिकम् ॥

नाहं द्वैतं च सम्बन्धो ब्रह्मभावेन भावितः ।
ईदृशायामवस्थायामवाप्तं परमं पदम् ॥
द्वैतपक्षः समाख्यातो द्वैतं येऽपि समाश्रिताः ।
अद्वैतानां प्रवक्ष्यामि यथा शास्त्रस्य निश्चयः ॥
अत्रात्मव्यतिरेकेण द्वितीयं नैव पश्यति ।
अतः शास्त्राण्यधीयन्ते श्रूयन्ते ग्रन्थविस्तराः ॥
योगमभ्यस्यमानस्य ध्रुवं कश्चिदुपद्रवः ।
विद्या वा यदि वाऽविद्या शरणं तु जनार्दनः" ॥

इति स्पष्टतया सिद्धान्तभेदादिकं वर्णितम् ।

( धर्मशास्त्रनिबन्धेषु वैष्णवादिसम्प्रदायभेद , एकादश्यष्टमहाद्वादश्यादिव्रतानि नित्यानि वेधविचार. अष्टाक्षराद्यन्यतममन्त्रग्राहित्वपञ्चरात्रादिदीक्षावत्त्वादीनि वैष्णवलक्षणानि )

नन्वेवमपि वैष्णवसम्प्रदायानां वर्णाश्रमधर्मवदनार्षेषु धर्मशास्त्रग्रन्थेषु तु निरूपणं न दृष्टचरमिति चेद्ग्रन्थानवलोकनमूलिकैवेयं भ्रान्तिः । वैष्णवस्मार्तभेदेनानेकनिर्णयानामैदंपर्येण व्यवस्थापनस्य प्रायः सर्वत्रैव महानिबन्धेषु उपलभ्यमानत्वात् । पुराणादिष्वार्षग्रन्थेष्वपि तथैव कण्ठरवेण वैष्णवादिशब्दोच्चारणपूर्वकमैदंपर्येण व्रतादिव्यवस्थादर्शनाच्च । ननु क्वेदमेवमिति चेत्साकल्येन लिखितुमशक्यत्वाद्दिङ्मात्रं दर्शयामः । तत्र प्राचा नारायणभट्टेन कृतायां धर्मप्रवृत्तौ एकादशीश्राद्धविषये "श्राद्धं कृत्वा तु यो विप्र" इत्यादीनि एकादश्यामपि श्राद्धोत्तरं भोजनावश्यकताबोधकानि वचनानि स्मार्तपरत्वेन "एकादश्यां यदा श्राद्धमि"ति कृण्वस्य "तथैवोपवसेयुश्चेद्वैष्णवा हरिवासर" इत्यादीनि स्कान्दस्य च वचनानि पितृशेषाघ्राणमात्रविधायकानि वैष्णवपरत्वेन व्यवस्थापितानि । तथा तत्रैव श्रवणद्वादशीनिर्णये पुराणसमुच्चये "श्रवणद्वादशी सा स्यादुपोष्या विष्णुतत्परैरि"ति । इहापि वैष्णवसम्प्रदायस्थैरित्यर्थः । तत्रैवेकादशीनिर्णये—

"आदित्योदयवेधस्तु स्मार्त्तानां कथितो बुधैः ।
अरुणोदयवेधस्तु वैष्णवानां स्मृतोऽपरैः" ॥

इत्यादिभविष्योत्तरव्याघ्रपादगोभिलगालवनारदीयपाद्मादिवचनैरेकादशीद्वैविध्यं स्मार्तवैष्णवपरभेदेन निर्णीतम् । तथा तत्रैवाष्टमहाद्वादशीनिर्णयान्तरमुच्यते "एताश्चाष्टौ द्वादश्यो वैष्णवानां नित्याः, अवैष्णवानां केचित्" इत्याहुः—

"सदीक्षावधि संन्यासं समन्त्रं द्वादशाक्षरम् ।
अष्टाक्षरमथान्यं वा ये मन्त्रं समुपासते ॥

ज्ञेयास्ते वैष्णवा लोके विष्णवर्चनरताः सदा ।
तेषामेवोपवासः स्यान्महाद्वादशीनामपि ॥
वैष्णवा ये न कुर्वन्ति महाष्टद्वादशीव्रतम् ।
पतन्ति नरके घोरे यावदाभूतसम्प्लवम् ॥
वैष्णवव्यतिरिक्तानामुपवासाः कृताकृताः ।
अष्टौ महाद्वादशीनामेष धर्मः सनातन" ॥

इति स्पष्टमेव वैष्णवस्वरूपं भगवन्मन्त्रोपासकत्वलक्षणं तद्व्रतनिर्णयश्चोक्तः । तेन वैष्णवसम्प्रदाया अपि निरूपिता एव । तन्मन्त्रग्रहणस्य तदेकसाध्यत्वात् । "सम्प्रदायविहीना ये मन्त्रास्ते निष्फला मता" इत्यादिभिः पूर्वमेव व्यवस्थापितत्वात् । माधवोऽपि एकादशीनिर्णयादौ—

"एकादशी द्वादशी वाऽधिका चेत्त्यज्यतां दिनम् ।
पूर्वं ग्राह्यं तूत्तरा स्यादिति वैष्णवनिर्णयः ॥
द्वादशीमात्रवृद्धौ तु शुद्धाविद्धे व्यवस्थिते ।
शुद्धा पूर्वोत्तरा विद्धा स्मार्तनिर्णय ईदृशः" ॥

इत्यादौ तांस्तान् निर्णयान् वैष्णवस्मार्तपरत्वभेदेन स्पष्टमेव व्यवस्थापयति । तथा—

"दशमीवेधयुक्तस्तु यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम्" ॥

इत्यादीनि वैष्णवविष्णुपरायणादिशब्दघटितानि गारुडादिवचनान्यपि तादृशव्यवस्थायां प्रमाणत्वेन माधवमयूखकारादिभिरुदाहृतान्येव । किञ्च, कालमाधवीये अरुणोदयवेधस्वरूपाणि निर्णीयोच्यते—

"वैखानसपञ्चरात्रादिवैष्णवागमोक्तदीक्षां प्राप्तो वैष्णवः" ।

अत एव स्कन्दपुराणे वैष्णवस्वरूपमभिहितम्—

"परमापदमापन्नो हर्षे वा समुपस्थिते ।
नैकादशीं त्यजेद्यस्तु यस्य दीक्षाऽस्ति वैष्णवी ॥
समात्मा सर्वजीवेषु निजाचारादविच्युतः ।
विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यत" इति ॥

इत्यादि । तथा समयमयूखे तत्रारुणोदयवेधो वैष्णवः परः तद्वाक्ये वैष्णवग्रहणात् । परिशेषात्सूर्योदयवेधो वैष्णवभिन्नपरः । त एव स्मार्तपदेन व्यवह्रियन्ते ग्रन्थेषु । वैष्णवलक्षणं तु गारुडे—

"वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः" ।

भविष्ये—

"यथा शुक्ला तथा कृष्णा यथा कृष्णा तथोत्तरा ।
तुल्ये ते मन्यते यस्तु स हि वैष्णव उच्यते" ॥

इत्यादिमाधवोद्धृतस्कान्दवचनमपि तत्रोदाहृतम् । इत्थञ्च वैदिकतान्त्रिकाद्यन्यतम-वैष्णवसाम्प्रदायिकदीक्षाप्राप्तिरूपस्य वैष्णवलक्षणस्याभिधानपूर्वकं फलसहिततद्धर्मवर्णनं महानिबन्धेषु दर्शितम् । तथा निर्णयसिन्धौ प्रथमपरिच्छेदे ब्रह्मवैवर्त्ते—

"प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि ।
दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतमि"ति ॥

इदं च शिवभक्तादिभिरपि कार्यम् ।

"वैष्णवो वाऽथ शैवो वा कुर्यादेकादशीव्रतम्" ॥

इति शिवधर्मोक्तेः ।

"वैष्णवो वाऽथ शैवो वा सौरोऽप्येतत्समाचरेत्" ॥

इति सौरपुराणाच्चेति । तत्रैव प्राच्यास्तु वैष्णवगृहस्थानां कृष्णापि नित्या ।

"नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।
पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणम्" ॥

इति नारदोक्तेः । पुनस्तत्रैव गारुडे—

"दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतमि"ति ॥

धर्मसिन्धौ च प्रथमपरिच्छेदे वैष्णवगृहिणां कृष्णैकादश्यपि नित्योपोष्या । इद-मेकादशीव्रतं शैववैष्णवसौरादीनां सर्वेषां नित्यम् । अकरणे प्रत्यवायश्रवणादित्यादिषु बहवो निर्णया वैष्णवादिसम्प्रदायभेदेनेदंपरतया व्यवस्थाप्यन्ते । पुनर्निर्णयसिन्धौ प्रथमपरिच्छेदे वृद्धवसिष्ठः—

"उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैरि"ति ।

(द्वादश्यमावास्ययोस्तुलसीच्छेदस्य निषेधप्रतिप्रसवौ, वैष्णववव्रतादि कुर्वतां गौण वैष्णवत्वम्)

तत्रैव विष्णुधर्मे—

"न छिन्द्यात् तुलसीं विप्रो द्वादश्यां वैष्णवः क्वचित् ।
देवार्थे तुलसीच्छेदो होमार्थे समिधां तथा ॥
इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य चे"ति ।

एवमनेकत्र प्रामाणिकनिबन्धेषु पृथक्तया वैष्णवसाम्प्रदायिकानां व्रतादितत्त्वन्निर्ण-

यरूपाणि सम्प्रदायवर्णनानि सन्त्येवेति । किं बहुना । नन्वत्र सर्वत्र वैष्णवशब्देन सत्साम्प्रदायिकदीक्षावतामेव ग्रहणे तद्भिन्नानामपि द्वादशीविद्धव्रताद्याचरणशिष्टाचारो विरुध्येतेति चेन्नैवम् । उक्तधर्मप्रवृत्त्यादिधृतवचनानुरोधात् सम्प्रदायतो वैष्णवमन्त्रग्राहिण एव मुख्यं वैष्णवत्वम् । इतरेषां तु तद्धर्माचरणाद्गौणं वैष्णवत्वमिति सिद्धान्तात् । अत एव धर्माब्धिसारे प्रथमपरिच्छेदे तत्र व्रताधिकारिणो द्विविधाः । वैष्णवाः, स्मार्ताश्च । तत्र यद्यपि "यस्य दीक्षास्ति वैष्णवी"त्यादिलक्षणयुक्ता वैष्णवास्तद्भिन्नाः स्मार्त्ता इति महानिबन्धेषूक्तम् । तथापि स्वपारम्पर्यप्रसिद्धमेव वैष्णवत्वं स्मार्तत्वं च वृद्धा मन्यन्ते इति सिन्धूक्तमेव सर्वदेशसर्वशिष्टपरिगृहीतं प्रचरतीति अन्यदेतत् ।

( शैववैष्णवसम्प्रदायावनादिसिद्धौ, मन्त्रलेखनद्रव्याणि, द्विविधा वैष्णवा )

तस्माच्छैववैष्णवसम्प्रदायौ द्वावप्यनादिसिद्धावेव । अत एवाचारार्केऽपि ऊर्ध्वपुण्ड्रत्रिपुण्ड्रे शास्त्रतो निर्णीयोच्यते एवं यथासम्प्रदायं तिलकं कुर्यादिति । शैववैष्णवान्यतरलक्षणस्वसम्प्रदायाऽनुल्लङ्घनेन त्रिपुण्ड्रमूर्ध्वपुण्ड्रं वा कुर्यादित्यर्थः । गौतमतन्त्रेऽपि त्रिंशत्तमाध्याये ( श्लो० ३० )—

"काश्मीरचन्दनेनाथ भस्मना वाऽथ सुव्रत ।
काश्मीरं शक्तिसंस्कारे चन्दनं वैष्णवे मतम् ।
शैवे भस्म समाख्यातं मातृकामन्त्रलेखने" ॥

इत्यारभ्य ( श्लो० ४२ )—

"दीयमानस्य मन्त्रस्य दशैता मन्त्रसत्क्रियाः ।
याः कृत्वा सम्प्रदायेन मन्त्री वाञ्छितमश्नुते" ॥

इत्यन्तेन स्पष्टतया शैववैष्णवसम्प्रदायभेदो निर्णीतोऽस्ति । किञ्च, श्राद्धार्हब्राह्मणेष्वपि बहुग्रन्थेषु भेदेन निर्दिश्यमानयोः शैववैष्णवयोरुत्तमत्वमुच्यते । यथा धर्मसिन्धौ तृतीयपरिच्छेदे—

"शिवभक्तो विष्णुभक्तो भार्यायामृतुकालगः ।
गुरुभक्तो ज्ञाननिष्ठः सोमयाजी च सत्यवाक् ॥
सुशीलस्नातकयतिब्रह्मचारिण उत्तमा" इति ।

निर्णयसिन्धौ—

शम्भुध्यायी श्रीशपादाब्जसेवी पान्थश्चैते तूत्तमाः सम्प्रदिष्टा" इति ॥

अथ सारसङ्ग्रहे पाद्मे—

"ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति" ॥

"वैष्णवा द्विविधाः प्रोक्ताः बाह्याभ्यन्तरतस्तथा ।
बाह्यास्तु शङ्खचक्राभ्यामान्तरा वीतरागत" इति ॥

एवमन्यत्रापि नारदपञ्चरात्रविष्णुपुराणश्रवणश्रीभागवतादिषु तत्र तत्र द्रष्टव्यम् ।

( वैष्णवान्त.पातिन स्वसम्प्रदायस्य वर्णन प्रमाणेषु )

अथैवं वैष्णवसम्प्रदायानां वर्णितत्वेऽपि न भवत्सम्प्रदायो वर्णित इति चेत्, अस्मत्सम्प्रदायोऽपि वैष्णवसम्प्रदायान्तःपातित्वात्तद्वर्णनेन वर्णित एव ब्राह्मणप्रशंसनेन । आन्ध्रादितद्भेदप्रशंसावत् । उदाहृतानि चास्मत्साम्प्रदायिकेष्वपि व्यापकानि—

"अष्टाक्षरमथान्यं वा ये मन्त्रं समुपासते ।
ज्ञेयास्ते वैष्णवा लोके विष्ण्वर्चनरताः सदा" ॥

इत्यादिलक्षणानि । तथापि ब्राह्मणवशिष्ठन्यायावलम्बात् कण्ठरवेणाप्यास्माकीनस्य रुद्रादिपारम्पारिकाचार्यप्रवर्तितस्य पुष्टिमार्गादिशब्दवाच्यस्य सम्प्रदायस्य वर्णनं पुनर्दर्शयामः । अस्ति पद्मपुराणादिषु वैष्णवसम्प्रदायगणनायां रुद्रसम्प्रदायस्यापि पृथग्वर्णनम्—

"श्रीब्रह्मरुद्रसनकवैष्णवाः क्षितिपावनाः ।
चत्वारस्ते कलौ भाव्याः सम्प्रदायप्रवर्त्तकाः" इत्यादौ ॥

( तत्र त्र्यम्बक यजामह इति श्रुतेरर्थ. शिवस्य पुष्ट्याचार्यत्वे श्रुत्यन्तराणि च )

किञ्च, श्रुतिष्वपि—

"त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
. उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा मृतादि"ति ॥

अर्थस्तु, सुगन्धिं जीवोद्धारार्थकानेकपुण्यकर्माणम्, "यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाती"ति श्रुत्यन्तरात् । ननु किमस्य तादृशं कर्मेत्याकाङ्क्षायामाह पुष्टीति । पुष्टिमार्गाख्यसम्प्रदायस्य सर्वत्र प्रवर्तनेन वृद्धिकर्तारम् । अत्रापि हेतुः । त्र्यम्बकं अर्थात्त्रिकालज्ञमिति । न चात्र पुष्टिशब्देन शरीरादिपोषणं ग्राह्यम् । तस्य संहाराधिष्ठातृदेवकार्यत्वासम्भवात् । प्रत्युत वत्सापाकरणादिकर्मसु हिंसाऽभावाय प्रयुज्यमानैः "रुद्रस्य हेतिः परिवारो वृणक्तु" इत्यादिमन्त्रैस्तथैव निश्चयात् । तादृशपोषणस्य वर्द्धनरूपत्वेन वर्द्धनवर्द्धकत्वकथने असामञ्जस्याच्च । अतः ( स्कं० ६ ) श्रीभागवतादिषु "पोषणं तदनुग्रह" इत्याद्युक्तानुग्रहप्रधानपुष्टिमार्ग एवात्र पुष्टिशब्देनोच्यते । अत एवोत्तरार्द्धे जीवानाममृतसम्पादनेन मृत्युभयान्मुक्तिः फलत्वेनाम्नायते बन्धनात् वृन्तात् उर्वारुकमिव मृत्योः सकाशान्मुक्षीय मुक्तो भूयासं न त्वमृतान्मोक्षादिफलादिति तदर्थात् । तथा अणोरणीयानित्यनुवाकेऽपि सर्वाणीयस्त्व-

सर्वमहीयस्त्वादिना ब्रह्मस्वरूपं निरूप्य एतादृशस्वरूपस्य को वा प्रवक्ताऽनादिसिद्धः सर्वदेवोपदेशक आचार्य इत्याकाङ्क्षायां श्राव्यते—

"यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिर्हिरण्यगर्भं पश्यति जायमानं स नो देवः शुभया स्मृत्या युनक्त्वि"ति । तथाऽग्रिमानुवाकेष्वपि तस्य ब्रह्मविद्यानियामकत्वं भक्त्या भगवतः स्ववशत्वकरणात् "अहं भक्तपराधीनः" इति न्यायेन ब्रह्माधिपतित्वादिकं च श्रूयते—

"ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोमि"त्यादि ।

एवमन्यत्रापि श्रुत्यादिषु सहस्रशोऽस्तीति तत्र तत्र द्रष्टव्यम् । तथा नारदादीनामस्मदाचार्याणामाचार्यत्वप्रकारोऽपि प्रमाणदिग्दर्शनपुरःसरं आश्चर्यश्च क इति प्रश्नस्योत्तरे प्रपञ्चितः । एवं श्रीमद्वल्लभाचार्यपर्यन्ताचार्यपरम्पराद्वारा लोकेऽस्मत्सम्प्रदायप्राप्तिप्रकारोऽपि शाण्डिल्यसंहितादिवचनोपन्यासेन पुरैव प्रदर्शितः ।

(माधवादिग्रन्थेषु स्फुट विष्णुस्वामिमतस्य वर्णन, शङ्कराचार्यैरप्यनुदितत्वम्)

अथ शुकाचार्यादर्वाचीनानामस्मदाचार्याणां श्रीविष्णुस्वामिचरणादीनां नामनिर्देशपूर्वकमप्यस्मत्सम्प्रदायस्यास्त्यनेकत्र विष्णुस्वामिकृतकारिकाः प्रमाणत्वेनोदाह्रियन्ते । अथ विद्यारण्येनापि सर्वदर्शनसङ्ग्रहे रसेश्वरदर्शननिरूपणे शरीरनित्यत्वनिर्णये कथ्यते "न चेदमदृष्टचरमि"ति मन्तव्यम्, विष्णुस्वामिमतानुसारिभिर्नृपञ्चास्य शरीरस्य नित्यत्वोपपादनात् । तदुक्तं साकारसिद्धौ—

"सच्चिन्नित्यनिजाचिन्त्यपूर्णानन्दैकविग्रहम् ।
नृपञ्चास्यमहं वन्दे श्रीविष्णुस्वामिसम्मतमि"ति ॥

न त्वेतत्सावयवं रूपवदवभासमानं नृकण्ठीरवाङ्गं सदिति न सङ्गच्छत इत्यादिनाक्षेपपुरःसरं सनकादिप्रत्यक्षे "सहस्रशीर्षा पुरुषः" इत्यादिश्रुतिः "तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधमि"त्यादिपुराणलक्षणेन प्रमाणत्रयेण सिद्धं नृपञ्चाननाङ्गं कथमसत् स्यादिति सदादीनि विशेषणानि गर्भश्रीकान्तमिश्रैर्विष्णुस्वामिचरणपरिणतान्तःकरणैः प्रतिपादितानीत्यादि । एवं ग्रन्थान्तरेष्वपि तत्र तत्र प्रामाणिकप्रणीतेषु सहस्रशोऽस्त्येवेति । तदनेकग्रन्थारण्यसञ्चरणशीलानां विद्वत्केसरिणां ज्ञातचरमेव निखिलमित्यलं विस्तरेण । किञ्च, शङ्कराचार्यप्रभृतयोऽप्यानन्दमयाद्यधिकरणेषु आनन्दमयः परमात्मैवेत्यादिरूपानतिप्राक्तनान् प्राचीनवृत्तिकारादिभिर्व्याख्यातानस्मत्सिद्धान्तानेवानूद्य इदं त्विह वक्तव्यमित्यादिना दूषयन्तीति निःसन्दिग्धमस्मत्सिद्धान्तस्यातिप्राचीनत्वं बहुग्रन्थवर्णितत्वं च तद्दत्तदूषणोद्धारस्तु श्रीमदाचार्यादिभिर्भाष्यादिषु कृत एवेति शुभम् ।

अपि चास्मदभिमतो वेदान्तराद्धान्तः श्रुतिगीतासूत्रादिषु सर्वत्र निरूपितो विजयते । अतो यदि क्वचिदेवास्य सम्प्रदायस्य मूलं स्यात्तर्हि तन्मात्रं तु दर्शयित्वा विरराम ।

इह तु—

"प्रमाणानन्त्यतः सर्वं लेखितुं नैव शक्यते ।
तथापि तव सन्तुष्ट्यै दिङ्मात्रं दर्शितं मया ॥
सर्वग्रन्थेष्विति वदन् सर्वज्ञः स्वमुखाद्भवान् ।
बौद्धवैभवशून्यैस्तदीयतां कथमुत्तरम्" ॥

---

## ( विंशः प्रश्नः उत्तरकारिका च )

## अथ तृतीयस्यावान्तरस्त्रिकोटिकसंशयघटितश्चतुर्थः प्रश्नः भवदाचार्येभ्यः पूर्वाचार्या व्यासादयो न्यूनाः, समाः, अधिकाः, वा ?

### उत्तरम् ।

"व्यासादिभ्योऽस्मदाचार्या न्यूना अंशेन केनचित् ।
अंशेन केनचित्तुल्याः कुतश्चिच्चांशतोऽधिकाः" ॥

( स्वाचार्याणां व्यासादितो न्यूनता )

तथाहि अस्मत्पूर्वाचार्यैर्व्यासाद्यनुसारेणैव धर्मब्रह्मणी निर्णीय जीवोद्धारार्थं प्रतितन्त्रार्थानां प्रवर्तितत्वेन तैस्तेषां बहुस्थलेषु स्वगुरुत्वकथनेन चास्मदाचार्याणां स्वदृष्ट्या व्यासादितो न्यूनत्वमस्त्येव ।

( एषां व्यासादितौल्य तत आधिक्य च )

अथ तैर्यथा साङ्ख्यपातञ्जलतर्कदिगम्बराद्यर्वाचीनकुराद्धान्तनिराकरणपूर्वकं जीवोद्धारार्थं ब्रह्मचतुर्लक्षण्यादिकं प्राणायि । तथा अस्मदाचार्यैरपि तदर्थं तद्भाष्यसुबोधिनीतत्त्वदीपनिबन्धप्रभृतयो महत्तरा ग्रन्था अनेकार्वाचीनमायावादादिकुतर्कनिरासपूर्वकं प्रणीताः । तादृशवाङ्मनोऽगोचरान्यलौकिकार्थनिरूपणदर्शनेन व्यासादिवत्तेषां सर्वज्ञत्वमपि निर्मत्सराणां सतां चेतसि स्वयमेव निश्चीयते । तथेदानीं प्रत्यक्षतस्तद्दर्शनाभावेऽपि व्यासादिवद्बहुजनमान्यत्वमप्यनुभूयत एव । अतोऽस्मदाचार्याणां व्यासादिभिस्तुल्यत्वमपि सुस्थम्, तथा व्यासादिकृतानेकग्रन्थसद्भावेऽपि केषाञ्चिच्चतुर्लक्षण्यादीनां सर्वथा स्वतोऽवबोधाक्षमार्थत्वात्तत्राऽप्रविशतां सुगमेष्वपि पुराणादिषु विविधविचित्रदेवादिवर्णनदर्शनेनातिभ्राम्यदल्पमतीनां बहुलकलिकालकलुषकलहकवलितसकलसत्कर्मज्ञानादीनां अस्मादृशां वारम्वारमपारसंसारवारिधितरङ्गैरितस्तत उत्क्षिप्यमाणानामतिजडमति-

तया व्यासादिभिरपि बोधयितुमशक्यानां जनानां परमकरुणया भाष्यादिग्रन्थद्वारा निखिलश्रुतिगीताब्रह्मसूत्रश्रीभागवताद्यर्थावबोधहस्तावलम्बदानेन सहसैव श्रीमन्नन्दसूनुपदारविन्दसेवाख्यायां सुदृढेनाविस्थापनेनास्त्यस्मदाचार्याणां व्यासादितोऽप्याधिक्यम् ।

---

## ( एकविंशः प्रश्नस्तत्राद्यकोटेरर्थः उत्तरकारिकाश्च )

## अथ पञ्चमोऽवान्तरः प्रश्नः

## न्यूनाश्चेत्सकलधर्ममार्गविप्लवः स्यात्, समाश्चेत्तदा तत्कर्तृकग्रन्थानां प्रचारः सर्वत्र स्यात्, तत्कुतो न ?

अत्राद्यकोटेरयमर्थः स्यात् । यदि भगवदाचार्येभ्यो व्यासादयो न्यूनास्तर्हि तन्माहात्म्यादिप्रतिपादकस्य शास्त्रस्य विरोधः । सकलधर्ममार्गाणां व्यासादिकर्तृकत्वात्तेषां न्यूनपुरुषकर्तृकत्वापत्त्या विप्लवश्च भवेदिति ।

उत्तरम् ।

"आध्यात्मिकस्य ज्ञानस्य सन्मन्त्रस्य च दानतः ।
भगवत्प्रापकाः साक्षादाचार्याः सर्वतोऽधिकाः ॥
परब्रह्मतया सर्वोत्तमास्ते सर्वथा जनैः ।
मन्तव्या इति धर्मस्य मार्गो व्यासादिनिर्मितः ॥
अतो व्यासाद्यनुज्ञातः स्वाचार्योत्कर्षचिन्तने ।
नैव विप्लवगन्धोऽपि धर्ममार्गस्य कस्यचित्" ॥

( आध्यात्मिकज्ञानदस्य प्रथमाभिवाद्यता, ब्रह्मदस्य सर्वेभ्योऽधिकता, मन्त्रदो बालोऽपि पिता स्यात् )

तथाहि आध्यात्मिकज्ञानदातुराचार्यस्य सर्वतः प्रथमाभिवाद्यत्वमाह द्वितीयाध्याये मनुः ( श्लो० ११७ )—

"लौकिकं वैदिकं वाऽपि तथाध्यात्मिकमेव च ।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत्" इति ॥

अत्र कुल्लूकभट्टः, लौकिकमर्थशास्त्रादिज्ञानं वैदिकं वेदार्थज्ञानं आध्यात्मिकं ब्रह्मज्ञानं यस्मात्तु गृह्णाति बहुमानमध्ये स्थितं तं प्रथममभिवादयेत् । लौकिकादिज्ञानदातॄणामेव त्रयाणां समवाये यथोत्तरं मान्यत्वमिति व्याचख्यौ ।

पुनस्तत्रैव ( अ० २ श्लो० १४४ )—

"य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ ।
स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचने"ति ॥

तथा ( श्लो० १४६ )—

"उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मणः पिता ।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतमि"ति ॥

तथा ( श्लो० १५० )—

"ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता ।
बालोऽपि विप्रो वृद्धस्य पिता भवति धर्मत". इति ।

तथा ( श्लो० १५४ )—

"अज्ञो भवति वै बालः पिता भवति मन्त्रदः ।
अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदमि"ति ॥

( विद्यागुरुहितोपदेशकगुरुबन्धुपुत्रादिषु गुरुवद्वृत्ति , अध्यापकादाचार्यभेद
विविधा गुरवस्तत्राचार्यस्योत्कर्षश्च )

न चेदं मनूक्तं सर्वं विद्यागुर्वभिप्रायेणैवेति शङ्कयम् । एतत्सर्वं निरूप्याग्रे विद्यागुरुष्वेतदेवेति तत्र तथावृत्त्यतिदेशान् अन्यथाऽतिदेशे प्रयोजनाभावात् । अतिदेशवाक्यं तु ( श्लो० २०६।२०७ )—

"विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ।
प्रतिषेधस्तु चाधर्मान् हितं चोपदिशत्स्वपि ॥
श्रेयस्सु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ।
गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबन्धुषु" इति ॥

तस्मात्पूर्ववाक्येष्वाध्यात्मिकज्ञानदो मन्त्रोपदेष्टा आचार्योऽभिप्रेत इति ज्ञायते। याज्ञवल्क्यस्मृतौ ( अ० २ ) साधारणमातृकाप्रकरणे ( श्लो० १३ ) अर्थशास्त्रादित्यस्य मिताक्षरायाम्—

"आचार्यं च प्रवक्तारं पितरं मातरं गुरुम् ।
न हिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः" ॥

इति मनुवचने गुरुभ्यामपि मातापितृभ्यां गुरुप्रवक्तारौ पृथगुक्त्वा ततोऽप्याचार्यस्य भेदेन निर्देशाच्च गणनायां प्रथमोपदेशेन तस्य सर्वेभ्योऽपि मुख्यत्वज्ञापनाच्च । न चैवं गुरुसत्कारविधिवाक्यानि आचार्ये न प्रवर्त्स्यन्ते तस्य गुरुत्वाभावादिति वक्तव्यम् । तत्रापि गुरुशब्दप्रवृत्तेर्व्यासेन दर्शितत्वात् । यथा याज्ञवल्क्यस्मृतौ ( अ० ३ ) गुरुतल्पगप्रायश्चित्तप्रकरणे ( श्लो० १ ) तप्ते यः शयने सार्धमित्यस्य मिताक्षरायां व्यासेनाप्यत्रान्यत्र प्रयोगे दर्शितः । गुरवो मातृपितृपत्याचार्यविद्यादातृज्येष्ठभ्रातर ऋत्विजो भयत्राताऽन्नदाता चेति । न चानेकार्थकल्पनादोषः। गुरुशब्दस्य प्रवृत्तिनिमित्तभूतायाः पूजार्हतायाः सर्वत्रानुस्यूतत्वात् । दर्शितं तस्याः प्रवृत्तिनिमित्तत्वं योगी-

श्वरेण "एते मान्या यथापूर्वमेभ्यो माता गरीयसी"ति मान्या इत्युपक्रम्य गरीयसी-त्युपसंहारं कुर्वता। नच "उपाध्यायादृशाचार्य आचार्याणां शतं पिते"त्युपाध्याया-दधिकाचार्यात्पितुरतिशयितत्वात्। स एव मुख्य इति वाच्यम्, आचार्येऽप्यतिशयित-त्वस्याविशिष्टत्वात् "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिते"ति। गौतमेनाऽप्युक्तम् "आचार्यः श्रेष्ठो गुरूणामि"ति। किञ्च, यदि अतिशयितत्वमात्रेण मुख्यत्वमुच्यते तर्हि सहस्रमिति वचनान्मातुरेव गुरुत्वं स्यात्। तस्मात्सर्वे गुरव इत्याद्याह विज्ञानेश्वरः।

(सर्वा भूमिरपि गुरोः प्रत्युपकारो न, गुर्वनादरे शास्त्रानुपस्थितिश्चेत्यत्र श्रुतयः गुरुतोषरोषादिफलानि)

एवं तत्र परब्रह्मप्रापकाणामाचार्याणां सर्वाधिकत्वेनादरणीयत्वं निरूप्यत एव। छान्दोग्ये च मधुविद्यान्ते श्रूयते। यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इति। न चेदं मधुविद्योपदेशमात्रविषयं मन्तव्यम्। एतस्य आध्यात्मिकोपदेष्ट्राचार्यपरतायाः शङ्कराचार्यैरपि उपदेशसहस्रीप्रथमगद्यादिषु स्वीका-रात्। तथा तापनीयेऽपि—

"सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पत" इति॥

श्वेताश्वतरे (पृ० ३७४)—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कल्पि(थि)ता ह्यर्थाः प्रकाशन्ते महात्मन" इति॥

पराशरमाधवीयेऽपि (अ० १ श्लो० ९) "प्रदक्षिणाभिवादैश्च स्तुतिभिः समपूज-यन्नि"त्यस्य व्याख्याने उक्तश्रुतिमुदाहृत्योच्यते। अन्तरेण गुरुभक्तिमुपदिष्टोऽप्यर्थो निष्फलो भवति। एतदपि क्वचिच्छ्रूयते—

"अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा। यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तदि"ति। यथा तमनाद्रियमाणाः शिष्या गुरुणा न पालनीयास्तथा तच्छ्रुतमपि ताञ्छिष्यान् स्वफलदानेन न पालयतीत्यर्थः। देववद्गुरोः पूजनीयत्वात्तस्मिन्प्रदक्षिणादयो युज्यन्त इति। अत्रैव गुरुसन्तोषस्य श्रेयो-हेतुत्वमन्वयव्यतिरेकाभ्यां पुराणसारेऽभिहितम्—

"गुरावतुष्टेऽतुष्टाः स्युः सर्वे देवा द्विजोत्तमाः।
तुष्टे तुष्टा यतस्तस्मात्सर्वदेवमयो गुरुः॥
श्रेयोऽर्थी यदि गुर्वाज्ञां मनसाऽपि न लङ्घयेत्।
गुर्वाज्ञापालको यस्माज्ज्ञानसम्पत्तिमश्नुत" इति॥

तत्रैव द्वितीयाध्याये हारीतः—

"एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा त्वनृणी भवेत्" इति॥

एकादशस्कन्धे—

"आचार्यं मां विजानीयान्नावमन्येत कर्हिचित्।
न मर्त्यबुद्ध्या सेवेत (सूयेत) सर्वदेवमयो गुरुः" ॥

आदित्यपुराणे—

"पात्रे रुष्टे हरस्त्राता हरे रुष्टे हरिस्तथा।
हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन"।

सप्तमस्कन्धे (अ० १५ श्लो० २६)—

"यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ।
मर्त्यासद्धीः श्रुतं तस्य मन्ये कुञ्जरशौचवदि"ति ॥

केचित्त्विह "भक्तिर्न स्यात्कृतं तस्ये"ति पठन्ति।

(यावज्जीव गुर्वधीनवृत्तिः गुर्वनिष्टाचरणनिन्दाश्रवणादिना ज्ञानानुत्पत्तिः)

सारसङ्ग्रहे नारायणसंहितायाम्—

"आचार्याधीनवृत्तिस्तु यावज्जीवं भवेत्तदा।
यावच्छरीरपातं तु द्वयमावर्तयेन्मनुमि"ति ॥

अत आचार्येषु सर्वेभ्योऽप्याधिक्यबुद्ध्या पुरुषोत्तमवद्भक्तिः कर्त्तव्यैव। तेष्वितरसाधारण्यबुद्धिलक्षणबाधदर्शने सर्वथा ज्ञानानुदयप्रसङ्गात्। यथोदाहृतमाचारमाधवे (अ० १ श्लो० ३२) व्याख्याने—

"गुरोरनिष्टाचरणं गुरोरिष्टविवर्जनम्।
गुरोश्च सेवाऽकरणं ज्ञानानुत्पत्तिकारणम् ॥
आचार्यनिन्दाश्रवणं तद्बाधस्य च दर्शनम्।
विवादश्च तथा तेन ज्ञानानुत्पत्तिकारणमि"ति ॥

धर्मसिन्धौ तृतीयपरिच्छेदपूर्वार्द्धे—

"कलौ गुरूणां भजनमीशभक्त्यधिकं मतम्" इति ॥

अतः स्वाचार्येषु साक्षात्पुरुषोत्तमाभेदेन सर्वावधिकोत्कर्षबुद्धिकरणस्यैव मुख्यधर्ममार्गत्वात्तस्यैव सर्वधर्ममार्गमूलत्वात्तदभावेऽनुष्ठितानामपि सर्वधर्माणां फलानुदयाच्चास्माभिरसदाचार्येषु सर्वनिरूपितोत्कर्षबुद्धिकरणे न कोऽपि धर्ममार्गविप्लवगन्धः—

(प्रश्नस्य द्वितीयकोटेरर्थस्तत्र दोषाश्च)

अथ समाश्चेत्तदा तत्कर्तृकग्रन्थानां प्रचारः सर्वत्र स्यात्तत्कुतो नेति द्वितीयकोटेरयमर्थो भवेत्। यदि व्यासादयो भवदाचार्यैस्तुल्यास्तर्हि व्यासादिकृतभारतादिग्रन्थवद्भवदाचार्यकृतग्रन्थानां सर्वत्र प्रचाराभावे को हेतुरिति। अत्र तत्कर्तृकेति तच्छब्दे-

नास्मदाचार्यपरामर्शः प्रक्रमविरुद्धः । समाश्चेदिति व्यासादिविशेषणसान्निध्येन व्यासादिपरामर्शस्यैव सम्भवात् । तेषामेव शीघ्रोपस्थितिकत्वात् । तथा स्याच्चत्पदयो-र्वैयर्थ्यं सर्वत्र प्रचारः कुतो नेत्येतावतैव निर्वाहात् । तदिति क्लीबप्रयोगोऽपि प्रमादात् । परामृष्टव्यस्य प्रचारस्य पुंस्त्वात् । अव्ययत्वादिप्रकल्पनं तु क्लिष्टं आस्तामेतत् ।

## उत्तरं तु

न हि सादृश्ये तद्गतसर्वधर्मत्वमुपमेये सम्भवति । तद्भिन्नत्वे सति तद्गतभूयोधर्म-वत्त्वस्यैव सादृश्यत्वात् ।

(तथा ग्रन्थप्रचाराभावेऽपि नातौल्य प्रचारस्वरूपविचारश्च)

अतो ग्रन्थप्रचाररूपधर्माभावेऽपि न क्षतिः । किञ्च, ग्रन्थप्रचाराऽभावेऽपि न महा-त्मनां तौल्यहानिः । अन्यथा वेदान्ताचार्यतया व्यासतुल्यानां व्यासेन स्वशास्त्रे समु-दाहृतसिद्धान्तानामप्याश्मरथ्यौडुलोमिकाशकृत्स्नादीनामिदानीं तत्कर्तृकग्रन्थप्रचाराभा-वादाधर्म्यं प्रसज्येत । तेषां वेदान्ताचार्यत्वं तु श्रीमदाचार्यरामानुजाचार्यपूर्णप्रज्ञाचार्य-निम्बार्कभास्करशङ्कराचार्यनीलकण्ठविज्ञानेन्द्रभिक्षुप्रभृतिभिः प्रायः सर्वैरपि ब्रह्ममी-मांसाभाष्यकारैस्तत्तत्सूत्रव्याख्याने इत्यमुक आचार्यो मन्यते, इत्यमुक आचार्यो मन्यत इत्येवं लिखद्भिः स्वीकृतमेव । अपिच, किमत्र प्रचारशब्देन प्रामाण्याभ्युपगमपूर्वका-ध्ययनादिकं विवक्षितमाहोस्वित्तदभावेऽपि ग्रन्थानां पर्यालोचनादिमात्रम् । तत्राद्यश्चेत् व्यासकर्तृकग्रन्थानामपि न हि तादृशः प्रचारः सर्वत्र मनुष्यसामान्येऽस्ति । न चैवमपि वेदप्रामाण्यवादिषु तु सर्वत्र तत्प्रचारोऽस्त्येवेति वाच्यम् । वेदप्रामाण्यवादिभिरपि पूर्व-मीमांसकतार्किकादिभिर्दर्शनान्तराभिमानिभिस्तत्त्वतो व्यासदर्शनप्रामाण्यानङ्गीकारात् । यथा जैमिनिना नवमाध्याये कर्मण एव फलसमर्पकत्वं निर्णीतं नत्वीश्वरस्य । यथा च तार्किकैरीश्वरस्य निमित्तत्वमात्रमूरीकुर्वद्भिः (अ० १ पा० ४ सू० २३) "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"त्यादौ व्यासोक्तमपीश्वरस्य जगदुपादानत्वं नाङ्गीक्रियत इति दिक् । यदि तु व्यासदर्शनानुयायिषु सर्वेषु तत्कृतग्रन्थानां तथा प्रचारोऽस्त्येवेत्यु-च्यते । तदा तु तदन्तःपातिष्वस्मत्सम्प्रदायानुरोधिष्वस्मदाचार्यकृतग्रन्थानामपि तथा प्रचारोऽस्त्येवेत्युच्यते, तदा तु तदन्तःपातिष्वस्मत्सम्प्रदायानुरोधिष्वस्मदाचार्यकृतग्र-न्थानामपि तथा प्रचारोऽस्त्येवेति तुल्यम् । अथ द्वितीयश्चेत्तर्हि औदासीन्येन प्रियतया द्वेष्यतया वाऽस्मदाचार्यकृतग्रन्थपर्यालोचनमन्यत्रापि भवेदेव । अत एव भवताऽपि सप्तमप्रधानप्रश्नस्यावान्तरचतुर्थप्रश्ने लिख्यते । प्रमाणं चेत्तदा भवदीयरचितग्रन्थेषु कुतो विरुद्धतया वर्णनमिति । तथा भवद्गुरुतया श्रूयमाणेन सदानन्दगिरिणाऽपि इदानीं प्रारब्धे सहस्राक्षनामके स्वग्रन्थे अस्मन्मतभास्करोपरि किञ्चिद्दूषणधूलिनिक्षेप आरब्ध इति किम्वदन्ती श्रूयते । अतोऽस्माकं ग्रन्थप्रचारे तादृशभवत्प्रश्न एव प्रमा-

णम् । कथमन्यथा भारतभागवतादिटीकाविरोधो भवताऽपर्यालोचितेष्वसद्ग्रन्थेष्ववगतः । अनवगमे च कथं धार्ष्ट्येन पुष्टं स्यात् । अतः कृतमीदृशेन महात्मनां निन्दाफलकेन कुतर्केण ।

(युगभेदेन धर्मभेदः, तत्तद्धर्मशास्तॄणा निन्दानिषेध.)

यथा प्रथमाध्याये बृहत्पराशरः (श्लो० २१)—

"तथा स्मरन्ति ते धर्मं कल्पे कल्पान्तरान्तरे ।
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे" ॥

इत्यादिना प्रतियुगं धर्मवैलक्षण्यात्तदा तदा तत्तत्प्रवृत्त्यर्थं धर्मप्रवर्तकानामाचार्याणामाविर्भावमुक्त्वाऽऽह (श्लो० ३१)—

"युगे युगेषु ये धर्मास्तेषु धर्मेषु ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा द्विजोत्तमा" इति ॥

पराशरमाधवीये च प्रथमाध्याये कूर्मपुराणे—

"न निन्देद्योगिनः सिद्धान् व्रतिनो वा यतींस्तथे"ति ॥

---

## (द्वाविंशः प्रश्नस्तत्र दोषः उत्तरं च)

## अथास्यैव संशयस्य चरमकोटिघटितोऽवान्तरः षष्ठः प्रश्नः

## अधिकाश्चेत्तदा प्रमाणं वक्तव्यम् ?

### उत्तरम् ।

अत्र जिज्ञासितं तु व्यासादिनिरूपितेऽस्मदाचार्यनिष्ठोत्कर्षे प्रमाणं भवेत्तथापि भवदाचार्येभ्यः पूर्वाचार्या व्यासादयो न्यूनाः समाः अधिका वेति संशयवाक्यप्रक्रमानुरोधात्तस्मादाचार्यनिरूपितव्यासादिनिष्ठोत्कर्षे प्रमाणं विवित्सितमिति फलति । तत्राद्यश्चेत् प्रक्रान्तत्रिकोटिकविकल्पे आद्यकल्पस्यानल्पोत्तरविलोकनेनैव सन्तोष्टव्यं भवता । अथ द्वितीयश्चेत्तदा न हि सर्वावधिकव्यासादिपूर्वाचार्यनिष्ठोत्कर्षे कस्यापि विसम्मतिरस्तीत्यलं बहुपुराणादिप्रमाणगणनिर्णीतेऽर्थे पोतवत्प्रमाणजिज्ञासया । तस्मात्—

"व्यासादितोऽस्मदाचार्येष्वसामान्यतयोदितम् ।
न्यौन्यं सामान्यमाधिक्यं मान्यं तन्माऽन्यथा भ्रमेः" ॥

---

## ( त्रयोविंशः प्रश्नस्तदुत्तरकारिके च )

## अथ सप्तमोऽवान्तरः प्रश्नः

शूद्राश्चेदुपदेश्यास्तदा सच्छूद्रा असच्छूद्रा वा । साधारणाश्चेदधमाः कुतो नोपदेश्याः । उपदेश्याश्चेत्तैः सह वैष्णवत्वेन तुल्यता न्यूनता वा । न्यूनत्वं चेत्किं भवदीयदीक्षया ? तुल्यत्वं चेत्तत्कृतपाकादिकं कुतो नाङ्गीक्रियते । अङ्गीक्रियत एवेति चेत्तर्हि वैष्णवदीक्षायां सर्वे वर्णाः समा इत्युच्यमाना भवन्तो धन्याः ।

### उत्तरम् ।

"सदसच्छूद्रसामान्यमुपदेश्यतयाऽऽदृतम् ।
शास्त्रे सामान्यतः प्रोक्ता शूद्रस्याप्यधिकारिता ॥
किं वर्णनिष्ठ इत्यत्र पुरैवैतत्प्रकाशितम् ।
किञ्चित्प्रपञ्च्यते प्राप्तावसरत्वात्पुनर्मया ॥

( हरिसेवादौ स्त्रीशूद्रादीनामप्यधिकारः )

अस्ति सदसच्छूद्रसामान्यस्य भगवच्छरणागत्या स्वस्य वैष्णवत्वसम्पादनपूर्वकं तत्सेवादि सद्धर्माचरणेऽधिकारः यथाऽऽह भगवान्—

"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्" इति ॥

श्रीमद्भागवतेऽपि एकादशस्कन्धे द्वादशाध्याये उद्धवं प्रति स एव ( श्लो० १ )—

"न रोधयति मां योगः"

इत्यादिना योगादीनां साम्प्रदायिकसद्गुरुसङ्गव्यतिरिक्तानां स्वप्राप्यसाधकत्वमुक्त्वाऽह ( श्लो० ३ )—

"सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः ।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥
विद्याधरा मनुष्येषु वैश्या शूद्राः स्त्रियोऽन्त्यजाः ।
रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ ॥
बहवो मत्पदं प्राप्तास्त्वाष्ट्रका याद्वादयः"इत्यादि ॥

( तस्मै धर्मोपदेशनिषेधवाक्यविचारस्तेषां श्राद्धदानादयो धर्मा. मन्त्रवर्जं सर्वधर्मेषु तदधिकारश्च )

न चैषां धर्मोपदेशानधिकारो "नो शूद्राय मतिं दद्यादि"ति मनुवचनानुसाराच्छङ्क्यः । वचनस्योपसत्तिशून्यशूद्रविषयत्वात् । याज्ञवल्क्यस्मृतौ ( अ० ३ ) महापातकप्रायश्चित्तप्रकरणे ( श्लो० १ )—

"शूद्रोऽधिकारहीनोऽपि कालेनानेन शुद्ध्यति" ॥

इत्यस्य मिताक्षरायाम् । यत्तु मानवं न चास्योपदिशेद्धर्मं "न चास्य व्रतमादिशे-दि"ति शूद्रस्य धर्मव्रतयोरुपदेशनिषेधपरं वचनम् । तदनुपसन्नशूद्राभिप्रायं तथा "यत्तु गौतमवचनं प्रतिलोमा धर्महीनाः" इति तदुपनयनादिविशिष्टधर्माभिप्रायमिति विज्ञानेश्वरोक्तेः । तस्मादस्यापि सर्वधर्ममार्गवर्तित्वं सम्भवत्येव । अत्रैव मिताक्षरायामुदाहृतात्—

"तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम् ।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्" ॥

इत्यङ्गिरःस्मरणात् ।

धर्मप्रवृत्तौ—

"तथा शूद्रं समासाद्य सदा धर्मपुरःसरमि"ति ।

उत्तरार्द्धं तु तदेव ।

निर्णयसिन्धौ प्रथमपरिच्छेदे व्यासः—

"शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विने"ति ॥

तत्रैव तृतीयपरिच्छेदे श्राद्धप्रकरणे महाभारते राजधर्मेषु—

"ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ।
कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः" ॥

इत्युक्त्वा—

"वेदधर्मक्रियाश्चैव तेषां धर्मे विधीयते ।
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ॥
दानानि च यथाकालं द्विजेभ्यो विसृजेत्सदे"ति ।

तत्रैव मात्स्ये—

"मन्त्रवर्ज्यं हि शूद्रस्य सर्वमेव विधीयते"ति ॥

अत्र शूद्रस्यापि सदा धर्माचरणस्योक्तत्वात्तस्याप्युपदेश उक्तरीत्या भगवत्सेवाद्यधिकारसम्पादनाय ।

(पुराणादौ तदुक्तमन्त्रजपे च शूद्रस्याधिकार.)

इहाङ्गिरःस्मरणे जपवर्जनं गायत्र्यादिवैदिकमन्त्राणामेव पौराणादिमन्त्राणां जपे तु शूद्रस्याप्यधिकारात् । अत एव आचारमाधवे ( श्लो० १ ) "अथातो हिमशैलाग्र" इत्यस्य व्याख्याने । त्रैवर्णिकमात्राधिकारिका हि श्रुतिः प्रसिद्धा । "ॐकारश्च तथा-

विधः" । "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ती"ति श्रुतेः । अथ शब्दस्य पौरुषेण ग्रन्थानां च सर्ववर्णविषयत्वात् स एव तेषु योग्य इति । निर्णयसिन्धौ श्राद्धप्रकरणे पाद्मे—

"नहि वेदेष्वधिकारः कचिच्छूद्रस्य विद्यते ।
पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिहे"ति ॥

स्वप्नेश्वरकृते भक्तिमीमांसाभाष्येऽपि प्रथमाध्याये (सू० ९) "तद्वतः प्रतिपत्ती"ति सूत्रव्याख्याने गीताया भगवद्वाक्यत्वेन वेदत्वप्रतिपादनाय "गीता सुगीता कर्त्तव्ये"ति पाद्मवचनमुदाहृत्योच्यते । न शूद्राणामश्रवणप्रसङ्गः । भारतश्रवणाभ्यनुज्ञानेनैव तदुपपत्तेः प्रणवादिस्तुत्यादिवत् । तद्विहायेति चेन्न लक्ष्यताऽपरिपूर्त्तेः । तथाचोक्तमाचार्यैः—

"तानेव वैदिकान् मन्त्रान् भारतादिनिवेशितान् ।
स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुञ्जते" इतीति ॥

(तस्याप्यात्मनिवेदन मुख्य, निवेदनस्वरूप, कथाश्रवणसेवादि च)

तस्माच्छ्रुत्यनुसारिणामपि पुराणतन्त्रादिप्रसिद्धानां भगवन्मन्त्राणामुपदेशग्रहणद्वारा भगवच्छरणागमनं भगवते आत्मनिवेदनं च सदसच्छूद्रसामान्यस्यावश्यकमेव । अत एव लघुविष्णुः—

"शूद्रश्चतुर्थो वर्णस्तु सर्वसंस्कारवर्जितः ।
उक्तस्तस्य तु संस्कारो द्विजेष्वात्मनिवेदनमि"ति ॥

यमोऽपि तृतीयाध्याये (श्लो० १०)—

"दासनापितगोपालकुलमित्रार्धसीरिणः ।
एते शूद्रास्तु भोज्यान्नायश्चात्मानं निवेदयेदि"ति ॥

आत्मनिवेदकस्य शूद्रस्याप्यामान्नं भोज्यमित्यर्थः । आत्मनिवेदनस्वरूपं तूच्यते सारसङ्ग्रहे नारायणसंहितायाम्—

"मन्त्ररत्नानुसन्धानपूर्वकं तस्य सादरम् ।
भगवत्पादयोरात्मनिक्षेपस्त्याग उच्यते ॥
मन्त्रार्थतत्त्वविदुषो यागतन्त्रे नियोजयेत् ।
आचार्याधीनवृत्तिस्तु यावज्जीवं भवेत्तदा ॥
यावच्छरीरपातं तु द्वयमावर्तयेन्मनुमि"ति ॥

मन्त्रद्वयमस्मत्सम्प्रदाये शरणमन्त्रात्मनिवेदनमन्त्ररूपम् । अतः शूद्रसामान्येनाऽपि भगवन्मन्त्रोपदेशो ग्राह्यः । तथा गुरुसकाशात् श्रीभागवतगीतामहाभारतादीनां स्वाचार्यादिकृतग्रन्थानां च श्रवणेन भक्तिदार्ढ्याय ब्रह्मज्ञानमपि सम्पादनीयं भगवत्सेवादि-

कश्च कार्यं शूद्रस्यैतच्छ्रवणाधिकारस्तु विष्णुसहस्रनामभाष्ये "शूद्रः सुखमवाप्नुयादि"त्यादौ शङ्कराचार्यैरपि दर्शितः ।

तथा—

"देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव च ।
भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम्" ॥

इत्यादिभिः सप्तमस्कन्धसप्तमाध्यायादिवचनैर्भगवद्भजनस्य सर्वाधिकारकत्वम् । अन्यत्र स्पष्टतया "चतुर्णामपि वर्णानां गुरुकृष्णार्चनं परमि"त्यादिषु शूद्रस्यापि भगवद्भजनाधिकारित्वं सदसच्छूद्रसाधारण्येन वर्णितमेवेत्यलं विस्तरेण । अतः सदसच्छूद्रसामान्यमुपदेश्यम् । अथ यदुक्तं साधारणाश्चेदधमाः कुतो नोपदेश्या इति । तदसङ्गततरम् । तथाहि—

( चाण्डालादयोऽनुपदेश्यास्तै. सह भाषणविषये )

किमत्राधमशब्देनासच्छूद्रा विवक्षिता उत चाण्डालादयोऽन्त्यजाः । नाद्यः । सदसच्छूद्रसामान्यस्योपदेशस्वीकारे कुतो नोपदेश्या इत्यनुपदेश्यत्वे हेतुप्रश्नायोगात् । अनुपदेश्यत्वस्यैवासिद्धत्वात् । न द्वितीयः । अन्त्यजादीनां प्रतिलोमजसङ्करजातित्वेन शूद्रान्तःपाताभावेन प्रश्ने साधारणाश्चेदिति चेत् कोटिबाधापत्तेः । अथ तथापि सम्प्रदायोपदेशस्य सर्वसाधारणत्वोरीकारे चाण्डालादीनामनुपदेशे को हेतुरिति चेदुच्यते । दशमाध्यायेऽन्त्यजादिधर्मानुपक्रम्याह मनुः ( श्लो० ६२ )—

"ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः ।
स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणमि"ति ॥

तस्मान्नान्यत्र मन्त्रादौ सिद्धिकारणे तेषामधिकारोऽस्तीति नोपदेश्याः । याज्ञवल्क्योऽप्याह ( अ० १ श्लो० ४ ) वर्णजातिविवेकप्रकरणे—

शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृत" इति ॥

सर्वपदाद्दीक्षाधर्मादपि बहिष्कारः । किञ्च, उपदेशस्तु दूरापास्तः, तैः सह सम्भाषणस्यापि प्रतिषेधात् । यथा तृतीयाध्याये प्रकीर्णकप्रायश्चित्तप्रकरणे ( श्लो० ३ ) "विप्रदण्डोद्यम" इत्यस्य मिताक्षरायाम् ।

पतितादिसम्भाषणे तु गौतम आह—

"न म्लेच्छाशुच्यधार्मिकैः सह सम्भाषेत, सम्भाष्य पुण्यकृतो मनसा ध्यायेद्ब्राह्मणेन वा सह सम्भाषेते"ति ।

पराशरमाधवीये प्रथमाध्याये ( श्लो० ३८ ) व्याख्यायां कूर्मपुराणे—

"चाण्डालम्लेच्छसम्भाषे स्त्रीशूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं दृष्ट्वा भोज्यं वापि तथाविधम् ॥

आचामेदश्रुपाते वा लोहितस्य तथैव च ।
अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयतमेव च ॥
स्त्रीणामथात्मनः स्पर्शे नीवीं वा परिधाय चे"ति ।

स्त्रीशूद्रोच्छिष्टभाषणादावेतज्जपादिविषयम् ।

(जपादिषु तद्दर्शनाधोवातगमनादौ तथा स्पर्शसम्भाषणादिषु च)

तथा पाद्मपुराणे—

"चण्डालादीन् जपे होमे दृष्ट्वाऽचामेद्द्विजोत्तम" इति ॥

तत्रैव (श्लो० ३९) व्याख्यायां गौतमः—

"क्रोधं मोहं क्षुतं निद्रां निष्ठीवनविजृम्भणे ।
दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि ॥
आचामेत्सम्भवे चैषां स्मरेद्विष्णुसुरार्चितमि"त्यादि ॥

धर्मप्रवृत्तौ जपप्रक्रमे वचनानि—

"पतितानां चान्त्यजानां दर्शने भाषणे श्रुते ।
क्षुतेऽधोवातगमने जृम्भणे जपमुत्सृजेत् ॥
आचम्य दक्षिणं कर्णं स्पृष्ट्वा दृष्ट्वा दिवाकरम् ।
प्राणायामत्रयं कृत्वा जपशेषं जपेत्तत" इति ॥

इत्थं यत्र तद्दर्शनादौ मन्त्रस्य जपो निषिध्यते तत्र कुतस्तरां तेभ्यस्तदुपदेशः ।
शातातपस्मृतौ—

"चितिवृक्षश्चितिर्यूपश्चाण्डालो वेदविक्रयी ।
एतान् वै ब्राह्मणः स्पृष्ट्वा सचैलो जलमाविशेत् ॥
पथि चाण्डालकं दृष्ट्वा कुर्यात्सूर्यविलोकनम् ।
यदि सम्भाषणं चैव गायत्रीं तु सकृज्जपेदि"ति ॥

निर्णयसिन्धौ (परि० १)

"असम्भाष्यान् हि सम्भाष्य तुलस्यतसिकादलम् ।
आमलक्याः फलं वापि पारणे प्राश्य शुद्ध्यति ॥

बृहन्नारदीये—

"रजस्वलां च चाण्डालं महापातकिनं तथा ।
सूतिकां पतितं चैव उच्छिष्टं रजकादिकम् ॥
व्रतादिमध्ये शृणुयाद्यद्येषां ध्वनिमुत्तमः ।
अष्टोत्तरसहस्रं तु जपेद्वै वेदमातरमि"ति ॥

मनुनापि दशमाध्याये ( श्लो० ५१ )—

"चाण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः" ॥

इत्यादिना श्लोकषट्केन तद्धर्मान्निरूपयतोच्यते—

"न तैः समयमन्विच्छेत् पुरुषो धर्ममाचरन्नि"ति ॥

"धर्मानुष्ठानसमये चण्डालश्वपाकैः सह दर्शनादिव्यवहारं न कुर्यादि"ति मुक्तावली ।

( तेभ्यो दूरतोऽन्नदान तैर्भैरव उपास्य. भगवद्भक्ताश्रयात्तद्वचनेभ्यश्च तेषां भक्त्यादि )

तथा तेभ्योऽन्नदानादिकमपि दूरत एव कर्तव्यमिति तत्र निरूपितम् । अतो यत्र तैः सह साधारणो लौकिकवाग्व्यापारोऽपि निषिद्ध्यते कुतस्तरां तत्र स्वसर्वस्वरूपाणां श्रुतिरहस्यभूतानां भगवन्मन्त्राणां तेभ्य उपदेशस्य शङ्कापीत्यलम् । किञ्च, कृत्यकल्पतरौ देवीपुराणे—

"वर्णाश्रमविभेदेन देवाः स्थाप्यास्तु नान्यथा ।
ब्रह्मा तु ब्राह्मणैः स्थाप्यो गायत्रीसहितः प्रभुः ॥
चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः ।
भैरवोऽपि चतुर्वर्णैरन्त्यजानां तथा मत" इति ॥

अत्रापि शब्दो गौणत्वार्थः । तथा च चातुर्वर्ण्ये काम्यं भैरवपूजनम् । क्वापि तस्य नित्यत्वानभ्यनुज्ञानात् । अन्त्यजानां तु भैरवोपासनैव विधीयते न तु विष्ण्वाद्युपासना । अतो वैष्णवमन्त्रोपदेशो न तेभ्यः क्रियते । नन्वेवं सति भगवद्भक्तेः सर्वमनुष्यसाधारणत्वं भज्येत । साधारणत्वसमर्थनाय चाण्डालादिषु मन्त्रोपदेशमन्तराऽपि भक्त्युद्भवस्वीकारे तु चातुर्वर्णिकेष्वपि मन्त्रोपदेशवैयर्थ्यम्, तमन्तराऽपि भक्तिसम्भवादिति चेन्मैवम्; चाण्डालादिष्वपि भगवद्भक्ताश्रयणेन भक्तिरुद्भवतीति ( अ० ४ श्लो० १८ )—

"किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः खसादयः ।
येऽन्ये च पापा यदुपाश्रयाश्रयाः शुद्ध्यन्ति तस्मै प्रभविष्णवे नमः" ॥

इत्यादिद्वितीयस्कन्धादिवचनैः सिद्ध्यति । तेन ( स्कं० ११ अ० १२ श्लो० ४ )—

"वैश्याः शूद्राः स्त्रियोऽन्त्यजाः" इत्यादिवचांस्यपि व्याख्यातानि वेदितव्यानि । तत्र ( श्लो० २ )—

"यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ।
सत्सङ्गेन हि दैतेयाः...... ....."

इत्युपक्रमात् अतो न भक्तेः सर्वसाधारणत्वव्याघातः। अत एव भक्तिसूत्रद्वितीयाध्यायद्वितीयाह्निकेऽसूत्रयद्भगवान् शाण्डिल्यः ( सू० ७८ )—

"अनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामान्यवदि"ति।

अत्रैतद्भाष्ये स्वप्नेश्वरः—

"निन्दितचाण्डालादियोनिपर्यन्तं भक्तावधिक्रियते"॥

संसारदुःखजिहासाया अविशेषात्। अथ वेदाध्ययनाधिकारात्। कथमत्र त्रैवर्णिकानां स इति चेत्तत्राह "पारम्पर्यादि"ति।

पूर्वमीमांसा सू० २ अ० १ पा० १—

"चोदनालक्षणोऽर्थो धर्मः"

उत्तरमीमांसा सू० ३ अ० १ पा० १—

"शास्त्रयोनित्वात्" इति न्यायादलौकिकोऽर्थः श्रुत्येकसमधिगम्य इत्यत्र न विप्रतिपद्यामहे। किन्तु, स्त्रीशूद्रादीनामितिहासपुराणादिद्वारा चाण्डालादीनां च स्मृत्याचारवदुपदेशपारम्पर्येण ज्ञानमपि श्रुतिमूलमेव भवति। यथा तेषां सामान्याहिंसाधर्मादिज्ञानम्। अन्यथा तदसिद्धिप्रसङ्गादिति व्याचख्यौ। एवं चाण्डालादिष्वपि भगवद्भक्तिसम्भवादेव ( अ० ९ श्लो० १० )—

"विप्राद्द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम्।
मन्ये तदर्पितमनोवचने हितार्थ-
प्राणं पुनाति सकुलं न तु भूरिमानः"॥

इत्यादीनि श्रीभागवतसप्तमस्कन्धनवमाध्यायादिवचनानि सङ्गच्छन्ते।

यत्तूक्तम्—

"अन्त्यजादिवन्मन्त्रोपदेशमन्तरापि चातुर्वर्णिकेषु भक्त्युद्भवसम्भवात्। व्यर्थस्तेषु तदुपदेश" इति।

नैतत्सारम्। अन्यथा वेदानधिकारिणि शूद्रे मोक्षार्थं पुराणादिश्रवणद्वारा ब्रह्मज्ञानसम्पादनं स्वर्गाद्यर्थं पौराणमन्त्रैः कर्मकरणं च विधीयत इति तद्वत्त्रैवर्णिकेष्वपि तद्द्वारा ज्ञानादिसम्भवे तेष्वपि पूर्वोत्तरकाण्डार्थयोः कर्मज्ञानयोरधिकारसम्पादकः सावित्र्युपदेशो व्यर्थः स्यात्।

( वैष्णवत्त्वादत्युत्कर्षेऽपि जातिभेदो न गच्छति )

## अथ यदुक्तं प्रश्नवाक्ये—

उपदेश्या एवेति चेत्तैः सह वैष्णवत्वेन तुल्यता न्यूनता वा। न्यूनत्वं चेत्किं भवदीयदीक्षया? तुल्यत्वं चेत्तत्कृतपाकादिकं कुतो नाङ्गीक्रियते? इति।

## उत्तरम्

इदमनुत्तरणीयम् । अस्माभिश्चाण्डालादिभ्य उपदेशदानानङ्गीकारात् । अथ शूद्राणामुपदेशेऽप्ययं प्रश्नः प्राप्तावसर इति चेदुच्यते । वैष्णवत्वेन तुल्यत्वेऽपि जातेः पाकादिकर्मानर्हत्वात्तत्कृतं तन्नाङ्गीक्रियते । दीक्षा हि वैष्णवत्वेनोत्कर्षं सम्मान्यत्वमोक्षाधिकारित्वादिलक्षणमैहिकामुष्मिकफलपर्यवसायिनं सम्पादयति । न तु जातिमप्यपहरति । सम्पादयति हि वसन्तस्तरूणामवैषम्येणैव बहलदलसुमनःसङ्गसघनत्वं न तु निम्बकदम्बमाकन्दमन्दारत्वादिलक्षणामपहरति जातिमपि ।

अतः श्रीमद्भागवते नवमस्कन्धे चतुर्थाध्याये ( श्लो० ६३ )—

"अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥
नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ।
श्रियं चात्यन्तिकीं ब्रह्मन् तेषां गतिरहं परा ॥
ये दारागारपुत्राप्तान् प्राणान्वित्तमिमं परम् ।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥
मयि निर्बद्धहृदयाः साधवः समदर्शनाः ।
वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥
मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम् ॥
साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ।
मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपी"ति ॥

तथा गीतायाम्—

"समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" ॥

इत्यादिषु भगवतोक्तं स्वप्रसादातिशयपात्रत्वमेव सर्ववर्णेषु वैष्णवत्वेन तुल्यम् ।

( शूद्रपाचितान्नस्य कलौ तद्धृतपक्वान्नस्य दध्यादेश्च निषेध. आमान्नग्रहणेऽदोषस्तत्र विशेषश्च )

नैतावता शास्त्रमुल्लङ्घ्य शूद्रादिकृतपाकस्य ब्राह्मणादिभिर्भोज्यत्वं कोऽप्यनुन्मत्तमतिर्ब्रूयात् । तन्निषेधस्यानेकत्र जागरूकत्वात् ।

यथा धर्माब्धिसारे तृतीयपरिच्छेदे पूर्वार्धे । "अथ कलौ निषिद्धानी"त्युपक्रम्य—

"द्विजानां गोपशूद्रादौ भोज्यान्नत्वं कलौ नहि ।
शिष्यस्य गुरुपत्नीषु न चिरं वासशीलते"ति ॥

तत्रैव—

"घृतदुग्धादिभिः पक्वमन्नं शूद्रात्कलौ त्यजेत् ।
भिक्षामटन् यती रात्रौ न वसेद्गृहिणां गृहे" इति ॥

अनेन कैमुतिकात्तत्कृतपाकादिनिषेधः ।

तत्रैवोत्तरार्धे—

"द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा ।
वानप्रस्थो यतिर्लिङ्गी न भोज्यान्नाः प्रकीर्तिताः ॥
षण्मासं यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् ।
स तु जीवन् भवेच्छूद्रो मृतः श्वा चाभिजायते" इति ॥

सारसङ्ग्रहे स्मृतिः—

"अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ।
वैश्यस्यान्नं तु चान्नं स्याच्छूद्रान्नं रुधिरं स्मृतम् ॥
शूद्रोदकं शूद्रपक्वं शूद्रेण सह भोजनम् ।
इह जन्मनि शूद्रत्वं चाण्डालः कोटिजन्मसु" इति ।

आमान्नं तु तेषामपि ग्राह्यमेव ।

अत एव निर्णयसिन्धौ श्राद्धप्रकरणे—

"आमं शूद्रस्य यत्किञ्चिच्छ्राद्धिकं प्रतिगृह्यते ।
तत्सर्वं भोजनायालं नित्यनैमित्तिकेन च" इति ॥

शुद्धितत्त्वेऽङ्गिराः—

"शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम् ॥
शूद्राद्विप्रगृहेष्वन्नं प्रविष्टं तु सदा शुचिः" ॥

पराशरः—

"तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ।
द्विजातिकरसंस्पृष्टं सर्वं तन्न विरुध्यते" ॥

विष्णुपुराणे—

"सम्प्रोक्षयित्वा गृह्णीयाच्छूद्रान्नं गृहमागतम्" ॥

अङ्गिराः—

"पात्रान्तरगतं ग्राह्यं दुग्धं स्वगृहमागतमि"ति ॥

एवमादीनि शूद्रस्य पक्वान्नग्रहणनिषेधकानि स्वशिष्यस्य सद्धर्माचरणवतस्तस्यामान्नग्रहणे दोषाभावबोधकानि अयाचितोपनीतात्प्रत्याख्यानविधायकानि च वचनानि तत्र तत्र मनुयाज्ञवल्क्यस्मृत्याद्यार्षग्रन्थेषु हेमाद्रिमाधवविज्ञानेश्वरादिकृतेषु तेषु तेषु प्रामा-

णिकनिबन्धेषु च शतश एवोपलभ्यन्त इत्यलं बहुलकालविलङ्घनहेतुना निखिलवचन-विलेखनपल्लवितेन ।

अतो वैष्णवत्वेन तौल्येऽपि वर्णजात्यादिविभागस्य जागरूकत्वाच्छास्त्रसदाचारानुल्लङ्घ्य ब्राह्मणादीनां शूद्रादिपाकग्रहणं न कोऽप्यनास्तिको युक्तजनः शक्तो वक्तुम् ।

अन्यथा, मनुष्यत्वप्रयुक्ततौल्येनाऽपि पाकादिग्रहणप्रसङ्गात् । किञ्च, शिवसायुज्यादिकामानां चतुर्णामपि वर्णानां शिवदीक्षाग्रहणतदर्चनरुद्राक्षधारणादिष्वधिकारः स्मर्यते । तथा दावाग्निजभस्मना चाण्डालादीनामपि त्रिपुण्ड्रकरणं विधीयते, तत्राप्ययं भवत्प्रश्नः प्राप्तावसरः स्यात् । यथा त्रिपुण्ड्ररुद्राक्षादिधारिभिश्चाण्डालादिभिः सह ब्राह्मणादीनां शैवत्वेन तुल्यता न्यूनता वा ? न्यूनता चेत् किं तद्धारणादिना ? तुल्यता चेत्तत्कृतपाकादिकं कुतो नाङ्गीक्रियते ? अङ्गीक्रियते एवेति चेत्तर्हि शैवदीक्षायां सर्वेऽपि वर्णा अभिन्ना इति ब्रुवन्तो भवन्तो धन्या इति ।

तस्मात् कृतमीदृशैः स्वनिग्रहस्थानैः कुतर्कैः ।

(पृच्छककृते उपहासे शास्त्रप्रासदण्डादिकम्)

यश्चोपहासः कृतोऽङ्गीक्रियत एवेति चेत्तर्हि वैष्णवदीक्षायां सर्वे वर्णाः समा इत्युच्यमाना भवन्तो धन्या इति । स तु पाकानङ्गीकारात्परावृत्य प्रष्टारमेव गच्छति । अत्र वदन्त इति वक्तव्येऽप्युच्यमाना इति प्रयोगस्तु प्रमादात् । अन्यैरुच्यमाना इत्यभिप्राये त्वसिद्धम् । केनापि प्रामाणिकेनानुन्मत्तेनैवं वक्तुमशक्यत्वात् । अप्रामाणिकोन्मत्तयोरुक्तेरनादरणीयत्वाच्च ।

किञ्च, व्यवहाराध्याये वाक्पारुष्यप्रकरणे, याज्ञवल्क्यः—

"सत्यासत्यान्यथास्तोत्रैः"

इत्यादिना वाक्पारुष्यं वक्ति । तत्रेदमन्यथा स्तोत्रम् । एवं नवीनरीत्या, अशास्त्रीयत्येत्यसत्यम् । तथैव सर्वजगद्विरुद्धवादिनो यूयं क इत्यादयः कठोरवादाः । तथा दण्डोऽपि तेनैवोक्तस्तत्र ( श्लो० ८)—

"त्रैविद्यनृपदेवानां क्षेप उत्तमसाहस" इति ॥

अत्रैव त्रैविद्यावेदत्रयसम्पन्नास्तेषां राज्ञो देवानां चाक्षेप उत्तमसाहसो दण्ड इति विज्ञानेश्वरः ।

तथापीदानीम्—

"ईदृशानन्यसामान्याऽसौजन्यस्य विधानतः ।
संन्यासिनोऽपि ते धन्यम्मन्याः सन्तूचितं कलौ ॥"

आस्तामेतत् । इत्थम्—

मन्त्रेण विन्यस्यात्मानमनन्यत्वात्पदे हरेः ।
सदसच्छूद्रसामान्यं मुनिमान्यं भवत्विह ॥

## ( चतुर्विंशः प्रश्नस्तदर्थश्च )

## अथास्य प्रक्रान्तप्रधानप्रश्नस्यावान्तरोऽष्टमः प्रश्नः

## सच्छूद्रा इति चेत्के सच्छूद्रा इति ? तेषां लक्षणं वक्तव्यम्

अस्यायमर्थो भवेत्, यदि सच्छूद्रा एवोपदेश्यास्तर्हि उपदेश्यानुपदेश्ययोः परस्परं व्यावर्त्तकधर्मावगमाय विभाजकतावच्छेदकासाधारणधर्मो निर्वक्तव्य इति ।

उत्तरम् ।

अस्माभिस्तु साधारण्येन सदसच्छूद्रसामान्यस्यैवोपदेश्यत्वं स्वीक्रियत इति नास्माकमनेन विचारेण प्रयोजनम् । प्रश्ने चेदिति पदेन सच्छूद्रमात्रस्योपदेशाङ्गीकारपक्ष एव तल्लक्षणजिज्ञासावतारबोधनात् । तथापि भवतो विवित्साशान्तये दिङ्मात्रं किञ्चिदुच्यते ।

( उत्तरे सच्छूद्रलक्षण, वैष्णवदीक्षायुतशूद्रस्यापि सच्छूद्रत्व च )

तत्र धर्माब्धिसारे तृतीयपरिच्छेदोत्तरार्द्धे—

"सप्तपुरुषं त्रिपुरुषं वा परम्परया स्नानवैश्वदेवतर्पणादिकं शूद्रकमलाकरादिग्रन्थसङ्गृहीतं धर्मं नियमेनाचरन् सच्छूद्र उच्यत" इति । अथ साकल्येनैतद्धर्माचरणाऽसम्भवेऽपि दशमाध्याये शूद्रधर्मेषु मनुः ( श्लो० १२६ )—

"न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति ।
नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम्" ॥ इति

वैदिकेऽग्निहोत्रादिधर्मेऽनधिकारं पाकयज्ञादिधर्मस्य ।

"नमस्कारेण मन्त्रेण पञ्चयज्ञान्नहापयेदि"ति

याज्ञवल्क्याद्युक्तरीत्या विधाने प्रतिषेधाभावं चोक्त्वा—

"धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तमनुष्ठिताः ।
मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥
यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः ।
तथा तथेमं चामुं च लोकं प्राप्नोत्यनिन्दित" ॥ इति

यथाशक्ति पाकयज्ञादिभगवत्सेवादिसद्धर्माचरणे सच्छूद्रत्वं वक्ति ।

अथ यमस्मृतौ तृतीयाध्याये ( श्लो० १० )—

"दासनापितगोपालकुलमित्रार्धसीरिणः ।
एते शूद्रास्तु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥
असच्छूद्रेषु चान्नाद्यं ये भुञ्जन्त्यबुधा द्विजाः ।
प्रायश्चित्तं तथा प्राप्तं चरेच्चान्द्रायणं व्रतम्" ॥ इति

अङ्गिरःस्मृतावपीदं श्लोकद्वयं दृश्यते। एवं दासादिवदात्मनिवेदकस्यापि भोज्यान्नत्वमुक्त्वाऽनुपदमेवाऽसच्छूद्रान्नभोजनं निषेधद्भ्यां यमाङ्गिरोभ्यामात्मनिवेदकस्यापि स्पष्टमेव सच्छूद्रत्वं बोधितं भवति।

याज्ञवल्क्योऽपि (अ० १) स्नातकप्रकरणे अभोज्यान्नानुक्त्वा तत्र प्रतिप्रसवमाह (श्लो० ३८)—

"शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्" ॥ इति

अत्रैव मिताक्षरायाम्—

"यश्च वाङ्मनःकायकर्मभिरात्मानं निवेदयति तवाहमि"ति।

एते दासादयः शूद्राणां मध्ये भोज्यान्नाः। 'गोपनापितकुम्भकारकुलमित्रार्द्धिकनिवेदितात्मानो भोज्यान्ना इति वचनादि'ति विज्ञानेश्वरः। एवं सामान्यत आत्मनिवेदकस्याप्युत्कर्षे किं पुनः सद्गुरूपदिश्यमानमहामन्त्रद्वारा साक्षाद्भगवते आत्मनिवेदनकर्तुरुत्कर्षे वक्तव्यम्। अत एव धर्मसिन्ध्वादिषु शूद्राणां शालग्रामार्चननिषेधमुक्त्वा वैष्णवदीक्षाग्रहणपूर्वकं मद्यपानाद्यधर्मत्यागिनां तु तेषां ब्राह्मणद्वारा शालग्रामपूजाधिकारो निरूप्यते—

"दीक्षायुक्तैस्तथा शूद्रैर्मद्यपानविवर्जितैः।
कर्त्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्चनम्" ॥

इत्यादिवचनोपन्यासेन। अतो वैष्णवदीक्षां प्रविष्टस्य यथाशक्तिसद्धर्माचरणतत्परस्य शूद्रस्यापि सच्छूद्रत्वं निर्बाधमिति दिक्।

एवं सति याज्ञवल्क्यस्मृतौ (अ० १) गृह्यप्रकरणे (श्लो० २०)—

"विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम्।
एतैः प्रभूतैः शूद्रोऽपि वार्द्धक्ये मानमर्हती"ति ॥

आचारमाधवे प्रथमाध्यायान्ते शान्तिपर्वणि—

"स्वाहा चैव नमस्कारो मन्त्रः शूद्रेऽभिधीयते।
ताभ्यां शूद्रः पाकयज्ञैर्यजेत ब्रह्मवान् स्वयम्" ॥ इति

एवमादिषु विद्याब्रह्मपदाभ्यां ब्रह्मज्ञानं शूद्रस्यापि सच्छूद्रत्वनिर्वाहकतयाऽऽवश्यकमित्युच्यते। तदपि सत्सम्प्रदायाश्रयणे गुरुमुखात् पुराणादिश्रवणद्वारा तस्य सेत्स्यतीति निखिलं निरवद्यम्। विशेषतो जिज्ञासायां तु मन्वादिग्रन्थतोऽवगम्यताम्। ततोऽपि संशयानुच्छेदे सुखेन पुनरप्यस्मान् पृष्ट्वाऽवधार्यताम्।

"इत्यष्टभिः सपदि सङ्गतमङ्ग जलैरल्पैः कुरङ्गतृषि तुङ्गतरङ्गकल्पैः।
चोद्यं प्रमाणगणयुक्तितरङ्गितेन दत्तोत्तरं किल विचित्रतरं तृतीयम्" ॥

इति तृतीयाष्टकम् ॥

## ( चतुर्थः प्रधानः प्रश्नः उत्तरकारिका च )

## अथ चतुर्थः प्रधानः प्रश्नः

## उपदेशे च रामकृष्णादिमन्त्राः समाना उत तेषु न्यूनाधिकता वा ?

### उत्तरम् ।

"सामान्यं न्यौन्यमाधिक्यमन्योन्यं तन्यतेऽधुना ।
सन्मन्त्राणां स्वतन्त्राणां श्रूयतां तर्कबन्धुना" ॥

( भगवन्मन्त्राणां परस्पर न्यूनत्वसाम्याधिक्यानि )

तथा हि भगवतो हि रूपनामविभेदेन द्विविधे लीले "नामरूपे व्याकरवाणि", "सर्वाणि रूपाणि विचिन्त्य धीरः नामानि कृत्वाभिवदन्यदास्ते" इत्यादि छान्दोग्य-तैत्तिरीयादिश्रुतिषु प्रसिद्धे । तत्र रूपलीलायां यथा रामकृष्णाद्यवतारा उत्तमाः विभूतिरूपाणि मध्यमानि गवाश्वादयश्चाधमाः । एवमेव नामलीलायामपि वेदादयः साक्षाद्भगवत्प्रापका महामन्त्राश्चोत्तमाः । गीताश्रीभागवतभिन्नस्मृतिपुराणादीनि च मध्यमानि प्राकृता घटपटादिशब्दाश्चाधमा इति ब्रह्ममीमांसाभाष्यादिषु श्रीमदाचार्यादिभिः सविस्तरं निर्णीतम् ।

तत्र यथा रामकृष्णाद्यवतारेषु एकेनैव स्वरूपेण सर्वकार्यकरणसमर्थोऽपि भगवान् येन येनावतारेण यच्चिकीर्षितं तदेव तेन करोति ।

"यदर्थैतत्रो न विहन्ति विक्रमम्"

इति श्रीभागवतदशमस्कन्धोक्तेः न त्ववतारान्तरकार्यम् । अन्यथावतारबाहुल्यनैरर्थक्यापत्तेः ।

नहि वर्तमानेनापि कल्पायुषा जामदग्न्येन रावणवधादिकं दाशरथिकार्यमनुष्ठितम् । नापि प्रथमावतारेणैव सुचिरं स्थित्वा सर्वावतारकार्याणि । तथैवान्यतमेनापि वेदादिमूलकेन स्वनिरूपकमहामन्त्रेण सर्वविधफलदानशक्तोऽपि यन्मन्त्रजपादिद्वारा यत्फलं स्वयं नियमितं तदेव तद्द्वारा ददाति । अन्यथा एकेनैव सर्वकार्यसिद्धौ जगति नानाविधमन्त्रप्रादुर्भावनं व्यर्थं स्यात् ।

किञ्च, मन्त्रा हि स्वजपादिवशात् स्वप्रतिपाद्यदेवताप्रसादेन तदनुगुणं फलं समर्पयन्तीति मन्त्रशास्त्रमर्यादा । जडानां वर्णानां स्वयमेव फलसमर्पकत्वायोगात् । तत्र रामकृष्णादिमन्त्रा अपि निष्कामतया जपकर्तुः स्वस्वप्रतिपाद्यभगवत्स्वरूपसायुज्यादिलक्षणं मोक्षं सम्पादयेयुः । नारदपञ्चरात्ररामार्चनचन्द्रिकाक्रमदीपिकामन्त्रमहोदधिशारदातिलकप्रभृतिसद्ग्रन्थपर्यालोचने स्पष्टतया तथैव सिद्धेः । अतः सर्वेषामपि भगवन्मन्त्राणां

भगवत्स्वरूपनिरूपकत्वेन साम्यम् । स्वस्वाप्रतिपादितमन्त्रान्तरप्रतिपाद्यतत्तद्भगवद्धर्म-विशेषाद्यप्रतिपादकत्वेन तदनुगुणफलाजनकत्वेन चान्योन्यतो न्यौन्यम् । मन्त्रान्तरा-प्रतिपादितस्वप्रतिपाद्यतत्तद्विशेषप्रतिपादकत्वेन तदनुगुणफलसम्पादकत्वेन च परस्परत आधिक्यमपि निर्बाधमिति सर्वं सुस्थम् ।

अपि च, प्रथमस्कन्धतृतीयाध्याये नानाविधान् भगवदवतारान्निरूप्य (श्लो० २८)—

"एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे" इति ॥

तेष्ववतारेषु कृष्णस्य साक्षात्पुरुषोत्तमत्वेन पूर्णत्वं, अन्येषां केषाञ्चिदंशरूपत्वं केषाञ्चन कलारूपत्वं चोच्यते । एवमन्यत्राप्यनेकत्रैतन्निरूपितमस्ति । अतो भगवदव-तारेष्वप्यैच्छिकतारतम्यस्य प्रमाणसिद्धत्वात्तत्तदवतारप्रतिपादकमन्त्रेष्वपि तारतम्यं तथैव द्रष्टव्यम् । अत्र प्रश्नवाक्ये उतवापदयोः पौनरुक्त्यादन्यतरवैयर्थ्यम् । उपदेश इत्यपि निरर्थकम् । मन्त्रत्वेनैवोपदेशत्वलाभात् । यदि तूपदेशप्रकारतारतम्यमेव जिज्ञासितं स्यात्तर्हि तस्य तस्य मन्त्रस्योपदेशप्रकारभेदो यथाशास्त्रमस्माकमभिमत एवेति श्रीः । इत्थम्—

"रामकृष्णादिमन्त्राणां न्यूनता च समानता ।
आधिक्यं चोचितं तेन भवद्युक्तिः समाऽऽनता" ॥

---

## (पञ्चविंशः प्रश्नः उत्तरे स्वसाम्प्रदायिकमन्त्रातिरि-क्तमन्त्राग्रहणे बीजं च)

## अथास्य चतुर्थप्रधानप्रश्नस्यावलम्बी प्रथमः प्रश्नः तत्र समानश्चेन्मन्त्रान्तरनिषेधः कथं क्रियते?

### उत्तरम् ।

किमत्र निषेधशब्देन केनाप्यधिकारिणा नायं मन्त्रो ग्राह्य इत्येवंरूपः स विवक्षित उतास्मत्सम्प्रदायेऽस्मदिष्टफलस्य पुरुषोत्तमसायुज्यादिलक्षणस्यास्मदाचार्यपरम्परोपदि-श्यमानमन्त्रमात्रेणैव सिद्धावस्मच्छिष्यस्य न मन्त्रान्तरग्रहणेन प्रयोजनमित्येवंरूपः सः ? तत्र नाद्यः । अस्माभिरस्मदाचार्यैर्वा तादृशनिषेधस्य क्वापि कदाचिदप्यकृतत्वेन कथं क्रियत इत्याक्षेपवैयर्थ्यात् । अथ द्वितीयश्चेत्तर्हि अस्य प्रश्नस्य तद्दानं शिष्याय कुतो न क्रियत इत्यग्रिमप्रश्नादवैलक्षण्येऽपि स्वविवक्षितप्रश्नसङ्ख्यापूरणायैव पार्थक्येनोपन्यस्त-त्वात्तदुत्तरेणैवास्य दत्तोत्तरत्वं स्यादिति तच्छ्रवणेनैव परितोष्टव्यं भवद्भिः ।

---

## ( षड्विंशः प्रश्नस्तदुत्तरारम्भश्च )

## अथ चतुर्थप्रधानप्रश्नावलम्बी द्वितीयः प्रश्नः

## तद्दानं शिष्याय कथं न क्रियते ?

### उत्तरम् ।

अत्र प्रश्नद्वये कुत इति हेतौ प्रष्टुमुचितेऽपि कथमिति प्रकारप्रश्नस्तु स्वस्य वैलक्षण्यद्योतनार्थः । उत्तरं तु ब्रूमः । अस्मदभीष्टस्य पुरुषोत्तमसायुज्यादिलक्षणस्य फलस्यास्मदाचार्यपरम्परोपदिश्यमानकृष्णमन्त्रैरेव सिद्धौ प्रयोजनाभावात्स्वसदाचारविरोधाच्चास्मत्सम्प्रदायपरम्पराप्रसिद्धगोपालादिमन्त्रत्रयव्यतिरिक्तं कमपि मन्त्रं नास्मदाचार्याः शिष्येभ्य उपदिशन्ति ।

( गौतमतन्त्रे कृष्णमन्त्रोत्कर्षः )

अस्मत्सम्प्रदाये स्वीक्रियमाणस्य कृष्णमन्त्रोत्कर्षस्य तु न स्वोत्प्रेक्षितत्वं शङ्क्यम् । बहुप्रमाणसिद्धत्वात् ।

तथाहि, गौतमतन्त्रे प्रथमाध्याये ( श्लो० १ )—

"सिद्धाश्रमे वसन् धीमान् कदाचिद्गौतमो मुनिः ।
तपःस्वाध्यायनिरतो भक्तिमान् पुरुषोत्तमे ॥
नमस्यन् शिरसा विष्णुं स्तुवन् वाचा जनार्दनम् ।
जपन् कराभ्यां यज्ञेशं हृदा ध्यायन् सदा हरिम् ॥
समस्तश्रुतितत्त्वज्ञ इतिहासपुराणवित् ।
मन्त्रौषधिक्रियावश्यो योगसिद्धान्ततत्त्ववित् ॥
धर्मार्थकाममोक्षार्थी नारदं प्रणिपत्य च ।
विनयावनतो भूत्वा पर्यपृच्छद्द्विजोत्तमः ॥
भगवन् कामदा मन्त्राः शत्रूदासीनबान्धवाः ।
विभिन्नफलदास्ते तु नैकत्र फलदा मताः ॥
एते समफलाः सर्वे समन्त्रा इति नः श्रुतम् ।
येन सर्वफलावाप्तिः सर्वेषां बन्धुरेव सः ॥
सर्ववर्णाधिकारश्च नारीणां योग्य एव यः ।
तं ब्रूहि भगवन्मन्त्रमल्पायासफलप्रदम् ॥
तव नाविदितं किञ्चिद्विद्यते सचराचरे ।
इति श्रुत्वा मुनिश्रेष्ठो नत्वा विष्णुमुवाच ह" ॥

श्रीनारद उवाच—

"साधु पृष्टं मयाप्येवं पृष्टः प्रोवाच पद्मजः ।
तथा ते कथयिष्यामि यथा प्रोक्तं स्वयम्भुवा ॥
सर्वे कामाः प्रसीदन्ति कृष्णमन्त्रजपाद्धि यः ।
गाणपत्येषु शैवेषु तथा शाक्तेषु सुव्रत ॥
सर्वेषु मन्त्रवर्गेषु श्रेष्ठं वैष्णवमुच्यते ।
वैष्णवेषु च सर्वेषु कृष्णमन्त्राः फलाधिकाः" ॥

( नारदपञ्चरात्रे तदुत्कर्ष , वैष्णवमुखात्तद्ग्राहिणो वैष्णवत्व, वैष्णवस्यात्युत्कर्षश्च )

नारदपञ्चरात्रे प्रथमरात्रप्रथमाध्याये ( श्लो० ७० )—

"मन्त्राणां कृष्णमन्त्रश्च यथा विद्या धनेष्वपि ।
यथा तेजस्विनां सूर्यो मिष्टानाममृतं यथा" ॥

इति कृष्णमन्त्राणां परमोत्कर्षः । अत्रैव नवमाध्याये शिवः ( श्लो० २० )—

"कृष्णमन्त्रोपासकानां शुद्धं पादोदकं सुत ।
पुनाति सर्वतीर्थानि वसुधामपि पार्वति ॥
कृष्णमन्त्रो द्विजमुखाद्यस्य कर्णं प्रयाति च ।
तं वैष्णवं जगत्पूतं प्रवदन्ति पुराविदः ॥
मन्त्रग्रहणमात्रेण नरो नारायणात्मकः ।
पुनाति लीलामात्रेण पुरुषाणां शतं शतम्" इत्यादि ॥

तथा ( श्लो० २५ )—

"स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
फलं स लेभे पूजानां व्रती सर्वव्रतेषु च ॥
विष्णुमन्त्रं यो लभेत वैष्णवाच्च द्विजोत्तमात् ।
कोटिजन्मार्जितात्पापान्मुच्यते नात्र संशयः ॥
कृष्णमन्त्रोपासकानां सद्योदर्शनमात्रतः ।
शतजन्मार्जितात्पापान्मुच्यते नात्रः संशयः ॥
वैष्णवादर्शनेनैव स्पर्शनेन च पार्वति ।
सद्यःपूतं जलं वह्निर्जगत्पूतः समीरणः ॥
दर्शनं वैष्णवानां च देवा वाञ्छन्ति नित्यशः ।
न वैष्णवात्परः पूतो विश्वेषु निखिलेषु च" ॥

तत्रैव त्रयोदशाध्याये उपबर्हणाख्यगन्धर्वं प्रति स्वयं श्रीकृष्णः ( श्लो० १० )

"मन्मन्त्रोपासकश्चैव स्वतन्त्रो नित्यविग्रहः ।
पुनर्न विद्यते जन्म मन्त्रग्रहणमात्रतः" इति ॥

इदमारभ्य अध्यायसमाप्तिपर्यन्तं विस्तरेण कृष्णमन्त्रमाहात्म्यं वर्णितमस्ति । तत्रैव पञ्चमरात्रे चतुर्थाध्याये ( श्लो० ६ )—

"अखिलमनुषु मन्त्रा वैष्णवा वीर्यवन्तो
महिततरफलाढ्यास्तेषु गोपालमन्त्राः ।
प्रबलतर इहैषोऽशिष्टसम्मोहनाख्यो
मनुरनुपमसम्यक् कल्पनाकल्पशाखी ॥
मनुमिममतिहृद्यं यो भजेद्भक्तिनम्रो
जपहुतयजनाद्यैर्ध्यानवन्मन्त्रिमुख्यः ।
त्रुटितसकलकर्मग्रन्थिरुद्बुद्धचेता
व्रजति स तु पदं तन्नित्यशुद्धं मुरारेः" ॥ इति

अत्रैव दशमाध्याये दशमाध्यायसमाप्तिश्लोकेषु कृष्णमन्त्रस्य परममोक्षदातृत्वमस्ति । एवमेकादशाध्यायान्तेऽपि । गौतमतन्त्रे एकविंशाध्याये ( श्लो० २ ) नारदः—

"शृणु ब्रह्मन् कृष्णमन्त्रान् सर्ववेदैकसम्मतान् ।
यदेकज्ञानमात्रेण पुनर्जन्म न विद्यते" इति ॥

( निर्बीजमन्त्राणामपि जपेन सिद्धि )

निर्बीजमन्त्राणामपि जपेन सिद्धिरुक्ता तत्रैवाष्टाविंशाध्याये ( श्लो० ३१ )—

"निर्बीजा ये च मन्त्रा वै शक्तिहीनाश्च कुण्ठिताः ।
अरिपक्षे स्थिता ये च केवला वर्णरूपिणः ॥
एतदाप्येन जाप्येन जीवन्ति च पुनन्ति चे"ति ॥

( कृष्णनाम्न एव सर्वपापनिवर्तकप्रायश्चित्तरूपत्व महामन्त्रत्व च )

किञ्च, कृष्णनाम्न एव सर्वपापक्षयहेतुमहाप्रायश्चित्तरूपत्वान्महामन्त्ररूपत्वाच्च किं वाच्यं तद्घटितमन्त्राणां महामन्त्रत्वे सर्वोत्कृष्टत्वे वा ?

नाम्नस्तथात्वं तु यथा प्रायश्चित्तमयूखे स्कान्दप्रभासखण्डीयवाक्यम्—

"नाम्नां मुख्यतरं नाम कृष्णाख्यं यत्परन्तप ।
प्रायश्चित्तमशेषाणां पापानां मोचकं परमि"ति ॥

तथा वादावल्यां गौतमतन्त्रे—

"कृष्णेति त्र्यक्षरो मन्त्र" इति ॥

पाद्मे—

"कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन्नरः" इति ॥

ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे—

"गृहाण मम मन्त्रं च कृष्ण इत्यक्षरद्वयम् ।
सर्वेषामेव मन्त्राणां सारात्सारतरं परमि"ति ॥

श्रुतयश्च—

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" ॥

इत्याद्याः प्रसिद्धा एव ।

किञ्च, पुनरप्यस्य नाम्नः सर्वप्रायश्चित्ताधिकत्वमुच्यते । त्रिकाण्डमण्डनाख्ये श्रौतग्रन्थे महाभारते—

"प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परमि"ति ॥

तथा षष्ठस्कन्धे द्वितीयाध्याये ( श्लो० १० )—

"सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥
न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुद्ध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलम्भकम् ॥
नैकान्तिकं तद्धि कृतेऽपि निष्कृतं मनः पुनर्धावति चेदसत्पथे ।
सत्कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्त्वभावनः ॥
साङ्केत्यं पारिहास्यं वा स्तोत्रं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥
पतितः स्खलितो भग्नः सन्दष्टस्तप्त आहतः ।
हरिरित्यवशेनाह पुमान्नार्हति यातनाम् ॥
गुरूणां च लघूनां च गुरूणि च लघूनि च ।
प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः ।
तैस्तान्यघानि पूयन्ते तपोदानजपादिभिः ॥
नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ।
अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ॥
सङ्कीर्त्तितमघं पुंसो दहेदेधो यथाऽनलः ।
यथाऽगदं वीर्यतममुपयुक्तं यदृच्छया ॥
अजानतोऽप्यात्मगुणं कुर्यान्मन्त्रोऽप्युदाहृतः" इति ॥

अत्रैव श्रीधरस्वामिना व्याख्यायते । नन्विदमपि पर्षदनुपदिष्टं श्रद्धाहीनं च कथं

प्रायश्चित्तं स्यात्तत्राहुः यथेति। अगदमौषधं वीर्यवत्तममिति वक्तव्ये वीर्यतममित्युक्तम्। यदृच्छया श्रद्धाहीनमुपयुक्तं भक्षितं पर्षन्मुखादजानतोऽपि स्वगुणमारोग्यं कुर्यात्। मन्त्रोऽपि नामात्मकस्तथा स्वकार्यं कुर्यादेव। नहि वस्तुशक्तिः श्रद्धादिकमपेक्षत इत्यर्थः। तदुक्तं विष्णुधर्मेषु—

"हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावक" इति॥

एवमन्यत्रापि द्रष्टव्यम्।

(स्वमन्त्रा ग्राह्या, गुरूणां, निषिद्धस्य, स्वमन्त्राणां चाप्राकाश्यता)

तस्मादस्मत्सम्प्रदायपूर्वाचार्यपरम्परयोपदिश्यमानं कृष्णमन्त्रत्रयमेवेदानीमप्यस्मदाचार्यैः स्वशिष्येभ्य उपदेष्टव्यं न त्वन्यत्। अस्मत्सम्प्रदायेष्टफलस्य तावतैव सिद्धौ मन्त्रान्तरस्योपदेशे प्रयोजनाभावात्। तदुपदेशे स्वाचार्यमर्यादोल्लङ्घनेन स्वसदाचारविरोधापत्तेश्च। अस्मत्सम्प्रदाये हि श्रीपुरुषोत्तममारभ्य इयदवधि न केनाप्याचार्येण कस्मैचिदपि स्वसाम्प्रदायिकशिष्याय मन्त्रान्तरमुपदिष्टम्। अतः स्वसाम्प्रदायिकमन्त्रदानमेव स्वशिष्याय क्रियत इति सर्वं सुस्थम्।

अथ के ते भवत्साम्प्रदायिका मन्त्रा इति चेत्, न तेऽस्माभिर्वक्तुं शक्याः, गुर्वाज्ञाभावात्। स्वमन्त्रकथनविरोधाच्च। नारदपञ्चरात्रद्वितीयरात्रे (अ० ५ श्लो० ८)—

"गुरुणा च निषिद्धं च न वक्तव्यं कदाचने"ति॥

तत्रैव प्रथमरात्रपञ्चमाध्याये नारदं प्रति सारसिरुहासनः (श्लो० २७)—

"आत्मनः कवचं मन्त्रं स्वयं दातुं न चार्हति।
प्राणा नष्टाश्च दानेन चेति वेदविदो विदुरि"ति॥

---

## (सप्तविंशः प्रश्नः उत्तरे मन्त्राणां स्वस्वप्रतिपाद्यावतारादिसायुज्यदातृत्वम्)

## अथ चतुर्थप्रधानप्रश्नावलम्बी तृतीयः प्रश्नः।

## न्यूनाश्चेत्सर्वमन्त्राणां शास्त्रसम्मतमोक्षदातृत्वाविशेषेण कुतो न्यूनता?

### उत्तरम्।

अस्माभी रामकृष्णादिमन्त्राणां परस्परतो न्यूनतायां समानतायामधिकतयां च हेतवः पूर्वमेव समर्थिता इति नेदानीमयं हेतुप्रश्न उत्तरणीयः। किञ्चित्तु वदामः। भगवन्मन्त्रेषु तत्तन्मन्त्रप्रतिपादकशास्त्रेण तत्तन्मन्त्रस्य मोक्षदातृत्वे वर्ण्यमानेऽपि नैतन्मन्त्रसामर्थ्ये-

नैवेति वक्तुं युक्तम्; किन्तु, तत्तत्प्रतिपाद्यदेवताप्रसत्त्यैव । तथा चेह भगवन्मन्त्रेषु तत्तन्मन्त्रजपेन तत्तत्प्रतिपाद्यरामकृष्णाद्यन्यतमभगवदवतारप्रसादात्तत्तत्सायुज्यादिलक्षण एव मोक्षो भवति । तैत्तिरीयाणां नारायणोपनिषदि—

"एतासामेव देवतानाᳫं सायुज्यᳫं सार्ष्टिताᳫं समानलोकतामाप्नोती"ति श्रावितन्यायात् । अतस्तत्तन्मोक्षाकाङ्क्षिभिस्तत्तन्मन्त्रोपासनं कर्त्तव्यमिति युक्तम् ।

किञ्च, भगवदवतारेष्वपि पूर्णत्वांशत्वकलात्वादिना तारतम्यं शास्त्रसिद्धमिति तदनुसारेण तत्प्रतिपादकमन्त्रेष्वपि समालोचनीयं सच्छास्त्रविचारचतुरैः सूक्ष्ममतिभिः कृतिभिरिति श्रीः ।

---

## ( अष्टाविंशः प्रश्नस्तदुत्तरं च )

## अथ चतुर्थप्रश्नावलम्बी चतुर्थः प्रश्नः

## प्रशंसापरतयोपपत्तिस्तु समानैव परस्परभिन्नमन्त्रग्रहणकर्तुः

### उत्तरम् ।

अस्यायमर्थो भवेत् यदि भवद्भिः शास्त्रसिद्धायाः स्वमन्त्रनिष्ठाया मोक्षदातृत्वादिलक्षणायाः स्तुतेर्वास्तविकत्वं मन्त्रान्तरनिष्ठायास्तस्यास्तु तद्ग्रहणविधिशेषार्थवादरूपतया स्वार्थेऽप्रामाणिकत्वमित्युच्यते तर्हि मन्त्रान्तरोपासकेन स्वमन्त्रनिष्ठायास्तस्याः प्रामाणिकत्वं भवन्मन्त्रनिष्ठायास्तूक्तरीतिकाप्रामाणिकत्वमिति शक्येतोद्घुष्य भाषितुम् । तस्मान्नैतत्समाधानं साधीय इति । अस्माभिस्तु शास्त्रसिद्धाया यावद्भगवन्मन्त्रस्तुतेर्भवदुक्तरीतिकमप्रामाणिकत्वं नोररीकृतम्; किन्तु, प्रामाणिकयुक्त्यन्तरत एवोत्तरमनन्तरमेव वितीर्णमतो विशीर्णमूलो नायमनुयोग इतरदुत्तरवितरणमर्हतीति भव्यं नः ।

---

## ( एकोनविंशत्तमः प्रश्नः उत्तरकारिकाः )

## अथ चतुर्थप्रधानप्रश्नावलम्बी पञ्चमोऽवान्तरः प्रश्नः ।

## शैवशाक्तिकमन्त्राणां मोक्षदातृत्वमस्ति न वा ?

### उत्तरम् ।

"मन्त्राणां मोक्षदातृत्वं देवतायाः प्रसादतः ।
वक्तव्यं मोक्षदो देवो मुकुन्दः सर्ववन्दितः ॥
तदंशाः सकला देवाः सकामा आश्रयन्ति तान् ।
तत्तद्ददाति तद्द्वारा तेभ्यो माहात्म्यबुद्धये ॥

अतो मोक्षप्रदत्वं तु हरिमन्त्रस्य केवलम् ।
सर्वकामप्रदत्वं चानन्यभक्तेभ्य उच्यते ॥
देवतान्तरमन्त्रास्तु साक्षान्मोक्षप्रदा न हि ।
त्रैवर्गिकफलं तेभ्यस्तत्तद्रूपाद्धरेर्भवेत्" ॥

(हरिरेव मोक्षदः शिवादिदेवान्तराणि कामविशेषदान्येव, भगवद्दशभूतानि च)

तथा हि मोक्षप्रदत्वं भगवत एव, न तु देवान्तरस्य कस्यापि ।

अत एव भागवते दशमस्कन्धोत्तरार्द्धे एकपञ्चाशत्तमाध्याये मुचुकुन्दं प्रति देवानां वचनम् (श्लो० २०)—

"वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः ।
एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः" इति ॥

यदि च देवा मोक्षं दातुमशक्ष्यंस्तर्हि कुतस्ते मुचुकुन्दाय तन्नादास्यन् किमिति च खट्वाङ्गस्तांस्त्यक्त्वा मोक्षार्थी सत्वरं हरिं शरणमगमिष्यत् ? । उक्तं च द्वितीयस्कन्धाध्याये (श्लो० १३)—

"खट्वाङ्गो नाम राजर्षिर्ज्ञात्वेयत्तामिहायुषः ।
मुहूर्तात्सर्वमुत्सृज्य गतवानभयं हरिमि"ति ॥

अत्रैव श्रीधरस्वामिनाप्युक्तम्—

"खट्वाङ्गो हि देवपक्षे स्थित्वा दैत्यानजयत्, ततः प्रसन्नैर्देवैर्वरं वृणीष्वे"त्युक्तोऽतस्तेनोक्तं प्रथमं ममायुः कथ्यतामिति । ततो देवैरुक्तं, तत्तु मुहूर्त्तमात्रमस्तीति । ततोऽतिशीघ्रं विमानेन भुवमागत्य हरिं शरणं गत" इति ।

किञ्च, शिवस्यापि भोगप्रदत्वमेव । अत एव दशमस्कन्धोत्तरार्द्धे अष्टाशीतितमाध्याये (श्लो० १)—

"देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् ।
प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम् ।
एतद्वेदितुमिच्छामः सन्देहोऽत्र महान् हि नः ।
विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिरि"ति ॥

देवस्वभावविरुद्धफलोपलब्धिकारणे राज्ञा पृष्टे श्रीशुक आह—

"शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसम्वृतः ।
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥
ततो विकारा अभवन् षोडशामीषु कञ्चन ।
उपाधावन्विभूतीनां सर्वासामश्नुते गतिम् ॥

हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः ।
स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेदि"ति ॥

अतः पुरुषोत्तमभजनादेव नैर्गुण्यलक्षणो मोक्षः । अनन्यभक्तानां च सर्वकामावाप्तिस्तत एव—

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" ॥

इत्यादिवचनेभ्यः ।

द्वितीयस्कन्धे च तृतीयाध्याये ( श्लो० ३ )—

"वसुकामो वसून् रुद्रानि"ति रुद्रेभ्यः पृथक् ।

( श्लो० ७ )—

"विद्याकामस्तु गिरिशं दाम्पत्यार्थमुमां सतीमि"ति ।

साक्षात् शिवस्य शक्तेश्च कामविशेषदातृत्वमेवोक्त्वोच्यते ( श्लो० १० )—

"अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥
एतावानेव यजतामिह निःश्रेयसोदयः ।
भगवत्यचलो भावो यद्भागवतसङ्गतः ॥

ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उत यत्र गुणेष्वसङ्गः ।
कैवल्यसम्मतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यादि"ति ॥

अत्र एतावानेवेत्येवकारेण इतरदेवभजनादिव्यावृत्तिः । निःश्रेयसस्य मोक्षस्य यस्मादिति तथा । कैवल्यं मोक्षः ।

किञ्च, श्रीपुरुषोत्तमस्य अंशभूतेषु तत्तद्गुणोपाधिभिन्नेषु ब्रह्मविष्णुमहेश्वराख्येषु स्वरूपेष्वपि मोक्षदातृत्वं विष्णोरेव ।

थमस्कन्धे द्वितीयाध्याये ( श्लो० १९ )—

"तदा रजस्तमोभावाः कामलोभादयश्च ये ।
चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति ॥
एवं प्रसन्नमनसो भगवद्भक्तियोगतः ।
भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥
अतो वै कवयो नित्यं भक्तिं परमया मुदा ।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम् ॥

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादयो हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥
पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ।
तमसस्तु रजस्तस्मात्सत्त्वं यद्ब्रह्मदर्शनम् ॥
भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम् ।
सत्त्वं विशुद्धं क्षेमाय कल्पन्ते ये नु तानिह ॥
मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥
रजस्तमःप्रकृतयः समशीला भजन्ति वै ।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः" इत्यादि ॥

अतः शिवशक्त्यादिरूपदेवान्तरोपासने तु कामावाप्तिरेव फलम् ।

अत एव गीतायाम्—

"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तानि"ति ॥

किञ्च, देवतान्तरोपासनस्य अवैधभगवद्यागत्वमिति तत्रैवोक्तम्—

"येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमि"ति ॥

(अतः शैवशाक्तमन्त्रा न मोक्षदा, देवी मायारूपा बहुदेवांशजा समुद्रशायिकार्यं च, पुनर्हरिमन्त्रा मोक्षदा.)

अतः शैवशाक्तमन्त्राणां न मोक्षदातृत्वं किन्त्विदं तु भगवन्मन्त्राणामेव ।

एतदेवाभिप्रेत्याह, गौतमतन्त्रप्रथमाध्याये नारदः—

"सर्वेषु मन्त्रवर्गेषु श्रेष्ठं वैष्णवमुच्यते ।
गाणपत्येषु शैवेषु तथा शाक्तेषु सुव्रत ॥
वैष्णवेषु च सर्वेषु कृष्णमन्त्राः फलाधिकाः" इति ॥

एवं शैवमन्त्राणां न मोक्षदातृत्वं, नापि शाक्तमन्त्राणां, तस्या भगवन्मायांशभूतत्वात् । मायाया मोक्षप्रतिबन्धकत्वाच्च । तस्या भगवन्मायात्वं त्वाहुर्मार्कण्डेयपुराणे पञ्चाशीतितमाध्याये स्तुवन्तो देवाः ( श्लो० १२ )—

"या देवी सर्वभूतेषु विष्णुमायेति शब्दिते"ति ॥

तत्रैव एकाशीतितमाध्याये ( श्लो० ४२ )—

"ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति" ॥

इति मोक्षप्रतिबन्धकत्वमेव तस्याः प्रत्यपादि ।

किञ्च, भगवता हि अचिन्त्यानन्तनित्यस्वाभाविकशक्तिमता क्रीडार्थं बहुबुभूषया देवादिनानाविधरूपकरणवत् स्वशक्त्यंशा अपि तेषु तेषु भिन्नाः स्थापिता इति वेदान्तसिद्धान्तः । दुर्गा च महिषासुरवधार्थं सर्वेषामपि देवानां शक्त्यंशानादाय प्रादुष्कृतेति तत्रैव त्र्यशीतितमाध्याये स्फुटम् । तथा चतुरशीतितमाध्यायेऽपि ( श्लो० २ )—

"देव्या यया ततमिदं जगदात्मशक्त्या निःशेषदेवगणशक्तिसमूहमूर्त्या ।
तामम्बिकामखिलदेवमहर्षिपूज्यां भक्त्या नताः स्म विदधातु शुभानि सा नः" इति ॥

तस्याः समुद्रशायिभगवत्कार्यत्वं तु सैवाह ऋग्वेदे देवीसूक्ते—

"अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥
अहं सुवे पितरमस्य मूर्द्धन्मम योनिरप्स्वन्तः समुद्रे" इति ॥

समुद्रशायी भगवान् मम कारणमित्यर्थः । इदं यथा मया शुद्धाद्वैतचन्द्रोदयस्य शाक्तकिरणतन्त्रकिरणयोरुपपादितमिति विशेषतो जिज्ञासायां तावानाय्य द्रष्टव्यम् । तस्मान्महामायारूपत्वान्न मोक्षदातृत्वम् । क्वचिन्मोक्षदत्वर्णनं तु तत्राप्रतिबन्धकरणद्वारैवेति ध्येयम् ।

कारीषोऽग्निरध्यापयतीत्यादिवत् न ह्यग्नेः स्वतोऽध्यापनं सम्भवति, किन्तु बटूनां शीतनिवृत्त्याऽध्ययनसामर्थ्यापादनादेव । तस्मान्मोक्षवितरणनैपुण्यं तु मुकुन्दमन्त्राणामेव । तेषां परममोक्षत्वं त्वाह नारदपञ्चरात्रद्वितीयरात्रे नारदं प्रति शङ्करः ( श्लो० २७ )—

"परं राधेशयोर्मन्त्रग्रहणं वैष्णवाद्द्विजात् ।
शुद्धे नारायणक्षेत्रे परं निर्वाणकारणमि"ति ॥

श्रीभागवतेऽपि ( स्क० ६ अ० २ श्लो० १९ )—

"यथागदं वीर्यतममुपयुक्तं यदृच्छया ।
अजानतोऽप्यात्मगुणं कुर्यान्मन्त्रोऽप्युदाहृत" इति ॥

अत्रैव श्रीधरस्वामिना मन्त्रोऽपि नामात्मकस्तथा स्वकार्यं कुर्यादेवेति व्याख्यायते । स्वकार्यं दुरितोपरतिपूर्वकमोक्षाख्यम् । एवमितरत्रापि सहस्रशो निरीक्षणीयम् । अतः—

"मोक्षदं केवलं कृष्णसेवनं देवनन्दितम् ।
मुक्तिदं शिवभक्त्यादि दैवतं नैव तं विना ॥
तस्मान्मुकुन्दमन्त्राणाममन्दं मुक्तिदायिताम् ।
वक्ति शास्त्रं नैव शैवशाक्तादीनां तु तां क्वचित्" ॥

---

## ( त्रिंशत्तमः प्रश्नः उत्तरे निन्दाभेदाः स्वस्य तत्कर्तृत्वाभावः )

## अथ प्रक्रान्तप्रधानप्रश्नावलम्बी षष्ठः प्रश्नः

## अस्ति चेन्निन्दा कथं क्रियते ?

### उत्तरम् ।

अस्ति-चेत्पदाभ्यां शैवशाक्तादिमन्त्राणां मोक्षदातृत्वपक्ष एवावतीर्णोऽयं प्रश्नस्तद्-भावसमर्थनेनैव दत्तोत्तरः ।

किञ्च, किमत्र निन्दाशब्देनाऽविद्यमानदोषकीर्त्तनं विवक्षितमुत विद्यमानतत्कीर्त्तनं स्वयं तद्ग्रहणजपाद्यकरणमेवेति वा ?

नाद्यः । अस्माकमद्वैतब्रह्मवादे सर्वस्यापि ब्रह्मरूपत्वेन "सरित्समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्य" इत्यादिषु भक्तिवशात्सर्वस्यापि मन्तव्यत्वविधानेन चास्मत्सम्प्रदाये निन्दाया एवानवसरपराहतत्वात् । क्वचिद्ग्रन्थेषु भगवन्मन्त्रादिस्तुति-प्रकरणे कदाचिदितरनिन्दा चेत्तस्या न हि निन्दान्यायविचारेणादुष्टत्वात् ।

न द्वितीयः । तादृशकथने निन्दात्वाभावात् । अन्यथा सर्ववस्तुनिष्ठतात्त्विकगुण-दोषनिरूपकाणां ज्यौतिषायुर्वेदादीनां बहूनां शास्त्राणां सर्ववस्तुनिन्दकत्वेन अनुपादेयताप्रसङ्गात् ।

न तृतीयः । परधर्मानाचरणस्य शास्त्रसिद्धत्वात् ।

( परधर्माश्रयान्यमन्त्रोपासनयोर्निषेधः )

अत एव तृतीयाध्याये आपद्धर्मप्रकरणे ( श्लो० ७ ) "आपद्गत" इत्यत्र आपदि क्षात्रादिवृत्त्यपेक्षया ब्राह्मणस्य हीनहीनतरहीनतमेभ्योऽपि प्रतिग्रहादिकमुत्कृष्टं वदता याज्ञवल्क्येन आपद्यपि परधर्माद्विगुणस्यापि स्वधर्मस्यैवाचरणं वरीय इति बोधितम् । अत्र विज्ञानेश्वरोऽप्याह—

"एवं च वदताऽऽपद्गतस्य परधर्माश्रयणाद्विगुणमपि स्वधर्मानुष्ठानमेव मुख्यमिति दर्शितं भवती"ति ॥

मनुरपि—

> "वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः ।
> परधर्माश्रयाद्विप्रः सद्यः पतति जातित" इति ॥

अतः सम्प्रदायभेदेन स्वधर्माभावान्न शिवादिदेवतान्तरमन्त्रग्रहणं युक्तम् ।

तैत्तिरीये—

"यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति" इति निषेधश्रुतेश्च ।

सर्वसाधारणेष्वाचारप्रकाशादिधर्मशास्त्रग्रन्थेषु वैष्णवविषयतयोदाहृतैः—

"नान्यं देवं नमस्कुर्यान्नान्यं मन्त्रमुदीरये"—

दित्यादिकाशीखण्डादिवचनैरपि तथासिद्धेश्च ।

(शैवशाक्तकापालिकादीनामस्पृश्यत्वानभिवाद्यत्वादिक, शैवव्रतनिषेध., यथार्थकथनम्, अनिन्दा, स्मार्तानां स्पृश्यत्वादि)

अपि च, शैवशाक्तान्यतरमन्त्रदीक्षाग्रहणे शैवत्वं शाक्तत्वं वा भवेदेव । तथा च सति अस्पृश्यत्वानभिवाद्यत्वादिकं स्यात् ।

यथोच्यते प्रायश्चित्ताध्याये (श्लो० ३०)—

"उदक्याशुचिभिः स्नायादि"त्यस्य मिताक्षरायां ब्रह्माण्डपुराणे—

"शैवान्पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् ।
विकर्मस्थान् द्विजान् शूद्रान्सवासा जलमाविशेदि"ति ॥

न चात्र शैवशब्दः कापालिकपरः शक्यः । तेषां पाशुपतशब्देन पृथङ्निर्देशात् । तत्स्पर्शे स्नानमात्रेण निर्वाहाभावाच्च । यथा चतुर्विंशतिमते—

"बौद्धान् पाशुपतान् जैनान् लोकायतिककापिलान् ।
विकर्मस्थं द्विजं स्पृष्ट्वा सचैलो जलमाविशेत् ॥
कापालिकांस्तु संस्पृश्य प्राणायामोऽधिको मतः" इति ॥

माधवोऽपीदं पराशरव्याख्याप्रथमाध्याये (श्लो० ३९) "सन्ध्यास्नानमि"त्यस्य विवरणे उदाजहार । इह पूर्वं पाशुपतशब्देन निर्दिष्टानां लिङ्गादिधारिणां कापालिकानामेव पुनः प्राणायामविधानार्थं कापालिकेति शब्दान्तरेणानुवादः ।

आपस्तम्बः—

"द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा ।
मुनेरन्नमभोज्यं स्यात् सर्वेषां लिङ्गिनां तथे"ति ॥

अत्र लिङ्गिनः पाशुपतादय इति आचारकाण्डतृतीयाध्याये माधवः

अन्यच्च शिवदीक्षाख्यतद्व्रतग्रहणे पाखण्डत्वं स्यात् ।

श्रीभागवतचतुर्थस्कन्धे द्वितीयाध्याये (श्लो० २८)—

"भवव्रतधरा ये च ये च तान् समनुव्रताः ।
पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ॥
नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः ।
विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम् ॥
ब्रह्म च ब्राह्मणांश्चैव यद्यूयं परिनिन्दथ ।
सेतुं विधारणं पुंसामतः पाखण्डमाश्रिताः ॥

एष एव हि लोकानां शिवः पन्थाः सनातनः ।
यं पूर्वे चानुसन्तस्थुर्यत्प्रमाणं जनार्दनः ॥
तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम् ।
विगर्ह्य यात पाखण्डं दैवं वो यत्र भूतराडि"ति भृगुशापात् ॥

तथा च सति अनभिवाद्यत्वादयो बहवो प्रसज्येरन् ।

"पाखण्डान् पतितान् व्रात्यान् वाङ्मात्रेणापि नार्चयेदि"ति स्मृतेः ॥

आचारमाधवे ( अ० १ श्लो० ३९ ) व्याख्याने आपस्तम्बः—

"पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ।
नास्तिकं च कृतघ्नं च नाभिवादेत्कथश्चने"ति ॥

अतः शास्त्रानुरोधादेव न शैवदीक्षायाः संसर्गः क्रियते, नापि शाक्तदीक्षायाः । धर्माब्धिसारे तृतीयपरिच्छेदपूर्वार्द्धे कलिवर्जितप्रकरणे—

"मद्यभक्षादिवामाद्यागमस्य तु न मानता ।
मीमांसाद्वितये सर्वैशिष्टैश्च तदनादरात्" ॥

इत्यादिषु बहुनिषिद्धत्वात् । विस्तरस्तु कौलगजमर्दनादिषु मत्कृतशुद्धाद्वैतचन्द्रोदये च द्रष्टव्यः । अतः स्वयं तद्धर्मानाचरणमात्रेण शास्त्रसिद्धतद्दोषानुवादेन वा नैव निन्दकत्वगन्धस्यापत्तिः । अन्यथा शाखान्तरीयकर्माण्यनाचरतां सामगानस्य रुद्रदैवत्यत्वेन तदुच्चारणानन्तरमशुचित्वान्न वेदान्तरोच्चारणमुचितमित्यादि मन्वादिशास्त्रसिद्धं च वदतां तथा यागेष्वपि रुद्रदैवत्यादिकर्मान्तरमशुचित्ववारणायाप उपस्पृशतां सर्वेषामपि द्विजातीनां वेददेवनिन्दकत्वप्रसक्त्या महानेवानर्थः स्यात्, तस्मान्न किञ्चिदेतत् । इयत्त्विह तत्त्वम् । उक्तश्रीभागवतवचनस्वारस्याद्भगवद्भक्त्यादिप्रतिपादकसच्छास्त्रद्वेषिषु आधुनिकशैवसुधाकराद्युक्तरीत्या शिवनिवेदितान्नभक्षणादिना नष्टशौचेषु ऊर्ध्वपुण्ड्रतुलसीकाष्ठमालाप्रभृतिद्वेषात्, सदा त्रिपुण्ड्ररुद्राक्षमात्रधारिषु भगवत्तद्भक्तब्राह्मणसनातनभगवन्मार्गशात्रवशालिषु शैवदीक्षादुराग्रहिष्वेवास्पृश्यत्वप्रभृतयो दोषाः सिद्ध्यन्तीति, उक्तविधकुचरितरहितानां हरौ हरे च भक्तिमतां यथाशास्त्रं व्यवस्थयोर्ध्वपुण्ड्रत्रिपुण्ड्रादि कुर्वतां स्मार्तानां संस्पर्शादिकं नास्माकमनभिमतमिति ।

तथा चातः—

"वन्दामहे मुकुन्दं सानन्दं नन्दनन्दनममन्दम् ।
शुद्धाद्वैतान्नैतानितरान् वृन्दारकांस्तु निन्दामः" ॥

## ( एकत्रिंशः प्रश्नः, उत्तरे शैवादिमन्त्रा राजसतामसेभ्यः शिवसायुज्यादिप्रदाः, तदुपासना क्वचित्परम्परया हरिभक्तिं चोत्पादयति )

## अथ प्रक्रान्तप्रश्नस्यावलम्बी सप्तमः प्रश्नः

## नास्ति चेत्तत्प्रतिपादकशास्त्रस्य का गतिः ?

### उत्तरम् ।

तादृशं शास्त्रमेव दुर्लभं कदाचित्तत्सम्भवेऽपि तामसजीवपरम् । प्रथमस्कन्धे द्वितीयाध्याये ( श्लो० २६ )—

"मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥
रजस्तमःप्रकृतयः समशीला भजन्ति वै ।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः" ॥

इत्यादिश्रीभागवतादिवचनैस्तदुपासनाया राजसतामसैककार्यत्वनिश्चयात् । तत्रापि शिवसायुज्यसालोक्याद्यन्यतमलक्षणमोक्षपरमेव । तद्दीक्षाङ्गभूतानां रुद्राक्षधारणादिधर्माणां फलप्रतिपादकैः—

"रुद्राक्षदेहसंस्थोऽपि कुक्करो म्रियते यदि ।
सोऽपि रुद्रपदं याति किं पुनर्मानवो गुह" ॥

इत्यादिभिः स्कान्दादिवचनैस्तथैवाध्यवसायात् । अत एव तद्दीक्षाग्रहिभिरप्पयदीक्षितादिभिः स्वाभिलषितमुक्तिलक्षणकथनपुरःसरं सा प्रार्थ्यते—

"भजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीम्
किमित्यमरसम्पदं प्रमथनाथ नाथामहे ।
भवद्भवनदेहलीविकटतुण्डदण्डाहति-
त्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते" ॥ इति ।

अत्र पूर्वार्द्धे पिशाचयोनिप्राप्तिपूर्वकं शिवसान्निध्यस्य प्रार्थितत्वेनोत्तरार्द्धे तद्भवनस्याप्युत्कर्षवर्णनेन च कैलासादिरूपे शिवस्थाने पिशाचयोनिप्राप्तिपुरःसरं सार्वदिकं शिवसान्निध्यमेव तदभिलषिता मुक्तिरिति फलति । क्वचिच्छास्त्रेषु शिवदीक्षाया अतिप्रशंसा तु भृगुशापप्राक्कालिकपरेति प्राञ्चः । तस्मान्न तन्मन्त्राणां साक्षात्कैवल्यादिप्रदत्वकथनेऽपि परम्परासम्बन्धेनैव तद्बोद्धव्यम् । अत एव ब्राह्मे समाप्तिदशायां मायानुकीर्त्तनाध्याये व्यास आह—

"अन्यदेवेषु या भक्तिः पुरुषस्येह जायते ।
कर्मणा मनसा वाचा तद्गतेनान्तरात्मना ॥
तेन तस्य भवेद्भक्तिर्यजने मुनिसत्तमाः ।
स करोति ततो विप्रा भक्तिं चाग्नेः समाहितः ॥
तुष्टे हुताशने तस्य भक्तिर्भवति भास्करे ।
पूजां करोति सततमादित्यस्य द्विजोत्तमाः ॥
प्रसन्ने भास्करे तस्य भक्तिर्भवति तत्त्वतः ।
सेवां करोति विधिवत् स तु शम्भोः प्रयत्नतः ।
तुष्टे त्रिलोचने तस्य भक्तिर्भवति केशवे ॥
सम्पूज्य तं जगन्नाथं वासुदेवाख्यमव्ययम् ।
ततो भक्तिं च मुक्तिं च स प्राप्नोति द्विजोत्तमाः" इति ॥

दशमस्कन्धे चोद्धवः—

"दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत" इति ॥

भगवानप्याह—

"जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां मयि भक्तिः प्रजायत" इति ॥

न च सर्वत्र देवतान्तरभक्तानां प्रतिपादितप्रनाड्या कृष्णभक्त्युद्भवस्य नियमेनादर्शनात् प्रत्यक्षबाधितमेतदिति शक्यम् । एतज्जन्मनि तदभावे जन्मान्तरेऽपि तत्सम्भवात् । एतज्जन्मानुष्ठितनिष्कामयागादिकर्मभिरिहैव ज्ञानानुत्पत्तौ जन्मान्तरे तदुत्पत्तिवत् । प्रपञ्चितं चैतत् परमाचार्येण बादरायणेन साधनाध्याये रंहति पाद इति शुभम् ।

"इति तादृशशास्त्रार्थे सति तस्य गतिः कृता ।
मतिमन्तो रतिर्गोपीपतिपादेऽस्त्वतिप्रिया ॥
श्रुतिशुक्तिभवैर्युक्तिमौक्तिकैर्वक्ति भूषितः ।
मुक्तिं भुक्तिं भक्तिमतामाचार्यः शास्त्रशक्तिमान् ॥
सन्तो जयन्त्वसन्तश्च लोके सुखलतोद्भवाः ।
कुशास्त्रधारिणः प्राज्योत्तमसाधनतत्पराः ॥

## ( द्वात्रिंशः प्रश्नः पत्नीरहितस्यापि दीक्षादाने, सर्वदानेषु चाधिकारः, नारदाद्युदाहरणानि च )

## अथ चतुर्थप्रधानप्रश्नावलम्ब्यष्टमः प्रश्नः

## पत्नीग्रहणरहितस्य दीक्षादानेऽधिकारोऽस्ति न वा ?

### उत्तरम् ।

"पत्नीयुक्तोऽप्यपत्नीको यत्नी जीवोद्धृतौ गुरुः ।
दद्याद्दीक्षां दयावीक्षां हृद्यां तन्वन्न दोषभाक्" ॥

तथा हि, नियतब्रह्मचारिणां सनकादीनामपि दीक्षोपदेशादिदानेऽधिकारो दृश्यते । उद्योगपर्वणि विदुरेण तेषां गुरुत्वनिरूपणात् । तत्रैव धृतराष्ट्राय तैर्विज्ञानमुपदिष्टमिति प्रख्यातम् । तथा श्रीभागवतचतुर्थस्कन्धादिषु पृथुराजादिभ्यस्तैर्ज्ञानादिकमुपदिष्टम् । नारदपञ्चरात्रादिषु नारदायापि भगवन्मन्त्रतत्कवचादिकं दत्तमिति प्रसिद्धम् । नारदेनाप्याजन्मब्रह्मचारिणा व्यासाय भगवन्मन्त्रदीक्षा दत्तेति नारदपञ्चरात्रब्रह्मवैवर्त्तादिषु स्फुटम् । एवं भागवतगौतमतन्त्रादिषु तेनैव ध्रुवगौतमादिभ्यो द्वादशाक्षरविद्याष्टादशाक्षरगोपालविद्यादय उपदिष्टा इति स्पष्टम् । एवं व्यासादिभ्यो ज्ञानोपदेशस्यापि तत्कर्तृकत्वं भारतभागवतादिष्वपाणिपिहितम् । एवमपत्नीकेन नारायणमहर्षिणाऽपि सिंहभीतब्राह्मणबटुकाय भगवन्मन्त्रदीक्षादत्तेत्यनाच्छादितं नारदपञ्चरात्रप्रथमरात्रे । एवमितरत्रापि पुराणादिषु तादृशेतिहासा विस्फारितदृग्भ्यां निरीक्षणीयाः ।

किञ्च, "यदहरेव विरजेत्तदहरेव प्रव्रजेत्", "अविप्लुतब्रह्मचर्यो यमिच्छेत्तु तमाविशे"दित्यादिश्रुतिस्मृतिसिद्धमाश्रमासमुच्चयपक्षमाश्रित्य प्रव्रजतामपि दीक्षादानेऽधिकारो दृश्यते । यथा शङ्कराचार्याणां दक्षिणामूर्त्यादिदीक्षादाने । अत एव च याज्ञवल्क्यप्रायश्चित्ताध्याये वानप्रस्थप्रकरणे ( श्लो० १ ) "सुतविन्यस्तपत्नीक" इत्यस्य मिताक्षरायां सुतविन्यस्तपत्नीकस्यापि हि तापसाश्रमिणो वैतानौपासनसाध्यकार्येषु दाने चाधिकारोऽभ्यनुज्ञातोऽस्ति । दीक्षाया अपि दानमेव । गोपृथ्वीसरस्वतीभेदेन दानत्रैविध्यस्य सामशाखीयसांहित्युपनिषदि बृहस्पतिस्मृतौ च दर्शितत्वात् । अतोऽस्मत्सम्प्रदाये पत्नीरहितानामपि नारदशुकदेवाद्याचार्याणां मन्त्रोपदेष्टृत्वस्य पूर्वत एव प्राप्तत्वाच्छास्त्रविरोधाभावाच्च पत्नीरहितस्याप्यस्ति । मन्त्रोपदेशदानेऽधिकारः ।

( विधुरस्यापि वैदिकक्रियावत्त्वविद्वत्त्वकुलीनत्वपुत्रवत्त्वजितकामत्वाद्यन्यतमवतः श्राद्धभोजनादिषु दीक्षादाने चाधिकार. अग्निहोत्रादिष्वनधिकार. )

नन्वेवं सत्यपि अकृतविवाहस्यास्तु तदधिकारः । तथापि विधुरस्य त्वनाश्रमितया निन्दितत्वात् । श्राद्धभोजनादिषु निषिद्धत्वाच्च नास्य तदधिकारो युक्त इति चेत्, नैष

दोषः। निन्दाया वैदिकक्रियावत्त्वविद्वत्त्वकुलीनत्वपुत्रवत्त्वादिधर्मान्यतमाविशिष्टविषयकत्वात्। उक्तान्यतमविशिष्टस्य तु श्राद्धभोजनादावप्ययोगत्वाभावाच्च।

निर्णयसिन्धौ प्रथमपरिच्छेदे नक्तभोजनप्रस्तावे—

"अनाश्रमोऽप्याश्रमी स्यादपत्नीकोऽपि पुत्रवानि"ति सङ्ग्रहोक्तेः।

तथा प्रजापतिस्मृतौ—

"योऽभार्यः सन् बलं चेतः संयन्ता विधुरो भवेत्।
क्रियापरः श्रुतेर्वेत्ता श्राद्धे वै भोजयेत्पितुः॥
श्रुतिज्ञं कुलजं शान्तं प्रजावन्तं जितेन्द्रियम्।
मृतभार्यमपि श्राद्धे भोजयेदविशङ्कितः॥
अप्रजो मृतपत्नीकः सर्वकर्मसु गर्हितः।
छन्दो विनापि न स्थेयं दिनमेकं विनाश्रमम्॥
यस्य पुत्राः सदाचाराः श्रुतिज्ञा धर्मसम्मुखाः।
पितृभक्तिरता दान्ता न वैधव्यं मृतस्त्रियि॥
तुरीये धाम्नि यस्तिष्ठेत्सन्धौ मध्यनिशि क्षणम्।
अभार्योऽप्यनपत्योऽपि श्राद्धे पुण्यैरवाप्यते॥
षोडशाब्दात्परं श्राद्धे विप्राणां सप्तसप्तके।
भोजयेत् पितृकार्यार्थे ततोऽन्यान् देवकर्मणि॥
न पुत्रपुत्रीतदपत्यभार्या न बन्धुरङ्गीकृतचित्तधारणः।
सम्प्राप्य वैधव्यमनङ्गसम्भवो यस्तिष्ठति व्यक्ततया स वर्ज्य" इति

अत्र कामवैह्वल्यादिदोषग्रस्तस्यैव विधुरस्य श्राद्धभोजनादौ निषेधो, न तु तच्छून्यस्य। किञ्चाग्निहोत्रदर्शपूर्णमासादिषु वैतानिककर्मस्वेव विधुरस्य नाधिकारः। तत्प्रवृत्तिद्वारस्य पुनराधानस्य सपत्नीकमात्राधिकारकत्वात्। तदङ्गभूतेषु व्रीह्यवघाताज्यावेक्षणादिकर्मस्वपि पत्नीकार्यत्वस्य कल्पकारै"रथैनामाज्यमवेक्षयती"त्यादौ निरूपणात् (ब्राह्म० काण्ड० ३ प्र० ३ अ० ४)

"पत्न्यवेक्षते मिथुनत्वाय प्रजात्यै यद्वै पत्नी यज्ञस्य करोति मिथुनं तत् अथोपत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै" इत्यादिना तत्तद्विधायकब्राह्मणवाक्योपलम्भाच्च। तथा कर्मान्तरेष्वपि तत्तन्मन्त्रेषु "आशासानासौमनसम्प्रजाँसौभाग्यं तनूं धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि समायुषा सम्प्रजया समग्रे वर्चसा पुनः सम्पत्नी पत्याहं गच्छे समात्मा तनु वा ममे"त्यादिषु सौभाग्यपतिसहभावादिलिङ्गैस्तथैव निश्चयाच्च।

अथ सन्ध्यास्नानदानजपदेवार्चनापूर्तादिषु तु विधुरस्याप्यधिकारोऽक्षत एव । तत्र मन्त्रोपदेशस्यापि दानत्वादस्ति विधुरस्यापि तत्राधिकारः । तस्य दानत्वं तु—

"त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती"ति

सामशाखीयसांहित्युपनिषच्छ्रुत्या तादृशानुपूर्वीकबृहस्पतिस्मृत्या तदर्थानुवादिभिः—

"सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ।
············विद्यादानं ततोऽधिकम् ॥
सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतम्" ॥

इत्यादिमन्वत्रियाज्ञवल्क्यादिस्मरणैश्च निरूपितमेव । कथमन्यथा तवापि प्रश्नवाक्ये दीक्षादान इत्युक्तिः सङ्गच्छेत । तस्मान्मन्त्रोपदेशेऽपि दानाधिकारिणो न विधुरस्यानधिकारः । तत्रापि दानत्वाविशेषात् । अत एव मृतपत्नीका वैराग्यादिवशादकृतविवाहान्तरा अपि बहवः शिष्टाः संस्क्रियमाणेभ्यः स्वपुत्रादिभ्यो गायत्रीमुपदिशन्तो दृश्यन्ते । एवं श्रीभागवतचतुर्थस्कन्धादिषु पुराणभागेष्वपि सतीनिधनानन्तरं हैमवतीविवाहात् प्राक् विधुरस्यापि शिवस्य नारदाय ब्रह्मविद्योपदेशनं वर्ण्यते । इत्थमितरत्रापि वर्णनान्तराणि दृश्यानि । इदानीमपि वैष्णवानामस्माकं माध्वरामानुजीयप्रभृतिषु सम्प्रदायान्तरेष्वपि, अस्त्याचार्याणां विधुराविधुरसाधारण्येनोपदेशकर्तृत्वव्यवहारः । अतः पत्नीरहितकर्तृकदीक्षादाने निषेधस्य शास्त्रसदाचारयोरनुपलब्धेर्न कोऽपि शङ्कावकाशः ।

( विधुरकुमारब्रह्मचारिणोरपि वैष्णवदीक्षाग्रहणेऽधिकार. )

अथ यदि प्रश्नवाक्ये दीक्षादान इत्यत्राकारप्रश्लेषादपत्नीकस्य यथा वैतानिकदीक्षाग्रहणे नाधिकारस्तथा तस्य वैष्णवदीक्षाग्रहणेऽधिकारोऽस्ति न वेत्येव विचिकित्सितं स्यात्तदापि वदामः । परिणयाकरणाद्गृहिणीमरणाद्वाऽपत्नीकेष्वपि मुमुक्षाया अविशेषादस्ति वैष्णवदीक्षाग्रहणाधिकारः ।

अत एव षष्ठे मनुः ( श्लो० २५ )—

"अग्नीनात्मनि वैतानान्समारोप्य यथाविधी"ति

आरोपिताग्निं सर्वथा पत्नीसम्बन्धगन्धशून्यमपि वानप्रस्थं प्रस्तुत्य तस्य दीक्षाग्रहणं तादृशस्य परममोक्षं च वक्ति ( श्लो० २९ )—

"एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन् ।
विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥
ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः ।
विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये" ॥

तथा ( श्लो० ३२ )—

> "आसां महर्षिचर्याणां त्यक्त्वाऽन्यतमया तनुम् ।
> वीतशोकभयो विप्रो ब्रह्मलोके महीयत" इति ॥

पुनः पञ्चमाध्याये स एव ( श्लो० १५९ )—

> "अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ।
> दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्" इति ॥

अतः पत्नीभावाभावयोर्मोक्षे न साधकत्वं प्रतिबन्धकत्वं वेत्यपत्नीकस्यापि तद्ग्रहणे न काप्यनुपपत्तिः । विस्तरस्तु "किमाश्रमनिष्ठ" इत्यस्योत्तरादवधेयः ।

किञ्च,

यथा विधुरस्य ( अ० ५ श्लो० १६८ )—

> "भार्यायै पूर्वमारिण्यै दत्वाग्नीनन्त्यकर्मणि ।
> पुनर्दारक्रियां कुर्यात्पुनराधानमेव च ॥
> अनेन विधिना नित्यं पञ्चयज्ञान्न हापयेत्" ॥

इत्यादीनि मन्वादिवचनानि विवाहान्तरकरणानन्तरमेवाधानाधिकारं विदधाति न तथा सपत्नीकस्यैव वैष्णवदीक्षाग्रहणविधायकमपत्नीकस्य तत्प्रतिषेधकं वा किञ्चिच्छास्त्रमुपलभामहे । प्रत्युत नैष्ठिकब्रह्मचारिप्रभृतीनामपि तदावश्यकताबोधकानि वचनानि प्रागेवोपन्यस्तानीति सर्वमच्छिद्रम् । इत्थं च—

> "धुर्यं सन्मित्रविषये तुर्यं चोद्यं सहाष्टभिः ।
> दुर्यन्त्रितं स्वाङ्गवाक्यैः पर्यन्तं नीतमुत्तरैः" ॥

इति चतुर्थाष्टकम् ॥

## (पञ्चमः प्रधानः प्रश्नः उत्तरकारिकाभिर्नित्यकाम्यादिसर्वधर्मव्यवस्था)

## अथ पञ्चमः प्रधानप्रश्नः

### भवतामत्यावश्यको धर्मः कः?

उत्तरम् ।

"श्रीकृष्णदेवमन्त्राणां ग्रहणं स्वगुरोर्मुखात् ।
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।
स्वाचार्यदर्शितदिशेत्यादीनां समनुष्ठितिः ॥
धर्मोऽत्यावश्यकोऽस्माकं वेदवेदान्तभाषितः ।
वैष्णवत्वप्रयुक्तोऽथाध्ययनाध्यापनादिकम् ॥
प्रजारक्षादिकं नानाव्यापाराद्विजसेवनम् ।
वर्णप्रयुक्ता इत्याद्या धर्मशास्त्रोदिताः क्रमात् ॥
तत्तदाश्रममूलाश्च धर्माः श्रुत्यादिदर्शिताः ।
सर्वेऽत्यावश्यका नस्तेऽनुष्ठीयन्ते यथार्हणम् ॥
देशकालवयोऽवस्थाधीशक्त्याद्यनुसारतः ।
तत्र वर्णाश्रमप्राप्ताः प्रत्यवायनिवृत्तये ॥
ज्ञानेऽधिकारसिद्ध्यर्थं चानुष्ठीयन्त उज्ज्वलाः ।
हरिध्यानादिसाहित्यात्तेऽस्माकं वीर्यवत्तराः ॥
चित्तं संशोध्य कल्पन्ते ज्ञानभक्त्यादिसिद्धये ।
हरिसेवादयो धर्माः साक्षान्मोक्षाप्तये मताः ॥
अत आवश्यकतरा आचार्यैरुभये स्मृताः ।
वैष्णवत्वप्रयुक्ता ये ये च वर्णाश्रमोद्भवाः ॥
ये त्वन्यदेवताभक्त्याऽन्यमन्त्रोपासनादयः ।
पुत्रेष्ट्याद्याश्च ये काम्या वर्ज्यानावश्यकाः क्रमात् ॥
तत्राद्यवर्जने हेतुर्यो वै स्वां देवतामिति ।
एवमादीनि वाक्यानि प्रत्यवायाऽश्रुतिः परे ॥
भूतिकामस्य वायव्यश्वेतालभनमुच्यते ।
अननुष्ठानतस्तस्य प्रत्यवायोऽश्रुतो यथा ॥
मया ग्रन्थेषु वेदान्तचिन्तामण्यादिषु स्फुटम् ।
विस्तरेणैव निर्णीतमेतत्तत्रैव दृश्यताम्" ॥

## ( त्रयस्त्रिंशः प्रश्नः, उत्तरकारिका, सन्ध्यादेर्हरिध्यानादेश्चाङ्गाङ्गिभावः, गायत्रीवैदिककर्मतपोऽध्ययनादीनां हरिप्राप्तिसाधनता )

### अथैतत्प्रधानप्रश्नावलम्बी आद्यः प्रश्नः

**तत्र हरिध्यानादिकमावश्यकं यद्युच्यते तदा सन्ध्यागायत्रीमध्ये भवतामनावश्यकत्वमिति वक्तव्यम्, तर्हि वर्णाश्रमगणना भवन्मतेऽस्ति न वा ?**

**उत्तरम् ।**

"अङ्गाङ्गिभावादुभयोर्विरोधं शक्ता न वक्तुं श्रुतियुक्तिविज्ञाः ।
ध्यानादिकावश्यकताविधाने सन्ध्याद्यनावश्यकता कथं स्यात्" ॥

परस्परविरुद्धयोर्ह्येकतरावश्यकतास्वीकारेऽन्यतरस्यानावश्यकत्वं प्रसज्येत । इह तु सन्ध्यावन्दनगायत्रीजपादिकं न हरिध्यानादिविरुद्धं प्रत्युताङ्गाङ्गिभावात् तत्प्रापकत्वाच्च तदनुकूलमेव । तस्मादस्माकं तूभयोरप्यावश्यकत्वस्वीकार इति अविचाररमणीय एवायं वर्णाश्रमगणनाभावाभावप्रश्नः । गायत्र्यादीनां भगवत्प्रापकत्वं तु प्रपञ्च्यते । तथा हि मनुना द्वितीयाध्याये ( श्लो० ७६ )—

"अकारं चाप्युकारं चे"त्यारभ्य त्रैवर्णिकानां सप्रणवस्य गायत्रीजपस्य, काले सन्ध्यावन्दनादिक्रियायाश्चात्यावश्यकतां निरूप्योच्यते—

"ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान्" ॥

सम्वर्त्तोऽपि ( श्लो० २०४ )—

"गायत्रीं यः सदा विप्रो जपेत नियतः शुचिः ।
स याति परमं स्थानं वायुभूतः खमूर्तिमानि"ति ॥

"ब्रह्मणो मुखमि"त्यत्र ब्रह्मणः परमात्मनः प्राप्तेर्द्वारमेतदध्ययनजपादिना निष्पापस्य ब्रह्मज्ञानप्रकर्षेण मोक्षावाप्तेरिति कुल्लूकभट्टो व्याचख्यौ । अतः पापनाशकत्वेन नित्यत्वेन चोपकारकत्वाद्धरिप्राप्तिशेषभूतमेवेदम् । परब्रह्मत्वं च हरेरेवेति तु—

"तदेव ब्रह्म परमं कवीनाम्" ।
"तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत" इति ।
"अहमेव परं ब्रह्म परमात्माहमव्यय" इति ॥
"मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जये"-

त्यादिश्रुतिस्मृतिवाक्यसहस्रभेरीघुष्टं सर्वसदास्तिकसम्मतम् । पुनरपि वैदिककर्मणां तत्प्रतिसाधनत्वमाह स एव षष्ठे ( श्लो० ७५ )—

"अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्मभिः ।
तपसश्चरणैश्चोग्रैः साधयन्तीह तत्पदमि"ति ॥

बृहदारण्यके च श्रूयते ( पृ० ८९७ )—

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"त्यादि । तैत्तिरीयेऽपि—

"वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति" इति ॥

अतः सर्वस्यापि तत्त्वतो भगवदवबोधशेषत्वं सिद्ध्यति ।

( सन्ध्यास्नानादेरध्यात्मज्ञानहरिध्यानाभ्यां साफल्य, स्मृतिषु ध्यानविधि. )

किञ्च, हरिध्यानादिविना सन्ध्यावन्दनादि निष्फलमेव अत एव मनुः ( अ० ६ श्लो० ८२ )—

"न ह्यनध्यात्मवित् कश्चित् क्रियाफलमुपाश्नुत" इति ।

छान्दोग्ये च श्रूयते—

"यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवती"ति ।

अपि च, सन्ध्यावन्दनादिवैदिककर्माधिकारसम्पादके उपनयनसंस्कारेऽपि अविदुषो नाधिकारः ।

"यमविद्वानुपनयते यश्चाविद्वानिती"ति श्रुतेः ।

अग्रे "तमस एव तमः प्रविशती"ति दुष्फलश्रावणात् ।

"विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेदि"ति स्मृतेश्च ।

तथा यागाधिकारिविशेषणकोटावपि

"अर्थी समर्थो विद्वान् जातपुत्र" इति कल्पसूत्रे विदुषोऽधिकार उच्यते ।

याज्ञवल्क्योऽपि गायत्रीजपादेः प्रकर्षतः सिद्धौ ब्रह्मविद्याया एव हेतुत्वमाह ( अ० १ ) गृह्यप्रकरणे ( श्लो० ५ )—

"जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेदि"ति ।

पराशरमाधवीये प्रथमाध्याये आह्निकप्रकरणे बृहस्पतिः—

•"ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ।
जप्त्वाथ प्रणवं चापि ततस्तर्पणमाचरेदि"ति ॥

अथ ध्यानं तु विदधाति याज्ञवल्क्य एव तृतीयाध्याये अध्यात्मप्रकरणे (श्लो० ९)—

"ध्यानयोगेन सम्पश्येत्सूक्ष्म आत्मात्मनि स्थित" इति ॥

तत्रैव ( श्लोक० १४६ )—

"ततो ध्येयस्थितो योऽसौ हृदये दीपवत्प्रभुः ।
धारयेत्तत्र चात्मानं धारणां धारयन् बुध" इति ॥

अथ बृहत्पराशरोऽपि द्वितीयाध्याये ( श्लो० ८२ )—

"मान्त्रं पार्थिवमाग्नेयमि"त्यादिना सप्तस्नानान्युपक्रम्य ( श्लो० ८५ )—

"यद्ध्यानं मनसा विष्णोर्मानसं कथ्यते बुधैः" ॥

इति मानसस्नानलक्षणमुक्त्वा ( श्लो० ८६ )—

"स्नानानामुत्तमं स्नानं मन्वाद्यैर्मानसं स्मृतम् ।
कृतेन येन मुच्यन्ते गृहस्था अपि सद्द्विजाः" ॥

इति सर्वेषां मोक्षसाधनत्वं तस्याह । तथा ( श्लो० ९० )—

"अस्नात्वा नाचरेत्कर्म जपहोमादि किञ्चने"ति

अस्नातस्य यावत्कर्मकरणनिषेधात्, स्नानेषु ध्यानरूपस्य च मानसिकस्यातीव फलकथनात्, सन्ध्यादौ ध्यानस्योपकारकत्वमुक्तं भवति ।

पुनः स एव ( अ० २ श्लो० १३८ )

"चिद्रूपं परमं ज्योतिर्निरालम्बमनामयम् ।
अव्यक्तमव्ययं शान्तं स्नायाद्वापि हरिं स्मरन् ॥
गायत्रीवारिसंस्नातः प्रणवैर्निर्मलीकृतः ।
विष्णुस्मरणसंशुद्धो योग्यः सर्वेषु कर्मसु ॥
योऽधीतवेदवेदार्थः स्नातः सर्वेषु वारिषु ।
न शुद्ध्येदशुचिस्वान्तस्तच्छुद्धस्तु शुचिर्मत" इति ॥

( प्रणवो विष्णुस्तस्यैव ध्यानपूजावरणादि कार्यं, गायत्रीब्रह्माभिन्ना, सूर्ये भगवदभेदबुद्धिकृतकमतो मोक्ष , हरिविमुखस्य सन्ध्याऽफला )

पुनस्तत्रैव ( अ० २ ) प्रणवप्रकरणे ( श्लो० १० )—

"प्रणवो हि परं तत्त्वमि"त्युपक्रम्य ( श्लो० १६ )—

"त्रिस्वभावस्थितो देवो मन्तव्यो ब्रह्मवादिभिः" ॥

इति भगवत्तत्त्वावगन्तृभिरेव तस्य शक्यमननत्वमुक्त्वाऽग्रे जगत्कर्तृत्वादिधर्मोक्तिपूर्वकं तस्य स्पष्टं विष्णुत्वं निरूप्य ( श्लो० ३१ )—

"उत्पन्नमेतत्तु यतः समस्तं व्याहृत्य तिष्ठेत्प्रलयेऽपि यत्र ।
एकाक्षरेणापि जगन्ति येन व्याप्तानि कोऽन्यः परमोऽस्ति तस्मात्" ॥

ध्येयं न जप्यं न च पूजनीयं यस्मान्न देवाद्वरणीयमन्यत् ।
दुस्तारसंसारपयोधिमग्ने ताराय विष्णुः परमः स पूज्यः" ॥

इत्यन्तं तस्यैव ध्यानादि विधीयते ।

पराशरमाधवीये (अ० १ श्लो० ३९)—

"सन्ध्या स्नानमि"त्यस्य व्याख्यायां व्यासः—

"न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
साहमस्मीत्युपासीत विधिना येन केनचिदि"ति ॥

ब्रह्म तु हरिरेव ।

अस्मच्छाखीयनारायणोपनिषदि—

"अम्भस्य पार" इति प्रक्रमे "यमन्तः समुद्रे कवयो वयन्ती"त्यादिलिङ्गकथनपूर्वकं "तदेव ब्रह्म परमं कवीनामि"त्युक्तेः ।

"नारायणपरं ब्रह्म तत्त्वं नारायणः पर" इत्युक्तेश्च । पुनस्तत्रैव व्यासः—

"गृहे त्वेकगुणा सन्ध्या गोष्ठे दशगुणा स्मृता ।
शतसाहस्रिका नद्यामनन्तं विष्णुसन्निधावि"ति ॥

यत्र विष्णुप्रतिमादिसन्निधावपि अनन्तमित्युच्यते । किं तत्र वाच्यं तद्ध्यानसहकृतस्य कर्मणोऽनन्तफलत्वे ?

तैत्तिरीयब्राह्मणेऽपि भगवत्त्वेनादित्यध्यानपूर्वकमेव प्रातरादिसन्ध्याकरणं विधाय तादृशस्यैव मोक्ष आम्नायते—

"उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेदे"ति ।

आचारमाधवे (अ० १) आह्निकप्रकरणे विष्णुपुराणे—

"आचम्य च ततो दद्यात् सूर्याय सलिलाञ्जलिम् ।
नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ॥
जगत्सवित्रे शुचये सवित्रे कर्मदायिन" इति ॥

अथ कदाचिद्गायत्र्यादीनां सूर्यमन्त्रत्वं मन्येत तदापि सूर्यस्य विष्णुतेजस्त्वेन तद्विभूतित्वात्तन्मन्त्राणां नारायणपरत्वमेव । सारसङ्ग्रहे च वाराहे—

"सन्ध्योपास्तिं करिष्यन्ति द्विजा विष्णुपराङ्मुखाः ।
रौरवं नरकं प्राप्य चाण्डालीं योनिमाप्नुयुः" ॥ इति

हरिध्यानादिशून्यस्य सन्ध्यावन्दनादेर्दुष्फलजनकत्वमप्युक्तम् ।

( सन्ध्यातो दिवारात्रिकृताज्ञाताघक्षयः, बहिः सन्ध्यायां फलम्, अतिथिपूजायज्ञादिकं हरिप्रसादज्ञानतल्लोकाप्तिमुक्तिशेषम्, आधानयज्ञाद्यावश्यकता, आत्मयागः )

सन्ध्यात्रयस्य पापक्षयहेतुत्वेन चित्तशुद्धिद्वारा ज्ञानशेषत्वं तु ध्वनयति याज्ञवल्क्यो ( अ० ३ ) रहस्यप्रायश्चित्तप्रकरणे ( श्लो० ३ )—

"निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ।
त्रैकाल्यसन्ध्याकरणात्तत्सर्वं विप्रणश्यती"ति ॥

यमोऽपि—

"यदह्वा कुरुते पापं कर्मणा मनसा गिरा ।
आसीनः पश्चिमां सन्ध्यां प्राणायामैर्निहन्ति तदि"ति ॥

शातातपेनाऽप्युक्तम्—

"अनृतं मद्यगन्धं च दिवा मैथुनमेव च ।
पुनाति वृषलान्नं च सन्ध्या बहिरुपासिता" इति ॥

अथातिथिपूजनादिनित्यधर्मस्यापि विष्णुप्रसादार्थकत्वात्तद्ध्यानमावश्यकमिति बोधयति द्वितीयाध्याये पराशरः । यथा ( श्लो० १ )—

"अथातिथ्यं प्रवक्ष्यामी"त्यादिना प्रतिज्ञापुरःसरं सपरिकरमातिथ्यविचारं निरूप्याह ( श्लो० १७ )—

"योऽतिथिं पूजयेद्भक्त्या पूर्वमभ्यागतं तथा ।
बालवृद्धादिकं चैव तस्य विष्णुः प्रसीदती"ति ॥

अतिथिपूजनस्यापि चित्तशुद्धिद्वारा भगवज्ज्ञानपर्यवसायित्वं तु दर्शितं माधवीये ( अ० १ श्लो० ३९ ) व्याख्यायां कूर्मपुराणे—

"हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विज ।
दद्यादतिथये नित्यं बुद्ध्येत परमेश्वरमि"ति ॥

अतिथिसत्कारस्य भगवदर्चनरूपत्वं तु शंसितमाश्वमेधिके पर्वणि—

"पादाभ्यङ्गाम्बुपानैस्तु योऽतिथिं पूजयेन्नरः ।
पूजितस्तेन राजेन्द्र भवामीह न संशय" इति ॥

अन्यच्च,—

यज्ञाः सन्ति ब्राह्मणस्यावश्यका एव । ते च विष्णुलोकफलकाः ।

यथा माधवीये ( अ० १ श्लो० ३७ ) व्याख्यायां हारीतः—

"यज्ञेन लोका विमला विभान्ति यज्ञेन देवा अमृतत्वमाप्नुवन् ।
यज्ञेन पापैर्बहुभिर्विमुक्तः प्राप्नोति लोकानमरस्य विष्णोरि"ति ॥

कूर्मपुराणे—

"नास्तिक्यादथवाऽऽलस्याद्योऽग्नीन्नाधातुमिच्छति।
यजेत वा न यज्ञेन स याति नरकान् बहून्॥
तस्मात् सर्वप्रयत्नेन ब्राह्मणो हि विशेषतः।
आधायाग्निं विशुद्धात्मा यजेत परमेश्वरमि"ति॥

हारीतः—

"पाकयज्ञान् यजेन्नित्यं हविर्यज्ञांस्तु नित्यशः।
सौम्यांस्तु विधिपूर्वेण य इच्छेद्ब्रह्म चाव्ययमि"ति॥

कूर्मपुराणे "अमृतापिधानमसी"त्यादिना भोजनानन्तरमाचमनाद्युक्त्वोच्यते—

"अथाक्षरेण स्वात्मानं योजयेद्ब्रह्मणेति हि।
सर्वेषामेव यागानामात्मयागः परः स्मृतः॥
योऽनेन विधिना कुर्यात्स याति ब्रह्मणः पदमि"ति॥

एवं प्राधान्येनाश्रमत्रयधर्मेषु हरिध्यानसाहाय्यावश्यकत्वं दर्शितम्।

(सन्यासिनोऽपि ध्यानावश्यकता, हरिस्मरणेनैव सर्वकर्मपरिपूर्तिं, जपादिषु विशेष, हरिप्रवणस्य कर्मलोपेऽप्यदोषः)

किञ्च, संन्यासग्रहणेऽपि हरिध्यानमावश्यकम्। आचारमाधवद्वितीयाध्याये संन्यासग्रहणविधौ कात्यायनः—

"आत्मन्यग्निं समारोप्य वेदिमध्यस्थितो हरिम्।
ध्यात्वा हृदि त्वनुज्ञातो गुरुणा प्रैषमारभेदि"ति॥

षष्ठे संन्यासिधर्मानुपक्रम्य मनुः (श्लो० ७९)—

"प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम्।
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनमि"ति॥

तस्माद्धरिध्यानादिकं सर्वेष्वपि वर्णाश्रमेष्वावश्यकम्, न तु तेन सह वर्णाश्रमधर्माणां विरोधगन्धोऽपि। सर्वेषामपि हि धर्माणां हरिस्मरणेनैव परिपूर्णत्वं निगद्यते। कथं तर्हि ध्यानादिकेन सार्द्धं वर्णाश्रमधर्माणां विरोधगन्धः किञ्चिज्ज्ञेन बालेनापि भाषितुं शक्यः? तथा हि "प्रमादात् कुर्वतां कर्मे"त्यादि "परिपूर्णं तदस्तु मे" इत्यन्तं श्लोकत्रयं प्रसिद्धम्।

चतुर्विंशतिमतव्याख्यायामाचारकाण्डे बृहन्नारदीये—

"न्यूनातिरिक्ततासिद्ध्यै कलौ वेदोक्तकर्मणाम्।
हरिस्मरणमेवान्ते सम्पूर्णफलदायकमि"ति॥

माधवीये प्रथमाध्याये आह्निकप्रकरणे याज्ञवल्क्यः—

"यदि वाग्यमलोपः स्याज्जपादिषु कदाचन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययमि"ति ॥

गौतमोऽपि—

"गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः ।
अशुचेर्वा विना सङ्ख्यं तत्सर्वं निष्फलं भवेत् ॥
क्रोधं मोहं क्षुतं निद्रां निष्ठीवनविजृम्भणे ।
दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि ॥
आचामेत्सम्भवे चैषां स्मरेद्विष्णुं सुरार्चितमि"त्यादि ।

सारसङ्ग्रहे स्कान्दे भगवद्वचनम्—

"मन्निमित्तं कृतं कर्म कर्मलोपो भवेद्यदि ।
तत्कर्म कुर्वते नित्यं तिस्रः कोट्यो महर्षयः ॥
मन्निमित्तं कृतं पापं मद्धर्माय च कल्पते" ।
मामनादृत्य धर्मोऽपि पापं स्यान्मत्प्रभावतः" ॥

पाद्मे भृगुवचनम्—

"स कर्ता सर्वधर्माणां भक्तो यस्तव केशव ।
स कर्ता सर्वपापानां यो न भक्तस्तवाच्युते"ति ॥

( पुनर्ध्यानस्यात्युत्कर्षः, ध्यातृध्येयाद्यभेदः, ध्येयस्वरूपम्, षडङ्गादिवर्णाश्रमधर्मात्यागोऽपि वैष्णवचिह्नम् )

अथ पुनरपि ध्यानोत्कर्षे लघ्वत्रिस्मृतौ अष्टमाध्याये विविधप्रायश्चित्तान्यभिधाय सर्वान्ते—

"ध्यानेन सदृशं नास्ति शोधनं पाककर्मणाम् ।
श्वपाके चाभिभुञ्जानो ध्यानेनेह विशुद्ध्यति ॥
ध्यानमेव परं ब्रह्म ध्यानमेव परं तपः ।
ध्यानमेव परं शौचं ध्यानमेव परं पदम् ॥
सर्वपापप्रसक्तोऽपि ध्यायन्नेव प्रमुच्यते ।
तपस्वी च भवेदेवं पङ्क्तिपावनपावनः ॥

पुनस्तत्रैव नवमाध्याये—

"यो ध्याता यच्च तद्ध्यानं यद्ध्येयं यत्प्रयोजनम् ।
सर्वाण्येतानि यो वेत्ति स योगं योक्तुमर्हति ॥
आत्मा ध्याता मनो ध्यानं ध्येयः सूक्ष्मो महेश्वरः ।
यत्परात्परमैश्वर्यमेतद्ध्यानप्रयोजनम् ॥

विदित्वा सर्वसूक्ष्माणि षडङ्गं च महेश्वरम् ।
प्रधानगुणतत्त्वज्ञः परं ब्रह्माधिगच्छति ॥
विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन् ।
शिशुपालो गतः स्वर्गं किं पुनस्तत्परायणः ॥
उपलब्धिः स्मृतिर्ध्यानं सङ्कल्पः प्रणवं प्रति ।
कल्पना भावना चिन्ता ध्यानमित्यभिधीयते ॥
प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते" इति ॥

अत्र महेश्वरशब्दो भगवत्परः । "विद्वेषादपि गोविन्दमि"ति गोविन्दशब्दश्रुतिसामानाधिकरण्यात् ।

"नारायणपरो ध्याता ध्यानं नारायणः पर" इति श्रुतेश्च ।

ध्यानस्य भगवत्साक्षात्कारहेतुत्वं तु मुण्डकोपनिषदि तृतीयमुण्डके श्रूयते—

"ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमान" इति ।

तस्यैव ज्ञानहेतुत्वं च श्रूयते कैवल्योपनिषदि—

"श्रद्धाभक्तिध्यानयोगादवेही"ति । तस्मादेवमुत्तमतमस्य हरिध्यानादेः सन्ध्यावन्दनादिवर्णाश्रमधर्मविरुद्धत्वाभावात्तदावश्यकत्वकथनेन न वर्णाश्रमधर्माणामनावश्यकत्वं सेत्स्यति । वर्णाश्रमधर्मात्यागस्यापि विष्णुभक्तिचिह्नत्वात् ।

यथाह विष्णुपुराणे यमः (अं० ३ अ० ७ श्लो० १९)—

"न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किञ्चिदुच्चैः स्थितमनसं तमवेहि विष्णुभक्तम्" ॥

कालमाधवीये तु जितमनसमिति पाठः ।

अतः—

"विचार्यते शास्त्रकथा यथा यथा वचांसि युक्तानि लभेत्तथा तथा ।
श्रान्तोऽसि लेखाद्बहुलादलं वृथा वादव्यथां मैव कृथा हरेः पथा ॥
यथास्ति वर्णाश्रमधर्मवर्णनं सत्सम्प्रदायेषु गतिप्रदायिषु ।
हरौ रतेश्चारुविचारसञ्चयैर्न चेतरत्रास्ति तथेति बुद्ध्यताम्" ॥

( चतुस्त्रिंशः प्रश्नः, उत्तरकारिकेऽब्राह्मण्यस्वरूप

## अथ प्रक्रान्तपञ्चमप्रश्नावलम्बी द्वितीयः प्रश्न

## सन्ध्यादिहीनस्याब्राह्मण्यं भवत्सम्मतं न वा ?

### उत्तरम् ।

"ब्राह्मण्यस्य तिरोधानं नित्यसन्ध्यादिलोपने ।
प्रतिबन्धैर्विहीनस्य सूतकाद्यैररोगिणः ॥
सेवाद्यनुपरुद्धस्य देवदेवरमापतेः ।
वृथा लोपयतः कर्म यथाशास्त्रं सुसम्मतम्" ॥

अत्राब्राह्मण्यं नाम, "ब्रह्माननं क्षत्रभुजो महात्मे"त्यत्र द्वितीयस्कन्धसुबोधिन्यां श्रीमदाचार्यदर्शितदिशा ब्राह्मणबीजस्तत्परिणीतब्राह्मणजातीयक्षेत्रोत्पन्ने शरीरे प्रायो गर्भाधानादिशास्त्रीयसंस्कारैरेव शक्याविर्भावस्य क्वचिदीश्वरेच्छया शरीरान्तरेऽपि तपोविशेषादिभिः प्रादुर्भावशालिनो भगवन्मुखरूपस्य ब्राह्मण्याख्यदेवताविशेषस्य सन्ध्यावन्दनलोपम्लेच्छान्नभक्षणादिप्रतिकूलसम्पत्प्रयुक्तं प्रायश्चित्तप्रतिविधेयं तिरोधानम् । पुनस्तत्प्रादुर्भावकप्रायश्चित्तानि तु स्वल्पवैगुण्ये स्वल्पानि, गुरूणि तु, पुनः संस्कारादिरूपाणि गुरूणि, यथा शास्त्रोक्तविधिना प्रतिष्ठाकरणात्प्रतिमादौ प्रादुर्भूताया देवतायास्तिरोधानप्रयोजके स्वल्पवैगुण्ये प्रोक्षणपञ्चामृतस्नानादिकमेव पुनः प्रादुर्भावकम्, म्लेच्छसंसर्गादौ महत्तरानाचारे तु पुनः प्रतिष्ठाकरणादीति दिक् ।

( सन्ध्यालक्षण, सा सूर्येऽनुदित एव कार्या, तद्धीनस्य शूद्रत्वम्, नरकादि च, तां विना सर्वकर्मवैयर्थ्यं, करणेऽहोरात्रपापनाशो ब्रह्मलोकश्च )

तत्र सन्ध्याराहित्याभ्यासप्रयुक्तं ब्राह्मण्याख्यदेवताविशेषतिरोधानमस्माकं सङ्गतमेव, शास्त्रसिद्धत्वात् । तथाहि, द्वितीयाध्याये बृहत्पराशरः ( श्लो० १० )—

"दिवसस्य च रात्रेश्च सन्धिः सन्ध्येति गीयते ।
सोपास्या सद्भिर्जैर्यत्नात्स्याचैर्विश्वमुपासितम् ॥
मध्याह्नेऽपि च सन्धिः स्यात् पूर्वस्याह्नो परस्य च ।
पूर्वाह्णाह्नोऽपराह्णश्च क्षपा चेति श्रुतिक्रमः" ॥

पुनः स एव तत्रैव ( श्लो० ७१ )—

"त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः" ॥

इत्यादिना स्वाध्यायब्राह्मणोक्तप्रकारेण मन्देहानां सूर्येण प्रत्यहं युद्धादि निरूप्याह ( श्लो० ८०।८१ )—

"मत्वेत्यनुदितादित्ये सन्ध्योपास्तिकरो भवेत् ।
उदिते सति या सन्ध्या बालक्रीडोपमा हि सा ॥

सन्ध्या येन न विज्ञाता न च सन्ध्या उपासिता: ।
स जीवन्नपि शूद्रः स्यात्सदा पातकसंयुत" इति ॥

आचारमाधवीये प्रथमाध्याये सन्ध्यां प्रशंसंति यमः—

"सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥
यदह्ना कुरुते पापं कर्मणा मनसा गिरा ।
आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु हन्ति तत् ॥
यद्रात्र्यात्कुरुते पापं कर्मणा मनसा गिरा ।
पूर्वसन्ध्यामुपासीनः प्राणायामैर्व्यपोहति ॥
ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः ।
प्रजां यशश्च कीर्तिं च ब्रह्मवर्चसमेव चे"ति ॥

अकरणे प्रत्यवायो दर्शितो दक्षेण—

"सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेदि"ति ॥

गोभिलोऽपि—

"सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता ।
जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते" इति ॥

विष्णुपुराणेऽपि—

"उपतिष्ठन्ति ये सन्ध्यां ये न पूर्वां न पश्चिमाम् ।
व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृपे"ति ॥

कूर्मपुराणे—

"योऽन्यत्र कुरुते कर्म धर्मकार्यं द्विजोत्तमः ।
विहाय सन्ध्याप्रणतिं स याति नरकायुतमि"ति ॥

( आतुरस्य तत्त्यागेऽदोषः, सूतकादौ तन्निषेधस्तत्र मानसिकसन्ध्या सन्ध्यानित्यत्वं च )

एतत्सर्वमनार्त्तविषयम् । तथा च याज्ञवल्क्यः—

"अनार्त्तश्चोत्सृजेद्यस्तु स विप्रः शूद्रसम्मतः ।
प्रायश्चित्ती भवेच्चैव लोके भवति निन्दितः" इति ॥

अत्रिरपि—

"नोपतिष्ठन्ति ये सन्ध्यां स्वस्थावस्थासु वै द्विजाः ।
हिंसन्ति वै सदा पापा भगवन्तं दिवाकरमि"ति ॥

विष्णुपुराणेऽपि—

"सर्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरजीविनः" इति ॥

सूतकादौ सत्यपि सामर्थ्ये सन्ध्योपासनं न कार्यमित्याह मरीचिः—

"सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयत" इति ।

यदपि पुलस्त्येनोक्तम्—

"सन्ध्यामिष्टिं च होमं च यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके चापि त्यजन्गच्छत्यधोगतिम्" ॥ इति ॥

तन्मानसिकसन्ध्याभिप्रायम् । यतस्तेनैवोक्तम्—

"सूतके मृतके चैव सन्ध्याकर्म न सन्त्यजेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विज" इति ॥
"एतद्विदित्वा यः सन्ध्यामुपास्ते शंसितव्रतः ।
दीर्घमायुः सम्विदेत सर्वपापैः प्रमुच्यते" ॥ इति

पुनर्माधवः (अ० १ श्लो० ३९)—

"सन्ध्यादीनां नित्यत्वं चाग्निहोत्रादिवद्यावज्जीवकर्त्तव्यतयाऽवगम्यते जीवनवदधिकारत्वं च दिने दिन इति वीप्सयावगम्यते। यथा च 'वसन्ते वसन्ते ज्योतिषा यजेते'त्यत्र वीप्सयाऽपगमस्तद्वदि"ति ।

(पुनस्तद्रहितस्याब्राह्मण्याशुचित्वकर्मानधिकारादितत्करणे पापनाशादिदेवाग्निविद्यादिकार्यैर्हरिसेवया चोपरुद्धस्य तत्त्यागेऽदोष, हरिविमुखस्य सन्ध्यादिवैफल्य च)

पुनराचारकाण्डद्वितीयाध्याये हारीतः—

"चत्वारोऽथाश्रमा ह्येते सन्ध्यावन्दनवर्जिताः ।
ब्राह्मण्यादेव हीयन्ते यदप्युपगतं बुधैरि"ति ॥

बौधायनोऽपि—

"अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् ।
सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृता" इति ॥

स्मृत्यन्तरेऽपि—

"सायं प्रातः सदा सन्ध्यां ये विप्रा नो ह्युपासते ।
कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत्" ॥

मनुरपि—

"सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिता" इति ॥

दक्षस्मृतौ—

"सन्ध्याकाले च सम्प्राप्ते मध्याह्ने च ततः पुनः ।
यो न सन्ध्यामुपासीत ब्राह्मणो हि विशेषतः ॥
स जीवन्नेव शूद्रस्तु मृतः श्वा चैव जायते ।
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥
यदन्यत् कुरुते कर्म न तस्य फलभाग्भवेत्" ।

धर्मसिन्धौ तृतीयपरिच्छेदपूर्वार्द्धे सन्ध्याप्रस्तावे—

"सन्ध्यामुपासते ये ते निष्पापा ब्रह्मलोकगाः ।
अन्यकर्मफलं नास्ति सन्ध्याहीनेऽशुचित्वतः ।
जीवमानो भवेच्छूद्रो मृतः श्वा जायते ध्रुवमि"ति

धर्मप्रवृत्तौ शाकलः—

"सन्ध्याकाले तु सम्प्राप्ते सन्ध्यां नैवमुपासते ।
जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते ॥
देवाग्निद्विजविद्यानां कार्ये महति संस्थिते ।
सन्ध्याहीने न दोषोऽस्ति यतस्तत्कर्मसाधनादि"ति ॥

अतोऽत्यावश्यकभगवत्सेवाद्यनुरोधात् गत्यन्तराभावतः सन्ध्यावन्दनादीनां किञ्चित्कालविलोपेऽपि न दोषः ।

अत एव सारसङ्ग्रहे स्कान्दे भगवद्वचनम्—

"मन्निमित्तं कृतं कर्म कर्मलोपो भवेद्यदि ।
तत्कर्म कुर्वते नित्यं तिस्रः कोट्यो महर्षयः ॥
मन्निमित्तं कृतं पापं सद्धर्माय च कल्पते ।
मामनादृत्य धर्मोऽपि पापं स्यान्मत्प्रभावतः" इति ॥

तत्रैव वाराहे—

"सन्ध्योपास्तिं करिष्यन्ति द्विजा विष्णुपराङ्मुखाः ।
रौरवं नरकं प्राप्य चाण्डालीं योनिमाप्नुयुः ॥
नानुव्रजति यो मोहाद्दुर्मतिर्हरिमुत्सवे ।
ज्ञानाग्निदग्धक्लेशोऽपि वसते नरकेऽशुचावि"ति ॥

अयं किञ्चित्कर्मकाललोपादौ दोषाभावो भगवत्सेवापरतन्त्रस्य गत्यन्तराभाव एव वेदितव्यः । अस्तु किमनेनाप्रासङ्गिकेन । तस्मादाशौचादिप्रतिबन्धककालव्यतिरिक्तावसरेऽनार्तस्य भगवत्सेवादिना गत्यन्तराभाववता अप्रतिरुद्धस्य सन्ध्यावन्दनादिकनित्यकर्मत्यागाभ्यासे शास्त्रप्राप्तो ब्राह्मण्यतिरोभावोऽस्माकं सम्मत एव ।

( इदानीं बहूनां सन्ध्यादिराहित्येऽपि तैः सह व्यवहारः, सर्वेषां कालानुरूपता, गायत्रीमात्रादपि ब्राह्मणता, अविद्वानपि विप्रो मान्यः )

नन्वेवं सतीदानीं बहुषु ब्राह्मणज्ञातिष्वनेकेषां सर्वदा सन्ध्यावन्दनराहित्येनाब्राह्मणत्वात् सन्ध्यादिकृद्भिर्विद्वद्भिरपि स्वल्पैस्तत्तज्ज्ञातीयैरनुष्ठीयमानस्तैः सह सहभोजनादिव्यवहारः कथमविरुद्धः स्यादिति चेत् ? इत्थम्, बहूनां तादृशत्वे बहुभिर्न विरोद्धव्यमिति न्यायेन स्वल्पैर्बहुविरोधस्य कर्तुमशक्यत्वात् युगानुरूपाणां द्विजानामनिन्द्यत्वस्मरणाच्च युक्तः स इति । तथा च बृहत्पराशरः प्रथमाध्याये ( श्लो० ३१ )—

"युगे युगेषु ये धर्मास्तेषु धर्मेषु ये द्विजाः ।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः" इति ॥

"युगरूपाः युगानुरूपाः कालपरतन्त्राः" इति माधवः ।

उक्तं च भारत आरण्यके पर्वणि—

"भूमिर्नद्यो नगाः शैलाः सिद्धा देवर्षयस्तथा ।
कालं तमनुवर्तन्ते यथा भावा युगे युगे ॥
कालं कालं समासाद्य नराणां नरपुङ्गव ।
बलवर्ष्मप्रभावाद्या न भवन्त्युद्भवन्ति चे"ति ॥

अत एव गायत्रीमात्रविज्ञा अपि, सम्यक् शौचाद्याचारनियन्त्रिताः सर्ववर्णान्नभक्षणाद्यनाचारशून्या ब्राह्मणा गत्यन्तराभावादनुचर्यादौ शिष्टैः स्वीक्रियन्ते ।

स्मर्यते च तृतीयाध्याये मनुना ( श्लो० ११८ )—

"सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी"ति ॥

निर्णयसिन्धौ श्राद्धप्रकरणे श्राद्धयोग्यब्राह्मणगणनायाम्—

"गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी"ति हेमाद्रौ व्यासः ।

पुनर्नवमाध्याये मनुः ( श्लो० ३१७ )—

"अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाभिवर्त(र्ध)ते ॥
एवं यद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु ।
सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तदि"ति ॥

प्रथमाध्यायेऽपि—

"ब्राह्मणो जायमानो हि पृथिव्यामधिजायते"—

इति जन्मत एव ब्राह्मणस्योत्कर्ष उक्तः । एवं "जन्मना ब्राह्मणः श्रेयानि"त्यादीनि वचनान्तराण्यपि द्रष्टव्यानि । जातिमात्रब्राह्मणवधादौ प्रायश्चित्तादिकमप्यनुसन्धेयम् । अतो जातिमात्रस्यापि ब्राह्मणस्य इतरापेक्षयोत्कर्षात् युगानुरोधेन ब्राह्मणानामनिन्द्यत्वात् गत्यन्तराभावाच्च तेषामपि ब्राह्मणत्वं स्वीकृत्य तैः सह यथार्हं सर्वव्यवहारान् सर्वत्र शिष्टाः समाचरन्तीति सर्वं सुस्थम् ।

तस्मात्—

"सच्छास्त्राणां विचारेण स्वच्छाचारे सतां पथे ।
कस्मादकस्मात् प्रश्नोऽसत्तर्कसम्पर्ककर्कशः" ॥

---

## (पञ्चत्रिंशः प्रश्नः, उत्तरकारिकाऽसकृदभ्यासादिभेदेन ब्रह्मचार्यादीनां सन्ध्यादिलोपे प्रायश्चित्तानि दिङ्मात्रेण)

## अथ पञ्चमप्रश्नस्यावान्तरस्तृतीयः प्रश्नः

## सन्ध्यावन्दनाद्यकरणप्रयुक्तपापनाशाय प्रायश्चित्तं भवत्सम्मतं न वा ?

### उत्तरम् ।

"प्रायश्चित्तं तु भवतो नूनं नैवास्ति सम्मतम् ।
बालवत्पृच्छ्यते यस्मादर्थेऽस्मिन् सर्वसम्मते" ।

पूर्वप्रश्ने सन्ध्याराहित्येन ब्राह्मण्याभावः प्रतिपादितः । इह तु पापमात्रमिति पृच्छकस्य पूर्वापरानुसन्धानवैदग्धी । आस्तामित्थङ्कारम् । सन्ध्यालोपे सकृदभ्यासादिभेदेन विविधप्रायश्चित्तानां धर्मशास्त्रसिद्धत्वात्तत्तदधिकारिविशेषेण तत्तत्पापप्रणोदनाय तत्तत्प्रायश्चित्तमनुष्ठेयमेवेत्यत्र को वाऽऽस्तिकः सम्मतिं न दद्यात् ?

सन्ध्यावन्दनलोपेऽपि सकृदभ्यासादिभेदेन प्रायश्चित्तवैविध्यं तु दिङ्मात्रेण दर्शयामः ।

तत्र पाशरमाधवीये प्रथमाध्याये ( श्लो० ३७ ) व्याख्याने प्रजापतिः—

"सन्ध्योपासनहानौ तु नित्यस्नानं विलुप्य च ।
होमं च नित्यकं शुद्ध्येद्गायत्र्यष्टसहस्रकृदि"ति ॥

सम्वर्त्तस्मृतौ ( अ० १ श्लो० २१ )—

"उपासीत न चेत्सन्ध्यामग्निकार्यं न वा कृतम् ।
गायत्र्यष्टसहस्रं तु जपेत्स्नायात्समाहितः" इति ॥

इदं सकृत्समुदायलोपविषयम् ।

एकतरसन्ध्यामात्रस्य सकृल्लोपे तु अत्रिस्मृतौ—

"सायं प्रातस्तु यः सन्ध्यां प्रमादाद्विक्रमेत्सकृत् ।
गायत्र्यास्तु सहस्रं हि जपेत्स्नात्वा समाहितः" इति ॥

सन्ध्यावन्दनवद्गायत्रीजपस्यापि सकृल्लोपे ब्रह्मचारिणो वा सन्ध्यालोपे त्वपरार्के सम्वर्त्तः—

"यः सन्ध्यां चैव नोपास्ते अग्निकार्यं यथाविधि ।
गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः" इति ॥

इदं कमलाकरभट्टेनापि सिन्धौ तृतीयपरिच्छेदे पूर्वार्द्धे ब्रह्मचारिधर्मेषु सङ्गृहीतम् ।

धर्मसिन्धौ च तृतीयपरिच्छेदपूर्वार्द्धे ब्रह्मचारिधर्मेषूच्यते—

"सन्ध्याग्निकार्यलोपे सहस्रगायत्रीजपः, क्वचित्सकृल्लोपे "मानस्तोके"ति मन्त्रस्य शतं जप उक्तः । भिक्षालोपेऽष्टशतमभ्यासे द्विगुणं पुनः संस्कारश्चे"ति ॥

पुनस्तत्रैव सन्ध्याप्रस्तावे सन्ध्याश्रये कालातिक्रमे प्रायश्चित्तार्थमेकमर्घमधिकं दत्वा रात्रौ प्रहरपर्यन्तं दिनोक्तकर्माणि कुर्यात् । ब्रह्मयज्ञं सौरं च वर्जयेत् । सर्वथा सन्ध्यालोपे प्रतिसन्ध्यमेकोपवासोऽयुतमष्टोत्तरसहस्रं वा गायत्रीजपः । अशक्तौ प्रतिसन्ध्यालोपे शतगायत्रीजपः । द्व्यहं त्र्यहं लोपे तदावृत्तिः । ततः परं कृच्छ्रादिकल्प्यमिति । इदं विशेषतो व्यवस्थापूर्वकं प्रायश्चित्तमयूखमुक्तावलीन्दुशेखरसिन्धुप्रभृतिषु सविस्तरं निर्णीतमेवेति निःसन्दिग्धविषयेऽप्रासङ्गिकलेखाद्विरम्यते । अतः—

"सन्ध्यायतां तु नित्यं नः सन्ध्याद्यं कर्म निर्मलम् ।
प्रायश्चित्तप्रसङ्गो न प्रायश्चित्तस्थिते हरौ" ॥

---

## ( षट्त्रिंशः प्रश्न उत्तरकारिकाश्च )

## अथ पञ्चमप्रधानप्रश्नावलम्बी चतुर्थः प्रश्नः

## गृहस्थानां पञ्चदेवपूजनमावश्यकं न वा ?

### उत्तरम् ।

"सर्वेषां तु गृहस्थानां पञ्चदैवतपूजनम् ।
नावश्यकं तथा शास्त्रशिष्टाचाराद्यभावतः ॥
सदैव दैवतं स्वेष्टमेकं पूज्यं तु सर्वथा ।
प्रामाणिकनिबन्धेषु बहुष्वेवं विनिर्णयात् ॥
नित्या पञ्चामरार्चा तु तादृग्दीक्षावतां मता ।
एकैकस्यार्चनं येषु सम्प्रदायेषु सम्मतम् ॥
तत्तद्वर्त्तिजनैस्ते ते लङ्घनीया न सर्वथा ।
सुरार्चैव स्मृता नित्या निन्दिता बहुभक्तता ॥
गण्यते बृहदारण्ये पुण्यमेकार्चनं सदा ।
तदेव नित्यं सर्वेषां निर्णीतं माधवादिभिः ॥
किञ्च मुख्या हरिहरान्यतरार्चैव वै कलौ ।
तत्रापि सेवनं मुख्यं देवदेवस्य केवलम् ॥
कीर्तनाद्यैरेव मुक्तेः कलेर्मलविलोपनात् ।
तथा गत्यन्तराभावात्सन्ध्यावन्नित्यतोक्तितः ॥
सर्वानुकूलं तन्मूलं सर्ववैदिककर्मणाम् ।
सर्वैरवश्यं कर्तव्यं सिध्येत्सर्वार्चनं ततः ॥
तस्मात्पूज्यतमं नान्यत्साक्षान्मोक्षस्तदर्चनात् ।
शालग्रामद्वारवतीशिले प्रतिमया सह ॥
पूज्ये त्रैवर्णिकैः स्पृष्ट्वा स्त्रीशूद्रैः प्रतिमैव तु ।
दूराच्छूद्रैर्वैष्णवैस्ते अर्च्ये विप्रकरेण वा ।
प्रत्यवेत्येव सन्ध्यावन्नित्यं मूर्त्यर्चनं विना ।
नराणां नरकप्राप्तिस्तद्धीनानां न तद्भुजाम् ॥
शालग्रामस्य महिमा न हि मातुं तु शक्यते ।
सूतकादावप्यहेयमुच्यते क्वचिदर्चनम् ॥
गुरुदत्ततनौ सेव्य एकोऽखिलसुरेश्वरः ।
मूर्त्युत्कर्षो भारतेऽस्मिन् वर्षे हर्षेण तां गृहे ॥

भजेन्नतूग्रान् दुर्गादींस्तामसार्च्यानमुक्तिदान् ।
देवान्तराणां सेवा तु काम्या सान्तफलाऽध्रुवा ॥
अवैधयागरूपा सा वैष्णवानां निषिद्ध्यते ॥
सिद्ध्येत्सर्वसु पर्वाऽर्चा सर्वाशीश्वरसेवनात् ॥
विविधैर्हेतुभिर्विद्वत्केतुभिः शास्त्रसेतुभिः ।
सेवा श्रीनेतुरेवात्र सर्ववर्णेषु वर्णिता" ॥

(स्वेष्टदेवताया एव पूजा नित्य॰अन्यतमपूजा विधिवचनानि, प्रसङ्गात्स्वापोत्थानयो कृत्यसङ्क्षेपश्च)

तथा हि गौतमकृताचारसूत्रे (प्रश्नः १ खं० ५)—

"अहरहःस्नानं, देवर्षिपितृतर्पणं, ब्रह्मयज्ञो, विधिवदिष्टदेवतापूजनं, स्वाध्यायोऽतिथिकार्यं च षट्कर्माणि दिने दिने रवावुदिते" इति ।

अत्र दिने दिन इति वीप्सया स्नानादिवद्देवतार्चनेऽपि स्वेष्टदेवतापूजनस्यैव नित्यत्वमुच्यते । इष्टत्वं च मोक्षदातृत्वेन स्वमहापुरुषकृतपूजनत्वेन चोपासनाप्रयोजकश्रद्धाविषयत्वम् । तस्मात्, पञ्चानामपि देवानां साहित्येनैव पूजनस्य न नित्यत्वम् । अत एव याज्ञवल्क्याचाराध्याये गृह्यप्रकरणे (श्लो० ४)—

"स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा" ।

इत्यत्र मिताक्षरायां नित्यतर्पणं व्याख्याय तदनन्तरं हरिहरहिरण्यगर्भप्रभृतीनामन्यतमं यथावाहनासनमृग्यजुःसाममन्त्रैस्तत्प्रकाशकैः स्वनामभिर्वा चतुर्थ्यन्तैर्नमस्कारयुक्तैराराधयेद्यथोक्तविधिनेत्युक्तम् । अत्र गृहस्थधर्मानाहेति पूर्वोपक्रमः । अतो गृहस्थैः सर्वैरपि पञ्चापि देवाः पूजनीया एवेति नियमो न सिद्ध्यति । अन्यतमपूजाया एव नित्यत्वविधानात् ।

अत एव माधवीये विष्णुपुराणे—

"स्वस्थः प्रसन्नचित्तस्तु कृतासनपरिग्रहः ।
अभीष्टदेवतानां तु कुर्वीत स्मरणं नर" इति ॥

भोजनानन्तरकृत्येष्वपि स्वेष्टदेवताया एव स्मरणं विधीयते ।

तथा धर्मसिन्धौ तृतीयपरिच्छेदे—

"न स्नायादुत्सवेऽतीते मङ्गलं विनिवर्त्य च ।
अनुव्रज्य सुहृद्बन्धूनर्चयित्वेष्टदेवतामि"ति ॥

माधवीये च शयनविधौ हारीतः—

"रात्रिसूक्तं जपित्वा विष्णुं नमस्कृत्य 'सर्पापसर्प भद्रं त' इति श्लोकं जपित्वेष्टदेवतास्मरणं कृत्वा समाधिमास्थायान्यान्यांश्च वैदिकान् मन्त्रान् सावित्रीं जपित्वा माङ्गल्यश्रुतं शङ्खं च शृण्वन् दक्षिणशिराः स्वपेत" इति ।

एवमादिषु स्वेष्टदेवताया एवार्चनस्मरणादिकं निरूप्यते । इह हारीतवचने इष्टदेवता-स्मरणं पञ्चादीनां स्मरणानावश्यकत्वाय । विष्णवतिरिक्तदेवोपासकस्यापि विष्णु-नमस्कारप्राप्त्यर्थं विष्णुं नमस्कृत्येति । तेन विष्णोः प्राधान्यम् ।

गौतमतन्त्रे सप्तमाध्याये ( श्लो० ३७ )—

"यथा प्राणं यथा ज्ञानं तथा कुर्यादतन्द्रितः ।
यद्यत्कृत्यं मङ्गलार्थं तत्तत्कुर्यात्तथा तथा ॥
आदर्शदर्शनं कुर्यात् घृतस्पर्शं च कज्जलम् ।
सत्पोष्यपोषणार्थाय क्षेमं योगं च चिन्तयेत् ॥
स्नायाच्च कृष्णपूजार्थं नद्यादौ विमले जले ।
पूजा च पञ्चधा प्रोक्ता तासां भेदान् शृणुष्व मे ॥
अभिगमनमुपादानं यागः स्वाध्याययोगकौ ।
इति पञ्चप्रकारार्चां क्रमेण कथयामि ते ॥
अत्राभिगमनं नाम देवतास्थानमार्जनम् ।
उपलेपनं निर्माल्यदूरीकरणमेव च ॥
उपादानं नाम गन्धपुष्पादिचयनं तथा ।
इज्यानामिष्टदेवस्य पूजनं च तथा पुनः ॥
स्वाध्यायो नाम मन्त्रार्थं सन्धानपूर्वको जपः ।
सूक्तस्तोत्रादिपाठश्च हरेः सङ्कीर्तनं तथा ॥
तत्त्वादिशास्त्राभ्यासश्च स्वाध्यायः परिकीर्तितः ।
योगो नाम स्वदेवस्य स्वात्मत्वेनैक्यभावना ॥
इति पञ्चप्रकारार्चा कथिता तव सुव्रत ।
सारूप्यसार्ष्टिसालोक्यसायुज्यफलदा क्रमात्" ॥

अत्रापि नित्यकृत्येषु स्वेष्टदेवस्यैवार्चनं कृष्णपूजायाः प्राधान्यं चोक्तम् ।

तथा धर्मसिन्धौ तृतीयपरिच्छेदे पूर्वार्द्धे आह्निकप्रकरणे देवार्चनमुपक्रम्य—

"देवार्चनं प्रकर्त्तव्यं त्रिकालेऽपि यथाक्रमम् ।
अशक्तौ विस्तरात्प्रातर्मध्याह्ने चन्दनादितः ॥
सायं नीराजनं कुर्यात्त्रिकाले तुलसीदलम् ।
यथा सन्ध्या तथा पूजा त्रिकाले मोक्षदा स्मृते"ति कमलाकरः ॥

तत्र विष्णुशिवब्रह्मसूर्यशक्तिविनायकादिष्वभिमतां देवतामर्चयेदित्यन्यतमपूजैवोक्ता । अतोऽपि गृहस्थैः पञ्चैव देवताः पूज्या इति नियमो न सिद्ध्यति ।

तथा भवताऽत्यादृते आचारादर्शेऽपि विष्णुपुराणे—

"ततो गृहार्चनं कुर्यादभीष्टसुरपूजनम् ।
जलाभिषेकं पुष्पाणां धूपादेश्च निवेदनमि"ति ॥

नागदेवकृताचारप्रदीपे, अथ देवार्चनम्, तत्र योगी—

"ततो गृहार्चनं कुर्यादभीष्टसुरपूजनम् ।
जलाभिषेकपुष्पादिधूपादिविनिवेदनैरि"ति ॥

आचारप्रकाशे ब्राह्मे—

"ब्रह्माणं विष्णुमीशं वा सूर्यमग्निं गणाधिपम् ।
दुर्गां सरस्वतीं लक्ष्मीं गौरीं वा नित्यमर्चयेदि"ति ॥

अत्रापि वाशब्देनाऽऽस्वन्यतमायाः स्वेष्टदेवताया एव पूजनमुच्यते ।

अत एव नीलकण्ठभट्टकृताह्निके इदमेव वचनं दक्षवचनत्वेनोपन्यस्य स्वस्वाभीष्टदेवतां स्वस्वाभीष्टयोगेन षोडशोपचारैः पञ्चोपचारैर्वा यथामिलितोपचारैर्वा पूजयेदित्युक्तम् ।

मदनपारिजाते तु पूज्यदेवतानिगमे दर्शिता इत्युक्त्वेदमुपन्यस्तम् ।

तथाऽऽचारमाधवे ( अ० १ ) आग्नेये—

"मन्त्रैर्वैष्णवरौद्रैस्तु सावित्रैः शाक्तिकैस्तथा ।
विष्णुं प्रजापतिं वापि शिवं वा भास्करं तथा ॥
तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वदेवान् समाहित" इति ॥

इहापि पूर्ववदेव वाशब्दस्यार्थः ।

( स्वसम्प्रदायदीक्षानुसारादेकैका देवता पूज्या, शैववैष्णवगाणेशादिषड्दर्शनभेद. )

अत एवमादिष्वनेकत्र गृहस्थधर्मोपक्रमेष्वपि स्वेष्टदेवताया एवावश्यपूज्यत्वकथनात् सर्वैरपि गृहस्थैः पञ्चायतनपूजैव कर्त्तव्येति नियमासिद्ध्या शैववैष्णवगाणेशादिलक्षण-स्वस्वसम्प्रदायानुसारेणोक्तास्वन्यतमाऽभीष्टदेवतैवैका तत्तत्सम्प्रदायवर्तिभिरर्चनीया ।

अत एव च पराशरस्मृतिव्याख्यायां प्रथमाध्याये ( श्लो० ३८ )—

"षट्कर्माभिरतो नित्यं देवतातिथिपूजकः" ।

इत्यस्य व्याख्याने । बहुवेदशाखाधर्मशास्त्रादिव्याख्याता माधवोऽपि बृहदारण्यकादि-श्रुत्युपन्यासपूर्वकमेकदेवार्चनमेव व्याख्याय ( श्लो० ३९ )—

"सन्ध्या स्नानं जपो होमो देवतानां च पूजनमि"-

समग्राह्निकं निरूपयन् क्रमप्राप्तदेवतार्चननिर्णये—

"ब्रह्माणं शङ्करं सूर्यं तथैव मधुसूदनम् ।
अन्यांश्चाभिमतान् देवान् भक्त्या त्वक्रोधनो नरः ॥
स्वैर्मन्त्रैरर्चयेन्नित्यं पत्रैः पुष्पैस्तथाम्बुभिः" ॥

इति कूर्मपुराणवचनं सर्वेषां समुच्चयेनार्चनविधिभ्रमजनकमुपन्यस्य तद्वारणायाह । यद्यपि पूर्ववचनव्याख्याने पूजनीयो देव एक एवेति महता प्रबन्धेन प्रपञ्चितम्, तथापि दर्शनभेदमाश्रित्य विष्णुशङ्करादिभेदोपन्यासो न विरुद्ध्यते । दर्शनभेदश्च पुराणसारे वर्णितः—

"शैवं पाशुपतं शाक्तं सौरं वैनायकं तथा ।
वैष्णवं च तथा षष्ठं दर्शनानि षडेव हीति" ॥

चतुर्विंशतिमतव्याख्यायामप्याचारकाण्डे समग्रमाह्निकं निरूपयता क्रमप्राप्तदेवार्चने उक्तकूर्मपुराणवचनमुदाहृत्य यद्यपि परमार्थतो देव एक एव—

"एको देवः सर्वभूतेषु गूढः"
"एकं सद्विप्रा बहुधा वदन्ती"-

त्यादिश्रुतिनिचयस्वरसादुत्तरमीमांसास्थलाववादिन्यायोपष्टम्भाच्च । तथाप्यौपाधिकभेदमाश्रित्य अन्याश्चेत्याद्युक्तिरिति द्रष्टव्यम् । भागवतेऽप्यत एवोक्तम् । "मूर्त्याभिमतयात्मन इती"ति वदता भट्टोजिदीक्षितेन तदेव दर्शितम् ।

एवं मदनपारिजाते तृतीयस्तबके आह्निकनिरूपणे विविधदेवार्चनमुक्त्वोच्यते—

"अथवा वेदाविरुद्धस्वस्वदीक्षानुसारेण देवतार्चनं कुर्यादि"ति ।

( तादृग्दीक्षावतामेव पञ्चदेवार्चा एकार्चकसम्प्रदायभेदाद्व्रतादिव्यवस्था, देवपूजाया नित्यता कालादिबहुभक्तनिन्दा च )

एतेन पञ्चायतनपूजाविधायकाः—

"स्नानं सन्ध्यां ततो होमं गृहस्थोक्तेन वर्त्मना ।
कृत्वा सूर्यं गणपतिं लक्ष्मीमीशं तथा हरिम् ॥
पौरुषेण तु सूक्तेन नित्यमर्चां समारभेत्" ॥

इत्याचारार्कपरशुरामनिबन्धपदार्थादर्शादयोऽपि गृहीततत्पूजानियमपरत्वेन दत्तोत्तराः ।

अत एव गौतमतन्त्रे दशमाध्याये ( श्लो० ६९ )—

"पञ्चात्मिकायां दीक्षायां गणेशादिक्रमाद्यजेत् ।
यदा मध्ये तु गोविन्दमाग्नेय्यां गणनायकम्" ॥

इत्यादिना पञ्चात्मकदीक्षासत्त्व एव पञ्चायतनपूजायाः कर्तव्यतोच्यते । तस्मान्न सर्वसम्प्रदायवर्तिनां गृहस्थानां तत्पूजनमावश्यकम्, तेषां स्वसम्प्रदायप्रधानायाः स्वाभीष्टदेवताया एवैकस्या अर्चनस्य शास्त्रसिद्धत्वात् । एवमेव व्रतादिव्यवस्थापि सम्प्रदायभेदेनैव तत्र तत्रोच्यते ।

यथा धर्मप्रवृत्तौ—

"दिनद्वयेऽपि वर्तेत चतुर्थी या विधूदये।
परैव व्रतिभिः कार्या गणनाथपरायणैः" ॥

गाणेशसम्प्रदायस्थैरित्यर्थः।

तत्रैव—

"श्रवणद्वादशी सा स्यादुपोष्या विष्णुतत्परैरि"ति।

वैष्णवैरित्यर्थः।

तत्रैव—

"पारम्पर्यागतं वंशे देव्याः शरदि पूजनम्।
प्रतिपद्येव कर्तव्यं न चान्यत्र कदाचने"ति ॥

परम्परातः शक्तिभक्तैरेव कार्यमित्यर्थः।

इहैव—

"अर्धरात्रे यदा न स्यान्माघे मासि चतुर्दशी।
त्रयोदश्या युता कार्या नरैः शिवपरायणैरि"ति ॥

शैवसम्प्रदायस्थैरित्यर्थः।

अत्रैव शिवपुराणे—

"प्रदोषव्यापिनी ग्राह्या शिवरात्रिः शिवप्रियैः"। इति दिक्।

एतेनाऽपि गणेशादिसम्प्रदायभेदा एकैकदेवोपासनाविशिष्टा अनादिसिद्धा एवेति फलति। तस्मादस्ति देवतार्चनमात्रस्यावश्यकत्वम्।

दक्षस्मृतावाह्निकमुपक्रम्य—

"देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम्।
देवकार्यस्य सर्वस्य पूर्वाह्णेऽह्नि विधीयत" इति ॥

एवमादिषु नित्यत्वविधानात्।

आचारमाधवचतुर्विंशतिमतव्याख्यादिषु ( अ० १ )—

"यो मोहादथवाऽऽलस्यादकृत्वा देवतार्चनम्।
भुङ्क्ते स याति नरकं सूकरेष्वभिजायते" ॥

इति कूर्मपुराणादिवचनेष्वकरणे प्रत्यवायश्रुतेश्च। न तु सर्वेषां सर्वदेवार्चनस्यावश्यकत्वम्।

अत्रिस्मृतौ ( श्लो० ३३८ )—

"बहुभक्तो दीनमुखो मत्सरी क्रूरबुद्धिमान्।

एतेषां नैव दातव्यः कदाचिच्च प्रतिग्रहः" ॥

इति निन्दास्मरणात् । बहुभक्तः एकत्र स्वेष्टदेवे दृढाश्रयराहित्याद्बहुदेवोपासकः ।

( बृहदारण्यके देवताभेद , तत्रैकस्य परमात्मदेवस्यैवार्चन नित्यम् , अत्र श्रुत्यन्तराणि, मध्ये विलक्षण वसुरुद्रादित्यादि च )

किञ्चात एवैकस्य देवस्यैवोपास्यत्वं पराशरस्मृतिप्रथमाध्याये ( श्लो० ३८ )—

"षट्कर्माभिरतो नित्यं देवतातिथिपूजकः ।
हुतशेषं तु भुञ्जानो ब्राह्मणो नावसीदति" ॥

इत्यस्य विवरणे प्रतिपादयति माधवः । यथा नित्यमित्युत्तरत्रान्वेति न तु पूर्वत्र । अध्यापनादीनां त्रयाणामनित्यत्वात् । देवता च अतिथिश्च देवतातिथी तयोः प्रतिदिनं पूजको भवेत् । देवतास्वरूपं च वाजसनेयिब्राह्मणे शाकल्ययाज्ञवल्क्यसम्वादे विचार्य निर्णीतम् । तत्र शाकल्यः प्रष्टा याज्ञवल्क्यो वक्ता देवताविस्तारसङ्क्षेपौ स्वरूपं च प्रष्टव्योऽर्थः । अत्र चैषा श्रुतिः ( अ० ५ ब्राह्म० ९ पृ० ६४२ )—

"अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति सहैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति । स होवाच महिमान एवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा इति कतमे ते त्रयस्त्रिꣳशदित्यष्टौ वसव एकादशरुद्रा द्वादशादित्यास्त एकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति । कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं वसु सर्वꣳहितमिति तस्माद्वसव इति । कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते । यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति । कतम आदित्या इति द्वादश वै मासाः सम्वत्सरस्यैत आदित्या एते हीदꣳसर्वमाददाना यन्ति तद्यदिदं सर्वमाददाना यन्ति तस्मादादित्या इति कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमस्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्चैते षडित्येते हीदꣳसर्वं षडिति । कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति । कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति । कतमोऽध्यर्ध इति योऽयं पवत इति । तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति । यदस्मि-

१ यदास्माच्छरीरान्मर्त्यादु इति पाठान्तरम् । २ ते यदिद इत्यपि पाठ । ३ षडेते इत्यपि पाठ ।

न्निद्ँसर्वमध्यार्ध्नोत्तेनाध्यर्ध इति । कतम एको देव इति प्राण इति स ब्रह्म तदित्याचक्षत" इति । अस्याः श्रुतेरयमर्थः । उपासनार्हाणां देवानां सङ्ख्या विस्तारेण कतीति पृष्टो याज्ञवल्क्यो विजिगीषुकथायां प्रवृत्तत्वात्परबुद्धिव्यामोहाय निविदा प्रत्युत्तरं प्रतिपेदे । निविच्छब्दो वैश्वदेवनामके शस्त्रविशेषेऽवस्थितानां सङ्ख्यावाचिनां पदानां समुदायमाचष्ट इति वैदिकप्रसिद्धिः । ततो यावन्तो देवा वैश्वदेवस्य निविद्युच्यन्ते तावन्त उपास्या इत्युक्तं भवति । तानि च पदानि त्रयश्च त्री चेत्यादीनि शतत्रयं सहस्रत्रयं षट्कं च देवविस्तारः । कत्येवेत्येवकारेण-तत्र तत्र देवान्तरशङ्का व्युदस्यते य एव देवाः पूर्वं विस्तराः त एव सङ्क्षेपेण क्रियन्त इति तत्र तत्र प्रश्नार्थः । कतीति सङ्ख्याप्रश्नः । कथमेतदिति स्वरूपविशेषप्रश्नः । तत्र शतसहस्रसङ्ख्याका ये देवा उक्तास्ते सर्वे प्रधानभूता न भवन्ति। किं तर्हि प्राधान्येन हविर्भुजां त्रयस्त्रिंशद्देवानां योगमहिम्ना स्वीकृतभौतिकविग्रहा एव ततो न तेषां स्वरूपविशेषाः पृथङ्निरूपणीयास्त्रयस्त्रिंशद्देवेषु श्रुता वस्वादयः । पुराणप्रसिद्धेभ्यो वस्वादिभ्योऽन्ये तेषु शब्दप्रवृत्तिर्यौगिकी । प्राणाः कर्म बुद्धीन्द्रियाणि । आत्मान्तःकरणम् । इन्द्रप्रजापतिशब्दौ लक्षणया स्तनयित्नुयज्ञयोर्वर्तेते लक्षितलक्षणया त्वशनिपश्वोः । अन्नप्राणौ भोग्यभोक्त्रभिमानिनौ । अध्यर्धशब्दो रूढ्या सङ्ख्यावाची योगेन तु समृद्धं वायुं वक्ति । वायुः सूत्रात्मा । वायुर्वै गौतमसूत्रमिति श्रुतेः । अन्ते प्राणशब्दः परमात्मवाचकः । तदेव स्पष्टयितुं स ब्रह्मेत्युक्तम् । त्यच्छब्दः परोक्षवाची । अकृतब्रह्मविचारं पुरुषं प्रति ब्रह्मणः शास्त्रैकसमधिगम्यत्वात् परोक्ष इति । तत्र तु प्राणशब्दवाच्यः परमात्मैवैको मुख्यो देवः । तत्स्वरूपं च श्वेताश्वतराविस्पष्टमामनन्ति । (अ० ६)—

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" ॥

एतमेव देवं शास्त्रकुशलास्तैस्तैः शब्दविशेषैर्बहुधा व्यवहरन्ति । तथा मन्त्रवर्णः—

"सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति" ॥

ते च शब्दविशेषा विस्पष्टमन्यस्मिन् मन्त्रे श्रूयन्ते ।

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्" इति ॥

इत्यादिना एकदेवार्चनमेव माधवेन सम्यङ् निर्णीतम् ।

अयं च सर्ववेदवेदान्तप्रसिद्धः परमात्माख्य एको देवः श्रीपुरुषोत्तम एव ।

"एको ह वै नारायण आस", "सर्वे वेदा यत्पदमामनन्ति",

"वेदैश्च सर्वैरहमेव वेद्यः"

"मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" ॥

"ब्रह्मेति परमात्मेति भगवानिति शब्द्यते"

इत्यादिश्रुतिस्मृतिपुराणवचनेभ्यः ।

प्राणशब्दवाच्यश्चेह स एव सर्वोत्तमत्वरूपात्तल्लिङ्गात्तथैव समन्वयाच्च । यथा सूत्रितमाचार्येण । "अत एव प्राण" इति । "प्राणस्तथानुगमादि"ति च ।

अत एव बृहदारण्यकभाष्ये शङ्कराचार्याः प्राण इति सप्राणो ब्रह्म सर्वदेवात्मकत्वान्महद्ब्रह्म त्यदित्याचक्षते त्यदिति तद्ब्रह्माचक्षते । परोक्षाभिध्यायकेन शब्देन देवानामेतदेकत्वं नानात्वं चानन्तानां देवानामित्यादि । अतो माधवादिभिर्मुख्यतरत्वेन निर्णीतमेकदेवार्चनम् ।

वस्तुतस्तु पुरुषोत्तमार्चनमेव, तथापि तत्तत्साम्प्रदायिकैः स्वेष्टदेवे परमात्मबुद्ध्या तस्यैवार्चनं कर्तव्यमिति सर्वसम्मतः शिष्टाचारः । एवमपि सर्वगृहस्थानां पञ्चदेवपूजनं नावश्यकम् ।

( स्वाचारोऽत्याज्य , षट्कर्माणि यथासम्प्रदायमेको बहवो वाऽर्च्या. )

प्रथमाध्याये बृहत्पराशरः ( अ० १ श्लो० ४७ )—

"उषित्वा यत्र तत्रापि स्वाचारं न विवर्जयेत् ।
षट्कर्माणि प्रकुर्वीरन्निति धर्मस्य निश्चयः" इति ॥

अतः षट्कर्माण्यपि स्वाचारेणैव कर्तव्यानि । शाखाधिकरणन्यायात् । तदनुल्लङ्घनपूर्वकमेव तत्करणविधानाच्च ।

षट्कर्मसु देवतार्चनमप्युक्तं यथाह द्वितीयाध्याये स एव ( श्लो० ७ )—

"सन्ध्यां स्नानं जपश्चैव देवतानाञ्च पूजनम् ।
वैश्वदेवं तथाऽऽतिथ्यं षट्कर्माणि दिने दिने" इति ॥

तस्मात्परम्परातः पञ्चदेवपूजनाचारवतैव तत्कार्यम्, न त्वेकदेवार्चनविशिष्टसम्प्रदायवता स्वसम्प्रदायानुल्लङ्घ्य भ्रमादपि तद्विधेयम् । कमलाकरभट्टकृतबह्वृचाह्निकादिषु विष्णुशिवगणेशदुर्गासूर्याणां शालग्रामलिङ्गप्रतिमादौ प्रत्येकं समुदायेन वा वैदिकीमागमोक्तां तान्त्रिकीं च मिश्रां वा यथासम्प्रदायं पुरुषसूक्तेन पूजां कुर्यादित्यादि निरूप्यते । प्रत्येकमित्यन्यतमपूजाभिप्रायम् । समुदायेनेति पञ्चायतनपूजाभिप्रायम् । माधवादिभिस्तथैव निर्णीतत्वादिति व्याख्यानम् ।

( कलौ हरिहरान्यतरार्चैव मुख्या, वैष्णवादीनां कलिदोषाभावः )

अन्यच्च, कलियुगे तु हरिहरान्यतरार्चनस्यैवावश्यकत्वविधानान्नैव पञ्चदेवार्चनस्य सर्वेषां नित्यत्वम् । यथा चतुर्विंशतिमतव्याख्यायामाह्निकनिरूपणे देवार्चनप्रस्तावे, तत्रापि "कलौ हरिहरयोः पूजा प्रशस्ते"त्यादिना भट्टोजिदीक्षितेनान्यतरार्चनस्यैवा-

वश्यकत्वं निर्णीतम् । तथा धर्मसिन्धौ तृतीयपरिच्छेदे आह्निकप्रक्रमे "तत्रापि कलौ हरिहरयोः पूजा प्रशस्ता" ॥

"न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ।
अथवा देवमीशानं भगवन्तं सनातनम् ॥
प्रणवेनाथवा रुद्रगायत्र्या त्र्यम्बकेन वा ।
तथोन्नमः शिवायेति मन्त्रेणानेन वा यजेदि"ति ॥

चतुर्विंशतिमतव्याख्यादिषु चेमानि कूर्मपुराणवचनत्वेन स्फुटं लिखितानि । अत्र सर्ववैदिककर्ममूलभूतत्वाद्विष्ण्वर्चनमेव मुख्यं तदभावे शिवार्चनम् । अथवा देवमीशानमिति विकल्पोक्तेः ।

तथा धर्मसिन्धावेव कलियुगकार्याकार्यविचारानन्तरम्—

"विष्णुं शिवं वा भजतां गुरोः पित्रोश्च सेविनाम् ।
गोवैष्णवमहाशैवतुलसीसेविनामपि ॥
न स्यात्कलिकृतो दोषः काश्यां निवसतामपि ।
कलौ गुरूणां भजनमीशभक्त्यधिकं स्मृतमि"ति ॥

तथा—

"कलौ दानं महाश्रेष्ठं शिवविष्ण्वोश्च कीर्तनम्" ।

अत्रापि शिवोपासनं शैवपरम् । "विष्णुं शिवं वा भजतामि"ति वाशब्देन एकतरोपासनानिर्द्धारात् । "गोवैष्णवमहाशैवे"ति भेदेन निर्देशाच्च ।

एतेन हेमाद्रौ कमलाकराह्निकादिषु च धृतम्—

"ब्राह्मणं शङ्करं सूर्यं तथैव मधुसूदनम् ।
पत्रैः पुष्पैः फलैर्वापि भक्त्या त्वक्रोधनोऽर्चयेत् ॥
तत्रापि च कलौ नित्यं पूजयेद्धरिशङ्करौ" ॥

इति कलौ पञ्चदेवपूजनावश्यकत्वबोधनपूर्वकहरिहरमात्रार्चननित्यत्वविधायकं नृसिंहपुराणवचनमपि नियमेनैकदेवोपासनाविशिष्टसम्प्रदायाविशिष्टसाधारणस्मार्तपरं वेदितव्यम् ।

(कलौ भगवदर्चनमेव मुख्य, हेमाद्र्यादिषु कीर्तनस्य ज्ञानाद्यनपेक्षभगवद्भक्तियोगस्य तदर्चनादेश्च महिमा, तेनैव सर्वार्थानां सर्वदेवार्चादिवैदिककर्मणां च सिद्धि, प्रतिमादीन्यधिष्ठानानि च)

अथ तत्रापि कलौ भगवदर्चनमेव मुख्यम् । यथा तत्रैवोच्यते—

"गीता गङ्गा तथा विष्णुः कपिलाश्वत्थ सेवनम् ।
एकादशीव्रतं चैव सप्तमं न कलौ युगे" इति ॥

यथा धर्माब्धिसार एव—

"ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्" ॥

इति हेमाद्रौ व्यासवचनम् ।

अत्र कृतयुगाद्यधिकरणकध्यानादिफलार्थे कल्यधिकरणककीर्तनं विधीयत इति वाक्यार्थः कौस्तुभकर्तृपितामहैर्भक्तिनिर्णये विस्तरेण निरूपितः ।

हेमाद्रौ—

"कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र सङ्कीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते" ॥

इति श्रीभागवतवचनमुदाहृत्य सङ्कीर्तनेन हरिसङ्कीर्तनेनेत्यर्थ इति हेमाद्रावेव व्याख्यातम् ।

"कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्तीह सुमेधसः" ॥

"यज्ञादिस्वस्वाचारमाचरद्भिरपि कलिषु सङ्कीर्तननिष्ठैर्भाव्यमित्याशयः" इति कौस्तुभे । अनेन चतुर्वर्गफलं नारायणाश्रयणमात्रेण भवतीति सिद्धम् ।

"या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये ।
तया विना तदाप्नोति नरो नारायणाश्रय" इति भरतोक्तेः ॥

श्रीभागवतेऽपि—

"धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः ।
एकं ह्येव हरेस्तत्र कारणं पादसेवनमि"ति ॥

अत्रैकपदावधारणादिपदैरन्यसाधनानपेक्षत्वं भक्तियोगस्योच्यते । ज्ञानयोगादेश्च हरिपदसेवनसापेक्षत्वं ध्वन्यते । तथा च स्पष्टमेकादशादौ—

"तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छती"ति ॥

इत्यादिना सम्यङ्निरूप्योच्यते । तत्रैव—

तस्मात्सर्वथा सर्वैः कलौ श्रीहरिपादसेवनादिभक्तियोगाश्रयणमेव कर्तव्यमिति सिद्धमिति ।

एवं नागदेवकृताह्निकेऽपि देवपूजानिरूपणे—

"आवाहनादिकं कर्म यन्न चोक्तं मया त्विह ।
तत्सर्वं प्रणवेनैव कर्तव्यं चक्रपाणये ॥
धूपादि दद्यात्सावित्र्या यथाशक्त्या समाहितः ।
एवं सम्पूज्य देवेशं क्षणं ध्यायन्निरञ्जनम् ॥
असितनिशितधारं यस्य चक्रं कराग्रे
मणिकनकविचित्रं कुण्डलं यस्य कर्णे ।
भ्रमरशतसहस्रैः सेव्यते यस्य माला
असुरकुलनिहन्ता प्रीयतां वासुदेवः" ॥

इत्यादियोगिप्रभृतिवचनोपन्यासेन विष्णुपूजनमेवोक्तम् ।

चतुर्विंशतिमतव्याख्याकमलाकरभट्टाह्निकाचारमयूखाचारप्रकाशाचारार्कादिषु महाभारते—

"कलौ कलिमलध्वंसं सर्वपापहरं हरिम् ।
येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः" ॥

इति भगवदेकोपासनावतामपि हरिवद्वन्द्यत्वमुच्यते । स्वप्नेश्वरभाष्ये द्वितीयाध्यायद्वितीयाह्निके ब्रह्मपुराणे—

"ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवमि"ति ॥

नारदपञ्चरात्रे चतुर्थरात्राष्टमाध्याये ( श्लो० ८ )—

"कलौ बालेश्वरो देवः कलौ वृन्दावनं वनम् ।
कलौ गङ्गा मुक्तिदात्री कलौ गीता परा गतिः ॥
नास्ति यज्ञादि कार्यं तु हरेर्नामैव केवलम् ।
कलौ विमुक्तये नृणां नास्त्येव गतिरन्यथे"ति ॥

बालेश्वरो बालकृष्णः । "श्रुत्वा. श्रीबालकृष्णस्ये"त्यादिपूर्वोत्तरवचनेभ्यः ।

आचारार्के मात्स्ये—

"प्रातर्मध्यन्दिने सायं देवपूजां समारभेत् ।
अशक्तौ विस्तरेणैव प्रातः सम्पूज्य केशवम् ॥
मध्याह्ने चैव सायं च पुष्पाञ्जलिमपि क्षिपेत्"

स्कान्दे—

"कामासक्तोऽथवा क्रुद्धः शालग्रामशिलार्चनात् ।
भक्त्या वा यदि वाऽभक्त्या कलौ मुक्तिमवाप्नुयात्" ॥

तत्रैव ऋग्विधाने—

"अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः ।
यत्कृत्वा मुनयः सर्वे परं निर्वाणमाप्नुयुः" ॥ इति ।

अत्रैव कूर्मपुराणे—

"न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥
तद्विष्णोरिति मन्त्रेण सूक्तेन पौरुषेण वा ।
नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्च पावनः" ॥ इति ।

आचारमाधवचतुर्विंशतिमतव्याख्याकमलाकराह्निकाचारमयूखादिष्वपीदमुदाहृतम् ।
किञ्च, कमलाकराह्निके पाद्मे—

"न विष्ण्वाराधनादन्यद्विद्यते कर्म वैदिकम् ।
तस्मादनादिमध्यान्तं विष्णुमाराधयेन्नरः ॥
तस्मिन्नाराधिते सर्वदेवताराधनं भवेत्" ॥ ति ।

पुनस्तत्रैव निगमे—

"विष्णुमीशं विधातारं सूर्यमग्निं गणाधिपम्" ॥

इति बहूनर्चनीयानुक्त्वा तत्र विष्ण्वर्चनस्यैव सर्ववैदिककर्माधिकत्वान्नित्यत्वं बोधयितुम्—

"अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
विष्णोराराधनादन्यन्नास्ति कर्म च वैदिकम्" ॥

इति निगमवचनमेवोपन्यस्तम् । मदनपारिजाते नृसिंहपुराणे—

"जलदेवं नमस्कृत्य ततो गच्छेद्गृहं बुधः ।
पौरुषेण तु सूक्तेन ततो विष्णुं समर्चयेत्" ॥

तत्रैव योगियाज्ञवल्क्यः—

विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः ।
तस्मात् पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥
दद्यात्पुरुषसूक्तेन यः पुष्पमप एव च ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतमि"ति ॥

उक्तं नृसिंहपुराणवचनं माधवादिभिरपि सङ्गृहीतम् । तथा—

"अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः" इति ॥

"अप्स्वग्नौ हृदये सूर्ये" इति च आग्नेयपुराणवचनत्वेन लिखितमाचारमाधवचतुर्विंशतिमतव्याख्यादिषु ।

निर्णयसिन्धौ ( परि० २ ) पाद्मे—

"त्रिकालमर्चयेद्विष्णुं त्यक्तभोगो जितेन्द्रियः" ॥

पुनस्तत्रैव पाद्मे—

"शङ्खचक्रधरं देवं माधवं नाम पूजयेत्" ॥

पराशरमाधवीये ( अ० १ श्लो० ३८ ) विष्णुधर्मोत्तरे—

"येऽर्चयन्ति सदा विष्णुं शङ्खचक्रगदाधरम् ।
सर्वपापविनिर्मुक्ता ब्रह्माणं प्रविशन्ति ते" इति ॥

बृहत्पराशरोऽपि द्वितीयाध्याये देवार्चनप्रकरणे—

"गायत्र्योङ्कारन्यस्ताङ्गः पूजयेद्विष्णुमव्ययम् ।
विन्यस्य व्याहृतीः सर्वाः प्रोक्तस्थानक्रमेण तु ॥
ब्रह्मीभूतः शुचिः शान्तो देवयागमुपाचरेत् ।
विष्णुरादिरयं देवः सर्वामरगणार्चितः ॥
नामग्रहणमात्रेण पापराशिं छिनत्ति यः ।
तदर्चनं प्रवक्ष्यामि विष्णोरमिततेजसः ॥
यज्ज्ञानान्मुनयः सर्वे विष्णोः सायुज्यमाप्नुयुः ।
षट्सु समीषु हरेः सम्यगर्चनं मुनिभिः कृतम् ॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च" इत्यादि ॥

( श्लो० ३२ )—

"सूक्तेन विष्णुविधिना समुदीरितेन
योऽनेन नित्यमजमादिमनन्तमूर्तिम् ।
भक्त्यार्चयेत्पठति यश्च स विष्णुदेहं
विप्रो विशेद्धरिवरेण कृतार्धदेहः" ॥

इत्युपसंहारः । अत्र भगवदर्चनस्य साक्षान्मोक्षकारणत्वमुक्तम् ।

तथैव कमलाकरभट्टाह्निके वसिष्ठः—

"योऽर्चयेत्केशवं नित्यं स याति परमां गतिमि"ति

( शालिग्रामचक्राङ्कयन्त्रादीनि, भूतले पूजानिषेध., शालिग्रामोत्पत्तिस्तेन सह चक्राङ्कपूजावश्यकी तयोस्तोयपान, पूजाधिकृतवर्णा , स्त्रीशूद्रयोस्तत्र बाणलिङ्गे च स्पर्शरहितपूजा, मूर्तिषु लिङ्गान्तरेषु च, साक्षात् सूक्ष्मशिलोत्कृष्टा, परम्परासा, गुरुदत्ता च )

गौतमतन्त्रे दशमाध्याये ( श्लो० १५ )—

"शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च ।
नित्यं पूजा हरेः कार्या न तु केवलभूतले ॥
गण्डक्यां चैव देशे च शालग्रामस्थलं महत् ।
पाषाणं यत्तु तत्रत्यं शालग्राममिति स्मृतम् ॥
शालग्रामशिलास्पर्शात् कोटिजन्माघनाशनम् ।
किं पुनर्यजनं तत्र हरिसांनिध्यकारकम् ॥
शालग्रामैकयजनात् शतलिङ्गफलं लभेत् ।
बहुभिर्जन्मभिः पुण्यैर्यदि कृष्णशिलां लभेत् ॥
गोष्पदेन च चिह्नेन तेन संस्थाप्यते जनुः ।
कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात् ॥
यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः" ॥ इति

धर्मसिन्धौ तृतीयपरिच्छेदे—

"शालग्रामसम्बन्धितो यावच्चक्राङ्कशिलातो यस्या अपि पानविधानात्साऽपि शालग्रामसन्निधौ पूज्ये"ति ॥

तथा चतुर्विंशतिमतव्याख्यायामाचारकाण्डे पाद्मे—

"द्वारकाशैलसम्भूतं यस्तोयं पिबते कलौ ।
पापानि तस्य नश्यन्ति शतजन्मार्जितान्यपि ॥
धृते शिरसि पीते च सर्वास्तुष्यन्ति देवताः ।
प्रायश्चित्तं हि पापानां कलौ पादोदकं हरेरि"ति ॥

शिलैव शैलम् । प्रज्ञादित्वात्स्वार्थेऽण् । "अत्र द्वारवतीशिलासम्बन्धितोयपानविधानात् सापि शालग्रामसन्निधौ पूज्येति गम्यते" इति भट्टोजिदीक्षितः । कमलाकराह्निके चेदमुदाहृत्य तथैव निर्णीतम् ।

स्पष्टं तद्विधिवाक्यं तु हेमाद्रौ—

"शालग्रामशिला यत्र तत्र द्वारवती शिला ।
पूज्या वै भक्तिभावेन त्वन्यथा निष्फला भवेदि"ति ॥

कमलाकराह्निके च—

"नृसिंहपरिचर्यायां विष्णुधर्मोत्तरेऽपि तत् ।
शालग्राममयो देवो देवो द्वारवतीभवः ॥
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः" इति ॥

नित्यमेव तत्पूजाऽकरणे प्रत्यवायस्तत्रैव—

"न यत्र पूज्यते देवः शालग्रामशिलाभवः ।
श्मशानतुल्यं तद्गेहं स द्विजो नरकाशनः" ।। इति ।

एतेन तोयपानमात्रं कार्यं, पूजायां तु मानाभाव इति मयूखे सङ्गृहीतमेकदेशिमतं निरस्तं वेदितव्यम् । यत्तु विष्णुधर्मोत्तरे—

"शालग्रामशिलां वापि चक्राङ्कितशिलां तथा ।
ब्राह्मणः पूजयेन्नित्यं क्षत्रियादिर्न पूजयेत्" इति ।।

तत्तु क्षत्रियादिरादिर्यस्येति मध्यमपदलोपिबहुव्रीहिगर्भेणातद्गुणसम्विज्ञानबहुव्रीहिणा शूद्रपरमिति नीलकण्ठः । मम तु कलौ तादृशसंस्कारादिविशिष्टक्षत्रियवैश्ययोरभावेन क्षत्रियत्ववैश्यत्वव्यवहारमात्रवतोस्तयोः पूजानिषेधकमिदमित्यपि भाति ।

तथा मयूख एव पाद्मे—

"ब्राह्मणक्षत्रवैश्यानां त्रयाणां मुनिसत्तम ।
अधिकारः स्मृतः सद्भिः शालग्रामशिलार्चने" ।। इति ।

तस्मादिदं शालग्रामार्चनं त्रैवर्णिकानां पुंसामेव ।

"स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः" ।

इत्यादिलैङ्गादिवचनेभ्यः ।

वैष्णवदीक्षावतां शूद्राणां तु ब्राह्मणद्वारा च तदर्चने न दोषः । यथा धर्माब्धिसारे—

"प्रणवोच्चारणाच्चैव शालग्रामशिलार्चनात् ।
ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत् ।।
दीक्षायुक्तैस्तथा शूद्रैर्मद्यपानविवर्जितैः ।
कर्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्चनमि"ति ।।

अत्र प्रथमश्लोक आपस्तम्बवचनत्वेन, द्वितीयश्च पाद्मत्वेनोदाहृतो भट्टोजिनीलकण्ठादिभिः ।

स्वहस्तेनापि स्पर्शनरहितं तत्पूजनं तु स्त्रीशूद्रैः कर्त्तुं शक्यम् । यथा तत्रैवोच्यते—

"स्त्री शूद्रो वा स्पर्शसहितं शालिग्रामचक्राङ्कितबाणलिङ्गानि नार्चयेत्" ।

"शूद्रो वानुपनीतो वा सधवा विधवाङ्गना ।
दूरादेवास्पृशन् पूजां प्रकुर्याच्छिवकृष्णयोः" ।।

शालग्रामबाणयोरेव स्पर्शननिषेधो न तु प्रतिमादौ—

"सर्ववर्णैस्तु सम्पूज्याः प्रतिमाः सर्वदेवताः ।
लिङ्गान्यपि तु पूज्यानि मणिभिः कल्पितानि चे"त्युक्तेः ।।

"शालग्रामशिला क्रीता मध्यमा याचिताऽधमा ।
उक्तलक्षणसम्पन्ना पारम्पर्यक्रमागता ॥
उत्तमा सा तु विज्ञेया गुरुदत्ता तु तत्समा ।
तत्राप्यामलकीतुल्या पूज्या सूक्ष्मैव या भवेत् ॥
यथा यथा शिला सूक्ष्मा तथा स्यात्तु महत्फलम्" ॥ इत्यादि ।

तयोः स्पर्शरहिततत्पूजनं चतुर्विंशतिमतव्याख्यादिषु च विस्तरेण निर्णीतम् । कृत-मनेन प्रासङ्गिकेन, प्रकृतमनुसरामः ।

( विष्णुपूजा सन्ध्यावन्नित्या, तद्रहितस्याभोज्यता, नरकाद्यादि, अन्त्यजस्य मानसार्चा, शालिग्रामस्यात्यन्त महिमा आवश्यकता च, शूद्राणा शिलाविशेषेऽधिकार , सूतकादौ पूजाया अत्यागविचारः )

अस्ति च विष्णुपूजायाः सन्ध्यावन्दनादिवन्नित्यत्वम् ।

"प्रातर्मध्यन्दिने सायं विष्णुपूजां समाचरेत् ।
यथा सन्ध्या तथा नित्या विष्णुपूजा स्मृता बुधैः" इति ॥

कालदीपिकायां नारदीयात् । इदं शङ्खचक्रादिधारणवादेऽपि सङ्गृहीतम् । तथाऽऽचारमाधवे कौर्मे—

"न विष्ण्वाराधनात्पुण्यं वर्तते कर्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम्" ॥ इत्यादि ।

दूषणोद्धारे चाऽऽचारचन्द्रोदये कौर्मे—

"विमोहादथवाऽऽलस्यादकृत्वा माधवार्चनम् ।
भुङ्क्ते स याति नरकं सूकरेष्विह जायते ॥
अनर्चयित्वा गोविन्दं यैस्तु भुक्तं नराधमैः ।
शुनो विष्ठासमं चान्नं नीरं च सुरया समम्" ॥ इति ।

स्कान्दे—

"केशवार्चा गृहे यस्य न तिष्ठति महीपते ।
तस्यान्नं नैव भोक्तव्यमभक्षणसमं स्मृतम्" ॥ इति ।

नारसिंहे—

"ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजातयः ।
सम्पूज्य तं सुरश्रेष्ठं भक्त्या सिंहवपुर्धरम् ॥
मुच्यन्ते चाशुभैर्दुःखैर्जन्मकोटिशतोद्भवैः" इति ॥

इहोक्तमन्त्यजानां तत्पूजनं तु मानसिकमेवेति प्रतिभाति आस्तामप्रकृतमेतत् ।

तथा श्रीभागवते—

"श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा"

इति पूजादेर्नित्यत्वं श्रूयते ।

तथा षष्ठस्कन्धे स्वदूतान् प्रति यमः—

"जिव्हा न वक्ति भगवद्गुणनामधेयं
चेतश्च न स्मरति तच्चरणारविन्दम् ।
कृष्णाय नो नमति यच्छिर एकदापि
तानानयध्वमसतोऽकृतविष्णुकृत्यान्" ॥ इति ।

इति तत्सेवादेर्विष्णुकृत्यस्याकरणे यमलोकप्राप्तिरुच्यते ।

स्वप्नेश्वरभाष्ये ( सू० ४४ ) "सम्मानबहुमाने"ति सूत्रव्याख्याने वचनम्—

"नरके पच्यमानस्तु यमेन परिभाषितः ।
किं त्वया नार्चितो देवः केशवः क्लेशनाशनः" ॥

विष्णुपुराणे तृतीयांशसप्तमाध्याये नकुलभीष्मसम्वादान्तर्गतकालिङ्गभीष्मसम्वादे ( श्लो० १४ )—

"स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहरमधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम्" ॥

इत्यादि, यावदध्यायसमाप्ति, भगवदेकभक्तानां वैष्णवानां यमलोकादर्शनं, तदर्चनभजनादिशून्यानामेव च तद्यातनादिकं निरूपितम् ।

सारसङ्ग्रहे—

"अतिपापसमाचाराः कर्मण्यनधिकारिणः ।
शालग्रामार्चका ये ते नैव यान्ति यमालयम् ॥
कामक्रोधप्रलोभैश्च व्याप्तोऽसौ वै नराधमः ।
सोऽपि याति हरेर्लोकं शालग्रामशिलार्चनात् ॥
अशुचिर्वा दुराचारी सत्यशौचविवर्जितः ।
शालग्रामशिलां स्पृष्ट्वा सद्य एव शुचिर्भवेत् ॥
ब्राह्मणक्षत्रियविशां सच्छूद्राणामथापि वा ।
शालग्रामेऽधिकारोऽस्ति न चान्येषां कदाचन" ॥

अयं शूद्राणामर्चनाधिकार एकादशचक्राङ्कितानिरुद्धाख्यशालग्रामविषयको बोध्यः । धर्मसिन्ध्वादिषु तथोक्तेः ।

तथा हेमाद्रौ—

"ब्राह्मणैर्वासुदेवस्तु नृपैः सङ्कर्षणस्तथा ।
प्रद्युम्नः पूज्यते वैश्यैरनिरुद्धस्तु शूद्रजैः" इति ॥

तल्लक्षणं तत्रैव विष्णुधर्मोत्तरे—

"पञ्चचक्रो वासुदेवः षड्भिः प्रद्युम्न उच्यते ।
सङ्कर्षणः सप्तचक्रोऽनिरुद्ध एकादशैः स्मृत" इति ॥

कमलाकराह्निकचतुर्विंशतिमतव्याख्यामयूखादिषु चेदमुदाहृतम् ।

अथवा वैष्णवदीक्षावतां शूद्राणां ब्राह्मणद्वारा सर्वशालग्रामार्चनस्याभ्यनुज्ञापकतया वचनमुपसंहर्तव्यम् । प्रकृतमनुसरामः ।

पुनस्तत्रैव—

"अर्चनं वन्दनं दास्यं प्रणामं दर्शनं नृणाम् ।
शालग्रामशिलायां तु सर्वं कोटिगुणं भवेत् ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
पौरुषेण तु सूक्तेन पूजयेत्पुरुषोत्तमम्" ॥

पराशरे—

"पञ्चरात्रविधानेन तथा वैखानसेन वा ।
स्मृत्युक्तेनाथवा कुर्यात् क्रियालोपं न कारयेत् ।
एवं सम्पूजयेद्देवं यावज्जीवं द्विजोत्तमाः ।
श्रौतस्मार्तागमोक्तानां कुर्यादन्यतमक्रियाम् ॥
सूतके मृतके वाऽपि विष्णुं नित्यं तथार्चयेत् ।
शालग्रामशिलां स्पृष्ट्वा सद्य एव शुचिर्भवेत् ॥
मद्भक्तिबलमाश्रित्य मद्भक्तो दीक्षितो यदि ।
न त्यजेन्मम कर्माणि सूतके मृतकेऽपि वा ॥
सूतके मृतके चैव नित्यं विष्णुं तथार्चयेत् ।
सानुष्ठानस्य विप्रस्य सद्यः शुद्धिः प्रजायते ॥
जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः ।
नास्ति पापं यतस्तेषां सूतके वा जितात्मनामि"ति ॥

आचारमयूखे लैङ्गे—

"ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि ।
स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मम" इति ॥

इयं सूतकादौ शुद्धिर्वैष्णवदीक्षावतामत्यापत्तिमात्रविषयेति निर्णयसिन्ध्वादयः । आचारमयूखकमलाकराह्निकादिषु च स्कान्दे—

"कामासक्तोऽथवा क्रुद्धः शालग्रामशिलार्चनात् ।
भक्त्या वा यदि वाऽभक्त्या कलौ मुक्तिमवाप्नुयात् ॥

वैवस्वतं भयं नास्ति तथा च कलिकालजम् ।
यः कथां कुरुते विष्णोः शालग्रामशिलाग्रतः ॥
शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते ।
महापूजां तु कृत्वादौ पूजयेत्तां ततो बुधः" ॥ इति ।

चतुर्विंशतिमतव्याख्यायां त्विह प्रथमश्लोके "कलौ भक्तिमवाप्नुयादि"ति पाठः । तथा चैतावता शालग्रामचक्राङ्कशिलासहिता भगवत्प्रतिमैवार्चनीया । इदं च भगवदर्चनं गुरुदत्तप्रतिमायामेव मुख्यम् ।

(लक्ष्म्यादिसहिता गुरुदत्ता प्रतिमा मुख्या, ब्रह्मरुद्रादीनां जनक. स्वामी च हरि., देवान्तरेण तस्य साम्यबुद्धौ दोष )

यथा सारसङ्ग्रहे पाराशरे—

"अभिवाद्य नमस्कृत्य प्रणिपत्य ततो गुरुम् ।
तस्य प्रसादलब्धं हि गृहीत्वा विग्रहं हरेः ॥
श्रीभूमिनीलासहितं सायुधं सपरिच्छदम् ।
अर्चयेत्प्रयतो नित्यं यथाकालमतन्द्रितः ॥
अप्सु व्योम्नि तथार्चायां वह्नौ हृदि तथा गुरौ" ।

तत्रैव स्मृतिः—

"सर्वतस्त्वं जगत्स्वामी चराचरगुरुः पिता ।
सर्वलोकेश्वरः साक्षात् सृष्टिस्थित्यन्तकारकः ॥
ईश्वरो भगवान् विष्णुः परमात्मा जगत्पतिः ।
अनन्तः पुरुषः साक्षात्परं ब्रह्म शिवः प्रभुः ॥
नारायणः सर्वयतिः परं ज्योतिः परात्परः ।
तस्मात्तु भगवान् विष्णुः परमात्मा स ईश्वरः" ॥

भारते—

"रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा समाश्रितो मह्यं नाहं कञ्चिदुपाश्रये ॥
ममाश्रयस्तु नो कश्चित्सर्वेषामाश्रयो ह्यहम् ।
इदं रहस्यं कौन्तेय प्रोक्तवानहमव्ययम्" ॥

तथा—

नारायणात्परो देवो न भूतो न भविष्यति ।
एतद्रहस्यं वेदानां पुराणानां च सत्तम ॥
सर्वे देवाः स पितरो ब्रह्माद्याश्चाण्डमध्यगाः ।
विष्णोः सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः" ॥

नृसिंहपुराणे—

"ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा ।
स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः ॥
ये तु सामान्यभावेन मन्यते पुरुषोत्तमम् ।
ते वै पाखण्डिनो ज्ञेया नरकार्हा नराधमाः" ॥

विष्णुनामसहस्रेऽपि—

"दैवतं देवतानां च भूतानां योऽव्ययः पिता ।
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ॥
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ।
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते" ॥

भगवद्गीतायाम्—

"पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभावः" ॥

वसिष्ठः—

"श्रीमहाविष्णुमन्येन हीनदेवेन दुर्मतिः ।
साधारणं सकृद्ब्रूते सोऽन्त्यजो नान्त्यजोऽन्त्यजः" ॥ इति ।

अतः सर्वथा सर्वदेवदेवत्वात् सर्वप्रधानत्वाच्च श्रीभगवानेव आराध्योऽस्माभिः ।

( भारते वर्षे प्रतिमैव मुख्या, स्वय व्यक्तमूर्तय , स्वगृहे वा तत्स्थापनम् )

तदर्चनं च अत्र भारतवर्षे तु प्रतिमायामेव मुख्यम्, सारसङ्ग्रहे पाद्मे—

"जम्बुद्वीपे महापुण्ये वर्षे वै भारते शुभे ।
अर्चायां सन्निधिर्विष्णोर्नेतरेषु कदाचन" ॥

इतरेषु जलाश्यादिषु ।

"भारतेऽस्मिन्महावर्षे सन्निहितो हरिः ।
सर्वावस्थासु सौलभ्यमर्चायां विन्दते जनैः ॥
तस्माद्वै भारते वर्षे मुनिभिस्त्रिदशैरपि ।
सेव्यते ऋषिभिर्देवि तपोयज्ञक्रियादिभिः ॥
ऐन्द्रद्युम्ने तथा कूर्मे सिंहाद्रौ बदरीवने ।
कृतशौचे प्रयागे च पौण्ड्रके चैव दण्डके ॥

वैकुण्ठाद्रौ पदे चैव श्वेताद्रौ करवीरके ।
काञ्च्यामनन्तशयने श्रीरङ्गे गौरवाचले ॥
नारायणाचले सौम्ये वाराहे वामनाश्रमे ।
एवमाद्याः स्वयं व्यक्ताः सर्वकामफलप्रदाः ॥
अथवा स्थापनं विष्णोः स्वगृहे तद्विशिष्यते ।
शिलया दारुलोहाद्यैः कृत्वा प्रतिकृतिं हरेः" ॥

विष्णुयामले—

"मृदा च रम्यरत्नेन ताम्रेण रजतेन वा ।
कृत्वा दारुमयं बिम्बमर्चयेत्काञ्चनेन वा ॥
पुण्यं दशगुणं विन्द्यादेतेषामुत्तरोत्तरम्" ।

मूर्तिपूजनस्योत्कर्षादिकं तु मूर्तिपूजनवादादिषु श्रीपुरुषोत्तमचरणादिभिर्विचारितमेवेत्यलं प्रसक्तानुप्रसक्त्या । भगवत्पूजाऽऽवश्यकत्वादिविधायकानि वचनानि च पारेपरार्द्धं सर्वत्र वेदपुराणेतिहासादिषु सन्त्येवेत्यलं सकलसलिलनिधिजलपिपासोदर्यानिखिलतल्लिखनलालसया । तस्मादस्माभिर्मोक्षादिसमग्रेष्टदानदक्षिणः सर्वदेवदेवः श्रीनन्दनन्दन एव सेवनीयः सानन्दं, न तु कदाचिदपि कथञ्चिदपि किमपि देवतान्तरम् ।

( दुर्गादय उग्रा मुमुक्षुभिर्नोपास्या , देवालकादयोऽस्पृश्या , दुर्गाद्यर्चको देवालको न तु विष्णवर्चक , देवान्तरैर्भगवदंशै. कामप्राप्तिरेव तत्तत्सायुज्य वा यजे पूजार्थत्वे सूत्र, स्मृतिसूत्रादिषु मोक्षस्तु हरेः सकाशादेव, अन्याश्रयरहितभक्तस्यैव मुक्त्यादि )

अपि च—

"उग्रा दुर्गादयो देवा नोपास्यास्ते मुमुक्षुभिः ।
सकामैरेव कर्तव्यमवैधं तु तदर्चनम्" ॥

तथा हि श्रीभागवते प्रथमस्कन्धे द्वितीयाध्याये ( श्लो० २५ )—

"मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ताः भजन्ति ह्यनसूयवः ॥
रजस्तमःप्रकृतयः समशीला भजन्ति वै ।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः" ॥

तथा व्यवहाराध्याये दिव्यप्रकरणे कोशविधाने ( श्लो० १८ )—

"देवानुग्रान्समभ्यर्च्येत्यत्र उग्रान् दुर्गादीनि"ति मिताक्षरा ।

तथा सारसङ्ग्रहे वसिष्ठस्मृतौ—

"रजस्वलां सूतिकां च श्वानं काकं च गर्दभम् ।
कुक्कुटं विड्वराहं च पूयपाखण्डिनस्तथा ॥

बहिर्देवालकं स्पृष्ट्वा सवासा जलमाविशेदि''ति ॥

देवालकं नाम,—

''गणेशं भैरवं दुर्गां रुद्रादीनुग्रदैवतान् ।
योऽर्चयेद्भक्तिमान् विप्रः स वै देवालकः स्मृतः ॥
वेदवेद्यं ब्राह्मणेशं भुवि कर्मप्रियं हरिम् ।
योऽर्चको ब्राह्मणश्रेष्ठो न च देवालनामकः'' इति ॥

किञ्च, देवान्तरोपासनात् काम्यफलमेव सिद्ध्येन्न तु मोक्षादिकमपीति सकामानामेव तदुपासनं योग्यम् ।

यथा सप्तमाध्याये भगवान् ( श्लो० १६ )—

''चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ'' ॥

इति चतुर्विधभक्तानुक्त्वा ( श्लो० १७ )—

''तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते''

इत्यनन्यभक्ततया ज्ञानिनं प्रशंस्य देवतान्तरप्रपत्तेर्निरवकाशत्ववारणायाह ( श्लो० २० )—

''कामैस्तैस्तैर्हृतज्ञाना प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥
यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव निहितान् हि तान् ॥
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपी''ति ॥

तथा नवमाध्याये ( श्लो० २५ )—

''यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि मामि''ति ॥

न चात्र यजतिर्यागार्थ एवेति शङ्क्यम् । भक्तिमीमांसायाम् ( सू० ६६ )—

''तद्यजिः पूजायामितरेषां नैवमि''ति सूत्रेण पूजार्थत्वनिश्चयात् । एवमादिवचनेष्वन्यदेवताभक्तेः फलस्य सान्तत्वं काम्यत्वमत्यन्तभक्तावपि तत्तद्देवताप्राप्त्या मोक्षाभावश्चोक्त इति नैव निष्कामैर्भगवदतिरिक्तः कश्चिदुपास्यः ।

"वासुदेवं परित्यज्य योऽन्यदेवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः" ॥

इत्यादिवचनेभ्यः ।

देवान्तराणां मोक्षासमर्पकत्वं तु मुचुकुन्दादिप्रसङ्गोपन्यासात् प्रागपि समर्थितम् ।

गौतमकृताचारसूत्रेऽपि आह्निकनिरूपके प्रथमप्रश्ने देवतार्चनप्रक्रमे उच्यते (खं० १२)—

"आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ऐश्वर्यमीश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनादि"ति ॥

आचारप्रकाशादिषु तु इदमेव तृतीयचरणे "ज्ञानं महेश्वरादिच्छेदि"ति पाठभेदेन मात्स्यवचनत्वेनोदाहृतम् । आचारचन्द्रोदये च साक्षान्मोक्षदातृत्वं भगवत एवेति सम्यक् प्रपञ्चितम् ।

तथा विष्णुपुराणे (अं० १ अ० श्लो० २१)—

"यथा ते निश्चलं चेतो मयि भक्तिसमन्वितम् ।
तथा त्वं मत्प्रसादेन निर्वाणमपि यास्यसि" ॥

तथा तत्रैव—

"भौमान् मनोरथान् कामान् स्वर्गिवन्द्यं परं पदम् ।
प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तममि"ति ॥

तथा दक्षस्मृतावपि अन्ते मोक्षोपायचिन्तने—

"योगमभ्यसमानस्य ध्रुवं कश्चिदुपद्रवः ।
विद्या वा यदि वाऽविद्या शरणं तु जनार्दनः" इति ॥

अत्र विघ्ननिवृत्तौ कारणत्वं विद्योद्भवे जातेऽपि अविद्यया तस्मिन्नजातेऽपि वा सर्वशरणीकरणीयत्वं भगवत एवोक्तम् ।

श्वेताश्वतरे च श्रूयते—

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" ॥

तस्मान्मुकुन्द एव मुमुक्षुभिः सेव्यः ।

तथा श्रीभागवतेऽपि द्वितीयस्कन्धतृतीयाध्याये (श्लो० २)—

"ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिमि"त्यादिना विविधदेवान्तरोपासनस्य तत्तत्कामनाविशेषवदधिकारकत्वं निरूप्य निगद्यते (श्लो० १०)—

"अकामः सर्वकामो वा मोक्षकाम उदारधीः ।

तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥
एतावानेव यजतामिह निःश्रेयसोदयः ।
भगवत्यचलो भावो यद्भागवतसङ्गतः" ॥ इति ।

अतः सात्त्विकैः सर्वकामैरकामैर्मोक्षकामैश्च साधारणैरपि श्रीहरिरेवैक उपास्यः किं पुनस्तदेकशरणैर्वैष्णवैः । तेषामन्याश्रयकरणेऽनन्यत्वभङ्गप्रसङ्गात् । अनन्यतया भजनोत्कर्षं त्वाह नवमाध्याये भगवान् ( श्लो० १३ )—

"महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्" ॥

तथा ( श्लो० २२ )—

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" ॥

तथा ( श्लो० ३० )—

"अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यती"ति ॥

एवमन्यान्यपि वचनानि विस्तरभयान्न लिख्यन्ते ।

( सर्वे देवा भगवदंशास्तदर्चनेनैव गतार्थं पञ्चदेवाद्यर्चनं, भगवदर्चकस्येतरनैरपेक्ष्यादि )

अपि च, सर्वेषामपि देवानां भगवदंशत्वम् ।
"विश्वं नारायणं देवमि"त्युपक्रम्य—
"स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्" ॥

तथा—

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः" ॥

एवमादिश्रुतिभिः,

"यो यो यां यां तनुं भक्त्ये"त्यादिस्मृतिभिश्च तथा निश्चयात् । एतदेवोदयनाचार्यैः स्वकृतकुसुमाञ्जलिविवेके "देवः शुद्धस्वभावः, इत्यौपनिषदा" इत्यारभ्य "किं बहुना कारवोऽपि यं विश्वकर्मेत्युपासत" इत्यन्तेन सङ्गृह्योक्तम् । अतो भगवदर्चनेनैव गतार्थं सर्वेषामर्चनम् ।

सर्वार्चनानां भगवदर्चनपर्यवसायित्वस्य—

"आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति" ॥

इत्यादिवचनसिद्धत्वात् । पञ्चायतनपूजाया अपि स्पष्टतया स्वार्चनपर्यवसायित्वमाह पद्मपुराणे कार्तिकमाहात्म्ये सत्यभामां प्रति भगवान्—

सौराः शैवाश्च गाणेशाः वैष्णवाः शक्तिपूजकाः ।
मामेव प्राप्नुवन्तीह वर्षाम्भः सागरं यथा" ॥

एवमन्यत्रापि द्रष्टव्यम् । अतो युक्तमनन्यतया भगवदर्चनादेव सर्वार्चानां गतार्थत्वम् । उक्तं च तृतीयस्कन्धे—

"यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्ये"ति ॥

दशमस्कन्धे पूर्वार्द्धे चत्वारिंशत्तमाध्याये अक्रूरः ( श्लो० ५ )—

"त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजाः ।
यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ॥
अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते ।
यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकम् ॥
त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ।
बह्वाचार्यविभेदेन भगवन् समुपासते ॥
सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम् ।
येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ॥
यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो ।
विशन्ति सर्वदा सिन्धुं तद्वत्त्वां गतयोऽन्ततः" ॥ इति ।

गौतमतन्त्रे दशमाध्याये देवान्तराणां पूजनप्रकारमुक्त्वा तेषां सर्वेषां तदंशत्वमाह ( श्लो० १११ )—

"यथा सिन्धुसमुद्भूतास्तरङ्गा भिन्नतां ययुः ।
तथा कृष्णसमुद्भूता एते तादात्म्यतां ययुः ॥
तद्ध्यानेनैव ते ध्येयाः साधकेन शुभं युना ।
एवं सर्वाकृतिमयं दैशिकः कृष्णमर्चयेत् ॥
धर्मार्थकाममोक्षाश्च करे तस्य सुनिश्चिताः" ॥ इत्यादि ।

सारसङ्ग्रहे परतत्त्वनिर्णये आथर्वणीश्रुतिः—

"एक एव नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी, नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणात्प्रजापतिः प्रजायत" इति ॥

तत्रैव विष्णुयामले महामते—

"सर्वशास्त्रमयी गीता सर्वदेवमयो हरिः ।
सर्वतीर्थमयी गङ्गा सर्वधर्मो दयापरः" इति ॥

तत्रैव स्कान्दे—

"ये त्वर्चयन्ति देवेशं सुपर्णोपरि संस्थितम् ।
किं करिष्यन्ति ते तीर्थैर्देवतानां च दर्शनैः ॥
किं यज्ञैः किं व्रतैर्वापि किं दानैः किमुपोषणैः ।
मूर्तिं नारायणीं यत्र पश्यन्ति गरुडोपरी"ति ॥

( वैष्णवस्य देवान्तरार्चननिषेधः, हर्यर्चनोत्तरमपि तदकरणं, अवैष्णवाव्यवहार्यता )

अतो भगवदर्चनेनैव गतार्थत्वाद्वैष्णवानामन्यार्चनेन नास्ति कश्चिदर्थः । निषिद्धं चैतत् नारदपञ्चरात्रद्वितीयरात्रद्वितीयाध्याये ( श्लो० ६५ )—

"कृष्णानुग्रहतो विद्वानि"त्यादिना वैष्णवस्वरूपमुक्त्वोच्यते ( श्लो० ७३ )—

"एवं भृत्यस्य रक्षार्थं कृष्णो दत्त्वा सुदर्शनम् ।
तथापि सुस्थो न प्रीतस्तं त्यक्तुमक्षमः क्षणम् ॥
एवं भूतो दयासिन्धुर्भक्तानुग्रहकारकः ।
अतः सन्तो हि तं त्यक्त्वा न सेवन्ते सुरान्तरमि"ति ॥

तथा सारसङ्ग्रहे ब्रह्मरात्रे—

"न त्रिपुण्ड्रं द्विजैर्धार्यं पट्टाकारं तथैव च ।
न चान्यदेवताभक्तिरापद्यपि कदाचने"ति ॥

आचारप्रकाशे काशीखण्डे—

"नान्यं देवं नमस्कुर्यान्नान्यं मन्त्रमुदीरयेत् ।
सदोपवीतवद्धार्याः शङ्खचक्रगदादयः ॥
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः" इति ॥

पुनः सारसङ्ग्रहे वसिष्ठः—

"यः कर्म कुरुते विप्रो विना विष्ण्वर्चनं क्वचित् ।
ब्राह्मण्याद्भ्रश्यते सद्यश्चाण्डालत्वं स गच्छति ॥
अर्चयित्वा तु गोविन्दमितरानर्चयेत् पृथक् ।
अवैष्णवत्वं तस्याऽपीतरभक्त्या भवेद्ध्रुवम् ॥
यो नरो वैष्णवं चिह्नं धृत्वा च तमसा चरन् ।
त्यजेच्चेद्वैदिकं धर्मं सोऽपि पाखण्डतां व्रजेत् ॥

नैसर्गिकं तु जीवानां दास्यं विष्णोः सनातनम् ।
तद्विना वर्तते मोहादात्मचौरः स कथ्यते ॥
शङ्खचक्रविहीनास्तु देवतान्तरपूजकाः ।
द्वादशीविमुखा विप्राः शैवाश्चावैष्णवाः स्मृताः ॥
अवैष्णवानां संसर्गात्पूजनाद्वन्दनादपि ।
यजनाध्ययनात्सद्यो वैष्णवत्वाच्च्युतो भवेत् ॥
सर्वत्रावैष्णवान् विप्रान् पतितांश्च विवर्जयेत् ।
वैष्णवानेव विप्रांस्तु सर्वकर्मसु योजयेदि"ति ॥

अत एव पुराणेषु प्राचीनवैष्णवानामितिहासेषु अन्याश्रयाकरणमनेकत्र निरूप्यते । यथा बृहन्नारदीये पुरुषोत्तममाहात्म्ये त्रयोविंशाध्याये चित्रबाहुराजोपाख्याने कथ्यते (श्लो० ८)—

"तया सह महीपालो बुभुजे मेदिनीं युवा ।
विना श्रीकृष्णदेवं स नैव जानाति दैवतमि"ति ॥

एवं ध्रुवाम्बरीषादीनामितिहासा अपि निरीक्षणीयाः ।

(अन्यदेवार्चनमवैधयाग., अवैधश्रद्धाहीनादिकर्मनिषेध विभूत्युपास्तेरभक्तित्व, उत्तमानां तदभाव, राजसतामसदेवता, तदधिकारिविचार.)

अन्यच्चास्ति । अन्यदेवताभक्तेरवैधत्वं यथा ह नवमाध्याये भगवान् (श्लो० २३)—

"येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्" इति ॥
अवैधस्य चाकर्तव्यत्वं धर्मशास्त्रप्रसिद्धम् ।

यथाह द्वितीयाध्याये बृहत्पराशरः (श्लो० १४३)—

"विधिदृष्टं तु यत्कर्म करोत्यविधिना तु यः ।
न किञ्चित्फलमाप्नोति क्लेशमात्रं हि तस्य तत् ॥
विधिहीनं भावदुष्टं कृतमश्रद्धयाऽपि यत् ।
तद्धरन्त्यसुरास्तस्य मूढत्वादकृतात्मनः ॥
श्रद्धाविधिसमायुक्तं यत्कर्म क्रियते नृभिः ।
शुचिभी रेकचित्तैश्च तदानन्त्याय कल्पते" इति ॥

अतो वैधभगवदर्चनैकनिरतैर्देवान्तरार्चनरूपमवैधं तत्पूजनं नैवास्माभिर्विधीयते । किञ्च, "आदित्यानामहं विष्णुरि"त्यादिवचनैर्देवान्तराणां विभूतित्वात्तदुपासनया भक्तित्वाभावाच्च न तेऽस्माभिर्भजनीयाः । सूत्रितं चैतद्भक्तिमीमांसाद्वितीयाध्यायप्रथमाह्निके भगवता शाण्डिल्येन (सू० ५०)—"प्राणित्वान्न विभूतिष्वि"ति ।

न चैवं सति "वृष्णीनां वासुदेवोऽस्मी"ति विभूतित्वाविशेषाद्वासुदेवस्याप्यभजनीयत्वं शङ्क्यम् । तत्र साक्षात् परब्रह्मत्वस्यानेकश्रुत्यादिप्रमाणसिद्धत्वात् । प्रपञ्चितं चैतदपि तत्रैव ( सू० ५२ )—

"वासुदेवेऽपीति चेन्नाकारमात्रत्वादि"त्यधिकरणे ।

अथ नारदपञ्चरात्रे प्रथमरात्रे द्वादशाध्याये ( श्लो० ४१ )—

"भजन्ति केचिच्छुद्धान्तं परमात्मानमीश्वरम् ।
केचित्तदंशमंशांशं प्राप्नुवन्ति क्रमेण तम्" ॥ इति ।

अतोंऽशांशभजनापेक्षयांशिन एव भजनं योग्यम् । तथा तत्रैव द्वितीयाध्याये नारदसनत्कुमारौ प्रति परमेष्ठी ( श्लो० ६२ )—

"देवानन्यांश्च भजते हरिं जानाति तत्परः ।
तपः करोति तं प्राप्तुमाकाङ्क्षन् मध्यभोजनः" ॥ इति ।

तेन भगवद्भक्तेरङ्गतयाऽपि देवतान्तरभक्तिर्मध्यमानामेव, न तूत्तमानाम् ।

गीतासप्तमाध्याये ( श्लो० १६ )—

"चतुर्विधा भजन्ते मामि"त्युपक्रम्य ( श्लो० १७ )
"तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते"

इत्यनन्यभक्तिमत एव नित्ययुक्तत्वस्यात्यन्तप्रियत्वादिधर्मैरत्युत्तमत्वस्य च स्मरणात् ।

अन्यभक्तिमतो निन्दितत्वं तु सारसङ्ग्रहे प्रजापतिस्मृतौ—

"नारायणं परित्यज्य हृदिस्थं प्रभुमीश्वरम् ।
योऽन्यमर्चयते देवं परबुद्ध्या स पापभाक्" ॥

वसिष्ठः—

"नारायणः परं ब्रह्म ब्राह्मणानां हि दैवतम् ।
सोमसूर्यादयो देवाः क्षत्रियाणां विशामपि ॥
शूद्रादीनां तु रुद्राद्या अर्चनीयाः प्रकीर्तिताः" ॥

भारते—

"ब्रह्माणं शितिकण्ठं च याश्चान्यदेवताः स्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्" ॥

पाद्मे भृगुवचनम्—

"शुद्धसत्त्वमयो विष्णुः कल्याणगुणसागरः ।
नारायणपरं ब्रह्म विप्राणां दैवतं हरिः ॥
स एव पूज्यो विप्राणां नेतरः पुरुषर्षभ ।
मोहाद्यः पूजयेदन्यं स पाखण्डी भविष्यति ॥

अशुद्धब्रह्मरुद्राद्या रजस्तमविमिश्रिताः ।
नान्यः कश्चिन्नराणां वै पूजनीयः कदाचन ॥
नान्यं देवं निरीक्षेत नान्यं देवं च पूजयेत् ।
न चान्यं प्रणमेद्विप्रो नान्यदायतनं विशेत्" ॥

वाराहे—

"यत्सत्त्वं स हरिर्देवो हरिस्तत्परमं पदम् ।
सत्त्वं रजस्तमश्चेति त्रितयं चैतदुच्यते" ॥

लिङ्गपुराणे—

"हिरण्यगर्भो रजसा तमसा शङ्करः स्वयम् ।
सत्त्वेन सर्वगो विष्णुः सर्वात्मा सदसन्मयः ॥
सात्त्विकैः सेव्यते विष्णुस्तामसैरेव शङ्करः ।
राजसैः सेव्यते ब्रह्मा सङ्कीर्णैश्च सरस्वती ॥
बौद्धो रुद्रस्तथा वायुर्दुर्गागणपभैरवाः ।
यमस्कन्दौ नैर्ऋतश्च तामसा देवता स्मृताः" ॥

वसिष्ठस्मृतौ—

"वासुदेवं परित्यज्य योऽन्यदेवमुपासते ।
स हेमराशिमुत्सृत्य पांसुराशिं जिघृक्षति" ॥

पाद्मे—

"यक्षराक्षसभूताद्याः कूष्माण्डा गणभैरवाः ।
नार्चनीयाः सदा देवि विष्णुलोकमभीप्सुभिः ॥
रजस्तमोऽभिभूतानामर्चनं प्रतिषिद्ध्यते ।
रौरवं नरकं यान्ति यक्षभूतगणार्चनात् ॥
तस्मात्तु सर्वयज्ञस्य भोक्तारं पुरुषोत्तमम् ।
ज्ञात्वा सर्वत्र कुर्वीत नित्यनैमित्तिकीः क्रियाः" इति ॥

भगवदतिरिक्तस्य मोक्षासमर्पकत्वादपि मुमुक्षुभिः सर्वथा तेषामभजनीयत्वमुपपादितं प्राक् । यानि तु—

( सूर्यरुद्रादितत्तद्देवार्चने तत्तल्लोकप्राप्तिवचनानि )

"तस्य भोगं च मोक्षं च ब्रह्मस्तुष्टः प्रयच्छति"

इत्यादीनि देवान्तरपूजनेऽपि मोक्षफलकत्वप्रतिपादकानि वचनानि क्वचित् क्वचिदुपलभ्यन्ते । तानि तु तत्तद्देवसायुज्यसालोक्याद्यन्यतमप्राप्तिलक्षणमोक्षपराण्येव ।

"देवान् देवयजो यान्ति",

"यान्ति देवव्रता देवान्"

इत्यादिस्मृतिभ्यः ।

निबन्धेष्वपि तत्तद्देवपूजाप्रक्रमे तत्तत्पूजकस्य तत्तल्लोकप्राप्तिबोधकवचनोपन्यासाच्च ।

यथाचारप्रकाशे भविष्यपुराणे—

"भक्त्या पूजयते योऽर्कमर्कपुष्पैः सितासितैः ।
तेजसा सोऽर्कसङ्काशो ह्यर्कलोके महीयते" ॥

तथा—

"कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
वसेदर्कपुरे श्रीमान् सूर्यतुल्यपराक्रमः" ॥ इति ।

तथा महाभारते—

"सदा तं यजते यस्तु श्रद्धया मुनिपुङ्गव ।
लिङ्गे वा स्थण्डिले वापि शङ्करं विधिपूर्वकम् ॥
युगदोषं विनिर्जित्य रुद्रलोके प्रमोदते" ॥ इति ।

चतुर्विंशतिमतव्याख्याऽऽचारमयूखादिष्वपीदमुदाहृतम् । तथा भविष्यपुराणे—

"कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
वसेच्छिवपुरे श्रीमान् शिवतुल्यपराक्रमः" इति ॥

तथा तत्रैव—

"दधित्थं घृतसंयुक्तं शिवे यश्च निवेदयेत् ।
रुद्रलोकमवाप्नोति गाणपत्यं च विन्दति ॥" इति ।

गाणपत्यमित्यर्थेऽश्वपत्यादित्वादणि चातुर्वर्ण्यादेराकृतिगणत्वात् स्वार्थे ष्यञ् । स्कान्दे—

"एकं मोचाफलं पक्कं यः शिवाय निवेदयेत् ।
सर्वभक्ष्यैर्महाभोगैः शिवलोके महीयते" ॥ इति ।

मोचा कदली ।

एवमादीनि तत्र तत्र वचनान्तराणि द्रष्टव्यानि । अतः साक्षात्परममोक्षप्रदानौदार्यं नन्दनन्दनस्यैव । तथा स्वभक्तसर्वमनोरथपूरकत्वमपि ।

उक्तं च विष्णुपुराणे तृतीयांशे ( अ० ५ श्लो० ३ )—

"भौमान्मनोरथान्कामान् स्वर्गिवन्द्यं परं पदम् ।
प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम्" इति ॥

( इयंचैनात्कामप्राप्तिश्रवणेऽपि तस्य नित्यत्वादनपाय , नित्यत्वापादकानि सङ्ग्रहे,
खादिरावन्नित्यकाम्यसंयोगस्य क्रत्वर्थत्वपुरुषार्थत्वादेश्च विचार )

नचैवं फलश्रवणात्काम्यत्वं शङ्क्यम्; अकरणे प्रत्यवायबोधकैरुदाहृतचरादिवचननिचयैः सिद्धाया नित्यतायाः केनापि प्रत्याख्यातुमशक्यत्वात् । नित्यत्वसाधकानि तु सदाशब्दप्रयोगादीनि बहूनि भगवदर्चनविधिवाक्येषु दृश्यन्ते । तानि च सङ्ग्रहकारेणेत्थं सङ्गृहीतानि—

"नित्यं सदा॰यावदायुर्न कदाचिदतिक्रमेत् ।
इत्युक्त्यातिक्रमे दोषश्रुतेरत्यागचोदनात् ॥
फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम् ॥" इति ।

इहोक्तनित्यत्वसाधकविशिष्टानि कानिचिद्वाक्यानि पूर्वमुपन्यस्तानि बहूनि च तत्र तत्रोपलभ्यन्त इत्यलम् ।

अथ फलश्रवणात्त्वस्तु तस्यैव काम्यत्वमपि । नचैवं नित्यकाम्यसंयोगविरोधः शङ्क्यः; खादिरवदेकस्यैव पूजनस्य द्वैरूप्यसम्भवेनाविरोधात् । यथा—"खादिरो यूपो भवती"ति नित्यः खादिरो विहितः । "खादिरं वीर्यकामस्य यूपं कुर्वीत" इति काम्यः । अत एकस्यैव खादिरस्य तुल्यबलेन प्रमाणद्वयेन द्वैरूप्यं स्वीकृतं जैमिनिना ।

तथा च सूत्रम्—"एकस्य तूभयार्थे संयोगपृथक्त्वम्" इति ।

न चेह नित्यस्य क्रत्वर्थत्वात् काम्यस्य च पुरुषार्थत्वात्, प्रकृते च द्विविधस्याप्यर्चनस्य पुरुषार्थत्वाद्विषमोपन्यास इति शङ्क्यम्; एकस्यैव प्रमाणद्वयेन द्वैरूप्यमात्रे तात्पर्यात् । अस्तु वाऽग्निहोत्रमेवात्र विस्पष्टो दृष्टान्तः । नह्यग्निहोत्रं नित्यं वा काम्यं वापि क्रत्वङ्गं भवितुमर्हति, स्वतः क्रतुत्वात्; किन्तु, पुरुषार्थमेव । तच्च "यावज्जीवमग्निहोत्रं जुहोती"त्यनेन नित्यं विधीयते । "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति च काम्यम् । निमित्तभेदेन प्रयोगभेदात्तद्भेदो यावज्जीवाधिकरणे निर्णीतः । तस्याधिकरणस्य सङ्ग्राहकौ चेमौ श्लोकौ माधवेनोक्तौ—

ज्जीवं जुहोतीति धर्मः कर्मणि पुंसि वा ।
त्कर्मधर्मोऽतः काम्य एकः प्रयुज्यताम् ॥
न कालो जीवनं तेन निमित्तप्रविभागतः ।
काम्यः प्रयोगो भिन्नः स्याद्यावज्जीवप्रयोगतः ॥" इति ।

प्रयोगमात्रभेदो न तु कर्मभेदः । द्वितीयाध्यायद्वितीयपादोक्तशब्दान्तराभ्यासादिहेत्वभावात् । तथा चैकस्याग्निहोत्रस्य द्वैरूप्यवत्प्रकृतेऽपि द्वैरूप्यम् ।

अथ केवलनित्यानुष्ठायिनां सकृत्प्रयोगेऽपि कामनासिद्धिस्तु स्वभावात् । स्पष्टं चेदं विविदिषाधिकरणे । तस्यापि सङ्ग्राहकौ श्लोकौ तेनैवोक्तौ—

"विद्यार्थमाश्रमार्थं च द्विःप्रयोगोऽथवा सकृत् ।
प्रयोजनविभेदेन प्रयोगोऽपि विभिद्यते ॥
श्राद्धार्थभुक्त्या तृप्तिः स्याद्विद्यार्थेनाश्रमस्तथा ।
अनित्यनित्यसंयोग उक्तिभ्यां खादिरे मतः ॥" इति ।

अयमर्थः—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन प्रजयाऽनाशकेन" इति यज्ञादीनां विद्यार्थत्वं श्रूयते । गृहस्थाद्याश्रमार्थत्वं च तेषां प्रसिद्धमेव । तत्र विद्यार्थाश्रमार्थयोः पृथक् प्रयोगः सकृद्वेति संशयः; प्रयोजनभेदात्प्रयोगभेद इति पूर्वपक्षः । श्राद्धभोजने श्राद्धनिष्पत्तिस्तृप्तिश्च भवति, न च द्विर्भुज्यते, तद्वद्विद्यार्थेनैव यज्ञादिना आश्रमसिद्धिरिति सिद्धान्तः । नित्यानित्यसंयोगस्तु खादिरवत् प्रमाणद्वयसिद्ध इति तत्र नित्येन कामनासिद्धिः, पश्वर्थानुष्ठितप्रयाजादिना पशुतन्त्रान्तःपातिपुरोडाशादिसिद्धिवत्प्रसङ्गेनैव, न तु तन्त्रेणेत्यलम् ।

(महात्मनां भक्तिप्रार्थना, तत्स्मरणादेरेव तीर्थयज्ञादितोऽधिकं पापशोधकत्व यातनाहरत्व च, प्रायश्चित्तत्वे सूत्राणि)

एवमत्युत्तमत्वादेव महात्मानो हरिभक्तिमेव प्रार्थयन्ते ।

यथा विष्णुपुराणे—

प्रथमांशविंशाध्याये (श्लो० १८) प्रह्लाद आह—

"नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
तेषु तेष्वच्युता भक्तिरच्युताऽस्तु सदा त्वयि ॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु" ॥ इति ।

एवं सर्वत्रैव वेदपुराणादिष्ववलोकनीयम् । तथा श्रवणकीर्तनादिमात्रेण स्वचरणसरोजैकमधुकराणां मोक्षादिलक्षणतत्तत्सकलेष्टप्रतिबन्धकतत्तन्निखिलदुरितप्रकरतूलकूलज्वालनविशालबहलज्वालाजालप्रबलकालानलत्वमपि तस्यैवास्ति ।

यथा विष्णुपुराणे (अं० २ अ० ६ श्लो० ३२।३३)—

"पापे गुरूणि गुरूणि लघूनि च लघून्यपि ।
प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः ॥
प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम्" ॥

तथा (अं० ६ अ० ७ श्लो० ९)—

"यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः" ॥ इति ।

महाभारते शान्तिपर्वणि मोक्षधर्मे ( अं० ३४५ श्लो० १३३०५ )—

"सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।
न तथा फलदं सौते नारायणकथा यथा ॥
पाविताङ्गाः स्म सम्वृत्ताः श्रुत्वेमामादितः कथाम् ।
नारायणाश्रयां पुण्यां सर्वपापप्रणाशिनीम्" ॥

पुनर्विष्णुपुराणे ( अं० २ अ० ६ श्लो० २९ )—

"तस्मादहर्निशं विष्णुं संस्मरन् पुरुषो मुने ।
न याति नरकं शुद्धः सङ्क्षीणाखिलकल्मषः" ॥

अत्रैव ( अं० २ अ० ६ श्लो० ३४ )—

"कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम्" ॥ इति ।

तथा ( अं० ३ अ० ७ श्लो० ३४।३५ )—

"किङ्करा दण्डपाशौ वा न यमो न च यातनाः ।
समर्थास्तस्य यस्यात्मा केशवालम्बनः सदा ।
चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् ॥
नाशौचं विद्यते तस्य स पवित्रतरो यतः" ॥ इति ।

स्वप्नेश्वरभाष्ये द्वितीयाध्याये द्वितीयाह्निके ( सू० ७६ ) लघ्वपि भक्ताधिकार इत्यस्य व्याख्याने वचनम्—

"महापातकयुक्तोऽपि ध्यायन्निमिषमच्युतम् ।
पुनस्तपस्वी भवति पङ्क्तिपावनपावनः" ॥

विष्णुपुराणे ( अं० ६ अ० ७ श्लो० १० )—

"कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् ।
प्रयाति विलयं सद्यः सकृद्यत्रानुसंस्मृते" ॥

नृसिंहपुराणे ( अ० ८ श्लो० २८।२९ )—

"नारकाः कृष्ण कृष्णेति नारसिंहेति चुक्रुशुः ।
इति सङ्कीर्तितो विष्णुर्नारकैर्भक्तिपूर्वकम् ॥
नारक्यो यातनाः सर्वास्तेषां नष्टा महात्मनाम्" ॥

एवं श्रीभागवतादिष्वनेकत्र निरीक्षणीयम् । विस्तरभयाद्विरम्यते ।

एतच्च शाण्डिल्यमहर्षिणापि भक्तिमीमांसायाम् ( सू० ७४ )—

---

१ अ० ३४३ श्लो० २।३ ॥

"स्मृतिकीर्त्योः कथादेश्चार्तौ प्रायश्चित्ताभावात्" ।

इत्यादिसूत्रैः स्पष्टतया विनिर्णीतम् ।

(पादोदकस्य गृहादौ हरिसेवायाश्चातिमहिमा, देवपूजा स्वगुरूक्तप्रकारेण कार्या, कायिकसेवाया अपि भक्तित्व मोक्षाधिकत्वं च)

अथ नृसिंहपुराणे (अ० ५ श्लो० ४६)—

"गङ्गाप्रयागगयपुष्करनैमिषाणि
पुण्यानि यानि कुरुजाङ्गलयामुनानि ।
कालेन तीर्थसलिलानि पुनन्ति पापान्
पादोदकं भगवतः प्रपुनाति सद्यः" ॥ इति ।

आचारार्के धर्मप्रवृत्तौ च भविष्ये—

समभ्यर्च्य पिबेद्देवं यः पादसलिलं हरेः ।
स याति परमं स्थानं तद्विष्णोः परमं पदम्" ॥ इति ।

इत्थं तत्पादोदकानामपि पापहरत्वात्, किं वाच्यं तत्स्मरणादीनां तादृशत्वे ? अतो मोक्षादिप्रतिबन्धकदुरितध्वंसायापि कंसारितो नास्माकमितरोपासनोपयुज्यते । तस्मात्, स्वस्वसाम्प्रदायिकगुरूपदिष्टप्रकारेण भगवत एवैकस्यार्चनं वैष्णवैः कर्तव्यम् ।

"विधाय देवतापूजां प्रातर्होमादनन्तरम् ।
गुरूक्तेन तु मार्गेण मूलमन्त्रं जपेद्बुधः" ॥ इति,

आचारार्के मरीचिवचनात् ।

तथा—

"वैष्णवानां हरेरर्चा तपस्या च श्रुतौ श्रुता ।
वैष्णवस्त्वं गृहे तिष्ठ कुरु कृष्णपदार्चनम् ॥
अन्तर्बाह्ये हरिर्यस्य तस्य किं तपसा सुत ।
नान्तर्बाह्ये हरिर्यस्य तस्य किं तपसा वृथा ॥
तपसा हरिराराध्यो नान्यः कश्चन विद्यते ।
यत्र तत्र कृतं कृष्णसेवनं परमं तपः" ॥ इति

ब्रह्मवैवर्तब्रह्मखण्डीयैकादशाध्याये नारदं प्रति ब्रह्मवाक्येभ्यः ।

"वत्से चतुर्षु वेदेषु धर्मेषु संहितासु च ।
पुराणेष्वितिहासेषु पञ्चरात्रादिकेषु च ॥
अन्येषु धर्मशास्त्रेषु वेदाङ्गेषु च सुव्रते ।
सर्वेष्टं सारभूतं च मङ्गलं कृष्णसेवनम्" ॥ इति

ब्रह्मवैवर्तप्रकृतिखण्डे सावित्रीं प्रति ब्रह्मवाक्याच ।

किञ्च, भक्त्युत्कर्षस्तु सर्वत्र वर्णित एव । अस्ति चास्य कायिकादिव्यापाररूपस्य भगवत्सेवनस्यापि भक्तित्वम् ।

"भज इत्येष वै धातुः सेवायां परिकीर्तितः ।
तस्मात्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी ॥" इति ।

नित्यमेतत्कर्तॄणामुत्कर्षं त्वाह स्वस्मृतावत्रिः ( श्लो० ३६५ )—

"धन्यानामपि धन्यास्ते देवानामपि मानवाः ।
विष्णोः परिस्तुतिर्येषु हीयते न कदाचन ॥" इति ।

तथा श्रीभागवते भगवत्सेवायाः—

"शावौ करौ नोकुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा" ॥

इत्यादिषु, अकरणे निन्दाश्रवणात् ।

"न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः" ।
"सालोक्यसार्ष्टिसारूप्यसायुज्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः" ॥

तथा—

"नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम्" ॥
"मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः" ॥

इत्यादिषु मोक्षाधिकत्वकथनाच्च श्रीपुरुषोत्तमस्य सेवैवैकाऽस्माकमावश्यकी । न तु क्वापि कस्यापि देवान्तरस्यार्चनादिकम् ।

( शिवादयोऽत्यन्तवैष्णवाः, विष्णोः सर्वथोत्कर्षः, पञ्चरात्रे भावितया स्वसम्प्रदायोक्तिः )

तथा—शिवादीनामपि श्रीभगवदेकभक्तत्वमपि—

"वैष्णवानां यथा शम्भुः"

इत्यादिषु प्रसिद्धम् ।

तथा, नारदपञ्चरात्रेऽपि चतुर्थरात्रतृतीयाध्याये पार्वतीं प्रति शिवः (श्लो० १८६)—

"नावैष्णवाय दातव्यं विकल्पोपहतात्मने ।
भक्तिश्रद्धाविहीनाय विष्णुसामान्यदर्शिने" ॥

तथा ( श्लो० १८८ )—

"कलौ सद्यः फलं कल्पग्राममेष्यति नारदः ।
लोकानां भाग्यहीनानां येन दुःखं विनश्यति ॥
क्षेत्रेषु वैष्णवेष्वेतदार्यावर्ते भविष्यति ।
नास्ति विष्णोः परं सत्यं नास्ति विष्णोः परं पदम् ॥

---

१ स्तुति ।

नास्ति विष्णोः परं ज्ञानं नास्ति मोक्षो ह्यवैष्णवे ।
नास्ति विष्णोः परो मन्त्रो नास्ति विष्णोः परं तपः ॥
नास्ति विष्णोः परं ध्यानं नास्ति मन्त्रो ह्यवैष्णवः ।
तस्य किं बहुभिर्मन्त्रैः किं जपैर्बहुविस्तरैः ॥
वाजपेयसहस्रैः किं भक्तिर्यस्य जनार्दने ।
सर्वतीर्थमयो विष्णुः सर्वशास्त्रमयः प्रभुः ॥
सर्वक्रतुमयो विष्णुः सत्यं सत्यं वदाम्यहम् ।
आब्रह्मसारसर्वस्वं सर्वमेतन्मयोदितम् ॥

पार्वत्युवाच—

अहो बत महत्कष्टं समस्तसुखदे हरौ ।
विद्यमानेऽपि सर्वेशे मूढाः क्लिश्यन्ति संसृतौ ॥
यमुद्दिश्य सदा नाथो महेशोऽपि दिगम्बरः ।
जटिलो भस्मलिप्ताङ्गस्तपस्वी वीक्षितो जनैः ॥
अतोऽधिको न दोषोऽस्ति लक्ष्मीकान्तान्मधुद्विषः ।
यत्तत्त्वं चिन्त्यते नित्यं त्वया योगीश्वरेण हि ॥
अतः परं किमधिकं पदं श्रीपुरुषोत्तमात् ।
तमविज्ञाय तान् मूढा यजन्ते ज्ञानमानिनः ॥
मुषितास्मि त्वया नाथ चिरं यदयमीश्वरः ।
प्रकाशितो न मे यस्य दत्ताद्या दिव्यशक्तयः ॥
अहो सर्वेश्वरो विष्णुः सर्वदेवोत्तमोत्तमः ।
भवदादिगुरुर्मूढैः सामान्य इव लक्ष्यते" ॥ २०० ॥ इत्यादि ।

अलम्बहुलेखेन ।

तस्मात्,

"यैः पञ्चदेवपूजायाः पारम्पर्येण वा स्वयम् ।
गृहीतो नियमस्तेषामेव साऽऽवश्यकी मता ॥ १ ॥
न सर्वेषां गृहस्थानां स्वेष्टस्यैवार्चनं यतः ।
स्मृतं गृहस्थधर्मेषु याज्ञवल्क्यादिषु स्फुटम् ॥ २ ॥
कलौ तु पूजनं मुख्यं द्वयोरेव हरीशयोः ।
स्वसम्प्रदायभेदेन तदपीह व्यवस्थितम् ॥ ३ ॥
एको देवः केशवो वा शिवो वेति सतां मतिः ।
तत्रापि सर्वथोत्कर्षो हरेरेवार्चनादिषु ॥ ४ ॥

अनूदितः शास्त्रसिद्धः सर्वकाले कलौ तथा ।
दुर्गादीनां तथोग्रत्वं तामसैरेव सेव्यता ॥ ५ ॥
मुमुक्षूणां हरेरेव सेवनं केवलं बलम् ।
एकैककामदा यस्मादन्ये देवा न मोक्षदाः ॥ ६ ॥
कृष्णांशांशतयाऽन्येषामर्चनादेर्गतार्थता ।
वैष्णवानामन्यभक्तौ दोषाधिक्यं च दर्शितम् ॥ ७ ॥
तस्मादस्माभिस्तु नन्दनन्दनस्यैव केवलम् ।
पादारविन्दमानन्दादमन्दं सेव्यते सदा ॥ ८ ॥
पूज्यैः श्रीवल्लभाचार्यवर्यैर्दर्शितया दिशा ।
किं वृथान्यकथातो नस्तथा यान्तु पथा परे ॥ ९ ॥
पदवाक्यप्रमाणज्ञैराचार्यैः श्रुतिसम्मतम् ।
सिद्धान्तं वर्णितं द्रष्टुं कुदृशा न क्षमो यमः" ॥ १० ॥

---

## ( सप्तत्रिंशः प्रश्नः उत्तरकारिकाः )

### आर्षानार्षग्रन्थेषु पार्थिवपूजाया नित्यत्वानुपलब्धिः । तस्याः काम्यत्वम्, कामनाभेदेन द्रव्यभेदः, लिङ्गानां सङ्ख्याभेदः इत्यादि, तां विना भोजननिषेधवाक्यविचारः तदर्चनाद्रुद्रलोकाप्तिश्च

### अथ प्रक्रान्तपञ्चमप्रश्नावलम्बी पञ्चमः प्रश्नः

### पार्थिवपूजनमन्तरा गृहस्थानां भोजनमुचितं न वा ? ॥ ३७ ॥

उत्तरम्—

अयं दत्तोत्तरप्रायः पूर्वप्रश्नोत्तरेण तु ।
तथापि कथ्यंते तथ्यं पथ्यं किञ्चिद्वचो नृणाम् ॥ १ ॥
क्वापि पार्थिवपूजाया नित्यत्वं नोपपद्यते ।
काम्यत्वं कीर्त्यते तस्मात्तस्मादस्याः कृतिं विना ॥ २ ॥
सामान्यतो गृहस्थानामपि दोषो न भोजने ।
हरेरनन्यदासानां वैष्णवानां कुतस्तराम् ॥ ३ ॥

तथाहि—

यदिदं सर्वेषां नित्यमभविष्यत्तर्हि मनुयाज्ञवल्क्यादयः स्वशास्त्रे क्वचिदपि तस्य

नित्यत्वमवक्ष्यन् । न त्वेवम् । अतो नैवम् । नचैवमपि 'कृते तु मानवा धर्मा' इत्यादौ मन्वादिशास्त्राणां युगान्तरेषु प्राधान्यकथनात्पार्थिवपूजनस्य च—

"द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे"

इति सिन्धूदाहृतवचनेन कलियुग एव श्रेष्ठत्वसिद्धेस्तेषु तस्याऽनिरूपणेऽपि न कलियुगेऽस्य नित्यत्वहानिरिति शङ्क्यम् । प्राधान्येन कलिधर्मस्मर्त्रा पराशरेण ( अ० १ )—

"षट्कर्माभिरतो नित्यं सन्ध्या स्नानं जपो होमः"

इत्यादौ आह्निकनिरूपणे न क्वापि पार्थिवपूजनस्य गन्धोऽपि दर्शितः । तद्व्याख्यायां च महता प्रबन्धेन सर्वाण्यपि प्रत्यहकर्तव्यान्यनेकस्मृतिवचनोपन्यासपुरःसरं व्याकुर्वता सर्वज्ञकल्पेन माधवेनापि न पार्थिवपूजनस्य नामापि गृहीतम् । यदि कलियुगेऽपीदं सर्वेषामपि नित्यं स्यात्कथं तर्हि क्वापि तेनोक्तं स्यात् ?

किञ्च, लघुविष्णुस्मृतौ द्वितीयाध्याये ( श्लो० १ )—

"अथातः सम्प्रवक्ष्यामि गृहिणां धर्ममुत्तमम्"

इत्युपक्रम्य स्नानसन्ध्यादिरूपान् भोजनात्प्रागवश्यमनुष्ठेयान्नित्यधर्मान्निरूप्याह ( श्लो० ६ )—

"मध्याह्ने त्वथ सम्प्राप्ते शिष्टं भुञ्जीत वाग्यतः ।
भुक्तोपविष्टो विश्रान्तो ब्रह्म किञ्चिद्विचारयेत्" ॥ इति ।

न त्वत्र मध्ये पार्थिवपूजाया गन्धोऽप्यस्ति ।

एतदग्रे ( श्लो १० )—

"हुत्वा चैवाग्निहोत्रं तु कृत्वा चाग्निपरिक्रियाम् ।
बलींश्च विधिवद्दत्त्वा भुञ्जीत विधिपूर्वकम्" ॥ इति ।

नात्रापि पार्थिवपूजनमुद्दिष्टम् । अतो गृहस्थानां तदन्तरा भोजने न कोऽपि दोषः । तस्य नित्यत्वाभावात् । बह्वृचाह्निकचतुर्विंशतिमतव्याख्याकमलाकरभट्टाह्निकप्रभृतिष्वतिप्रामाणिकसर्वसाधारणाह्निकग्रन्थेषु तिलकविधानं नेति किमिति वदता भवताऽस्मद्दत्ते आचारादर्शेऽपि पार्थिवपूजाया अविधानेन त्वयापि तदनित्यत्वस्य स्वीकर्तव्यत्वाच्च । न चास्य फलश्रवणमात्रेण नित्यत्वं शक्यं कल्पयितुम् । प्रत्यवायश्रवणेन तत्कल्पनायोगात् ।

याज्ञवल्क्यप्रथमाध्याये राजधर्मप्रकरणे ( श्लो० ५० )—"योऽदण्ड्यान् दण्डयेत्" इत्यस्य मिताक्षरायां दण्डनस्य फलश्रवणात् काम्यत्वमाशङ्क्य तदकरणे वसिष्ठेन प्रायश्चित्तविधानान्नित्यत्वमुक्तम् । तेन यस्य करणे फलमात्रश्रवणं तत्सर्वं काम्यमेवेति सिद्ध्यति ।

अथास्य काम्यत्वं तु दर्शयामः । तत्र धर्माब्धिसारे द्वितीयपरिच्छेदे माघनिर्णये—"अथ मृन्मयलिङ्गे शिवपूजाचिकीर्षायां तद्विधिरि"त्यादिना पार्थिवपूजाप्रकारो दर्शितः । अत्र, आरम्भे चिकीर्षायामित्युक्त्या, तादृशपूजाया अनित्यत्वं गम्यते, पुनस्तत्रैव तृतीयपरिच्छेदे पूर्वार्धे सन्ततिकामस्य कर्मविपाकग्रन्थोक्तं हरिवंशश्रवणादिकमुक्त्वा तद्विषये बालकसुवर्णप्रतिकृतिदानादीनि विधानान्तराणि वदन्नाह—"अथवा प्रत्यहं पार्थिवपूजां कृत्वाऽभिलाषाष्टकजपं सम्वत्सरं कुर्यात् । अभिलाषाष्टकं कौस्तुभे ज्ञेयमिति" । अतोऽपि स्पष्टमेव पार्थिवपूजनस्य काम्यत्वम् ।

तथाच, आचारप्रकाशे कौर्मे—

"लवणेन च सौभाग्यं पार्थिवं सर्वकामिकम् ।
अनेन फलदं भूरि सैकतं परिकीर्तितम्" ॥

इत्यादिना लिङ्गभेदनिरूपणे पार्थिवस्य कामदत्वमेव निरूपितम् ।

आचारमयूखे चेदमेव सर्वं शिवागमवचनत्वेनोपन्यस्तम् ।

तत्रोपसंहारेऽपि—

"आगमोक्तवियोगं तु ज्ञात्वा सम्यग्विचक्षणः ।
वस्तुमात्रस्य कुर्वीत लिङ्गं तत्तत्फलाप्तये" ॥

इत्यनेन सर्वेषां तेषां कामोपयोगित्वमात्रं दर्शितम् ।

कामनाभेदेन पार्थिवस्य सञ्ज्ञाभेदश्च तत्रैव—"विद्यार्थी लिङ्गसाहस्रमि"त्यादिनोक्तस्तथा निर्णयसिन्धौ तृतीयपरिच्छेदपूर्वार्धे—अथ पार्थिवपूजेत्युपक्रम्य,

नन्दिपुराणे—

"आयुष्मान्बलवाञ्छ्रीमान् पुत्रवान् धनवान् सुखी ।
वरमिष्टं लभेल्लिङ्गं ज्ञेयं सर्वार्थसाधकम्" ॥ इत्यादि ।

अत्राप्यायुरादिकामनाविशेषपूर्त्यर्थमेव तदर्चनमिति फलति ।

यत्तु, शूलपाणौ लैङ्गे—

"वरं प्राणपरित्यागः शिरसो वापि कर्तनम् ।
न चैवापूज्य भुञ्जीत शिवलिङ्गे महेश्वरम् ॥
सूतके मृतके चैव न त्याज्यं शिवपूजनम्" ॥ इति ।

तत्तु शैवपरम् ।

तत्रैव भविष्ये—

"धत्तूरकैस्तु यो लिङ्गं सकृत्पूजयते नरः ।
स गोलक्षफलं प्राप्य शिवलोके महीयते" ॥ इत्यादिभिः,

तस्य शिवलोककामुकपरतानिश्चायनात् ।

आचारमयूखे शिवधर्मे—

"सहस्रमर्चयेल्लिङ्गं निरयं स न गच्छति ।
रुद्रलोकमवाप्नोति भुक्त्वा भोगाननुत्तमान्" ॥

तथा—

"वालुकानि च लिङ्गानि पार्थिवानि च कारयेत् ।
सहस्रपूजनात्सोऽपि लभते वाञ्छितं फलम्" ॥ इति—

स्पष्टमेव शैवपरत्वं कामुकत्वं च तदर्चनस्य दर्शितम् । कामनाश्च मारणमोहनादिरूपाः । महाराजभयादिनिमित्तेषु सङ्ख्याभेदश्च तत्रैवोक्तः ।

परे तु, शूलपाणिवचनं शैवस्य क्वचिदपि लिङ्गे शिवपूजाऽऽवश्यकताबोधकम् । वचने मृदादिशब्दाभावात् । शैवैर्बाणलिङ्गादौ पूजितेऽपि, पृथक् पार्थिवमवश्यं पूज्यमित्येवं प्रमापकशास्त्रसदाचारयोरदर्शनाचेत्याहुः ।

( तत्पूजायास्त्रिपुण्ड्ररुद्राक्षधृतिशैवमन्त्रैकसाध्यत्व, निष्कामस्यापि रुद्रलोक., कुलाचारस्य मान्यता, राज्ञोऽपि तदुच्छेदनिषेध , वैष्णवानामनन्यत्वम् )

तथा, तिथितत्त्वे लैङ्गे—

"विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः" ॥ इति,

भस्मरुद्राक्षराहित्येन कृतपूजनस्य नैष्फल्यकथनात् । वैष्णवे तद्धारणनिषेधस्य तिलकादिप्रश्नोत्तरे प्रपञ्चयिष्यमाणत्वात् ।

आचारमयूखे नन्दिपुराणे—

"गोभूहिरण्यवस्त्रादिबलिपुष्पनिवेदने ।
ज्ञेयो नमः शिवायेति मन्त्रः सर्वार्थसाधकः ॥
सर्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः ।
तन्मन्त्रजापी तत्कर्मरतस्तद्गतमानसः ॥
निष्कामः पुरुषो राजन् स रुद्रपदमश्नुते" ॥

एवमादिषु कदाचिन्निष्कामतया तदर्चनस्यापि शिवमन्त्रग्राहितल्लोकाभिलाषुकशैवविषयकत्वनिश्चयात् । "यो वै स्वां देवतामतियजते" इति तैत्तिरीयादिषु स्वदेवताव्यतिरिक्तदेवतायजने दोषातिशयश्रावणाच्च वैष्णवादीनां तदकर्तव्यमेव । विस्तरस्तु प्रत्युत शिवपूजादेः प्रतिषेधः क्रियते तत्कथमित्यस्योत्तरे द्रष्टव्यः ।

अतो येषां कुले पार्थिवपूजनात्प्राङ् भोक्तव्यमिति नियमो भवेत्तेषामेव तद्वते भोज-

नमनुचितम्, येषां तु नैवं तेषामुचितमेव। तस्य काम्यत्वेन सन्ध्यावन्दनादिवत्तद्-करणे प्रत्यवायाभावात्।

"येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति"॥

इति मनुना स्वकुलाचारस्याऽपि नियामकत्वस्मरणाच्च।

यत्तु, इदानीं केचन राजानः कुलाचाराद्यभावेऽपि दुराग्रहं कुर्वन्ति तद्दुर्जन-शिक्षावशात्।

याज्ञवल्क्येन प्रथमाध्याये राजधर्मप्रकरणे (श्लो० ३५)—

"यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः।
तथैव परिपाल्योऽसौ यदा वशमुपागतः"॥ इति,

बलात्कारेण कुलाचारसाङ्कर्यकरणस्य निषेधात्। एवं मानवादिशास्त्रेष्वपि द्रष्टव्यम्। अतो येषां कुले नैवमाचारस्तेषु नृपतिनाऽपि न बलात्कारः कार्यः। काम्यत्वेनानवश्य-कर्तव्यताकतया शास्त्रविरोधाभावात्। काम्यत्वं तु मन्वादिभिर्नित्यविधेयेष्वस्य क्वापि विधानाभावादित्युक्तं प्राक्।

इत्थं सामान्यतो गृहस्थानामपि तदनावश्यकत्वे कुतस्तरां श्रीपतेरनन्यभक्तानां वैष्णवानां तत्प्रसङ्गः।

"एकभक्तिर्विशिष्यते"।
"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते"।
"भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्"।

इत्यादिवचनविरोधात्।

अतः, कामनावशादन्यदेवोपासनेऽपि वैष्णवानां तु स्वधर्मपरित्यागान्महाने-वानर्थः स्यात्।

(स्वधर्मत्यागे प्रतिवर्णं विचित्रप्रेतभावादि पृथक् पृथक् फलम्, स्वीयनित्यकर्मभ्यो मुक्ति, न तु काम्येभ्य)

यथा, चतुर्णामपि वर्णानां स्वधर्मपरित्यागिनां पृथक् पृथगनिष्टफलान्याह द्वादशाध्याये मनुः—

"स्वेभ्यः स्वेभ्यस्तु कर्मभ्यश्च्युता वर्णा ह्यनापदि।
पापान् संसृत्य संसारान् प्रेष्यतां यान्ति शत्रुषु॥
वान्ताश्युल्कामुखः प्रेतो विप्रो धर्मात्स्वकाच्च्युतः।
अमेध्यकुणपाशी च क्षत्रियः कटपूतनः॥

मैत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूययुक् ।
चैलाशकश्च भवति शूद्रो धर्मात्स्वकाच्च्युतः" ॥ इति ।

तस्माद्वेदादिप्रतिपादितप्रातिस्विकसाम्प्रदायिककर्मैव सर्वैर्मुमुक्षुभिर्विधेयम् ।

तदप्याह तुर्याध्याये मनुरेव ( श्लो० १४ )—

"वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्" ॥ इति ।

अत्र मुक्तावल्यां परमां गतिं मोक्षलक्षणां प्राप्नोति । नित्यकर्मानुष्ठानात्पापक्षये सति निष्पापान्तःकरणेन ब्रह्मसाक्षात्कारान्मोक्षावाप्तेः ।

तदुक्तं मोक्षधर्मे—

"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
तत्रादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि" ॥

इति व्याख्यातम् । नत्वेवं काम्यकर्मणां क्वापि साक्षान्मोक्षपर्यवसायित्वमस्तीत्यलम् ।

तथाच—

"शैवस्यावश्यकं काम्यमन्येषां पार्थिवार्चनम् ।
ऋतेऽपि तदतो दोषो गृहस्थानां न भोजने ॥ १ ॥
कुतस्तरां वैष्णवानां तद्भ्राम्यत न भोजनाः ॥
श्रीहरिं भजतानन्याः सेवन्ते यं नभोजनाः ॥ २ ॥

---

## ( अष्टत्रिंशः प्रश्नः उत्तरकारिके )

## जपयज्ञनिरतस्य वैश्वदेवाद्यनावश्यकता वाक्प्राणयज्ञज्ञानयज्ञादि कुर्वतश्च हरिभक्तस्य च स्वकृष्टधान्यैर्होमविधिः । बलिवैश्वदेवादिकं कर्तव्यं न वा ? ॥ ३८ ॥

### उत्तरम्—

अनावश्यकता पूर्वं स्थलभेदेन भण्यते ।
आवश्यकं यथाशास्त्रं वैश्वदेवादिकं मतम् ॥ १ ॥
प्रत्यवायादकरणे करणे सत्फलाप्तितः ।
मोक्षोपयोगात्कार्यं तद्विष्णूच्छिष्टेन वैष्णवः ॥ २ ॥

अत्र यद्यपि नित्यत्वाद्भगवद्ध्यानानुगुणत्वाच्च जपयज्ञमेव सर्वस्मृतिषु सर्वोत्कृष्टतया निर्दिष्टं मुख्यतयाऽऽश्रयतां नेदमावश्यकम् । मनुना कृताकृतत्वकथनात् । तथाहि—

द्वितीयाध्याये ( श्लो० ८६ )—

"ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥
जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" ॥

अत्रैव कुल्लूकभट्टो—ब्रह्मयज्ञादन्ये ये पञ्चमहायज्ञान्तर्गता वैश्वदेवहोमबलिकर्मनित्यश्राद्धातिथिभोजनात्मका"श्चत्वारः पाकयज्ञा" इत्यादिना तदेव स्फुटीचकार ।

पुनश्चतुर्थाध्याये मनुः ( श्लो० २१ )—

"ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा ।
नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत्" ॥ इति

पञ्चयज्ञानां नित्यकर्तव्यतामुक्त्वाऽऽह ( श्लो० २२ )—

"एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः ।
अहीयमानाः सततमिन्द्रियेष्वेव जुह्वति ॥
वाच्येके जुह्वति प्राणं प्राणे वाचं च सर्वदा ।
वाचि प्राणे च पश्यन्तो यज्ञनिर्वृतिमक्षयाम् ॥
ज्ञानेनैवापरे विप्रा यजन्त्येतैर्मखैः सदा ।
ज्ञानमूलां क्रियामेषां पश्यन्तो ज्ञानचक्षुषा" ॥ इति ।

न चेदं गृहस्थभिन्नपरम् । तद्धर्ममध्यपातात् । तथैव व्याख्यानेऽपि कुल्लूकभट्टेन—गृहस्थपदाभ्यसनाच्च ।

एवमेव कौषीतकीब्राह्मणे श्रूयते—

"यावद्वै ब्राह्मणो भाषते न तावत्प्राणितुं शक्नोति प्राणं तदा वाचि जुहोति यावद्धि पुरुषः प्राणिति, न तावद्भाषितुं शक्नोति, वाचं तदा प्राणे जुहोति" इति ।

बृहत्पराशरोऽपि द्वितीयाध्याये जपप्रकरणे ( श्लो० ६० )—

"विधियज्ञाः पाकयज्ञा ये चान्ये बहवो मखाः ।
ते सर्वे जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥
जप्येनैकेन सिद्धेन किं न सिद्धं भवेदिह ।
कुर्यादन्यं न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" ॥ इति ।

क्वचिद्भगवद्भक्तिसिद्धस्यापि तत्करणे प्रयोजनाभावः स्मर्यते—

यथा, एकादशस्कन्धे नवयोगीश्वरप्रसङ्गे—

"देवर्षिभूतात्मनृणां पितॄणां न किङ्करो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम्" ॥ इति ।

लघुपराशरेण तु (अ० २) कलौ गृहस्थधर्मानुपक्रम्य—

"स्वयं कृष्टे तथा क्षेत्रे धान्यैश्च स्वयमर्जितैः ।
निर्वपेत्पञ्चयज्ञांश्च क्रतुदीक्षां च कारयेत्" ॥ इति ।

स्वकृष्टक्षेत्रजान्नैरेव यज्ञाः कर्तव्या इत्यप्युक्तम् ।

(वैश्वदेवादिक नान्नसंस्कार, अविभक्तभ्रातृभिश्च न पृथक् कार्यम्, अर्थवादस्य स्वार्थे प्रामाण्यम्, रुग्यातुराल्पविद्यादीना होतृत्वनिषेध)

न च, वैश्वदेवस्यान्नसंस्कारवत्त्वात्तं विना दुष्टमन्नमभोज्यमेवेति वाच्यम्, वैश्वदेवादनन्तरमतिथ्यन्तरप्राप्तौ पुनः पाककरणे वैश्वदेवादिनिषेधेन तस्यान्नसंस्कारत्वाभावनिश्चायनात् ।

यथा, तृतीयाध्याये मनुरेव, (श्लो० १०८)—

"वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।
तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत्" ॥ इति ।

अत्रैव कुल्लूकभट्टः—बलिनिषेधादन्नसंस्कारत्वाभावो वैश्वदेवस्यावगम्यते । अन्नसंस्कारपक्षे कथमसंस्कृतान्नभोजनमनुजानीयादित्याह ।

नाप्यस्य सन्ध्यावन्दनवत्प्रतिव्यक्तिनियतत्वमस्ति । अविभक्तभ्रातृष्वन्यतमकृतवैश्वदेवादिना सर्वेषां चारितार्थ्यात्—

यथाह पञ्चमाध्याये यमः—

"पृथक् पिण्डं पृथक् श्राद्धं वैश्वदेवादिकं च यत् ।
भ्रातरश्च पृथक्कुर्युर्नाविभक्ताः कदाचन" ॥ इति ॥

अलम्बहुना ।

तस्माज्जपयज्ञात्याग्रहवतां ज्ञाननिष्ठानां वैश्वदेवादिकं नावश्यकमिति शक्यं वक्तुं मन्वादिवचनेभ्यः ।

नच, तेषां वचनानां जपविधिशेषार्थवादत्वेन स्वार्थेऽप्रमाणं कल्प्यम्; अर्थवादानामपि बहुधा स्वार्थे प्रामाण्यस्य पूर्वमीमांसाप्रथमाध्यायद्वितीयपादभाष्ये तत्त्वदीपादिषु श्रीमदाचार्यैरुभयभाष्यप्रकाशावरणभङ्गादिषु गोस्वामिपुरुषोत्तमचरणादिभिश्च सविस्तरं निर्णीतत्वात् ।

अत एव माधवेनाप्याचारकाण्डद्वितीयाध्याये मातुलसुतापरिणयविचारे—

"तस्मादु समानादेव पुरुषादत्ताचाद्यश्च जायेते, उत, तृतीये पुरुषे सङ्गच्छावहै"

इत्यर्थवादरूपाया अपि वाजसनेयश्रुतेः स्वार्थे प्रामाण्यं प्रेताग्निहोत्रन्यायानुसन्धानादङ्गीकृतम् ।

उक्तं च तेनैव—यद्यप्ययमर्थवादस्तथापि मानान्तरविरोधाभावात्स्वार्थे प्रमाणम् । विरोधवचनानामभावात् । सपिण्डाविषयत्वस्य निर्णीतत्वात्तस्मादविरुद्धार्थवादेनानूदितत्वात्, उपरिधारणवद्विधिः कल्पयितुं शक्यते इति । उपरिधारणं तु त्रेताग्निहोत्रे श्रूयते—

"अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो यज्ञं धारयति" इति ।

तत्र पैतृकस्य हविषोऽधस्तात्समन्त्रकं समिद्धारणं विधाय तद्वाक्यशेषेण समिधो हविरुपरिधारणम्, दैवे कर्मणि यत्कृतं तत्किमर्थवाद उत विधीयत इति संशयः, तत्राधोधारणविधिस्तावकत्वेन तदेकवाक्यतालाभादर्थवाद इति पूर्वपक्षः । प्रसिद्धं ह्यर्थमनूद्य तेन स्तुतिर्युक्ता । उपरिधारणं तु न क्वापि प्रसिद्धम् । अतस्तावकत्वायोगाद्वाक्यभेदमभ्युपगम्याप्यपूर्वार्थत्वाद्विधिः कल्प्यते । एवं "तृतीये पुरुषे सङ्गच्छावहै" इत्यादावप्यपूर्वार्थत्वेन मातुलसुतां विवाहेदिति विधिः कल्प्यते माधवेन ।

तथात्रापि, जपयज्ञेऽत्यन्तनिरतस्य वैश्वदेवाद्यकरणविधिरपीति शिवम् ।

"एतानेते महायज्ञानि"त्यादिवचनानां तु स्वतन्त्रतयाऽन्यशेषत्वाभावान्नार्थवादत्वसम्भावनापीति सर्वं सुस्थम् ।

किञ्च, आधुनिकानामल्पविद्यत्वादपि न होमाधिकारः । एकादशाध्याये (श्लो० ६०)—

"न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्तो नासंस्कृतस्तथा ॥
नरके हि पतन्त्येते जुह्वतः स च यस्य तत् ।
तस्माद्वैतानकुशलो होता स्याद्वेदपारगः" ॥ इति ।

मनूक्तनिषेधस्येहापि शक्यप्रसरत्वात् । अतो वैश्वदेवाद्यकरणेऽपि न क्षतिरिति शक्यमुपपादयितुम् ।

(पञ्चमहायज्ञानामावश्यकत्वं, त्यागे प्रायश्चित्तं च)

तथाप्येषां नित्यत्वादाचार्यचरणैश्च महता प्रपञ्चेन नित्यनैमित्तिकयोरवश्यकर्तव्यताकत्वस्य पूर्वमीमांसाभाष्यादिष्वङ्गीकृतत्वात्, सर्वथैवेदं द्विजैः स्वस्वशाखोक्तप्रकारेण सर्वदा कर्तव्यमित्येवास्माकं सम्मतम् ।

अत एव विज्ञानेश्वरोऽपि गृह्यप्रकरणे (अ० १ श्लो० ६) "बलिकर्मस्वधाहोमे"त्यादिश्लोकत्रये वैश्वदेवादीनां नित्यत्वं विस्तरेण निर्णीतवान् ।

तथा तृतीयाध्याये प्रकीर्णप्रायश्चित्तप्रकरणे (श्लो० ३) "विप्रदण्ड"इत्यस्य मिताक्षरायां पञ्चमहायज्ञाकरणे तु बृहस्पतिराह—

"अनिवर्त्य महायज्ञान् यो भुङ्क्ते प्रत्यहं गृही ।
अनातुरः सति धने कृच्छ्रार्धेन विशुध्यति" ॥ इति ।

द्वितीयाध्याये बृहत्पराशरः ( श्लो० १८ )—

"स्नात्वा जप्त्वा च हुत्वा च शक्त्या दत्वा च योऽश्नुते ।
सोऽमृतं नित्यमश्नाति तस्य स्नानमनामयम् ॥
अस्नात्वाऽश्नन् मलं भुङ्क्ते अजप्त्वा पूयशोणितम् ।
अजुह्वच्च कृमीन् कीटानददच्च शकृत्तथा" ॥ इति ।

लघुपराशरोऽप्याह ( अ० १ श्लो० ३८ )—

"हुतशेषं तु भुञ्जानो ब्राह्मणो नावसीदति" । इति ।

इहैव माधवीये हुतशेषशब्दो महाभारते व्याख्यातः—

वैश्वदेवादयो होमा हुतमित्युच्यते बुधैः" । इति ।

तत्रैव ( श्लो० ५८ )—"वैश्वदेवे तु सम्प्राप्ते" इत्यस्य व्याख्याने पञ्चमहायज्ञान् प्रशंसति हारीतः—

"देवानृषीन् पितॄंश्चैव भूतानि ब्राह्मणांस्तथा ।
तर्पयेद्विधिना विप्रो ब्रह्मभूयाय कल्पते" ॥ इति ।

पुराणेऽपि—

"यत्फलं सोमपानेन प्राप्नोति धनवान् द्विजः ।
सम्यक् पञ्चमहायज्ञैर्दरिद्रस्तदवाप्नुयात्" ॥ इति ।

अकरणे प्रत्यवायमाह व्यासः—

"पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः" ॥ इति ।

शङ्खलिखितयोः स्मृतौ—

"वैश्वदेवेन ये हीना आतिथ्येन विवर्जिताः ।
सर्वे ते वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः ॥
अकृते वैश्वदेवे तु भुञ्जते ये द्विजातयः ।
वृथा ते तेन पाकेन काकयोनिं व्रजन्ति वै ॥
अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैस्तु शाकलैः ।
तद्विभज्य च भूतेभ्यस्ततोऽश्नीयादनग्निमान्" ॥

शातातपस्मृतौ—

"वैश्वदेवेन ये भीता आतिथ्याच्च बहिष्कृताः ।
सर्वे ते वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः ॥

अकृत्वा वैश्वदेवं तु ये भुञ्जन्ति त्वधार्मिकाः ।
वृथा तेनान्नपाकेन काकयोनिं व्रजन्ति ते" ॥ इति ।

( सूतकमृतकयोस्तन्निषेध , अग्निहोत्रे तात्कालिकशुद्धि , शुष्कान्नफलादिना होम , श्राद्धे भोक्तुर्बलि-निषेध , वैश्वदेवत्यागिनोऽन्नभोजने प्रायश्चित्तम्, वैश्वदेवस्थानानि, कर्तुर्मोक्ष., त्यागे प्रायश्चित्त च )

सम्वर्तस्मृतौ ( अ० १ श्लो० ३४ )—

"पञ्चयज्ञविधानं च कुर्यादहरहर्द्विजः ।
न हापयेत्तु विप्रेण श्रेयस्कामः कदाचन ॥
हानिं तेषां प्रकुर्याच्च सदामरणजन्मनोः" ॥ इति ।

अत्रैवाग्रे ( श्लो० ४१।४२ )—

"पुत्रे जाते पितुः स्नानं सचैलं तु विधीयते ।
माता शुद्ध्येद्दशाहेन स्नातस्य स्पर्शनं पितुः ॥
होमस्तत्र तु कर्तव्यः शुष्कान्नेन फलेन च ।
पञ्च यज्ञविधानं तु न कार्यं मृत्युजन्मनोः" ॥ इति ।

अत्रिस्मृतौ—

"महायज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः ।
होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा" ॥

मिताक्षरायां तृतीयाध्याये ( श्लो० १७ ) "जलमेकाहमाकाश" इत्यस्य व्याख्यायाम्—

"विप्रो दशाहमासीत वैश्वदेवविवर्जितः" ॥ इति ।

आचारमाधवे तृतीयाध्याये गोभिलः—

"अग्निहोत्रादिहोमार्थं शुद्धिस्तात्कालिकी स्मृता ।
पञ्चयज्ञान् न कुर्वीत ह्यशुद्धः पुनरेव सः" ॥ इति ।

तत्रैव जातूकर्ण्यः—

"पञ्चयज्ञविधानं च न कुर्यान्मृत्युजन्मनोः" ॥ इति ।

अत आशौचद्वयेऽपि वैश्वदेवादयः पाकयज्ञा ब्रह्मयज्ञश्च न कार्या एव ।

श्राद्धे भोक्तुरपि बलिनिषेधो माधवेन दर्शितः ( अ० ३ ) श्राद्धप्रकरणे—

"श्राद्धभोक्ता न बलिं दद्यात्" ।

अत एवात्रिः—

"दत्ते वाऽप्यथवा दत्ते भूमौ यो निःक्षिपेद्बलिम् ।
तदन्नं निष्फलं याति निराशैः पितृभिर्गतम्" ॥ इति ।

सर्वदा वैश्वदेवात्यागे तु फलमुच्यते अत्रिस्मृतौ ( श्लो० ४२ )—

"योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथा पाको हि स स्मृतः ॥
वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः ।
प्राणेनाप्सु त्रिरात्रस्य[1] घृतं प्राश्य विशुद्ध्यति ॥
वैदिके लौकिके चापि हुतोच्छिष्टे जले क्षितौ ।
वैश्वदेवं प्रकुर्वीत पञ्चसूनापनुत्तये" ॥ इति ।

सर्वदा वैश्वदेवादिकरणे मोक्षप्राप्तिलक्षणं फलं त्वाह माधवीयाचारकाण्डे प्रथमाध्याये ( श्लो० ३७ ) व्याख्याने हारीतः—

"पाकयज्ञान् यजेन्नित्यं हविर्यज्ञांस्तु नित्यशः ।
सौम्यांस्तु विधिपूर्वेण य इच्छेद्ब्रह्म चाव्ययम्" ॥ इति ।

वैश्वदेवलोपे प्रायश्चित्तमपि वक्ति कात्यायनः—

"पितृयज्ञात्यये चैव वैश्वदेवात्ययेऽपि च ।
अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा ॥
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत्" ॥ इति ।

अतः शास्त्रसिद्धनित्यकर्मत्वाद्बलिवैश्वदेवादिकं यथाधिकारं तदधिकारिभिः सर्वैः कर्तव्यमेवेत्येवास्माकं सम्मतम् । नहि वयं शास्त्रविरुद्धानुरुद्धविषययोः प्रसह्य त्यसम्मती वक्तुं शक्नुमः ।

( वैश्वदेवादिक वैष्णवैर्विष्णवर्पितान्नेन कर्तव्य श्राद्धदिने च श्राद्धोत्तरम् )

इदं तु ब्रूमः; इदं वैश्वदेवादिकं वैष्णवैर्भगवत्प्रसादेनैव कर्तव्यमिति ।

"विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते" ॥

इत्यादिनृसिंहपरिचर्याद्युदाहृतवचनेभ्यः ।

"जलदेवं नमस्कृत्य ततो गृहगतः पुमान् ।
विधिना पुरुषसूक्तस्य तत्र विष्णुं समर्चयेत् ॥
वैश्वदेवं ततः कुर्याद्बलिकर्म यथाविधि" ॥

इत्याचारादर्शोदिधृतनृसिंहपुराणादिवचनैः पौर्वापर्येण तथैवाध्यवसायाच्च ।

किञ्च, श्राद्धानन्तरमपि वैश्वदेवकरणमुच्यते किं तत्र वाच्यं भगवन्निवेदनान्तरं तत्करणे ।

---

[1] त्रिरात्रान्ते ।

श्राद्धानन्तरं वैश्वदेवादिकरणं त्वाह तृतीयाध्याये मनुः (श्लो० २६५)—

"उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः" ॥ इति ।

अत्रैव मुक्तावल्याम्—ततः सम्पन्ने श्राद्धकर्मणि वैश्वदेवबलिहोमकर्मनित्यश्राद्धातिथिभोजनानि कर्तव्यानि । बलिशब्दस्य प्रदर्शनार्थत्वात् ।

अत एव मत्स्यपुराणे—

निवृत्त्यप्रतिपत्त्यर्थं पर्युक्ष्याग्निं च मन्त्रवित् ।
वैश्वदेवं प्रकुर्वीत नैत्यकं विधिमेव च" ॥ इति ।

अलम्प्रसक्तानुप्रसक्त्या ।

अतः,

"यथाऽधिकारं कर्तव्यं वैश्वादेवादिकं नरैः ।
नित्यनैमित्तिके यस्मादावश्यकतया मते ॥ १ ॥
वैश्वदेवाद्यकरणे ज्ञाननिष्ठादिभिर्द्विजैः ।
उक्तमन्वादिवचनानुरोधात्क्वापि न क्षतिः ॥ २ ॥
कार्याकार्यविचारं तु वेत्त्येकस्तत्त्वतः प्रभुः ।
यथाचारं यथाबुद्धि यथाशक्ति यथाकुलम् ॥ ३ ॥
निराकुलं तु कर्तव्यं सर्वैः सत्कर्म निर्मलम् ।
अतो भगवताऽप्युक्ता कर्मणो गहना गतिः ॥ ४ ॥

---

## (एकोनचत्वारिंशः प्रश्नः उत्तरकारिकाः)

### अथ पञ्चमप्रधानप्रश्नावलम्बी सप्तमः प्रश्नः ॥ ७ ॥

### भगवन्निवेदितवस्तूनां ग्रहणे विधिनिषेधयोः का गतिः? ॥ ३९ ॥

उत्तरम्—

निवेदितानां हरये वस्तूनां ग्रहसेधनम् ।
सुदुर्लभं कदाचिच्चेत्तदभक्तपरं भवेत् ॥ १ ॥
निर्माल्यादिनिषेधस्तु देवान्तरपरो मतः ।
निषेधभ्रमकृद्वाक्यस्यार्थस्तूक्तः पुरातनैः ॥ २ ॥
अतो निवेदितं नित्यं ग्राह्यं भगवतोऽखिलम् ।
श्रुतिस्मृतिपुराणेषु तद्भोजनविधानतः ॥ ३ ॥

पुण्यातिशयतश्चित्ताद्यतिशुद्धेरघक्षयात् ।
प्रसादः श्रीहरेर्भोज्योऽनेकसत्फलसाधकः ॥ ४ ॥
अनिवेद्य न भुञ्जीत यत्किञ्चिदपि कर्हिचित् ।
हरयेऽनेकधा तत्रात्यन्तदोषप्रसक्तितः ॥ ५ ॥
सर्वसाधारणग्रन्थैर्विस्तरेण प्रमाणतः ।
गुरुणा[1] निरणायीदमिह किञ्चित्प्रपञ्चयते ॥ ६ ॥

( श्रुत्यादिषु विष्णुभुक्तनिर्माल्ययोर्भक्षणादिविधि , पापनाशकत्वम्, मुक्तिदत्वम्, पादजलतुलसीमिश्रस्योत्कर्षं , तेनैव श्राद्धवैश्वदेवादिकरणविधि , प्रतिमादौ निवेदितपूर्वं न निवेदनीयम्, भूमौ कणपाते दोष , निर्णयसिन्धूक्तनिर्मूलत्वपरिभाषाविचार )

तत्र निषेधवाक्यानां सम्भवे तेषां विषयव्यवस्थापनार्थं प्रथमं विधिवाक्यान्युच्यन्ते ।

तत्रादौ श्रुतिः, महोपनिषदि–"एक एव नारायण आसीन्न ब्रह्मा न द्यावापृथिवी, सर्वे देवाः, सर्वे पितरः, सर्वे मनुष्या, विष्णुनाऽशितमश्नन्ति, विष्णुना घ्रातं जिघ्रन्ति, विष्णुना पीतं पिबन्ति, विष्णुना रसितं रसयन्ति, तस्माद्विद्वांसो विष्णूपहृतं भक्षयेयुः" इति ।

सारसङ्ग्रहे पद्मपुराणे—

"विष्णोर्नैवेद्यकं शुद्धं मुनिभिर्मोक्षकाङ्क्षिभिः ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत्" ॥

मुनिभिर्भुज्यत इति शेषः ।

"विष्णुदेहपरामृष्टं माल्यं पापहरं शुभम् ।
यो नरः शिरसा धत्ते स याति हरिमञ्जसा ॥
नैवेद्यमन्नं तुलसीविमिश्रं विशेषतः पादजलेन सिक्तम् ।
योऽश्नाति नित्यं पुरतो मुरारेः प्रयाति यज्ञायुतकोटिपुण्यम् ॥
विष्णोर्निवेदितं चान्नं योऽश्नाति भुवि मानवः ।
स याति परमं स्थानं पुनरावृत्तिवर्जितम्" ॥

नारदीये—

"नारायणस्य नैवेद्यं विप्रहत्याविनाशनम् ।
तदेवाष्टगुणं पापं भूमौ कणनिपातनात्" ॥ इति ।

तत्रैव दाल्भ्यः—

"अन्नपानादिकं विष्णोः प्रसादं नित्यसेवनम् ।
सर्वाघनाशनं सर्वपुण्यदं मुक्तिदं श्रुतम् ॥

---

१ महता विस्तरेणेदमिति पाठ ।

विष्णोर्निवेद्यमश्नीयाद्वैष्णवस्तु विशेषतः ।
शतजन्मकृतं पापं तत्क्षणादेव नश्यति" ॥ इति ।

हारीते—

"ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
पावनं भगवद्भुक्तं भुञ्जते चाग्रभोजनम्" ॥ इति ।

भारद्वाजः—

"यो न दद्याद्धरेर्भुक्तं पितॄणां श्राद्धकर्मणि ।
अश्नन्ति पितरस्तस्य विण्मूत्रं तु सह द्विजैः ॥
विष्णोर्निवेदितं नित्यं देवेभ्यो जुहुयाद्धविः ।
पितृभ्यश्च विशेषेण सर्वमानन्त्यमश्नुते ॥
विष्णवे कल्पितं चान्नं दद्याद्भक्तेभ्य एव च ।
वैश्वदेवं ततः कुर्यात् श्राद्धकर्मादिकं ततः" ॥

तथा—

"हरिभुक्तशेषं तद्द्यात्पितॄणां च दिवौकसाम् ।
तदेव जुहुयादग्नौ भुञ्जीयाच्च स्वयं नरः ॥
यदा लभेत सिद्धान्नं भुञ्जीत प्रोक्ष्यमेव तत् ।
विष्णुभुक्तमिति ध्यात्वा सात्त्विकस्तु विशेषतः" ॥

नैवेद्यभक्षणाभक्षणविचाराख्ये ग्रन्थे मात्स्ये—

"विष्णोर्नैवेद्यशेषेण वैश्वदेवं ततश्चरेत् ।
अग्नौ ध्यात्वा च मद्बीजं जामदग्न्यं महाद्युतिम् ॥
तदग्नौ वैश्वदेवं च मम प्रीत्यै चरेद्बुधः ।
ये देवास्तत्र तिष्ठन्ति वैश्वदेवे तु कर्मणि ॥
सर्वेष्वपि च मां ध्यायेत्सर्वकार्यार्थसिद्धये ।
तथा व्याहृतिहोमेषु चतूरूपं स्मरेत्ततः ॥
अनिरुद्धश्च प्रद्युम्नः सङ्कर्षणस्तथैव च ।
वासुदेवस्तथा पुत्र चतूरूपं प्रकीर्तितम् ॥

ब्रह्मोवाच—

छिन्धि सर्वज्ञ देवेश संशयं मे महत्तरम् ।
विष्णोर्नैवेद्यशेषेण वैश्वदेवं कथं चरेत् ॥
इत्युक्तं तु त्वया पूर्वं तत्र मे संशयो महान् ।
त्वदर्पितान्नं देवेश देवानामुचितं नृणाम् ॥

भक्तानां मोक्षदं यस्मात्तस्माद्ग्राह्यं तु मन्मुखैः ।
त्वदर्पितं तु नैवेद्यं कथं त्वं पुरुषोत्तम ॥
गृह्णासि भो स्वधिष्ठाने त्वदुच्छिष्टं यतः पुरा ॥

श्रीहंस उवाच—

साधु साधु महाभाग शृणुष्व कमलोद्भव ।
त्वया पृष्टं प्रवक्ष्यामि शृणुष्वावहितो भव ॥
यथाऽग्नौ संस्कृताज्यं वा प्रागग्नावेव हूयते ।
मदर्पितं प्रगृह्णामि यज्ञहोमद्विजातिषु ॥
सर्वस्वं मां समुद्दिश्य ते स्मृताः कामकौशलाः ।
अयोग्यं तु यथा होमे घृतं संस्कारवर्जितम् ॥
ऋते समर्पणं प्राज्ञ यज्ञादौ विफलं भवेत् ।
अहं यदि न गृह्णामि तेषां तु ग्रहणं कुतः ॥
भक्तानां मोदनार्थाय गृह्णामि कमलासन ।
तस्मान्निवेदितान्नं हि ददतां नास्ति पातकम् ॥
पितॄन्देवांस्तथा विप्रानुद्दिश्य पुरुषर्षभ ।
मम नैवेद्यशेषेण यजन्ति च मदर्पणम् ॥
प्रतिमायामर्पितं तन्नार्पयेत्प्रतिमान्तरे ।
अधिष्ठानं तु देवेश ते यान्ति ह्यधमं तमः ॥
अग्निविप्राद्यधिष्ठानेष्वर्चयेत्तु मदाज्ञया" ॥

पुनः सारसङ्ग्रहे पञ्चरात्रे—

"यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् ।
तेनैव पिण्डांस्तु तिलैर्विमिश्रांस्तत्कोटिकल्पं पितरः सुतृप्ताः ॥
विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ॥
श्राद्धे होमे तथा भक्ष्ये उपहारे तथैव च ।
न दूष्यं वैष्णवान्नं च पचेद्भक्त्या यथाविधि" ॥

यत्तु, आश्वलायनः—

"दानाध्ययनदेवार्चाजपहोमव्रतादिकम् ।
न कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात्" ॥

एतन्नित्यवर्ज्यमिति बोपदेवः । इदं विष्णुभिन्नदेवपरम् ।

"विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ॥
पितृशेषं तु यो दद्याद्धरये परमात्मने ।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः" ॥ इति स्कान्दात् ।

"पितरः सर्वमनुष्या विष्णुनाऽशितमश्नन्ति" इति श्रुतेः ।

"यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् ।
तेनैव पिण्डांस्तुलसीविमिश्रानाकल्पकोटि पितरस्तु तृप्ताः" ॥

इति ब्रह्मोक्तेरिति श्रीधरस्वामिनृसिंहपरिचर्यादयः ।

तथा हेमाद्रिनिर्णयसिन्ध्वादिषु विष्णुधर्मोत्तरे—

"श्राद्धाह्नि तु समभ्यर्च्य नृवराहं जनार्दनम्" । इति ।

तदेवोक्तम् ।

यत्तु, निर्णयसिन्धौ श्राद्धप्रकरणे श्रीधरादिधृतानीमानि द्वित्राणि वचनान्युदाहृत्य तत्सर्वं निबन्धविरोधान्निर्मूलमित्युक्तम्; तस्य, एतद्वचनान्यप्रामाणिकान्येवेति न तात्पर्यम्, किन्तु, माधवनिबन्धानुदाहृतत्वमित्येव तात्पर्यम् । निर्णयसिन्धावनेकत्र निर्मूलत्वलिखनेऽपि क्व क्व किं किं तात्पर्यमित्येतदवगमार्थं धर्मसिन्धुद्वितीयपरिच्छेदे कार्तिकमासनिर्णये तुलसीकाष्ठमालाधारणस्य निर्मूलत्वं प्रत्यक्षवचनोपन्यासेन वारयित्वाऽग्रे आषाढमासप्रकरणे आषाढशुद्धद्वादश्यामनुराधायोगरहितायां पारणं कार्यमित्युक्त्वा तत्र प्रमाणत्वे—

आभाकासितपक्षेषु मैत्रश्रवणरेवती" ।
"मैत्राद्यपादे स्वपितीह विष्णुः"

इत्यादीनि भविष्यपुराणस्थविष्णुधर्मस्थानि वाक्यानि लिखित्वा यथाऽन्ते इदं निर्मूलमित्युक्तम् । एवं प्रकरणान्तरेऽपि । तस्य च माधवादिमूलग्रन्थेषु नोपलभ्यत इत्येव तत्परिभाषातात्पर्यम्, न त्वप्रामाणिकत्वे, इत्यादिना काशीनाथोपाध्यायैः परिभाषालेखनात्तदनुरोधेनात्र तथैव निश्चयात् । यत्र तु यत्त्वादिपदलेखनपूर्वकं निर्मूलत्वं लिख्यते, तत्रैवाप्रामाणिकत्वे सिन्धोस्तात्पर्यमिति ।

माधवस्यैतद्वचनानुल्लेखे तात्पर्यं तु विष्णुनैवेद्यभक्षणस्य सर्वसाधारणत्वेऽपि तेन पिण्डादिकरणस्य वैष्णवातिरिक्तेष्वनावश्यकत्वमित्येवेति, उक्तस्थलधर्मसिन्धुपुरुषार्थचिन्तामण्यादिपर्यालोचनेन स्फुटं भाति । आस्तामेतत् ॥

भगवन्नैवेद्यभक्षणं तु सर्वशास्त्रसिद्धं निर्णयसिन्धुकृतोऽप्यभिप्रेतमेव । यथा, तत्रैव प्रथमपरिच्छेदे स्कान्दे—

"कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने ।
नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम्" ॥ इति ।

तथा तेनैव कमलाकरभट्टेन कृते आह्निके विष्णुपूजानिरूपणे वसिष्ठः—

"उच्छिष्टभोजनं दासान् विष्वक्सेनादिकांस्तथा ।
दत्वा शेषं तु भुञ्जीयान्नैवेद्यं स्वयमेव हि ॥
योऽर्चयेत्केशवं नित्यं स याति परमां गतिम्" ॥ इति ।

(हरिभुक्तान्नतुलसीपुष्पधूपशेषादे. शङ्खोदकस्य पादोदकस्य च महिमा, आरार्तिककाले वन्दनम्, वैष्णवानां द्वादशधा शुद्धि, भुवि पादोदकबिन्दुपातेऽपि दोष, अभ्यङ्गपादोदकं यावत्पुसो भक्ष्य स्यात्तावत्सर्वमर्पणीयम्, पादाम्ब्वपीत्वा शिरसि न क्षेपणीयम्)

तल्लक्षणं विहितं गौतमकृताचारसूत्रे प्रथमप्रश्नद्वादशखण्डे—

"शालग्रामशिलातोयं यः पिबेत्तस्य पुनः स्तन्यपानं न विद्यते, कोटिजन्माघनाशनं विष्णुपादोदकमवश्यं पेयं, भूमौ बिन्दुनिपातनात्तदेवाष्टगुणं पापं भवेद्रूपं हृदि नाम मुखे हरेर्नैवेद्यमुदरे पादोदकं मस्तके तुलसी यस्य सोऽच्युतो भवती"ति ।

श्रीभागवते नवमस्कन्धचतुर्थाध्यायेऽम्बरीषोपाख्याने (श्लो० १८)—

"स वै मनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु
श्रुतिं चकाराच्युतसत्कथोदये ॥
मुकुन्दलिङ्गालयदर्शने दृशौ
तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गम् ।
घ्राणं च तत्पादसरोजसौरभे
श्रीमत्तुलस्या रसनां तदर्पिते ॥
पादौ हरेः क्षेत्रपदानुसर्पणे
शिरो हृषीकेशपदाभिवन्दने ।
कामं च दास्ये न तु कामकाम्यया
यथोत्तमश्लोकजनाश्रया रतिः" ॥ इत्यादि ।

अत्र रसनां तदर्पित इति सदा नैवेद्यस्यैव भक्षणमुक्तम् । अत एवैतद्व्याख्यायां "तदर्पिते तस्मै निवेदितान्नादा"विति श्रीधरस्वामी ।

आचारप्रकाशे विष्णुपूजाप्रकरणे पाद्मे—

"शङ्खोदकं हरेर्भुक्तं निर्माल्यं पादयोर्जलम् ।
चन्दनं धूपशेषस्तु ब्रह्महत्यापहारकः ॥

धूपं चारार्तिकं विष्णोः कराभ्यां यश्च वन्दते ।
कुलकोटिं समुद्धृत्य याति विष्णोः परं पदम्" ॥ इति ।

मदनपारिजाते तृतीयस्तबके देवतार्चनप्रकरणे स्कान्दे—

"विष्णुमूर्ध्नि स्थितं पुष्पं शिरसा यो वहेन्नरः ।
अपर्युषितपापः स्याद्यावद्युगचतुष्टयम्" ॥ इति ।

अपर्युषितपापः उत्पत्तिसमकालं नश्यत्पातकः ।

धर्मप्रवृत्तौ देवपूजाप्रकरणे—

"पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥
अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामस्य सम्पर्कात्सर्वे यान्ति पवित्रताम्" ॥ इति ।

गौतमतन्त्रेऽष्टमाध्याये ( श्लो० १ )—

"अथ द्वादशधा शुद्धिर्वैष्णवानामिहोच्यते ।
गृहोपसर्पणं चैव तथाऽनुगमनं हरेः ॥
भक्त्या प्रदक्षिणं चैव पादयोः शोधनं पुनः ।
पूजार्थं पत्रपुष्पाणां भक्त्यैवोत्तोलनं हरेः ॥
करयोः सर्वशुद्धीनामियं शुद्धिर्विशिष्यते ।
तन्नामकीर्तनं चैव गुणानामपि कीर्तनम् ॥
भक्त्या श्रीकृष्णदेवस्य वचसः शुद्धिरिष्यते ।
तत्कथाश्रवणं चैव तस्योत्सवनिरीक्षणम् ॥
श्रोत्रयोर्नेत्रयोश्चैव शुद्धिः सम्यगिहोच्यते ।
पादोदकस्य निर्माल्यमालयोरपि धारणम् ॥
उच्यते शिरसः शुद्धिः प्रणतस्य हरौ पुनः ।
आघ्राणं गन्धपुष्पादेर्निर्माल्यस्य तपोधन ॥
विशुद्धिः स्यादलं तस्य घ्राणस्यापि विधीयते ।
पत्रपुष्पादिकं यच्च कृष्णपादयुगार्पितम् ॥
तदेकं पावनं लोके तद्धि सर्वं विशोधयेत् ।

नारदपञ्चरात्रेऽपि चतुर्थरात्रैकादशाध्यायेऽनयैवानुपूर्व्या इमे श्लोका उपलभ्यन्ते ।

सारसङ्ग्रहे ब्रह्माण्डे—

"हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं च निर्माल्यं यस्य मूर्ध्नि स वैष्णवः" ॥

---

१ परम् ।

तत्रैव पुराणान्तरे—

"पादोदकस्य माहात्म्यं जानात्येव हि शङ्करः ।
विष्णुपादोदकं पीत्वा शुद्धिमाप्नोति तत्क्षणात् ॥
स्नानपादोदकं वापि पिबन् शिरसि धारयेत् ।
पुण्यपापविनिर्मुक्तो वैष्णवीं गतिमाप्नुयात् ॥
विष्णुगात्रेण संस्पृष्टं पत्रं वा पुष्पमेव वा ।
शिरसा धारयेद्यो वै स याति हरिमञ्जसा ॥
पादोदकं पिबेन्नित्यं चक्राङ्कितशिलां हरेः ।
प्रक्षालयति तत्तोयं ब्रह्महत्यादिकं हरेत् ॥
पीते पादोदके विष्णोर्वैष्णवानां विशेषतः ।
तत्र नाचमनं कुर्याद्यथा सोमे द्विजोत्तमैः ॥
तीर्थप्रसादस्वीकाराऽनन्तरं वैष्णवो द्विजः ।
न हस्तक्षालनं कुर्यान्न तत्राचमनक्रियाम्" ॥

पद्मपुराणे—

"संसारमलपङ्कस्य विष्णुपादोदकं विना ।
प्रक्षालनं न पश्यामि कल्पकोटिशतैरपि ॥
विष्णुश्रीपादतीर्थं हि कोटिजन्माघनाशनम् ।
तदेवाष्टगुणं पापं भूमौ बिन्दुनिपातनात् ॥
परमाणुसमं तीर्थं यावत्सम्पतते भुवि ।
तावद्वर्षसहस्राणि पतन्ति नरके नराः" ॥ इति ।

स्कान्दे मार्गशीर्षमाहात्म्ये (अ० १० श्लो० ३८)—

"पादोदकं पिबेद्यो वै शालग्रामसमुद्भवम् ।
पञ्चगव्यसहस्रैस्तु प्राशितैः किम्प्रयोजनम् ॥
शालग्रामशिलातोयं यः पिबेद्बिन्दुना समम् ।
मातुः स्तन्यं पुनर्नैव स पिबेन्मुक्तिमान्नरः ॥
आशौचं नैव विद्येत सूतके मृतकेऽपि च ।
येषां पादोदकं मूर्ध्नि प्राशनं ये प्रकुर्वते ॥
अन्तकालेऽपि यस्येदं दीयते पादयोर्जलम् ।
सोऽपि सद्गतिमाप्नोति सदाचारबहिष्कृतः ॥
सोऽपि पूतो भवत्याशु सद्यः पादाम्बुधारणात् ।
चान्द्रायणात्पादकृच्छ्रादधिकं पादयोर्जलम् ॥

अपेयं पिबते यस्तु भुङ्क्ते यश्चाप्यभोजनम् ।
अगम्यागमनो यो वै पापाचारश्च यो नरः ॥
अगुरुं कुङ्कुमं वापि कर्पूरं चानुलेपनम् ।
मम पादाम्बुसंस्पृष्टं तद्वै पावनपावनम् ।
दृष्टिपूतं तु यत्तोयं भवेद्वै विप्रसत्तम ।
तद्वै पापहरं नृणां किम्पुनः पादयोर्जलम्" ॥

नारदपञ्चरात्रे दशमाध्याये ब्रह्मदेवः ( श्लो० ८२ )—

"विष्णुपादोदकोच्छिष्टं भुञ्जते ये च नित्यशः ।
पश्यन्ति च शिलाचक्रं पूजां कुर्वन्ति नित्यशः ॥
जीवन्मुक्ताश्च ते धन्या हरिदासाश्च भारते ।
पदे पदेऽश्वमेधस्य प्राप्नुवन्ति फलं ध्रुवम् ॥
न हि तेषां पराभूताः पुण्यवन्तो जगत्रये ।
तेषां च पादरजसा तीर्थं पूतं तथा धरा ॥
तेषां च दर्शनं स्पर्शं वाञ्छन्ति मुनयः सुराः ।
पुरुषाणां सहस्रं च पूतं तज्जन्ममात्रतः ॥" इति ॥

तत्रैव पञ्चदशाध्याये नारदोपाख्याने व्यासः ( श्लो० २ )—

"स जज्ञे शूद्रयोनौ च पितुः शापेन दैवतः ।
विष्णुप्रसादं भुक्त्वा च बभूव ब्रह्मणः सुतः" ॥

अत्रैव चतुर्थरात्रनवमाध्याये ( श्लो० १० )—

यावद्भक्ष्यं भवेत्पुंसस्तावद्दद्याज्जनार्दने ।
नैवेद्यं यत्तु भक्ष्यं च तदादिकचतुर्विधम्" ॥ इति ।

अत्रैव रात्र एकादशाध्याये ( श्लो० १८ )—

"शालग्रामशिलातोयं न पीत्वा यस्तु मस्तके ।
प्रक्षेपणं प्रकुर्वीत ब्रह्महा स निगद्यते ॥
विष्णोः पादोदकं पीतं कोटिजन्माघनाशनम् ।
तदेवाष्टगुणं पापं भूमौ बिन्दुनिपातनात् ॥
अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
विष्णोः पादोदकं पुण्यं शिरसा धारयाम्यहम् ॥
हत्यां हन्ति तदङ्घ्रिजापि तुलसी स्तेयं च तोयं पदे
नैवेद्यं बहु अन्नपानजनितं गुर्वङ्गनासङ्गजम् ।
श्रीशाधीनमतिः स्थितिर्हरिजनैस्तत्सङ्गजं किल्बिषं
शालग्रामशिलार्चनस्य महिमा कोऽप्येष लोकोत्तरः" ॥ इति ।

तत्रैव प्रथमरात्रद्वितीयाध्याये सनत्कुमारनारदौ प्रति परमेष्ठी ( श्लो० ६४ )—

"परं श्रीकृष्णभजनं ध्यानं तन्नामकीर्तनम् ।
तत्पादोदकनैवेद्यभक्षणं सर्ववाञ्छितम् ॥
अतीव मूढो विप्रश्च प्राक्तनाद्गुरुदोषतः ।
तामसो हि न जानाति श्रीकृष्णं त्रिगुणात्परम् ॥
अज्ञानादथवा ज्ञानात्सत्सङ्गादेव प्राक्तनात् ।
भुङ्क्ते नैवेद्यमीशस्य कृष्णस्य परमात्मनः ॥
स च मुक्तो भवेत्पुत्र मुच्यते सर्वपातकात् ।
स याति दिव्ययानेन गोलोकं लोकमुत्तमम् ॥
शृणु वत्स प्रवक्ष्यामि पूर्वाख्यानं पुरातनम् ।

इत्यादिना यावदध्यायसमाप्ति कस्यचित्कान्यकुब्जद्विजस्येतिहासप्रसङ्गेन भगवत्प्रसादमाहात्म्यं वर्णितम् । तथा तत्रैव सनत्कुमारेण पुनर्नैवेद्यमाहात्म्यं पृष्टः पद्मयोनिस्तृतीयाध्यायादारभ्य सुभद्रस्येतिहासनिरूपणेन सविस्तरं तदाह ।

( ब्रह्मादयो हरिभुक्तभोक्तार , निवेदनोत्तर वैश्वदेव , देवान्तरनैवेद्यादननिषेध., हरिभुक्तान्मोक्षादि, भगवद्भुक्तमालादीना भगवद्दीयमानत्वबुद्ध्या ग्रहणम् )

तथा, नैवेद्यभक्षणविचाराख्यग्रन्थे पाद्मे—

"रमा ब्रह्मादयो देवाः सनकाद्याः शुकादयः ।
श्रीनृसिंहप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः" ॥

ब्रह्माण्डपुराणे—

"यथा कालोपपन्ने तु भोजने हरयेऽर्पिते ।
कृतेऽथ वैश्वदेवे तु ब्राह्मणान् भोजयेत्ततः ॥
गोग्रासे तु तथा दत्ते वासुदेवार्पितं शुभम् ।
गायत्र्या मूलमन्त्रेण सम्प्रोक्ष्य शुभवारिणा ॥
ऋतं सत्यमिति मन्त्राभ्यां पात्रं तत्परिषेचयेत्" ॥ इत्यादि ।

त्वा सत्येनेति सायं, सत्यं त्वर्तेनेति प्रातरित्यर्थः ।

स्कान्दे—

"कोटि चान्द्रायणैश्चैव मासोपोषणकोटिभिः ।
तत्फलं प्राप्यते तस्माद्विष्णोर्नैवेद्यभक्षणात् ॥
पावनं विष्णुनैवेद्यं सुभोज्यमृषिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत्" ॥

श्रीभागवत एकादशस्कन्धे षष्ठाध्याय उद्धवः—

"शय्यासनाटनस्थानस्नानक्रीडोत्सवादिषु ।
कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेमहि ॥
त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि" ॥ इति ।

भगवदुच्छिष्टभोजनस्य मायाजयसाधनत्वं वक्ति ।

स्कान्दे मार्गशीर्षमाहात्म्ये दशमाध्याये स्वपूजानिरूपणे ब्रह्माणं प्रति भगवान् । ( श्लो० ३२ )—

"पश्चाच्छेषं मया दत्तं शिरसाऽऽधाय सादरम् ।
एवं ब्रूयात्ततो वत्स मम पूजां प्रवर्तयेत् ॥
मन्त्रहीनं क्रीयाहीनं...... ......" इत्यादि ।

अत्र भगवन्निवेदितवस्तूनां भगवदीयमानत्वबुद्ध्या यथायोग्यं स्वीकरणे सत्येव पूजाप्रवर्तनमुक्तम् ।

तत्रैव चतुर्दशाध्याये ( श्लो० ३० )—

"तीर्थयज्ञाधिकफलं कलिदोषविनाशनम् ।
ममोच्छिष्टं सुगतिदमपि दुष्कृतकर्मणाम्" ॥

एवम्विधानि विविधान्येव वचनानि तत्र तत्र प्रामाणिकग्रन्थेषूपलभ्यन्त एवेत्यतिविस्तरभियोपरम्यते ।

( नैवेद्यनिर्माल्यभोजननिषेधाः, तयोः पारिभाषिकता, सामान्यतो निषेधा देवान्तरनिर्माल्यादिपरा., वचनविशेषस्य भक्ताभक्तभेदेन व्यवस्था )

अथ निषेधवचनानि; तत्र यद्यपि भगवन्निवेदितभोजननिषेधकानि वचांसि दुर्लभानि, तथापि, निषेधभ्रान्तिजनकानि यथोपलम्भं लभ्यन्ते । तत्र क्वचित् सनत्कुमारसंहितायाम्—

"निवेदितं तु यद्द्रव्यं पुष्पं फलमथाऽपि वा ।
निर्माल्यमिति तत्प्रोक्तं तत्प्रयत्नेन वर्जयेत्" ॥

तथाऽऽचारप्रकाशे स्कान्दे—

"निर्माल्यं च निवेद्यं च विशेषेण विवर्जयेत् ।
रुद्रेण भुक्तं निर्माल्यं न तथा देवतान्तरैः ॥
नैवेद्यं विष्णुना भुक्तममृतं चान्यदेवतैः ।
निर्माल्यं च निवेद्यं च भुक्त्वा चान्द्रायणं चरेत्" ॥

तथा श्रीभागवत एकादशस्कन्धे ( अ० ११ श्लो० ४० )—

अमानित्वमदम्भित्वं कृतस्यापरिकीर्तनम् ।
अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥

पुनः सनत्कुमारसंहितायाम्—

"निर्माल्यं भक्षयित्वैवमुच्छिष्टमगुरोरपि ।
मासं पयोव्रतो भूत्वा जपन्नष्टाक्षरं सदा ॥
ब्रह्मकूर्चं ततः पीत्वा पूतो भवति मानवः" ॥ इति,

अथैषां व्यवस्थोच्यते—तत्र, कथञ्चिदपि बाधितुमशक्यानां पूर्वोपन्यस्तादीनां श्रौतस्मार्तपौराणानामनेकप्रामाणिकनिबन्धोदाहृतानां विष्णुनैवेद्यभक्षणप्रत्यक्षविधि-वाक्यानां बलात्सामान्यतो निर्माल्यादिनिषेधकानां वचनानामुत्सर्गापवादन्यायेन शिव-प्रभृतिदेवतान्तरनिर्माल्यादिनिषेधपरत्वमभ्युपेयं सामान्यतो निर्यासाशनादिनिषेधानां हिङ्गुकर्पूरवर्जमित्यादिवचनान्तरैकवाक्यतया तदतिरिक्तनिर्यासादिनिषेधपरत्ववत् । शिवादितत्तद्दैवतनामनिर्देशपूर्वकं तत्तन्निर्माल्यादिनिषेधकवचःसहस्रोपलम्भेनापि तथैव युक्तम् । निर्यासस्य नाश्यमिति निर्यासाशननिषेधकतैत्तिरीयश्रुतेः—

"अथो खलु य एव लोहितो यो वा व्रश्चनान्निर्येषति तस्य नाश्यं काममन्यस्य" इत्यग्रिमवाक्यबलात् ।

( मनु० अ० ५ श्लो० ६ )—

"लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा"

इत्यादिवर्ज्यपरिगणकस्मृतिबलाच्च लोहितव्रश्चनोदितनिर्यासनिषेधपरत्ववत्, हेमाद्र्या-दिषु सामान्यतो वृन्ताकभक्षणादिनिषेधकानां, वृन्ताकं श्वेतवृन्ताकमित्यादिवचनान्तरो-पलम्भेन सङ्कोचात्तत्तन्निषेधपरत्ववच्च । ये तु क्वचिद्देवतान्तरनैवेद्यनिर्माल्यभक्षणधारणा-दिविधयोऽपि कैश्चिदुपन्यस्तास्ते तु तत्तद्भक्तविषयः ।

"रुद्राङ्गलग्नमग्नौ च दहेत्सर्वं च तत्क्षणात् ।
शिष्टेभ्योऽप्यथ देवेभ्यो यत्तु दीनेषु निःक्षिपेत् ॥
विप्रेभ्यस्त्वथ तद्देयं ब्रह्मणे यन्निवेदितम् ।
वैष्णवं सात्त्वतेभ्यश्च भस्माङ्गेभ्यश्च शाम्भवम् ॥
सौरमङ्गेभ्यः शाक्तेभ्यः स्नानीये यन्निवेदितम्" ॥ इति,

भवदत्याहृताचारादर्शोदाहृतब्रह्मपुराणोक्तस्नानघृतादिप्रतिपत्तिन्यायात् । अयं देवता-न्तरनिवेदितान्नादिग्राह्याग्राह्यत्वविचारोऽनुपदमेवाग्रिमप्रश्नस्योत्तरे कर्तव्य एवेत्यत्रोपर-म्यते । नचैवं सति विष्णुनैवेद्यभक्षणविधीनामपि सात्त्वतपरत्वमस्त्विति शङ्क्यम्; तत्र स्नानघृतमात्रस्य प्रस्तुतत्वात् ।

तत्रैव ब्रह्मपुराण एव—

"ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवं च प्रदीयते" । इति

श्रीविष्णोः स्नानघृतादेरपि सर्वब्राह्मणेभ्यः प्रदानरूपप्रतिपत्त्यन्तरनिरूपणेन रुद्रसम्बन्धिवस्तुवच्छिष्टाग्राह्यत्वस्योच्छेदाच्च । वक्ष्यमाणादिभिरनेकसर्वसाधारणनिबन्धधृतैस्तदभक्षणे च प्रत्यवायबोधकैर्वीप्सादिघटितैर्वचननिचयैः सिद्धाया, विष्णुनैवेद्यभक्षणस्य सर्वसाधारण्येन, नित्यतायाः केनापि प्रत्याख्यातुमशक्यत्वाच्च ।

यत्तु, स्कान्दवचनं पूर्वमुक्तं तत्राचारप्रकाशे—"त्वयोपभुक्तस्रग्गन्धे"ति श्रीभागवतवचनोपन्यासेन विष्णुनैवेद्यस्य भक्ष्यत्वं प्रतिपाद्य अग्रे तदेव स्कान्दवचनद्वयमुपन्यस्य तद्भक्तिहीनविषयमित्युक्तम् । युक्तं चैतत्; भक्तिराहित्येऽपि सामान्यान्नबुद्ध्या तद्भक्षणस्य—

"न चोपजीवेद्देवेशं न निर्माल्यानि भक्षयेत्"

इतीन्द्ररात्रादिवचनैः प्रतिषिद्धत्वात् । भक्तिमद्भिस्तु, एकादशस्कन्धाद्युक्तरीत्या सर्वलाभोपहरणं कृत्वा तन्निवेदितान्नादिभिरेव शरीरनिर्वाहो विधेयः ।

भागवततत्त्वभास्करे भागवतधर्मानुपक्रम्य विष्णुयामले "ब्राह्मे मुहूर्ते उत्थान"मित्यारभ्य सर्वं भोजनात्प्राक्कृत्यमुक्त्वा,

"साधूनां स्वागतं पूजाशेषनैवेद्यभोजनम् ।
ताम्बूलशेषग्रहणं वैष्णवैः सह सङ्गमः" ॥ इत्युक्तेः,

वस्त्रादिकमपि भगवतेऽर्पयित्वैव धार्यम् ।

तत्रैव,

"विष्णोर्निवेदितानां तु वस्त्रादीनां च धारणम्" इत्युक्तेः ।

तथा, गृहादिकमपि भगवत्सम्बन्धित्वादेव संरक्षणीयम् । उक्तं च भक्तिमीमांसाद्वितीयाध्यायप्रथमाह्निके ( सू० ४४ )—"सम्मानबहुसम्माने"ति सूत्रव्याख्याने । तदीयताभावस्तु वसोरुपरिचरस्य ।

महाभारते शान्तिपर्वणि ( अ० ३३७ श्लो० १२७१८ )—

"आत्मराज्यं धनं चैव कलत्रं वाहनं तथा ।
एतद्भागवतं सर्वमिति तत्प्रेक्ष्यते सदा" ॥ इति ।

( अपि दीपावलोक म इत्यस्यानेकधा व्यवस्था , अन्त्यजाऽभक्तादिभ्यो नैवेद्यदाननिषेधः, अभक्तस्य भोजननिषेधः, रागतो भोजने विधिनिषेधविचार , सामिभुक्तनिषेध , वैष्णवं सात्त्वतेभ्य इत्यादिप्रतिपत्तिविचारः, स्वयमर्पितपरार्पितयोर्विषये विवेकः )

यत्तु,

"अपि दीपावलोकं मे नोपयुञ्ज्यानिवेदितम्"

इति भागवतवचनम् । तत्र नैवेद्यभक्षणविचारकारः, 'अपि दीपावलोकं म' इत्यत्र, अपिशब्दस्य पूर्वार्धेन सङ्गतिः, नैवेद्यपरत्वे पूर्वग्रन्थविरोधादित्याह । तस्यायमाशयः, 'कृतस्याप्यरिकीर्तनमि'ति योज्यम् । तेन निवेदितदीपालोकमात्रस्य निषेध इति । विपक्षे, पूर्वापरग्रन्थविरोधस्तु

"दास्येनात्मनिवेदनम्", "सर्वलाभोपहरणम्"

"यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।
तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते" ॥ इति

पूर्ववाक्यानामसङ्गतिरूपः । आत्मनोऽप्यग्राह्यत्वापत्तेः । सर्वलाभोपहरणेन जीवनासम्भवाज्जीवनोपयोगिलाभभिन्नलाभस्यैवार्पणे सर्वतदुपहरणासिद्धेश्च लोकेष्टस्यातिप्रियवस्तुजातयोरपि भगवत एव निवेदनीयत्वेन स्वस्य तदलाभापत्तेश्च । तस्माद्दासभूतैर्मोक्षप्रतिबन्धकमायां जिगीषुभिस्तन्महाप्रसादबुद्ध्या भोक्तव्यमेव । अथैतामपिशब्दयोजनां क्लिष्टां मन्यमानः श्रीधरस्वामी त्विह, स्वयमन्येन वा निवेदितं न स्वीकुर्यात्, एतच्च साधारणस्थावरविषयं रागप्राप्तविषयं वा । भक्त्या तु ग्राह्यमेव ।

"षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्तितम् ।
विष्णोर्नैवेद्यसिक्थेन पुण्यं तद्भुञ्जतां कलौ ॥
हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः" ॥ इत्यादिवचनेभ्यः ।

यद्वा, अन्यस्मै निवेदितं मे नोपयुञ्ज्यात्, मह्यं न निवेदयेदित्यर्थः ।

"विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चैव तद्देयं तदानन्त्याय कल्पते ॥
पितृशेषं तु यो दद्याद्धरये परमात्मने ।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः" ॥

इत्यादिवचनेभ्य इति व्याचख्यौ ।

अत्र स्थावरप्रतिमानैवेद्यभक्षणस्याप्यनेकत्र शास्त्रसदाचारसिद्धत्वात्प्रथमपक्षारुच्या रागप्राप्तविषयं वेति पक्षान्तरमुक्तम् ।

तदेव सारसङ्ग्रहे भृगुसंहितायां स्फुटीकृतम्—

"उपवासव्रतानां च भक्तानां ब्रह्मचारिणाम् ।
विष्णुतीर्थं प्रसादं च स्वीकुर्याद्भक्तियोगतः ॥
रसगन्धादिलाभेन स्वीकुर्याद्भक्तिकण्टकः" ॥ इति ।

अत्र पूर्वार्धे हस्तादिति शेषः । तृतीयार्धे तु यः स्वीकुर्यात्स भक्तिकण्टक इत्यर्थः ।

तथा, तत्रैव विष्णुरहस्ये—

"मन्त्रपूतं हि नैवेद्यं निषिद्धाय ददाति यः ।
सिद्धोऽपि पातकी नित्यमारुरुक्षुस्तु किं पुनः ॥

निषिद्धास्तु भक्तिहीननास्तिकचाण्डालादयः । मन्त्रपूतमित्यनेनामन्त्रनिवेदितदाने तु न दोष इत्यन्ये ।

पुनस्तत्रैव भारते—

"अन्त्यजाय तु यो दद्याद्विष्णुशेषं हविः स्वयम् ।
निरयं स महाघोरं रौरवं प्राप्नुयान्नरः ॥
भगवद्भक्तिहीनस्य नैवेद्यं विषमुच्यते ।
भगवद्भक्तियुक्तस्य तदेव चामृतं भवेत्" ॥

वाराहे—

"विष्णूच्छिष्टं न दातव्यं नाभक्ताय कदाचन ।
दाता प्रतिग्रहीता च उभौ नरकभागिनौ" ॥

अतो निषेधा भक्तिहीनसाधारणान्नबुद्धिरागमात्रभोजिविषयाः, विधयश्च, तदतिरिक्तास्तिकचातुर्वर्णिकविषया इति श्रीधराद्यभिमता व्यवस्था ।

अथ महाप्रसादबुद्धीनां भक्तानां तु रागतो भोजनेऽपि पापनाशो भवत्येव ।

"भक्त्या लोभात्कौतुकाद्वा क्षुधासंशमनेऽपि वा ।
आकण्ठं भक्षितं तद्धि पुनाति सकलादघात्" ॥ इत्यादिवचनेभ्यः ।

अनयैवारुच्या श्रीधरस्वामिना यद्वेति व्याख्यानान्तरं कृतम् । उचितं चैतत् ।

नारदपञ्चरात्रे चतुर्थरात्रैकादशाध्याये द्वात्रिंशदपराधनिरूपणे ( श्लो० १५ )—

"शक्तौ गौणोपचारश्च अनिवेदितभक्षणम् ।
तत्तत्कालभवानाञ्च फलादीनामनर्पणम् ॥
विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनस्य च" इति,

इतरदेवादिविनियुक्तावशिष्टवस्त्वर्पणस्याऽपराधत्वकथनात् ।

भागवततत्त्वभास्करे तु, इदमेव प्रदानव्यञ्जनादिकमिति पाठभेदेन प्राप्तवचस्त्वेनोपन्यस्तम् ।

आस्तामेतत्—

अतो निषेधाभावाद्बहुलविधिसत्त्वादन्यावश्यकत्वाच्च, सर्वैरप्यास्तिकैर्भगवत्प्रसादो भोज्य एव ।

यानि तु क्वचित्—

"ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवश्च प्रदीयते" । इति,
"वैष्णवं सात्त्वतेभ्यश्च" ॥

इत्यादिवचांस्युक्तानि तानि सङ्कल्प्य निवेदितस्य स्वयमभोज्यत्वात्तथा निवेदितान्नादि-प्रतिपत्तिबोधकानीत्येकः पक्षः ।

ब्राह्मणेभ्यो वैष्णवेभ्यश्चादत्वा भगवत्प्रसादः स्वेन न भोज्य इत्येवम्बोधकानीत्यपरः ।

"साधूनां स्वागतं पूजा शेषनैवेद्यभोजनमि"त्यादि ।

विष्णुयामलादिवचनेषु तथा प्रतीतेः । नतु, स्वनिवेदितं निवेदकेन नैव भोक्तव्यमिति तात्पर्यवन्ति । वचनस्वारस्याभावात् । विधिशतव्याकोपाच्च ।

विधीयते च स्वयमर्पितग्रहणं भक्तिसूत्रद्वितीयाध्याये ( सू० ६८ )—

"स्वयमर्पितं ग्राह्यमविशेषादि"ति ।

नन्वेवं परार्पितस्याग्राह्यतैव प्रसज्यते इति चेदयमस्य सूत्रस्य निष्कर्षः ।

यत्र प्रतिमादौ बहवः स्वस्वसत्ताकवस्तु निवेदका भवेयुस्तत्र स्वयमर्पितमेव स्वेन स्वेनोपभोक्तव्यं न तु निवेदकानभ्यनुज्ञातं परार्पितमपि । परसत्ताकतदनभ्यनुज्ञातभगवदर्पितग्रहणे दोषस्मरणादिति ।

अथ परार्पितमपि तन्निवेदकेन भगवद्भक्तेन दीयमानं तु प्रसादं यथायोग्यं गृह्णीयादेव ।

"उपवासव्रतानां च भक्तानां ब्रह्मचारिणाम् ।
विष्णुतीर्थं प्रसादं च स्वीकुर्याद्भक्तियोगतः" ॥ इति,

भृगुसंहितादिषु तद्विधानात् । "वैष्णवं च प्रदीयते" इति ब्रह्मपुराणादिवचःस्वपि तथैव प्रतीतेः । "अन्नं न निन्द्यात्", "अन्नं परिचक्षीत" इत्यादिश्रुतिभ्यः सामान्यतोऽन्नप्रत्याख्याने निषिद्धे प्रसादरूपस्य तस्य सुतरामप्यनेकवचसां श्रीजगन्नाथमाहात्म्यादिषूपलब्धेश्च । अथ तत्रापि ज्ञात्यादिविचारस्त्वावश्यक एवेति तत्त्वम् । तेन परार्पितस्य सर्वथा अग्रहणं प्रत्युक्तम् ।

इह, केचित्तु, रागतो भोजननिषेधः परार्पितविषयः, भृगुसंहितादिवचनस्वारस्यात् । स्वयमर्पितं तु सर्वदा ग्राह्यमेव, रागारागयोरविशेषादिति सूत्रतात्पर्यम् । तेन "भक्त्या लोभात्कौतुकाद्वा" इति पाद्मादिवचांसि स्वार्पितविषयाणीत्याहुः ।

अथैतद्भाष्ये स्वप्नेश्वरस्तु पूजायां भगवते दत्तनैवेद्यनिर्माल्यादिकं "वैष्णवं सात्त्वतेभ्यः" इत्यादिना प्रतिपाद्यत्वेन विहितं तदिह सात्त्वतत्वाविशेषादेव भगवद्भक्तेन स्वयमपि ग्राह्यम् । भोजनधारणादिना स्वोपकार्यमित्यर्थः । स्वयमपि ग्रहणे प्रतिपत्तिः सिध्यति । धर्मशाठ्यं तु वर्जनीयमेव । यथा, अग्न्याद्युद्देशेन पुरोडाशस्यापि उत्तरार्धा-

त्स्विष्टकृतमवद्यति, यजमानपञ्चमाः पुरोडाशं भक्षयन्ति, इतिं प्रतिपत्तिस्तथेदमपि वचनादेव। अन्यथा, सात्त्वतेभ्योऽपि न प्रतिपादयेत्परद्रव्यत्वात्। वचनादिति चेत्, नः न हि वचने स्ववर्जनमुक्तम्। अथ "ब्राह्मणेभ्यो दद्यादि"त्यादिना ब्राह्मणत्वादात्मनेऽपि दानप्रसङ्ग इति चेत्, नः दानस्य स्वस्वत्वध्वंसेन परस्वत्वापादनरूपत्वात्। न चैवं प्रतिपत्तौ युक्तम्, पुरोडाशस्यापि यजमाने प्रतिपत्तिदर्शनात् क्रियादिवत्प्रतिपत्तिरपि स्वत्वापादिकैवेत्याद्याह। अतो भाष्यानुसारेण तु स्वयम्पदस्य ग्राह्यमित्यनेन सम्बन्धः प्रतीयते, न त्वर्पितमित्यनेनेति न कोऽपि चोद्यावसरः।

अथ भगवत उपानयनत्वेन निवेदितं सुवर्णरजतरत्नपात्राभरणाश्वभूम्यादिकं तु स्वार्पितं परार्पितं वा नैव ग्राह्यम्। देवस्वत्वादित्यन्यत्र विस्तरः।

तस्मात्, भगवन्निवेदितं यथार्हं सर्वैर्भोक्तव्यमेव, नित्यत्वात्। अस्ति हि नैवेद्यभक्षणस्य नित्यत्वम्, तदभक्षणे प्रत्यवायश्रवणात्। यच्चाहारार्थं गृहे पच्यते, तस्यापि भगवतेऽनिवेदितस्याशने दोषातिशयश्रावणाच्च।

(घण्टावादनादिपूर्वं नैवेद्यार्पणं, यदाहाराद्यर्थं कृतं तत्सर्वमर्पणीयम्, अनिवेदितस्य भक्षणे, निवेदितस्यानादरेऽपि च दोषः)

यथाऽऽचारप्रकाशे भगवत्पूजानिरूपणे गारुडे—

"नैवेद्यं तुलसीमिश्रं घण्टाद्यैर्जयनिःस्वनैः।
नीराजनैश्च हरये दद्यादापोशनं ततः"॥

ब्रह्माण्डे—

"पत्रं पुष्पं फलं तोयमन्नं पानीयमौषधम्।
अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम्"॥

कौर्मेऽपि—

"अनर्पयित्वा गोविन्दे यैर्भुक्तं धर्मवर्जितम्।
शुनो विष्ठासमं चान्नं नीरं च सुरया समम्"॥ इति।

दूषणोद्धारे च सदाचारचन्द्रोदयेऽपीदमेवोपन्यस्तम्।

सारसङ्ग्रहे पाद्मे—

"भक्त्या लोभात्कौतुकाद्वा क्षुधासंशमनेऽपि वा।
आकण्ठं भक्षितं यद्वै पुनाति सकलादघात्॥
ममान्नं निःक्षिपेद्यस्तु मम निन्दां करोति यः।
मद्दर्शनेन यत्पुण्यं तत्सर्वं तस्य नश्यति॥
विष्णोर्निवेदितान्नं यो नाश्नाति स्पर्शशङ्कया।
वायसो विड्वराहश्च विष्ठायां जायते कृमिः"॥ इति।

परमेष्ठिसंहितायाम्—

"सन्त्यज्य विष्णुनैवेद्यं यः कुर्यादन्नभक्षणम् ।
स याति नरकं घोरं यावच्चन्द्रदिवाकरौ" ॥ इति ।

स्कान्दे—

"तीर्थैः प्रवित्रितो वापि तपस्वी वा जितेन्द्रियः ।
नारायणस्य नैवेद्यमभुक्त्वा पतितः क्षणात्" ॥ इति ।

वाराहे—

"मदन्नत्याजिनं मूढं तथा मद्भक्तदूषकम् ।
कल्पकोटिशतेनापि न क्षमामि कदाचन" ॥ इति ।

उशना आह—

"ग्रामप्रतिष्ठाशेषं तु गृहार्चायां निवेदयेत् ।
ततोऽन्तर्यामिणे दद्यात्स्वयम्भुञ्जीत वैष्णवः ॥
प्राणेभ्यो जुहुयादन्नं मन्निवेदितमुत्तमम् ।
ममापि हृदयस्थस्य पितृभ्यश्च विशेषतः ॥
स्रक्चन्द्रनादि ताम्बूलं यो भुङ्क्ते नार्पितं हरेः ।
कल्पकोटिसहस्राणि रेतोविण्मूत्रभुग्भवेत् ॥
अनिवेदितमन्नाद्यं यो भुङ्क्ते मूढचेतसा ।
श्वानविष्ठासमं चान्नं पानं तत्सुरया समम् ॥
पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम् ।
नार्पयन्ति च ये विष्णोस्तुल्यं गोमांसभक्षणैः ॥ इति ।

पञ्चरात्रे—

"अवैष्णवानां पक्वान्नं पतितान्नं तथैव च ।
अनर्पितं तथा विष्णोः श्वमांससदृशं भवेत्" ॥ इति ।

नारदपञ्चरात्रद्वितीयरात्रद्वितीयाध्याये नारदं प्रति महादेवः ( श्लो० ६५ )—

"कृष्णानुग्रहतो विद्वाँल्लब्ध्वा च जन्म भारते ।
न भजेत्कृष्णपादाब्जं तदत्यन्तविडम्बनम् ॥
असार्थकं तस्य जन्म वृथा तद्गर्भयातना ।
निष्फलं तच्छरीरं च नश्वरं व्यर्थजीवनम् ॥
जीवन्मृतो हि पापी स चाण्डालादधमोऽशुचिः ।
भुङ्क्ते नित्यमभक्ष्यं च नित्यं भुङ्क्ते च सूकरः ॥
न हि कृत्स्नमभक्ष्यं च भुङ्क्ते स सूकराधमः ।

अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम् ।
नित्यं पादोदकं भुङ्क्ते नैवेद्यं च हरेर्द्विज ॥
तन्मन्त्रग्रहणं कृत्वा जीवन्मुक्तो हि भारते ।
तस्यैव पादरजसा सद्यःपूता वसुन्धरा ॥
सर्वाण्येव हि तीर्थानि पवित्राणि च नारद ।
स एव शुद्धः सर्वेषु सद्यो मुक्तो महीतले ॥
पदे पदेऽश्वमेधस्य लभते निश्चितं फलम्" ॥ इति ।

तत्रैव प्रथमरात्रद्वितीयाध्याये सनत्कुमारनारदौ प्रति ब्रह्मदेवः ( श्लो० ४२ )—

"ब्राह्मणानां स्वधर्मश्च सन्ततं कृष्णसेवनम् ।
नित्यं ते भुञ्जते सन्तस्तन्नैवेद्यं पदोदकम् ॥
न दत्वा हरये यस्तु यदि भुङ्क्ते द्विजाधमः ।
अन्नं विष्ठासमं मूत्रसमं तोयं विदुर्बुधाः ॥
भुङ्क्ते स्वभक्ष्यं कोलश्च म्लेच्छश्च श्वपचाधमः ।
विप्रो नित्यमभक्ष्यं च भुङ्क्ते च पतितस्ततः" ॥ इति ।

तथा, स्कान्दे, मार्गशीर्षमाहात्म्यचतुर्दशाध्याये ब्रह्माणं प्रति भगवान् ( श्लो० २८ )—

"अनर्पयित्वा यो भुङ्क्ते अन्नं पानादिकं च यत् ।
श्वानविष्ठासमं चान्नं पानं च मदिरासमम् ।
तस्मान्ममार्पयेत्पुत्र अन्नपानादि चौषधम् ।
भक्षयेत्परया भक्त्या अशुचेः शुचिकारणम्" ॥ इति ।

( अनेकग्रन्थेष्वनिवेदितभक्षणस्यापराधत्वम् , एतन्निषेधिका श्रुतिश्च )

तथा, कमलाकरभट्टकृताह्निके भगवत्सेवनविषयकद्वात्रिंशदपराधनिरूपणे वाराहे— "नाजिघ्रेदनिवेदितमि"ति भगवतेऽनिवेदितस्याघ्राणमपि निषिध्यते किम्पुनर्भक्षणम् ? नारदपञ्चरात्रे चतुर्थरात्रैकादशाध्याये द्वात्रिंशदपराधकथने ( श्लो० १५ )—

"शक्तौ गौणोपचारश्च, अनिवेदितभक्षणम् ।
तत्तत्कालभवानां च फलादीनामनर्पणम्" ॥ इति ।

तदेवोच्यते कमलाकराह्निके, अगस्त्योक्तापराधेषु—

"कालोद्भवफलादीनामनिवेदितभक्षणम् ।
इत्येते ह्यपराधा वै अगस्त्येन प्रदर्शिताः" ॥ इति ।

तथा, नैवेद्यभक्षणविचारग्रन्थे गारुडे शातातपकथनप्रस्तावे—

"अनिवेदितमश्नाति शङ्खचक्रगदाभृते ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः" ॥

तथा, नृसिंहपरिचर्यायां ब्रह्माण्डे—

"पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम् ।
विष्ण्वर्पितं हि भोक्तव्यं यदाहाराय कल्पितम् ॥
अनिवेद्य प्रभुञ्जानः सप्तकल्पानि नारकी" ॥

तथा, तैत्तिरीयब्राह्मणे—

"केवलाघो भवति केवलादी । अहं मेघः स्तनयन् वर्षन्नसि" इत्यादि । भगवत एव मेघरूपेण वृष्टिकर्तृत्वात्, अग्रे, "मदादित्या अधि सर्वे तपन्ति" इति तस्यैव सूर्यातपप्रवर्तकत्वाच्च वृष्ट्यातपाभ्यां तेनैवोत्पादितमन्नं तस्मा अनिवेद्य भुञ्जानः केवलं पापरूप एव भवतीत्यर्थः ।

अत्रैव "मामदन्त्यहमद्म्यन्यान् अहꣳसदमृतो भवामि" इति श्रावितो भगवत एवान्नातृभावस्तु आचारमाधवप्रथमाध्याये विष्णुपुराणेऽपि दर्शितः—

"विष्णुरत्ता तथैवान्नं परिणामश्च वै तथा" इति ।

(आत्मार्थपाके दोष)

तस्मात्, पाकादिकमपि, पूर्वं भगवन्तं ततस्तदवयवभूतान्देवादींश्चोद्दिश्यैव कुर्यान्न-त्वात्मोद्देशेन ।

अत एव स्मरति तृतीयाध्याये मनुः (श्लो० ११८)—

"अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्" इति ।

पुनरेकादशाध्याये उपपातकानि गणयन् स एवाह (श्लो० ६४)—

"आत्मार्थं च क्रियारम्भो निन्दितान्नादनं तथा" इति ।

याज्ञवल्क्यश्च तृतीयाध्याये कर्मविपाकादिनिरूपणप्रकरणे उपपातकगणनायाम् (श्लो० २३)—

"आत्मनोऽर्थे क्रियारम्भो मद्यपः स्त्रीनिषेवणम्" इत्याह ।

नचात्र, क्रियाशब्दस्य पाकमात्रपरत्वे प्रमाणाभावः शङ्क्यः । इह, तथाऽऽत्मार्थं च पाकलक्षणक्रियारम्भः ।

"अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्"

इति तस्यैव प्रतिषिद्धत्वात् । क्रियामात्रविषयत्वे तु प्रतिषेधकल्पनायां गौरवं स्यादिति विज्ञानेश्वरकृतेरेव प्रमाणत्वात् ।

किञ्चात्रैव मिताक्षरायामुपपातकानि गणयन् विष्णुः—अभोज्यान्नभोजनं परस्त्रा-पहरणमिति । तथा, आत्मार्थं क्रियारम्भोऽनाहिताग्नितेत्याह । अतः पातकरूपत्वा-

देव निषेधत्यात्मार्थपाकमाचाराध्यायेऽपि गृह्यप्रकरणे याज्ञवल्क्यः ( श्लो० ८ )—

"न पचेदन्नमात्मने" इति ।

अत्रैव मिताक्षरायां "न पचेदन्नमात्मार्थम्" अन्नग्रहणं सकलादनीयप्रदर्शनार्थमिति विज्ञानेश्वरः ।

मदनपारिजाते तृतीयस्तबके मार्कण्डेयपुराणे—

"आत्मार्थं पचनं यस्य रत्यर्थं यस्य मैथुनम् ।
वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम्" ॥ इति ।

( वृथा कृसरसंयावादेरभक्ष्यता, तत्स्वरूप भक्षणे प्रायश्चित्तम् )

किञ्च, भगवदनुद्देशेन पक्वाः कृसरसंयावादयो वृथेत्युच्यन्ते; तेषां च वर्जनीयत्वमाह पञ्चमाध्याये मनुः ( श्लो० ६ )—

"शैलुं गव्यं च पेयूषं यत्नतः परिवर्जयेत् ।
वृथाकृसरसंयावं पायसापूपमेव च ॥
अनुपाकृतमांसानि देवान्नानि हवींषि च" ॥ इति ।

शैलुं श्लेष्मातकफलम् । गव्यं पेयूषं नवप्रसूतेर्गोर्घनीभावशालि दुग्धम् । एतद्व्याख्याने, देवताद्यनुद्देशेन, आत्मार्थं यत्पच्यते तद्वृथा । कृसरस्तिलेन सह सिद्ध ओदनः । तथा च, छन्दोगपरिशिष्टम्—

"तिलतण्डुलसम्पृक्तः कृसरः सोऽभिधीयते" ।

संयावं शृतक्षीरगुडगोधूमचूर्णसिद्धस्तत्करिकेति प्रसिद्धः । क्षीरतण्डुलमिश्रः पायसः । अपूपः पिष्टकः । एतान् वृथा पक्वान् विवर्जयेत् । पशुयागादौ पशोः स्पर्शनमुपाकरणं, तद्रहितः पशुरनुपाकृतः, तस्य मांसानि । देवान्नानि नैवेद्यार्थमन्नानि प्राङ्निवेदनात्, हवींषि च पुरोडाशादीनि होमात्प्राग्विवर्जयेदिति कुल्लूकभट्टः ।

पुनरेकादशाध्याये मनुः ( श्लो० ५६ )—

"गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट्" इति ।

गर्हितस्य इति गर्हितस्य लशुनादेरिति व्याख्या । लशुनादिषु च मनुना पञ्चमाध्याये वृथा कृसरादिकमपि गणितम् ।

याज्ञवल्क्यश्च प्रथमाध्याये भक्ष्याभक्ष्यप्रकरणे ( श्लो० ७ )—

"वृथाकृसरसंयावपायसापूपशष्कुलीः" ।

इति वृथाकृसरादीनभक्ष्यत्वेनाह ।

नन्विह कृसरादिपरिगणनात् तदितरस्य तु अनिवेदितस्यापि भक्षणे न दोष इति चेत्, न; अत्रैव मिताक्षरायां "न पचेदन्नमात्मने" इति कृसरादीनां निषेधे सिद्धे पुनर-

भिधानं प्रायश्चित्तगौरवार्थमित्युक्तेः । इह कोयष्टिकादीनां कलविङ्कादीनां च मध्ये गणनात्, मांसभक्षणप्रायश्चित्तं युज्यत इति कश्चित् । मनूक्तगर्हितादनप्रायश्चित्तमत्रो- चितमित्यपरः । तत्र कामतारतम्येनाभ्यासतारतम्येन च व्यवस्थास्त्विति भाति ।

मिताक्षरायां तु तृतीयाध्याये अभक्ष्यभक्षणप्रायश्चित्तप्रकरणे लिखित आह—

"वृथाकृसरसंयावपायसापूपशष्कुलीः ।
आहिताग्निर्द्विजो भुक्त्वा प्राजापत्यं समाचरेत्" ॥ इति.।

अनाहिताग्नेस्तु शेषेषूपवसेदहरित्युपवासो द्रष्टव्य इति विज्ञानेश्वरः ।

न च देवताद्युद्देशमन्तरेण साधिता इति विज्ञानेश्वरेण व्याख्यानाद्वैश्वदेवे अनुपयो- जितमेव कृसरादिकं वृथा न तु भगवदनर्पितमपीति शङ्क्यम्,

स्मृत्यर्थसारे—वैश्वदेवादिरहितान्नभोजने वृथाकृसरसंयावपायसापूपशष्कुलीमधु- मांसानां चामत्योपवासो, मत्या त्रिरात्रं, कार्यं वाऽकार्यं, आहिताग्निस्तु त्रिरात्रं, कार्यं वा कुर्यादिति भेदनिर्देशपूर्वकं प्रायश्चित्तोपदेशात् ।

अत्र वृथाकृसरादीनां वैश्वदेवादित्यादिपदसङ्गृहीतसर्वपाकयज्ञानुपयुक्तानान्द्भेदप्र- तीतेः । भगवता सर्वादिदेवत्वेन सर्वदेवानां तदवयवत्वेन च प्रकृते विज्ञानेश्वरादि- व्याख्याविरोधाभावाच्च ।

कमलाकराह्निके विष्णुपूजायाम्—

"अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।
भक्ष्यभोज्यसमायुक्तं नैवेद्यं तु समर्पयेत्" ॥

एकादशस्कन्धे ( अ० ११ )—

"यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।
तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते" ॥

एवमादिवचनैः कृसरादीनामुत्तमवस्तूनामवश्यसमर्पणीयताऽध्यवसायाच्च । आस्तामेतत् । एवमत्यावश्यकत्वात्सिद्धं भगवदर्पितभोजनस्य नित्यत्वम् ।

( सङ्ग्रहकारोक्तानां सहाशब्दप्रयोगादीना नित्यत्वज्ञापकाना प्रकृते सङ्गमन, सायम्प्रातर्नैवेदसेवाड्यम् )

नित्यत्वज्ञापकानि च सङ्ग्रहकारेणोक्तानि—

"नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्"

इत्युक्त्याऽतिक्रमे दोषश्रुतेरत्यागचोदनात् ।

"फलश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम्" इति ।

माधवादिभिरप्येतदेवोदाहृत्यैकादशीव्रतादिषु नित्यत्वं निर्णीतम् ।

तत्र प्रकृतविषये नित्यशब्दं प्रयुङ्क्ते भारद्वाजः—

"विष्णोर्निवेदितं नित्यं देवेभ्यो जुहुयाद्धविः" इत्यादि

"भुञ्जीयाच्च स्वयं नरः" इत्युपसंहारः ।

नारदपञ्चरात्रे—

"नित्यं ते भुञ्जते सन्तस्तन्नैवेद्यं पदोदकम्" इति ।

एवं सदाशब्दोऽपि द्रष्टव्यः ।

तथा, जीवनहेतुभूताहारार्थं सम्पादितवस्तुनोऽपि भगवते निवेद्यैव भोक्तव्यत्वस्मरणादार्थिकं यावदायुर्ग्रहणं दर्शितं प्राक् ।

तथा गीतायाम्—

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः" ॥ इति ।

अत्र यदश्नासीत्यादिना तदेव गम्यते । यदि सामान्यनिर्देशेन अन्नं वा पत्रपुष्पादिकं वा यदा यद्भोक्तव्यं तदा तदेव समर्पणीयमिति बोध्यते ।

उक्तं च तत्रैव—

"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" ॥

नारदपञ्चरात्रेऽपि—

"यावद्भक्ष्यं भवेत्पुंसस्तावद्दद्याज्जनार्दन" इति ।

आचारप्रकाशेऽपि पूजाप्रकरणात्पृथक्, "विष्णो इदं नैवेद्यं सम्पद्यताम् इदं विष्णवे" इति मन्त्रेणान्नस्य निवेदनमुक्तम् ।

अस्यानतिक्रमस्तु दर्शित आचारप्रकाशे ब्रह्माण्डे—

"अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम्" इति ।

भागवततत्त्वभास्करे—

"प्रसादाग्रहणं विष्णोर्वर्जयेद्वैष्णवः सदा" इति ।

अतिक्रमे दोषश्च श्रूयते—

"केवलाघो भवति केवलादी"
"अनर्पयित्वा गोविन्दे",
"नारायणस्य नैवेद्यमभुक्त्वा पतितः क्षणात्"
"ममान्नं निःक्षिपेद्यस्तु" इत्यादिषु ।

अत्यागचोदनं च,

"सन्त्यज्य विष्णुनैवेद्यं"
"मदभक्त्याजिनं सूदम्"

इत्यादौ स्पष्टं प्रतीयते ।

फलश्रुतिश्च तत्त्वभास्करे विष्णुयामले—

"साधूनां स्वागतं पूजा शेषनैवेद्यभोजनम्" इत्यादौ ।

अथ स्कान्दे मार्गशीर्षमाहात्म्ये भगवान् (अ० १४ श्लो० २४)—

"यदुक्तं भवता ब्रह्मन् भोक्तव्यं किं शृणुष्व तत् ।
भोक्तव्यं च ममोच्छिष्टं मम भक्तिपरायणैः ॥
पवित्रकरणं पुत्र पापिनामपि मुक्तिदम् ।
ममाशनस्य शेषं च यो भुनक्ति दिने दिने ॥
सिक्थे सिक्थे भवेत्पुण्यं चान्द्रायणशतोद्भवम्" ॥ इति ।

अत्र दिने दिन इति वीप्सा । तस्मात्सिद्धमस्य नित्यत्वम् ।

न च दिनपदाद्रात्रौ तद्भोजनप्रसङ्गः ।

गौतमतन्त्रे (अ० १४ श्लो० ९१)—

"विष्णोर्निवेदितान्नं यद्रात्रौ भुञ्जेदकुत्सयन् ।
यदन्ना देवता यस्य तदन्नः पुरुषो भवेत्" ॥ इति रात्रावपि भोजनविधानात् । तेन पूर्वत्र दिनपदमहोरात्रपरम् ।

इत्थं चैतावता,

"सायम्प्रातर्द्विजातीनामशनं श्रुतिचोदितम्" ॥

इत्यादिषूक्तं द्विवारमशनं भगवन्नैवेद्येनैव विधेयमिति सिद्धम् ।

तदेतत्सर्वमनुसन्धाय निष्कर्षो दर्शितः श्रीमदाचार्यैः—

"निवेदिभिः समर्प्यैव सर्वं कुर्यादिति स्थितिः" इति ।
"अन्यथा सर्वदोषाणां न निवृत्तिः कथञ्चन ।
असमर्पितवस्तूनां तस्माद्वर्जनमाचरेत्" ॥ इति च ।

निवेदिभिः सहेत्यर्थः । सहार्थकयोगविभागेऽपि "वृद्धो यूना" इति ज्ञापकात्सहार्थे तृतीया । अतो विस्पष्टतरेऽस्मिन् भगवदर्पितवस्तुग्रहणविषये बहुलविलेखनेनालम् ॥

इत्थम्,

"अच्युतार्पितवस्तूनां ग्रहणे सूरिसम्मता ।
विधीनां च निषेधानां व्यवस्था स्थापिता मया ॥ १ ॥
अतो रसमयाः शास्त्रसमयात्सुनिरामयाः ।
प्रसादं श्रीहरेर्भुक्त्वा प्रसादं यात सर्वदा ॥ २ ॥

---

## ( चत्वारिंशः प्रश्नः उत्तरकारिकाः विष्णुभिन्नस्य नैवेद्यभक्षणनिषेधः )

## देवतान्तरनिवेदितमन्नं भोज्यं न वा? ॥ ४० ॥

उत्तरम्—

देवतान्तरनैवेद्यभोजनं प्रतिषिद्ध्यते ।
सौरशाक्तादिनैवेद्यभुक्तौ कामादका मताः ॥ १ ॥
तत्र तत्र निबन्धेषु प्रायश्चित्तं प्रपञ्च्यते ।
शिवनिर्माल्यसंसर्गनिषेधः सुतरां मतः ॥ २ ॥
क्वचिद्विधिस्तु तद्भक्ते पञ्चदेवार्चकेऽथवा ।
प्रवर्तते तदन्नादेः शालग्रामेण शोधनात् ॥ ३ ॥
वैष्णवानां तदन्यत्वस्मरणात्ताद्दृशव्रतात् ।
सत्पारम्परिकाचारान्नारात्तत्सङ्ग इष्यते ॥ ४ ॥
तस्मान्न भोज्यमस्माभिः कस्मा अपि समर्पितम् ।
रमाधरसुधामिश्रं-हरिभुक्तं विनेतरत् ॥ ५ ॥

तथाहि—नारायणभट्टकृतधर्मप्रवृत्तौ देवपूजाप्रकरणे—

"पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत्" ॥ इति ।

सारसङ्ग्रहे पाराशरे—

"देवतान्तरभोक्ता वा समबुद्धिरथापि वा ।
नास्तिको वेदहीनो वा न प्रतिष्ठां समाचरेत्" ॥ इति ।

देवतान्तरशब्देन तन्निवेदितमन्नाद्यं लक्ष्यते ।

तत्रैव पद्मपुराणे—

"विष्णोर्नैवेद्यकं शुद्धं मुनिभिर्मोक्षकाङ्क्षिभिः ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥

अत्र पूर्वार्धे भुज्यत इति शेषः । प्रकरणादन्यशब्दश्च विष्णुभिन्नपर्यायः ।

स्कान्दे च मार्गशीर्षमाहात्म्यचतुर्दशाध्याये भगवान् ( श्लो० २५ )—
"भोक्तव्यं मम चोच्छिष्टम्" इत्यादिना स्वप्रसादस्यावश्यभोक्तव्यत्वमुक्त्वाह ( श्लो० ३१ )—

"अन्येषां देवतानां च न गृह्णीयाच्च भक्षितम् ।
अभक्तानां च पक्वान्नं भुक्त्वा च नरकं व्रजेत्" ॥ इति ।

अत्राप्यन्यशब्दः पूर्ववत् ॥

नचेदमाग्रहात्पञ्चदेवभिन्नदेवपरं कल्प्यम्, शैवसौरादिनैवेद्यभक्षणेऽपि प्रायश्चित्त-निरूपणात् । यथा स्मृत्यर्थसारे—शैवसौरनिर्माल्यनिवेद्यभक्षणे चान्द्रम् । अभ्यासे द्विगुणम् । मत्याऽभ्यासे सान्तपनम् । अन्यनिर्माल्ये त्वनापद्येवमिति ।

धर्मसिन्धौ च तृतीयपरिच्छेदपूर्वार्धे, शैवसौरनैवेद्यभक्षणे चान्द्रायणमित्यादि । अग्रे पूर्ववत् ।

प्रायश्चित्तेन्दुशेखरे; रुद्रनिर्माल्यस्पर्शे सचैलस्नानम् । शैवसौरनिर्माल्यनैवेद्यभक्षणे चान्द्रम् । अभ्यासे द्विगुणम् । अमत्याऽभ्यासे सान्तपनम् । अनापदि हरेरन्य-नैवेद्यभक्षणे एवमेव । विष्णोरनिवेदितभोजनेऽर्धकृच्छ्रप्रायश्चित्तम् । हरेर्निर्माल्यनैवेद्य-भक्षणे चान्द्रायणफलमिति स्मृत्यर्थसारे इति ।

तथा, श्राद्धहेमाद्रौ स्कान्दे—

"स्पृष्ट्वा रुद्रस्य निर्माल्यं वाससा आप्लुतः शुचिः" इति ।

निर्णयसिन्धौ तृतीयपरिच्छेदपूर्वार्धे चेदमुदाहृतम् ।

प्रायश्चित्तमयूखे तु, अथ रुद्रनिर्माल्यस्पर्शे कालिकापुराणे—

"स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः" इति—

तदेव कालिकापुराणवचनत्वेनोक्तम् ।

एवमितरेष्वपि प्रायश्चित्तहेमाद्रिमयूखप्रभृतिषु प्रमाणोपन्यासपुरःसरं सविस्तरमिदं निर्णीतमेवास्तीति निर्मत्सरधियाऽवधेयम् । विस्तरभयात्तद्ग्रन्थलेखनाद्विरम्यते ।

अतो भगवद्भिन्नसर्वदेवनैवेद्यभक्षणे यथाशास्त्रं प्रायश्चित्तानां तत्र तत्र प्रामाणिक-ग्रन्थेषु व्यवस्थापितत्वान्नेकेनापि तान्यदनीयानि ।

इत्थमेव देवयोनीनां यक्षादीनामप्यन्नं निषेधत्येकादशाध्याये मनुः ( श्लो० ९२ )—

"यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् ।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः" ॥ इति ।

( षड्विधनिर्माल्यानि, पराभिमतव्यवस्थाखण्डनपूर्वकं विधिनिषेधयोरनेकधाव्यवस्थाश्रुतेश्च )

अथ, भवत्प्रश्नवाक्ये निवेदितपददर्शनादिदं प्रतिभाति, यद्भवदिष्टतया श्रूयमाण-सदानन्दगिरिकृतशैवसुधाकरोदाहृतनारदवचनानुसारेण निर्माल्यषाड्विध्यमङ्गीकृत्य तत्र पञ्चविधस्य प्रतिषेधः । निवेदितस्य भक्षणं तु विधिविषयः इति भवद्भिः स्वीक्रियत इति । तत्र, नारदवचनोपन्यासस्तु सदानन्दगिरिणा कृतः । तत्र व्यवस्थामाह नारदः—

"शिवानुभूतमखिलं निर्माल्यं परिभाषते ।
भोज्यं धार्यमिति द्वेधा षड्विधं च तदिष्यते ॥

देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितम् ।
चण्डद्रव्यं बहिःक्षिप्तं निर्माल्यं षड्विधं मतम्" ॥

इति निर्माल्यषड्विधत्वमुक्त्वा, दासीदासादीनां देवस्वत्वं हेमरूप्यकरत्नादीनां देवताद्रव्यत्वं सङ्कल्पपूर्वकं समर्पितानामन्नजलादीनां नैवेद्यत्वं चोक्त्वा,

"एतत्त्रिविधनिर्माल्यमनर्हमिति कथ्यते ।
प्रमादाद्भोजनं कुर्वन् भूमौ स स्यादमङ्गलः" ॥

इति, एतत्त्रिविधस्याप्यस्य भोजनं निन्दित्वा,

"शिवोपभुक्तस्रग्गन्धमन्नपानादिकं तथा ।
निवेदितमिति प्रोक्तं सर्वपापहरं परम्" ॥

इति निवेदितस्रग्गन्धादिभोजनं संस्तुत्य चण्डद्रव्यबहिःप्रक्षिप्तयोरभक्ष्यत्वमुक्त्वा, इदमाह—

"निर्माल्यं षड्विधं भोज्यमेकमेव निवेदितम्" ।

अतो यानि विधायकवचनानि तानि निवेदितविषयाणि । यानि तु निषेधवाक्यानि तानि देवस्वादिपञ्चविधनिर्माल्यविषयाणीति नारदसम्मता व्यवस्था वेदितव्येत्येवं शैवसुधाकरे कृताः । तत्र यद्यपि मया ग्रन्थान्तरे अयुक्ता शैवसुधाकरभागाः पङ्क्तिशः खण्डनीया एव, तथापि भवत्तोषार्थं किञ्चिदिहोच्यते ।

भवन्मते यदि सर्वसाधारण्येन शिवनिवेदितग्रहणमभिमतम्, तर्हि शास्त्रसिद्धानां तद्भक्षणे चान्द्रायणादिप्रायश्चित्तानां का वा गतिरिति चिन्त्यताम् ।

अथ नारदोक्तरीत्या नैवेद्यनिवेद्ययोर्भेदेन प्रायश्चित्तविधायकग्रन्थेषु च नैवेद्यशब्दोल्लेखेन प्रायश्चित्तानि तद्विषयाणीति चेद्ब्रूषे ? तर्हि,

"मद्यमन्नं प्रयत्नेन निवेद्याश्नाति यः सदा ।
स भूपालः सर्ववेत्ता भवत्येव हि सर्वथा ॥
अतीतानागतं ज्ञानं भूपालत्वं च शाश्वतम् ।
जातिस्मरत्वं सौन्दर्यं मन्नैवेद्यस्य भक्षणात् ॥
मन्नैवेद्यमनुच्छिष्टं मत्वाऽनुच्छिष्टमुत्तमम् ।
योऽश्नाति स तु सर्वज्ञः स भूपालोऽपि जायते ॥
निर्माल्यसलिलं पीत्वा देवस्य मम शूलिनः ।
क्षयापस्मारकुष्ठाद्यैः सद्यो मुच्येत बन्धनात् ॥
निर्माल्यं परमं पुण्यं नैवेद्यं पापनाशनम् ।
ब्रह्मचारिगृहस्थानां यतीनां च विमुक्तिदम्" ॥

इति स्वस्मिन्निबद्धश्रद्धराजव्यामोहनार्थं विधिवाक्यतया तदुदाहृतब्रह्माण्डवचनविरोधात् । अत्र स्फुटं नैवेद्यशब्दोपादानपुरःसरं तत्प्रशंसनात् ।

अथ मया, शिवदीक्षावतस्तु पञ्चविधनिर्माल्यस्यापि ग्राह्यता स्वीकृतेत्यविरोध इति चेत्तर्हि, इमानि वचनानि पारम्परिकशिवदीक्षाविशिष्टराजमात्रविषयाणि तादृशब्रह्मचर्यादिविषयाणि चेति त्वया स्वमुखेनैवोरीकृतमिदानीम् । तथा सति परम्परातः सर्वदर्शनानुसारिणामविरोधेन सर्वधर्मपरिपालकानां विशेषतो वैष्णवानां बहूनां राज्ञामीदृशवचसां सर्वराजसाधारण्यप्रदर्शनेन व्यामोहनादितः परं विरम्यताम् ।

अथ यदि स्वपरिभाषामुल्लङ्घ्य ब्रह्माण्डस्थनैवेद्यशब्दस्य निवेदितपरत्वं स्वीक्रियेत, तदा तु "अनर्हं मम नैवेद्यमि"त्यादिवचनेष्वपि, तथा, तद्भक्षणप्रायश्चित्तविधायकग्रन्थेष्वपि नैवेद्यशब्दस्य निवेदितपरत्वकथनेन मुखबन्धो भवतीति तथैव स्वीकुरु ।

अथैवं सति विधिनिषेधयोः कथं व्यवस्था स्यादिति चेदुक्तरीत्या निवेदितस्य विहितप्रतिषिद्धत्वान्नारदोक्तविधेः शैवमात्रपरत्वम्; निषेधश्च तदितरसर्वसाधारण इति स्यादेव सा ।

न चैवं सति शैवस्यापि निवेदितमात्रग्रहणं प्राप्तम्, न तु तदतिरिक्ताभरणादिग्रहणं देवताद्रव्यत्वात्,—

तथा च सति—

"पुष्पं फलं सुगन्धं च वस्त्राण्याभरणानि च ।
शिवार्पितानि स्वीकुर्यादन्यथा पातकी भवेत्" ॥

इत्यादिमदुदाहृतलैङ्गादिवचनानां का गतिः स्यात्? ईदृशानां विधीनां शैवमात्रपरत्वं निवेदितमात्रग्रहणस्य सर्वसाधारणत्वमिति मदुक्तव्यवस्थाया भवद्भिः स्वीकृतत्वादिति शङ्क्यम्; लैङ्गस्याभरणग्रहणादिविधेर्नारदोक्ततन्निषेधस्य च शैवमात्रविषयकत्वेऽपि त्वदुदाहृतवचनादनुपदमग्रिमेण त्वयाऽप्युदाहृतेन—

"शिवाग्रे शिवनिर्माल्यं गृह्णीतैव शिवद्विजात् ।
स्वयमेवाददानस्तु नरकं प्रतिपद्यते" ॥

इति लैङ्गवचनेन पूर्वोक्तविधेः शिवाग्रप्रदेशे शिवद्विजदत्तविषयकत्वम्, नारदोक्तनिषेधस्य च स्वयमादानविषकत्वमिति व्यवस्थासामञ्जस्यात् ।

सूतसंहितायाम्—

"शम्भोर्निर्माल्यकं शुद्धं भुञ्जीयात्सर्वतो द्विजः ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत्" ॥

स्कान्दे—

"प्रसादमन्यदेवस्य भुञ्जतां किल्बिषं भवेत् ।
शिवस्यैव तु निर्माल्यं भक्त्या धार्यं द्विजातिभिः ।।

इति वचनद्वयं तेनोपन्यस्तम्; तत्तु, बहुग्रन्थेषु सकृच्छैवनिर्माल्यभक्षणेऽपि चान्द्रायणविधानात्, अत्र च शिवातिरिक्तविष्ण्वादिनैवेद्यभक्षणे तद्विधानात्, प्रामाणिकनिबन्धेष्वस्य वचोद्वयस्यानुपलब्धेश्च कल्पितमिव भाति । तथाऽप्यकल्पितत्वनिश्चये सति तद्दुराग्रहिशैवपरमस्तु, उदितानुदितसिद्धनहिनिन्दान्यायेन शैवस्य तद्भक्षणस्तावकं वा, न तु कथञ्चिदपि सर्वसाधारणं भवितुमर्हति । बहुभिर्निर्मत्सरसर्वसाधारणग्रन्थकारैरनेकश्रुत्यादिवचनावलम्बेन विष्णुनैवेद्यभक्षणस्य, तदभक्षणे, तदनिवेदितभक्षणस्य च प्रत्यवायस्य तत्प्रायश्चित्तस्य च सम्यग्व्यवस्थापितत्वेन तत्प्रत्याचिख्यासाया विहायस्तलालिलिङ्क्षिषाकल्पत्वात् ।

या तु, "रुद्रभुक्तं भुञ्जीत रुद्रपीतं पिबेत्" इत्यादिः, "तस्माद्ब्राह्मणाः प्रशान्तमनसो निर्माल्यमेव भक्षयन्ती"त्यन्ता बृहज्जाबालश्रुतिस्तेनोपन्यस्ता, सा तु, उपक्रमोपसंहारादितात्पर्यलिङ्गपर्यालोचने शैवपरैव । तत्रापि, कालाग्निरुद्रबृहज्जाबालाद्यभ्यासाद्विरक्तमनस्कगृहाश्रमत्यागिशिवयोगाभ्यासिब्राह्मणपरैवेति स्फुटमुद्भाति । अयमेवार्थस्तल्लिखिते श्रुतिभागे "प्रशान्तमनस"इत्यनेनोच्यते ।

किञ्च, निर्माल्यमेवेत्येवकारेणावधारणात्तदतिरिक्तस्याभक्षणीयत्वं प्रतीयते । विधेः परिसङ्ख्यारूपत्वं च सदानन्दगिरिणैवोपपादितम् । तथा च सति, विष्णुनैवेद्यभक्षणादिविधिश्रुतयो निरवकाशत्वाद्व्याकुप्येरन् । अतोऽवधारणादिशून्यतद्विधिश्रुतिबलाज्जाबालश्रुतेः शिवैकोपासिमात्रपरत्वमिति युक्तम् । श्रुत्यन्तरबलेन श्रुतिसङ्कोचस्य जैमिन्यादिसम्मतत्वेन तत्र विरोधाभावात् । अस्याः श्रुतेर्विस्तरशः, पूर्वापरभागोपन्यासपूर्वकं निर्णयस्तु विस्तरभयादन्यत्र मया कृतत्वाच्चेह न क्रियते ।

अथ बहुलस्मृतिपुराणवाक्यैकवाक्यतयैतद्विचारे तु, इयं आयतनविशेषेष्वेव नैवेद्यादिग्रहणविधायिका शैवानमिति युक्तं भाति ।

तथाहि, निर्णयसिन्धौ च पुरुषार्थप्रबोधे भविष्ये—

"ज्योतिर्लिङ्गं विना लिङ्गं यः पूजयति सत्तमः ।
तस्य नैवेद्यनिर्माल्यभक्षणात्तप्तकृच्छ्रकम् ।।
शालग्रामोद्भवे लिङ्गे बाणलिङ्गे स्वयम्भुवि ।
रसलिङ्गे तथार्षे च सुप्रसिद्धप्रतिष्ठिते ।।
हृदये चन्द्रकान्ते च स्वर्णरौप्यादिनिर्मिते ।
शिवदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते" ।। इति ।

अत्रोपक्रमे यः पूजयतीति कथनादुपसंहारे च स्पष्टमेव शिवदीक्षावता भक्तेनेत्युक्तेश्चै-तेष्वपि निवेदितं भक्तिमच्छैवेनैव भोक्तव्यमिति सिध्यति, न तु साधारण्येन सर्वैरिति।

एतेन,

"बाणलिङ्गे स्वयम्भूते चन्द्रकान्ते हृदि स्थिते ।
चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम् ॥
लिङ्गे स्वयम्भवे बाणे रत्नजे रसनिर्मिते ।
सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत् ॥
यत्र चण्डाधिकारोऽस्ति तद्भोक्तव्यं न मानवैः ।
चण्डाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः" ॥

त्रैविक्रम्याम्—

"बाणलिङ्गे च लौहे च सिद्धलिङ्गे स्वयम्भुवि ।
प्रतिमासु च सर्वासु न चण्डोऽधितो भवेत्" ॥

कमलाकराह्निके स्कान्दे—

"बाणलिङ्गे स्वयम्भूते चन्द्राकान्तादिरत्नजे ।
सौवर्णे राजते शम्भोर्नैवेद्यमपि भक्षयेत् ॥

अपिशब्दात्तीर्थादि गृह्णीयात् । तदुक्तं तत्रैव —

"निर्माल्यं धारयेद्भक्त्याशिरसा पार्वतीपतेः ।
वाजिमेधस्य यज्ञस्य फलं प्राप्नोति निश्चितम्" ॥

इत्येवमादीनि वचांसि शैवपरत्वेनैव व्यवस्थापितानि वेदितव्यानि । भक्तित इत्युक्तेश्च ।

"पादोदकं च निर्माल्यं भक्तैर्धार्यं विशेषतः" ।

इत्याचारप्रकाशोदाहृताग्निपुराणाच्च ।

आचारार्के शिवनारदसम्वादे—

"बाणलिङ्गे न चण्डांशो, न च निर्माल्यकल्पना ।
सर्वं बाणार्पितं ग्राह्यं भक्त्या भक्तैश्च नान्यथा" ॥

इति वचनाच्च । तेन बाणलिङ्गे नैवेद्यादेर्ग्राह्याग्राह्यत्वविचारः शैवानामेव । निर्णयसि-न्ध्वाचारप्रकाशधर्मसिन्ध्वादिषु शैवैस्तथैव स्वीकाराच्च ।

यत्तु, काशीखण्डे—

"जलस्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः ।
एष जालन्धरो बन्धः समस्तसुरवल्लभः" ॥

तथा,

"स्नापयित्वा विधानेन यो लिङ्गस्नपनोदकम् ।
त्रिः पिबेत्त्रिविधं पापं तस्येहाशु विनश्यति ॥
लिङ्गस्नपनवार्भिर्यः कुर्याद् मूर्ध्न्यभिषेचनम् ।
गङ्गास्नानफलं तस्य जायतेऽत्र विपाप्मनः" ॥ इत्यादि,

तत्र, इदं पूर्ववाक्यवशाद्विश्वेश्वरविषयमिति केचित्, काशीस्थपुराणप्रसिद्धसर्वलिङ्गविषयं काशीखण्डे रत्नेश्वराख्याने तथैव दर्शनादित्यन्ये, इति पक्षद्वयं, निर्णयसिन्धुकारेणोपन्यस्तम् । तस्माच्छैवैरपि सर्वत्र सर्वलिङ्गार्पितं नैव ग्राह्यम्, किन्तु, बाणादिलिङ्गार्पितमेव ।

अथ कदाचिच्छ्रद्धातिशयवशेन क्वचित्स्थावरादिलिङ्गार्पितमपि तैर्गृह्येत, तदापि, निवेदितमेव ।

"निर्माल्ये षड्विधे भोज्यमेकमेव निवेदितम्"

इति तदुदाहृतनारदवचनात् ।

यत्तु, तेन प्रलपितम्—"इदं च निवेदितं शिवेतरदेवभक्तैरपि भोक्तव्यमि"ति, तदयुक्ततरम्, श्रुतेः शैवमात्रपरतायाः पूर्वं व्यवस्थापितत्वात् । शैवेतरस्य तद्भोजनावश्यकताविधायकप्रमान्तरानुपलब्धेः । तदुदाहृतशैवपुराणादिवचनानां शिवभुक्तस्य शैवैकभोज्यत्वप्रतिपादकानां नारदवचनेन कथञ्चिदपि बाधायोगात् । तद्वचसां निवेदितभोजनमेव शिवपुराणादिवचनैरितरानर्हत्वाच्छैवमात्रविषयकमिति कथने वचनैकवाक्यत्वसामञ्जस्यात् । बाणलिङ्गाद्यर्पितग्रहणस्याप्युक्तभविष्यादिवचनैः शैवमात्रविषयकत्वावधारणेन सर्वलिङ्गेष्वपि निवेदितमन्नाद्यं शैववैष्णवादिभिः सर्वैरपि ग्राह्यमिति केनापि प्रामाणिकेन वक्तुमशक्यत्वात् । वक्ष्यमाणादिवचनैरतिनिषिद्धत्वाच्च ।

यच्च, शैवेन निवेदितादितरदपि भोक्तव्यमित्युक्तं, तत्तु शिवार्पितदासीदासादिरूपदेवस्वस्यापि स्वस्वदशशैवोपभोग्यत्वप्रापकमिति भूषणं तत्संन्यासाश्रमस्य ।

वस्तुतस्तु, स्थावरलिङ्गादिषु निर्माल्यस्य चण्डायैवार्पणीयत्वाच्छैवानामपि निवेदितातिरिक्तस्य तस्य स्वयं भोजनमनुचितमेवाह । तथाहि, निर्णयसिन्धौ ( पू० ३ पू० ) सिद्धान्तशेखरे—

धराहिरण्यगोरत्नताम्ररौप्यांशुकादिकान् ।
विहाय शेषं निर्माल्यं चण्डेशाय निवेदयेत् ॥
अन्यदन्नादि पानीयं ताम्बूलं गन्धपुष्पकम् ।
दद्याच्चण्डाय निर्माल्यं शिवभुक्तं तु सर्वशः ॥
आचार्यशिवचण्डानामाज्ञाभङ्गे तु लक्षकम् ।

निर्माल्ये भक्षिते लक्षपादतः शुद्धिरीरिता ।
दानं च भक्षणसमं तदर्धं तदुपेक्षणे ॥
अकामाद्भक्षणे यद्वा निर्माल्यस्य जपेत्सुधीः ।
ब्रह्मपञ्चकसाहस्रं धर्मेण सहितं ततः ॥
कामतो भक्षणे दीक्षा प्रायश्चित्तं न चान्यतः ।
निर्माल्यलङ्घने घोरं प्रजपेदयुतं ततः ।
स्पर्शश्च लङ्घनसमो विक्रयो भक्षणेन च" ॥

एष्वाद्यं श्लोकद्वयमाचारार्केऽप्युदाहृतम् ।

प्रयोगपरिजाते क्रियासारे—

"मध्यमानामिकामध्ये पुष्पं सङ्गृह्य पूजयेत् ।
अङ्गुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेत् ॥
अपनीतं च निर्माल्यं चण्डेशाय निवेदयेत् ।
अशून्यमस्तकं लिङ्गं सदा कुर्वीत पूजकः" ॥ इति ।

सिन्धुद्वये चेदं तृतीयपरिच्छेदपूर्वार्धे उदाहृतम् । एवमन्यत्रापि दृश्यम् ।

यत्तु,

"निर्मलत्वाच्च निर्माल्यं नृणां नैर्मल्यकारणम् ।
यद्यदात्महितं लोके तत्तद्द्रव्यं परं च यत् ॥
शिवलिङ्गार्पितं कुर्यात्तत्र तुष्यति शङ्करः" ॥

इति ब्रह्माण्डवचनत्वेन शैवसुधाकरे उदाहृतम्, तत्तु, अनन्यशैवानां बाणादिष्वर्पण-विषयम् । तेषां हृदयभावितलिङ्गार्पणविषयं वा । अतः सर्वं सुस्थम् ॥

(पञ्चायतनादौ शालिग्रामसाहित्याद्बाणाद्यर्पितपत्रादे पावित्र्यम्, परोक्त शिवनाभि-विषयकत्वादे खण्डनम्, शिवादिनिर्माल्याशनस्पर्शादेर्निषेध.)

अथ केचित्स्मार्ताः शुच्यशुचिभेदेन ग्राह्याग्राह्यत्वव्यवस्थां वदन्ति । श्रीदत्तस्तू-पनीतानुपनीतविषयकत्वेन तामाह । तन्मतेऽपि पञ्चायतनपूजादौ शालग्रामेण सह बाणाद्यर्चन एव तदर्पितं पत्रपुष्पादिकं भक्तिमद्भिः स्मार्तैर्ग्राह्यमिति सिद्ध्यति ।

"अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलासङ्गात्सर्वं याति पवित्रताम्" ॥ इति ।

अत्र पञ्चायनपूजायां तन्त्रेण च निवेदितमित्यर्थ इति निर्णयसिन्धुकारः ।

आचारार्के तु पाद्मस्कान्दब्रह्मपुराणेषु सङ्ग्रहे च—

"शिव उवाच

अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम्" ।

"शालग्रामशिलालग्नं सर्वं याति पवित्रताम् ।
नैवेद्यं मे नरो भुक्त्वा शुद्ध्यै चान्द्रायणं चरेत्" ॥ इति ।

चतुर्विंशतिमतव्याख्याऽऽचारकाण्डे तु—

"शालग्रामेण सह पूजायां सत्यां शिवनिर्माल्यमपि ग्रहणार्हम्" ।

तदुक्तं स्कान्दे—

"अग्राह्यं शिवनिर्माल्यमि"त्यादि ।

कमलाकराह्निकेऽप्येवमेवोक्तम् ।

मयूखादिषु चेदं बह्वृचगृह्यपरिशिष्टत्वेन स्कान्दवचनत्वेन चाऽनेकत्रोपन्यस्तम् ।

एतेन शैवसुधाकरे इदमुदाहृत्य शालग्रामसंसर्गो नाम शालग्रामस्य सर्वदेवात्मकत्वे सर्वदेवपूजाऽऽधारतया तत्र शिवबुद्ध्या पूजायां पत्रादीनामर्पणमिति लक्षणप्रकाशे स्थितम् ।

कृत्यरत्नावल्यां तु, शिवनाभिविषयकमेतदिति स्थितम् ।

पूजाप्रकाशोदाहृतपाद्मे—

"शालग्रामशिलालिङ्गे यः करोति ममार्चनम् ।
तेनाऽर्चिता कार्तिकेय लिङ्गानामेकसप्ततिः" ॥

ननु शालग्रामेण सह पूजितशिवायार्पणमिति भ्रमितव्यमिति यदाधुनिकभ्रान्तेनोक्तं तन्निरस्तं वेदितव्यम् । केनापि प्रामाणिकेन तथाऽनङ्गीकारात् ।

शालग्रामस्य संसर्गादिति तल्लिखितपाठे षष्ठीश्रुत्या संसर्गपदेन च भेदप्रतीत्या शालग्रामे शिवाऽभेदबुद्ध्या पूजनपरतायाः शिवनाभिपरतायाश्च वक्तुमयुक्तत्वात् ।

तथासति,

"शालग्रामे शिवार्चायां" "शिवनाभौ ममार्चायाम्"

इति वा कथनस्यौचित्यात् । तन्मते अक्षरस्वारस्य हानेः सर्वसहृदयवेद्यत्वाच्च ।

यत्तु, पाद्मवचनमुक्तम्, तत्तु तादृशलिङ्गपूजाप्रकाशकमिति न तेन प्रकृतसिद्धिः । अतो बहुनिबन्धोक्तरीत्या, शालग्रामसाहित्येन बाणाद्यर्चने एव पञ्चदेवार्चकादीनां स्मार्तानां तन्निर्माल्यनिषेधप्रतिप्रसवार्थमेतदित्येव सतां मनोरमम् ।

तस्मात्, स्मार्तानां भक्तिमतां बाणादौ स्वयमेव निर्माल्यग्रहणेऽपि न क्षतिः । शालग्रामसाहित्येन पावित्र्यात् ।

अथ तदसाहित्येऽपि क्वचिज्ज्योतिर्लिङ्गादौ पूजकदत्तं चन्दनादिमात्रं किञ्चिदेव धारयन्ति ।

एतत्सर्वं धर्मसिन्धुकृता स्फुटीकृतम् । यथा तृतीयपरिच्छेदपूर्वार्धे शिवनैवेद्याशने प्राय-

श्चित्तमुक्त्वोच्यते । इदं च ज्योतिर्लिङ्गस्वयम्भूलिङ्गसिद्धप्रतिष्ठापितलिङ्गातिरिक्तस्थावर-लिङ्गविषयम् । ज्योतिर्लिङ्गादौ तु पूजकेन दत्तं फलतीर्थादिकं भक्त्या शुद्ध्यर्थं ग्राह्यं न लोभेन । पञ्चायतनस्थितलिङ्गेषु चरेषु प्रतिमासु चान्नादेरपि स्वयं ग्रहणेऽपि न दोषः ।

ज्योतिर्लिङ्गाद्यन्यस्थिरलिङ्गेषु तीर्थोदकचन्दनमात्रं श्रद्धावद्भिः शिवोपासकैरेव ग्राह्यम् । ज्योतिर्लिङ्गादौ पूजकदत्तमन्नमपि भक्ष्यमिति केचिदिति ।

अतः स्मार्तानामपि सर्वत्र शिवलिङ्गार्पितचन्दनादिमात्रमपि ग्राह्यत्वेन न सिद्ध्यति, किमुत शैवसुधाकरोदितं सर्वत्र शिवनिवेदितान्नभक्षणम् ! अनेकत्र प्रतिषिद्धत्वात् ।

प्रतिषेधस्तु, यथा, आचारमयूखे शिवपूजानिरूपणे भविष्ये—

"दत्वा नैवेद्यवस्त्रादीन्नाददीत कदाचन ।
त्यक्तव्यं शिवमुद्दिश्य तदादाने न तत्फलम्" इति ।

आदाने ग्रहणे इति मयूखकारः ।

पुनस्तत्रैव स्कान्दे—

"निर्माल्यं यो हि मद्भक्त्या शिरसा धारयिष्यति ।
अशुचिर्भिन्न मर्यादो नरः पापसमन्वितः ॥
नरके पच्यते घोरे तिर्यग्योनौ च सम्भवेत्" ॥ इति ।

तथा सारसङ्ग्रहे दत्तात्रेयः—

"निर्माल्यं भक्षयित्वैव मुच्छिष्टमगुरोरपि ।
मासं पयोव्रतो भूत्वा जपन्नष्टाक्षरं सदा ॥
ब्रह्मकूर्चं ततः पीत्वा पूतो भवति मानवः" ॥

तत्रैव—

"निर्माल्यं नैव सम्भक्षेत्कूपे सर्वं च निक्षिपेत् ।
स्वीकुर्याद्यदि सम्मोहाद्रौरवं नरकं व्रजेत् ॥
मक्षिकापादमात्रं तु निर्माल्यं न स्पृशेत्क्वचित् ।
यदि स्पृशेत्स मोहाद्वै नरकेषु निमज्जति" ॥

शिवपुराणे रुद्रवाक्यम्—

"पूजां कुर्यात्रिसन्ध्यं तु तथा भक्तिमचञ्चलाम् ।
मम तीर्थप्रसादं च नैवेद्यं परिवर्जयेत् ॥
अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम् ।
निवेद्य भक्त्या भक्ष्यं तत्सर्वं कूपे विनिक्षिपेत्" ॥

अन्यत्र;

"पत्रं पुष्पं फलं चान्नं महादेवसमर्पितम् ।
नाश्नीयात्परिगृह्यैतन्निखनेद्वा जले क्षिपेत्" ॥

तत्रैव वायुपुराणे—

"जिह्वाचापल्यसंयुक्तो द्विजः संस्कारवर्जितः ।
शिवनिर्माल्यभोजी च रौरवं नरकं व्रजेत्" ॥

ग्रन्थान्तरे शिवपुराणे—

"निर्माल्यलङ्घने दोषो धारणे च विशेषतः ।
न धारये क्वचिच्छम्भोर्निर्माल्यं न च भक्षयेत्" ॥ इति ।

एवमादीन्यनेकत्र सर्वसाधारण्येन तन्निषेधकानि वचनानि बहून्येवोपलभ्यन्ते । अतः स्मार्तादिभिरपि, उक्तस्थलादन्यत्र शिवनिवेदितं नैव ग्राह्यमिति निर्मत्सराणां सतामविप्रतिपन्नमतम् । दत्तात्रेयादिवचनेषु क्वचित् केवलनिर्माल्यशब्ददर्शनेऽपि प्रकरणबलात् "रुद्रेण भुक्तं निर्माल्यमि"त्याचारप्रकाशोदाहृतस्कान्दवचनेन,

"शिवानुभूतमखिलं निर्माल्यं परिभाषते"

इति शैवसुधाकरधृतनारदवचनेन च तथैव परिभाषणान्निर्माल्यशब्दः शिवार्पितविषय एव बोध्यः ।

किञ्च, देवस्वादेरग्राह्यत्वं तु तेनाप्युक्तम् । अस्ति च शिवनिवेदितान्नादेरपि शिवस्वत्वम् ।

द्रव्यमन्नं फलं तोयं शिवस्वं न स्पृशेत् क्वचित् ।
लङ्घयेन्नैव निर्माल्यं कूपे सर्वं विनिक्षिपेत् ॥
माक्षिकापादमात्रं यः शिवस्वमुपजीवति ।
लोभान्मोहात्स पच्येत कल्पान्ते नरके नरः" ॥

इत्याचारार्के पद्मपुराणात् । यस्तु, तेन शैवस्य प्राणयात्रापर्याप्तादधिकतरस्यापि शिवनिर्माल्यस्य लोभादिना ग्रहणे दोषाभावो दर्शितः । स तु आचारप्रकाशाद्यनेकग्रन्थोदाहृतैः,

"लोभान्न धारयेच्छम्भोर्निर्माल्यं न च भक्षयेत् ।
न स्पृशेदपि पादेन लङ्घयेन्नापि नारद" ॥

इत्यादिभिरादित्यपुराणाद्यनेकवचनैरयुक्ततर एवेति ध्येयम् ।

अथ, प्रायश्चित्तेन्दुशेखरादिषु हरेरन्यनिर्माल्यादिभक्षणे त्वनापद्येवमिति अन्यशब्दनिर्दिष्टदुर्गाप्रभृतीनामन्नादिग्रहणे पूर्वोक्तचान्द्रायणादिप्रायश्चित्तनिदेशात्तदप्यभोज्यमेव, साधारण्येन स्मार्तादीनां सर्वेषाम् । आपदि तद्भक्षणे तु लघुप्रायश्चित्तं ज्ञेयम् ।

इत्थम्, विष्ण्वतिरिक्तदेवनैवेद्यादिग्रहणनिषेधो यथाशास्त्रं सर्वसाधारणो व्याख्यातः ।

( वैष्णवानामितरनैवेद्यभोजनेऽनन्यत्वभङ्गस्वव्रतलोपस्वाचारविरोधमनोदोषादयः, कुलाचारावश्यकता, अनर्चकस्य तद्भोजननिषेध, हरिभुक्तमात्रभोजित्व वैष्णवलक्षणम्, तेषामितरभोजननिषेधः, प्रायश्चित्तञ्च )

अथ, वैष्णवैस्तु बाणलिङ्गादिनिवेदितम्, तथा यत्किञ्चिद्देवान्तरप्रतिमादिनिवेदितञ्च नैव भोक्तव्यम्, अनन्यत्वभङ्गप्रसङ्गात्, स्वव्रतलोपापत्तेः, आचारविरोधात्, मनोदोषसम्भवात्, देवान्तरानर्चकत्वात्, भगवन्नैवेद्यमात्रभोजनविधानात्, तदितरभोजनप्रतिषेधाच्च ।

तथाहि—

"अनन्याश्चिन्तयन्तो माम्"

"भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्"

"विसृज्य दौरात्म्यमनन्यसौहृदाः"

इत्यादिषु वैष्णवानामनन्यत्वमुच्यते । तच्चान्यदेवोच्छिष्टभोजने भज्येत ।

"यो वै स्वां देवतामतियजते" इति तैत्तिरीयादिश्रावितदोषश्च प्रसज्येत ।

किञ्च, भगवन्निवेदितमेव भोक्तव्यं न तु तदनिवेदितम्, नाप्यन्यदेवनिवेदितमिति वैष्णवानां व्रतम् । तल्लोपश्चोपपातकं भवति ।

यथाह तृतीयाध्याये उपपातकगणनायां याज्ञवल्क्यः ( श्लो० ३२ )—

"कौटिल्यं व्रतलोपनमि"ति ।

अत्र व्रतशब्दस्य ईदृशशिष्टाप्रतिषिद्धभगवद्भक्तव्रतपरत्वम्, नतु स्नातकादिव्रतपरत्वमिति मिताक्षरायां स्फुटम् ।

अपि च—

न भगवदर्पितवद्देवतान्तरनैवेद्यस्याभक्षणे सर्वसाधारण्येन किञ्चित्प्रायश्चित्तमुपलभामहे । अतस्तद्भक्षणं वैष्णवैः स्वपारम्परिकाऽविगीताचारविरोधादपि न कार्यम् । आचाराध्याये स्नातकप्रकरणे ( श्लो० ११ )—

"विरुद्धं वर्जयेत्कर्मे"ति याज्ञवल्क्येन तादृशकर्मणो वर्ज्यत्वस्मरणात् ।

इह, जनपदकुलाचारग्रामविरुद्धञ्च कर्म वर्जयेदिति मिताक्षरा ।

मनुरप्याह—

"येनास्य पितरो याता येन याताः पितामहाः ।

तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति" ॥ इति ।

मिताक्षरायाञ्च ( अ० १ ) श्राद्धप्रकरणे ( श्लो० ३७।३८ )—

"गन्धोदकतिलैर्युक्तमि"ति । ये समानेत्यादीनां व्याख्यानेष्वनेकत्र एतदेवानुसृत्य व्यवस्था क्रियते ।

तथा, बृहत्पराशरोऽपि प्रथमाध्याये ( श्लो० ४७ )—

"उषित्वा यत्र तत्रापि स्वाचारं न विवर्जयेत्" इति तस्यावर्जनीयत्वमाह।

आचारमाधवे च तृतीयाध्याये श्राद्धवर्ज्यब्राह्मणेषु यमः—

"सद्भिश्च निन्दिताचारः स्वकर्मपरिवर्जकः"

इत्यादि गणयित्वाऽग्रे उपसंहरति—

"चतुराश्रमबाह्याश्च सर्वे ते पङ्क्तिदूषकाः।
इत्येतैर्लक्षणैर्युक्तास्तान् द्विजान्न नियोजयेत्" ॥ इति।

अतः स्वाचारविरोधादपि तद्भोज्यम्।

अन्यच, याज्ञवल्क्यस्मृतौ व्यवहाराध्याये दिव्यप्रकरणकोशविधाने ( श्लो० १८ )—

"देवानुग्रान् समभ्यर्च्य"त्यत्र उग्रान् देवान् दुर्गादीनिति व्याचक्षाणेन विज्ञानेश्वरेण तेषां तामसत्वं दर्शितम्।

तदेव श्रीभागवतादिषु ( स्कं० १ )—

"रजस्तमः प्रकृतयः समशीलान् भजन्ति वै।
मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ" ॥

तथा,

"नारायणस्य कलाः शान्ताः भजन्ति ह्यनसूयवः"।

इत्यादौ स्फुटीकृतम्।

अतस्तामसानां शक्तिभूतपतिप्रभृतीनामुच्छिष्टं न भोक्तव्यम्। तामसान्नभक्षणे अन्नकार्यस्य मनसस्तामसत्वसम्भवेन सात्त्विकेषु मोक्षादिसाधकेष्वभीष्टावश्यककर्मसु प्रवृत्तिविघातापातात्।

मनसोऽन्नकार्यत्वं तु छान्दोग्ये श्वेतकेतुविद्यायां श्रूयते ( खं० ५ ) "अन्नमशितं त्रेधा विधीयते, तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति, यो मध्यमस्तन्मांसं, योऽणिष्ठस्तन्मन इति"।

अग्रे ( खं० ६ ) "एवमेव खलु सोम्यान्नस्याऽश्यमानस्य योऽणिमा स ऊर्ध्वः समुदिषति तन्मनो भवती"ति।

तथा, ( खं० ५ त० ६ ) "अन्नमयं हि सोम्य मन आपोमयाः प्राणास्तेजोमयी वागिती"ति च। अतस्तद्भक्षणं मोक्षप्रतिबन्धकम्।

"यान्ति देवव्रता देवान्"
"देवान् देव यजो यान्ति"

इत्याद्युक्ततुच्छफलसम्पादकं चेत्यपि हेयम्।

किञ्च, तथासति मनोदोषेण, वागपि दुष्येदेव। वाचो मनःशोध्यत्वात्।

यथा, (अ० ३ श्लो० ३१)—

"कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम्"

इत्यस्य व्याख्याने मनोऽपि वाचः शुद्धिसाधनम्।

यथा समाम्नायि "मनसा वा ईषिता वाग्वदति" इत्यादीत्याह विज्ञानेश्वरः। अतश्चित्तादिशुद्धीच्छुभिर्न तद्भोज्यम्।

अपरञ्च, वैष्णवानां देवतान्तरानर्चनं प्रागुपपादितम्। अतोऽनर्चकत्वादपि न तदुच्छिष्टान्नादिकं तैर्ग्राह्यम्। अतिनिषिद्धत्वात्।

निषेधस्तु, सारसङ्ग्रहे वायुपुराणे शिवनिर्माल्यप्रक्रमे—

"अनर्चकद्विजातीनां तीर्थपानं सुरासमम्।
प्रसादो मांसतुल्यः स्याच्चन्दनं रुधिरं स्मृतम्" ॥ इति।

इतरच्च, भगवन्निवेदितमात्रभोजित्व एव वैष्णवत्वं सिध्यति।

सारसङ्ग्रहे ब्रह्माण्डे—

"हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः।
पादोदकं च निर्माल्यं यस्य मूर्ध्नि स वैष्णवः" ॥ इति।

अत्र सर्वं वाक्यं सावधारणमिति न्यायेन नैवेद्यमात्रभोजित्वमपि वैष्णवलक्षणत्वेन प्रतीयते।

तथा, नारदपञ्चरात्रप्रथमरात्रद्वितीयाध्याये परमेष्ठी (श्लो० २३)—

"नहि पूतस्त्रिभुवने श्रीकृष्णसेवकात्परः।
शालग्रामशिलाचक्रे करोति कृष्णपूजनम् ॥
तत्पादोदकनैवेद्यं नित्यं भुङ्क्ते च यः पुमान्।
स वैष्णवो महापूतस्तन्मन्त्रोपासकः शुचिः ॥
पुनाति पुंसां शतकं जन्ममात्रात्सबान्धवम्" ॥ इति।

अत्र वैष्णवानामपि जीवनार्थं भगवन्निवेदितदेवान्तरनिवेदितान्नयोरन्नत्वाविशेषात्साधारण्येन भोजने प्राप्ते,

"तत्पादोदकं च नैवेद्यं नित्यं भुङ्क्ते च यः पुमान्"।

इत्यनेन भगवन्निवेदितस्यैव भोजनं परिसङ्ख्यायते। तदेव नित्यपदेन दृढीक्रियते। तादृशस्यैव वैष्णवत्वमुच्यते। अतो वैष्णवैस्तु तदेव भोज्यम्, न तु देवतान्तरनिवेदितमपि। परिसङ्ख्यया इतरनिवृत्तिफलकत्वात्। यथा, चयनप्रकरणे "इमामगृभ्ण-

ञशनामृतस्य" इति रशनाग्रहणप्रकाशकत्वलिङ्गात्, अश्वगर्दभोभयरशनाग्रहणे प्राप्तेऽपि "इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति परिसङ्ख्याकवाक्यबलात् तस्य गर्दभरशनाङ्गत्वं निवर्तते। यथा वा रागतः पञ्चनखापञ्चनखानां साधारण्येन भक्षणे प्राप्ते "पञ्च पञ्चनखा भक्ष्या" इत्यनेन तदितरभक्षणं निषिध्यते।

अथ स्कान्दे मार्गशीर्षमाहात्म्यचतुर्दशाध्याये- विधातारं प्रति भगवान् (श्लो० २४)—

"यदुक्तं भवता ब्रह्मन् भोक्तव्यं किं शृणुष्व तत्।
भोक्तव्यं च ममोच्छिष्टं मम भक्तिपरायणैः॥
पवित्रकरणं पुत्र पापिनामपि मुक्तिदम्।
ममाशनस्य शेषं च यो न भुङ्क्ते दिने दिने॥
सिक्थे सिक्थे भवेत्पुण्यं चान्द्रायणशतोद्भवम्।
अवशिष्टमथोच्छिष्टं भक्तानां भोजनद्वयम्॥
नान्यद्वै भोजनं तेषां भुक्त्वा चान्द्रायणं चरेत्।
अनर्पयित्वा यो भुङ्क्ते अन्नपानादिकं च यत्।
श्वानविष्ठासमं चान्नं पानं च मदिरासमम्।
तस्मान्ममार्पयेत्पुत्र अन्नपानादि चौषधम्॥
भक्षयेत्परया भक्त्या अशुचेः शुचिकारणम्।
तीर्थयज्ञाधिकफलं कलिदोषविनाशनम्॥
ममोच्छिष्टं सुगतिदमपि दुष्कृतकर्मणाम्।
अन्येषां देवतानां च न गृह्णीयाच्च भक्षितम्॥
अभक्तानां च पक्वान्नं भुक्त्वा च नरकं व्रजेत्"॥ इति।

अत्रापि किं वा भोक्तव्यमिति ब्रह्मप्रश्नस्य भगवता मद्भक्तैस्तु मदुच्छिष्टमेव भोक्तव्यम्, न तु कथञ्चिदितरदपीत्युत्तरमुक्तम्। तथा, कण्ठरवेणैवान्यदेवताभुक्ताशननिषेधः। तदशने चान्द्रायणप्रायश्चित्तम्। अन्यथा नरकप्राप्तिश्चोक्तैव। इत्थमितरत्रापि द्रश्यम्। अतो वैष्णवैर्न देवतान्तरनिवेदितं किञ्चिदपि भोज्यम्; किन्तु, सर्वं भगवदर्पितमेव ग्राह्यम्। सर्वेषां तदावश्यकताया अनुपदमतीतप्रश्नस्योत्तरे सम्यक्समर्थितत्वात्॥

(नानाविधा गौणभक्तय, तत्र नैवेद्यभक्षणमपि, शिवार्पितस्य प्रतिपत्तिविचार',
पञ्चदेवभुक्तानां पृथक् पृथक् प्रतिपत्तिः)

अपिच, भगवन्नैवेद्यभक्षणस्य श्रवणकीर्तनादिरूपभक्त्यन्तःपातित्वमपि क्वचिदुच्यते। यथा सारसङ्ग्रहे साधनरूपभक्तिनिरूपणे पाद्मे—

"आद्यं तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरेः।
धारणं चोर्ध्वपुण्ड्राणां तन्मन्त्राणां परिग्रहः॥

कीर्तनं श्रवणं चैव वन्दनं पादसेवनम् ।
तत्पादोदकसेवा च तन्निवेदितभोजनम् ॥
तदीयानां च सेवा च द्वादशीव्रतनिष्ठता ।
तुलसीरोपणं विष्णोर्देवदेवस्य शार्ङ्गिणः ।
भक्तिः षोडशधा प्रोक्ता भवबन्धविमुक्तये" ॥

तत्रैव हारीतोऽपि—

शङ्खचक्रोर्ध्वपुण्ड्रादिधारणं स्मरणं हरेः ।
तन्नामकीर्तनं चैवं तन्निवेदितभोजनम् ॥
तत्पादवन्दनं चैव तत्पादाम्बुनिषेवणम् ।
एकादश्युपवासश्च तुलस्या अर्चनं हरेः ॥
तदीयानामर्चनं च भक्तिर्नवविधा स्मृता" ॥

इति गौणभक्तीनां च परमभक्तिज्ञानयोः साधकत्वं तत्र तत्र प्रसिद्धमेव । अतस्तदुभयेप्सुभिश्चैताः सर्वा अपि साधनरूपा भक्तयः सादरमनुष्ठेया एव । भगवन्नैवेद्यभक्षणे च सर्वप्रामाणिकात्याद्दतत्वं कस्यापि साधोर्विसम्मत्यभावश्चास्त्येव, किम्बहुना ?

तथाचायं निष्कर्षः, भगवन्नैवेद्यभक्षणं तु सर्वेषामावश्यकम् । षड्विधशिवनिर्माल्येषु निवेदितमात्रं शैवैः सर्वत्र भोज्यम्; इतरत्तु चन्दनादिकं वस्त्रादिकं कदाचित्पूजकेन दत्तं चेच्छ्रद्धया ग्राह्यम्, न तु लोभेन । बाणलिङ्गाद्यर्पितं तु सर्वं स्वयमपि ग्राह्यम् । स्मार्तैस्तु सर्वथा सर्वविधं शिवनिर्माल्यं हेयमेव । पञ्चायतनादौ शालग्रामेण सहार्चितबाणलिङ्गादेस्तीर्थादिकं तु भक्तिमत्त्वे सति ग्राह्यम् । तथा, ज्योतिर्लिङ्गस्यापि पूजकेन दीयमानं तीर्थचन्दनादिमात्रं श्रद्धातिशये शुद्ध्यर्थं किञ्चिद्धार्यम् । केचित्स्मार्ता गृहेऽर्चितकेवलबाणादेरपि श्रद्धावशात्तीर्थलेशं गृह्णन्ति ।

आचारादर्शे तु—

"ततो गृहार्चनं कुर्यादभीष्टसुरपूजनम्" ।

इत्यादिना गृहे देवार्चनमुपक्रम्य,

"रुद्राङ्गलग्नमग्नौ च दहेत्सर्वं च तत्क्षणात्" ।

तथा,

"भस्माङ्गेभ्यश्च शाम्भवम्" ।

इति शिवनिवेदितप्रतिपत्तिरुक्ता । भस्माङ्गेभ्यः शैवेभ्यो देयमित्यनुवर्तते । अत्र भस्माङ्गशब्देन चण्डेश्वरादय एवोच्यन्त इति केचित् । प्राकृता अपीत्यपरे । गृहे चण्डाद्यभावात्प्राकृता एवेत्यन्ये । गृहे च बाणचललौहाद्यन्यतमलिङ्गस्यैव पूजनं भवति, न तु स्थावरादेरिति तद्विषयिण्येवेयं प्रतिपत्तिरिति केचित् ।

अथ सूर्यादिदेवतान्तरनैवेद्यं तु स्मार्तादिभिः सर्वैरपि न भोक्तव्यम् । तद्भोजने प्रायश्चित्तनिरूपणात् । तत्प्रतिपत्तिश्च दर्शिताऽऽचारादर्शे ब्रह्मपुराण एव,

"शिष्टेभ्योऽप्यथ देवेभ्यो यत्तद्दीनेषु निक्षिपेत्" इति ।

तथा,

"सौरमङ्गेभ्यः शाक्येभ्यस्तायिने यन्निवेदितम् ।
स्त्रीभ्यश्च देयं मातृभ्यो यत्तु किञ्चिन्निवेदितम्" ॥ इति ।

स्त्रीभ्यः, भिक्षुकदीनस्त्रीभ्यः ।

अथ पञ्चविधपञ्चायतननैवेद्यप्रतिपत्तिस्तत्पार्षद्भ्यः समर्पणरूपा दर्शिता गौतमतन्त्रे दशमाध्याये ( श्लो० १३८ )—

"विष्वक्सेनाय वै दद्याच्छेषं नैवेद्यमुत्तमम् ।
उच्छिष्टभोजिनोऽप्येते एतेषामवधारयेत् ॥
गणेशे वक्रतुण्डाय सूर्यचन्द्रांशवेऽर्पयेत् ।
विष्णौ तु विष्वक्सेनाय शिवे चण्डेश्वराय च ॥
शक्त्युच्छिष्टं शेषिकायै दद्यादर्चनसिद्धये ।
अन्यथा नैव सिद्धिः स्यादर्चको नरकं व्रजेत्" ॥ इति ।

अथ भगवदनन्यभक्तैर्वैष्णवैस्तु सर्वदा भगवदर्पितमेव भोक्तव्यम्, न तु देवतान्तरनिवेदितं किञ्चिदपीति श्रीः ॥

यत्तु, भगवद्भक्त्यादिद्वेषिणा सदानन्दगिरिणा— यद्यपि शिवनिर्माल्यमेव भोक्तव्यम्, न तु नान्यदेवनिवेदितम्, न वाऽनिवेदितमिति, पूर्वोदाहृतश्रुत्यादिबलात्सिद्धेऽर्थे प्रतिपदं सामान्यतश्च श्रीमद्भागवतादिवचांसि निषेधरूपाणि बहुश उपलभ्यन्ते; तथापि विस्तरभयात्, अस्मासु परेषां विद्वेष्टृत्वसम्भावनाभयाच्च तानि नोपन्यस्यन्ते—इति साहसाद्युक्तम्; तत्तु, प्रक्रान्तप्रश्नद्वयोत्तरेण निरस्तमेवेति, एतन्निरीक्षकैः साधारणैरपि स्वयमेवावगंस्यते । विदुषां तु, तत्पूर्वमेव सुविदितमेवास्तीत्यलम् ।

सर्वेषां शिवोच्छिष्टग्रहणाऽऽग्रहप्रतिपादकः शैवसुधाकरभागोऽपि प्रायेण सर्वोऽप्यत्रैव खण्डितो वेदितव्यः ।

यानि च तेन नारदवचांस्युक्तानि तानि किं पुराणोक्तान्याहोस्वित्स्मृतिस्थानि ? अन्यतरस्थत्वेऽपि कस्मिन् भागे कतमश्लोकरूपाणीत्यन्वेष्टव्यम् ।

इत्थं तदुदाहृतबहुषु वचनान्तरेष्वपि समूलत्वं चिन्त्यम् । भगवन्नैवेद्यस्य तु सर्वथा बाधोऽशक्य एव ।

शिवो मूर्ध्ना धत्ते चरणसलिलं यस्य सततं
मखे भागान्गृह्णन्त्यपि भुवि यदङ्घ्रौ सुरगणाः ।

श्रुतिर्यन्निःश्वासान् हृदि च वदने बिभ्रति सदा-
 ऽखिला विप्रा धाता सृजति सकलं यस्य तनयः ॥ १ ॥
मनश्चन्द्रो यस्यौषधिचयमशेषं पचति य-
 त्पदं चादित्यः प्रोज्वलयति जगद्यस्य महसा ।
कृशानौ यद्वक्त्रे जगति सकलं जुह्वति हवि-
 र्द्विजन्मानः सर्वे वदनजनुषोऽश्नन्ति च ततः ॥ २ ॥
सर्ववेदोपदिष्टाङ्गैः शिष्टाराध्यस्य तस्य कः ।
इष्टे सम्बन्धरहितं भोक्तुमक्लिष्टकर्मणः ॥ ३ ॥
देवतान्तरनैवेद्यस्याग्राह्यत्वं निरूपितम् ।
काचित्कविधिवाक्यानां विषयश्च प्रदर्शितः ॥ ४ ॥
अस्माभिर्भुज्यते नैव तस्माद्देवान्तरार्पितम् ।
न स्मार्तैरपि सर्वत्र भस्मालिप्तैस्तु तत्क्वचित् ॥ ५ ॥
कन्दर्पदर्पहाऽऽनन्दसन्दोहामन्दमन्दिरम् ।
सेव्य एकोऽरविन्दाक्षो भोज्यमेकं तदर्पितम् ॥ ६ ॥

### षष्ठः प्रधानप्रश्नः उत्तरकारिके

### श्रुत्यादिपूर्ध्वपुण्ड्रप्रशंसा

### भवन्मार्गे तिलकं कीदृशं केन द्रव्येण कर्तव्यम्? ॥ ६ ॥

उत्तरम्—

निर्दोषमस्माभिरूर्ध्वपुण्ड्रमेव विधीयते ।
गोपीचन्दनमिश्रेण भगवत्कुङ्कुमादिना ॥
अस्य वैष्णवचिह्नत्वात् पावनत्वादघक्षयात् ।
आवश्यकत्वाद्भगवत्प्रापकत्वाच्च धारणम् ॥

तथाहि, पाद्मोत्तरखण्डे दशमाध्याये देवीं प्रति शिवः—

"ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलपरिशोभितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्रा-
स्ते वैष्णवा भुवनमाशु पवित्रयन्ति" ॥

पराशरमाधवीये सत्यव्रतोऽपि—

"ऊर्ध्वपुण्ड्रमृजु सौम्यं ललाटे यस्य दृश्यते ।
चाण्डालोऽपि विशुद्धात्मा पूज्य एव न संशयः" ॥ इति ।

अपि शब्दात् कैमुतिकन्यायेनान्येषां पावित्र्यं बोधयति ।

आथर्वणोपनिषदि—

"ॐ नमस्कृत्य भगवन्तं नारदः सर्वेश्वरं वासुदेवं पप्रच्छ, श्रीभगवन्नूर्ध्वपुण्ड्रविधिं द्रव्यमन्त्रस्थानादिसहितं मे ब्रूहीति तं होवाच भगवान् वासुदेवः" इत्यादिना महता प्रपञ्चेनैतन्निरूपितम् ।

अन्ये, पुनरिमाः श्रुतीरप्युदाहरन्ति—

कठशाखायाम्—

"धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम्" ॥

महोपनिषदि—

"धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं साङ्ख्ययोगाधिगम्यम् ।
स्मृत्वा[1] विमुच्येत नरः समस्तैः संसारपाशैरिह चैव विष्णुः" ॥

---

१ स्मृत्वा ।

आथर्वणे—

"हरेः पादाकृतिमात्मनो हिताय मध्ये छिद्रं ऊर्ध्वपुण्ड्रं यो धारयति स परस्य प्रियो भवति स पुण्यवान् भवति स मुक्तिमान् भवतीति"।

किञ्च, पुनः पद्मपुराणे—

"ऊर्ध्वपुण्ड्रस्य माहात्म्यं वक्ष्यामि शुभदर्शने ।
धारणादेव मुच्येत भवबन्धविमूढधीः ॥
एकान्तिनो महाभागाः सर्वे मम हिते रताः ।
सान्तरालं प्रकुर्वीरन्नूर्ध्वपुण्ड्रं पदाकृति" ॥

इत्यादिना सविस्तरं तिलकस्यावश्यकत्वं निरूपितम् ।

ननु तथापि उक्तद्रव्येणैव ईदृशाकारस्यैव तस्य करणे किं मानमिति चेत्,

पृष्टानि द्रव्यभेदप्रमाणानि पृथक् त्वया ।
तदुत्तरेषु वक्तव्याः प्रमाणप्रचया मया ॥ १ ॥

---

## (एकचत्वारिंशः प्रश्नः, उत्तरकारिकाः, भक्तरुच्यनुसाराद्भगवतस्तिलकम्, देवानां सुवर्णादिमयनेत्रतिलकादिषु प्रमाणम्, हरेस्तिलकं कस्तूरीरोचनादिभिर्वा, पूजागन्धाः, तुलसीचन्दनावश्यकता)

### अथास्यावान्तरः प्रथमः प्रश्नः ॥ १ ॥

### तत्र, पूर्वं तत्प्रियायाश्च कीदृशं विधानम्? ॥ ४१ ॥

उत्तरम् ।

ईश्वरे चोदनावाक्याऽनियोज्यत्वेन योज्यताम् ।
तिलकं किल किञ्चित्स्वरुचितो रुचिरं चिरम् ॥ १ ॥
परम्परागताकारं द्रव्यैर्मृगमदादिभिः ।
जातरूपमयं रत्नैर्जातरूपं च तज्ज्ञैः ॥ २ ॥
तैर्द्रव्यैस्तत्प्रियायास्तु तत्स्याल्लोके स्त्रिया इव ।
यतः शास्त्रे लोकवत्तु लीलाकैवल्यमुच्यते ॥ ३ ॥

तथाहि—ईश्वरेषु हि न विधिव्यापारः प्रवर्तते ।

"न तस्य कार्यं कारणं च विद्यते"।

"न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु विद्यते"

इत्यादिश्रुतिस्मृतिभ्यः। अतो न तिलकादीनां द्रव्यादिनियमः। किन्तु, भक्तरुच्यनुसारेणैव तद्विधानम्। "तं यथा यथोपासते तदेव भवती"त्यादिश्रुतिस्मृतिभ्यः।

"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्"

इत्यादिस्मृतिभ्यः।

"यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय"

इत्यादिपुराणवचनेभ्यश्च। अतः सुवर्णरौप्यादिमयं वा कस्तूर्यादितद्योग्योत्तमद्रव्यैर्वा यथारुचि भक्तैर्भगवते तत्प्रियायै च तिलकं समर्पणीयम्।

न च देवानां तिलकसमर्पणे सुवर्णादिघटिततत्समर्पणे वा मानाभावः शङ्क्यः आचाराध्याये गणपतिकल्पे (श्लो० २४)—

"आदित्यस्य सदा पूजा तिलकं स्वामिनस्तथा।
महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात्" ॥

इति याज्ञवल्क्यवचनस्य मानत्वात्।

अत्रैव मिताक्षरायाम्—

"तिलकं स्वर्णनिर्मितं रौप्यनिर्मितं च कुर्वन् सिद्धिमभिलषितामाप्नोति इत्युक्तेश्च।

तथाचारप्रकाशे, अथ दुर्गाया सुवर्णनेत्रतिलकदानं भविष्यपुराणे—

"सौवर्णे त्वक्षिणी राजन् भगवत्यै प्रयच्छति।
गोसहस्रफलं प्राप्य सूर्यलोके महीयते ॥
तथा सुवर्णतिलकं दुर्गादेव्यै प्रयच्छति।
स गच्छति परं स्थानं यत्र सा परमा मता" ॥ इति।

एवमनेकत्र देवताविषये सुवर्णनेत्रतिलकादिप्रसिद्धम्। नचैवं सति, कस्तूर्यादिद्रव्यनिर्मितभगवत्तिलकस्यासाम्प्रदायिकत्वं शङ्क्यम्;

"कस्तूरीतिलकं ललाटपटले वक्षस्थले कौस्तुभम्"

इत्यादिप्राचीनवर्णनेन तथा सार्वत्रिकशिष्टाचारेण च शङ्कानुदयात्।

अत एव श्रीभागवते (स्कं० १० अ० ३५ श्लो० १०)—

"दर्शनीयतिलको वनमाली दिव्यगन्धतुलसीमधुमत्तैः"।

इत्यादौ भक्तरुच्यनुसारेण यथाकथञ्चिन्मनोहरं तिलकं तस्य कार्यमिति दर्शितम्।

तथा गौतमीयतन्त्रसप्तदशाध्याये (श्लो० १५)—

"ललाटतटविन्यस्तकस्तूरीतिलकोज्ज्वलम्" इति।

स्पष्टमेव मृगमदतिलकमभिहितम्।

नारदपञ्चरात्रे तु, भगवद्वर्णने ( श्लो० ८ )—
"लोलालकस्फुरितभालतलप्रदीप्तगोरोचनातिलकमञ्जुलचित्रमालमि"ति ।
गौतमीयतन्त्रे च सप्तविंशाध्याये ( श्लो० ३७ )—
"रोचनातिलकं प्रान्ते कुन्तलालिसमावृतम्" इति ।
तथा, तत्रैव एकोनविंशाध्याये ( श्लो० १८ )—
"गोरोचनाभालतिलकं नीलकुन्तलशोभितम् ।
नारदाद्यैर्मुनिगणैरावृतं स्निग्धलोचनैः" ॥
इति च भगवतो गोरोचनातिलकमप्युक्तम् ।
द्रव्यान्तराण्याचारप्रकाशे नारदीये—
"सचन्दनं सकर्पूरं कुङ्कुमागुरुमिश्रितम् ।
मृगनाभिसमायुक्तं जातीफलविमिश्रितम् ॥
तुलसीचन्दनोपेतं महाविष्णोः सुखावहम्" ॥
गारुडे—
"यो हि भागवतो भूत्वा कलौ तुलसीचन्दनम् ।
नचार्पयति वै विष्णोर्न स भागवतो नरः" ॥ इति ।
अत्रोक्तेषु कानिचिच्चन्दनादिद्रव्याणि भगवत्तिलकेऽप्युपयुज्यन्त इति बहवः ।
( भगवत्पत्न्या· सुवासिनीवत्कस्तूर्यादिना तिलकम्, पूजायां तिलकमावश्यकम्, तच्चोर्ध्वपुण्ड्रमेव )
एवं तत्प्रियाया अपि न द्रव्यादिनियमः, भगवदभिन्नत्वात् । पुराणादिष्वनेकधा वर्णनदर्शनाच्च । यथा, आदित्यपुराणे नारदोक्तराधिकानामसु—
"नित्यमाघूर्णिता पूर्णा कस्तूरीतिलकाङ्किता" इति ।
अतः, कस्तूर्याद्यन्यतमेन लौकिकसौभाग्यशालिस्त्रीवद्भगवत्प्रियाया अपि तिलकमर्पणीयम् । लौकिकत्वनुसारिवस्त्राभरणादिवत् । "लोकवत्तु लीलाकैवल्यम्" "यथा देहे तथा देवे" इत्यादिषु तथैव प्रतीतेः । पूजाङ्गत्वेनोभयत्र तत्समर्पणं त्वावश्यकमेव ।
पूजाङ्गत्वं तु यथाह, सारसङ्ग्रहे, भगवत्पूजामुपक्रम्य हारीतः—
"स्नानपात्रोदमादाय स्नापयेत्कमलापतिम् ।
कस्तूरीतिलकं गन्धं पुष्पाणि सुरभीनि च ॥
वस्त्रं चैवोपवीतं च दद्यादाभरणानि च" ॥ इत्याह ।
एवं नारदपञ्चरात्रे तृतीयरात्रे षष्ठाध्याये भगवत्पूजामुपक्रम्य ( श्लो० १५–१६ )—
"भूयो-वेणुं वदनस्थं वक्षोदेशे वनमालाम् ।
वक्षोजोर्ध्वं प्रयजेच्च श्रीवत्सं कौस्तुभरत्नम् ॥

श्रीखण्डनिष्पन्दविचर्चिताङ्गो
मूलेन भालादिषु चित्रकाणि ।
लिख्यादथो पञ्जरमूर्तिमन्त्रै-
रनामयो दीपशिखाकृतीनि" ॥

इत्याकारोऽपि दर्शितः । इदं च पूर्वापरवचनानुरोधात्पूज्यभगवत्स्वरूपविषयमेवेति प्रतिभाति । इहाह्निकस्योपक्रान्तत्वात्पूजकस्य तु पूर्वं जपारम्भ एव तिलकस्य विहितत्वात् । यदि त्विदं पूजकस्यैव पूजामध्ये पुनस्तदङ्गभूततिलकविधानमित्युपगम्यते, तदापि भगवतस्तिलकसमर्पणस्य शास्त्रसिद्धत्वात्तत्र द्रव्यवदाकारस्यापि शास्त्रोक्तान्यतमस्य भक्तरुच्यनुसारेण विन्यासोऽस्तु । परं, पुण्ड्रं तूर्ध्वमेव समर्पणीयम् ।

अत एव गौतमतन्त्रे षोडशाध्याये ( श्लो० २० )—

"रत्नसिंहासनासीनं पुण्डरीकदलेक्षणम्"

इति ध्येयं भगवत्स्वरूपमुपक्रम्योच्यते ( श्लो० ३१ )—

"दिव्यमालाम्बरधरं दिव्यगन्धानुलेपनम् ।
ललाटे हृदये कुक्षौ कण्ठे बाह्वोश्च पार्श्वयोः ॥
विराजितोर्ध्वपुण्ड्रेण चन्दनेन विभूषितम्" ॥ इति ।

एवमन्यत्रापि दृश्यम् ।

पूजाङ्गत्वाद्धरेरूर्ध्वं तिलकं किल केनचित् ।
सुद्रव्येणोचिताकारं यथाचारं विरच्यताम् ॥ १ ॥
तत्प्रियायाः श्रिया लोके स्त्रिया इव विधीयते ।
स्वरुच्या तिलकं भक्तैः सेवासक्तैर्निरन्तरम् ॥ २ ॥

---

## अथ द्वितीयोऽवान्तरः प्रश्नः ।

( द्विचत्वारिंशः प्रश्नः, उत्तरकारिका, वेदे ऊर्ध्वपुण्ड्रस्येतिकर्तव्यता, स्त्रीणां विवाहभिन्नवैदिककर्माभावः, पतिकृतोर्ध्वपुण्ड्रेण कर्मसाफल्यम्, पृथग्धर्मव्रताद्यनधिकारश्च )

**तदनु भवच्छिष्याणां तत्पत्नीनां च समानरीत्या वा वैलक्षण्येनेति वक्तव्यम्? ॥ ४२ ॥**

उत्तरम्—

शिष्टाचारो न हि स्त्रीणामूर्ध्वपुण्ड्रविधेः क्वचित् ।
वैदिकत्वात्स्वपतिना कृते सति च सिद्धितः ॥ १ ॥

तत्र वैदिकत्वं तु वेदमन्त्रोच्चारणविशिष्टेतिकर्तव्यताकत्वात् । तथाहि, आथर्वणोपनिषदि—

"अथ गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव ।
चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव" ॥ १ ॥

इति प्रार्थनम् ।

इमम्मे गङ्गेति जलमादाय, विष्णोर्नुकमिति मर्दयेत्, अतो देवा अवन्तु न इत्येताभिर्ऋग्भिर्विष्णुगायत्र्या च त्रिवारमभिमन्त्र्य,

"शङ्खचक्रगदापाणे द्वारकानिलयाऽच्युत ।
गोविन्दपुण्डरीकाक्ष रक्ष मां शरणागतम्" ॥

इति ध्यात्वा, गृहस्थो ललाटादिद्वादशस्थलेष्वनामिकाङ्गुल्या विष्णुगायत्र्या केशवादिद्वादशनामभिर्वा धारयेत् । ब्रह्मचारी वानप्रस्थो ललाटकण्ठहृदयबाहुमूलेषु वैष्णव्या गायत्र्या कृष्णादिपञ्चनामभिर्वा धारयेत् । यतिस्तर्जन्या शिरोललाटहृदयेषु प्रणवेन धारयेदिति ।

वैदिके च स्त्रीणामनधिकारोऽस्मिन्कल्पे सर्वधर्मशास्त्रदुन्दुभिघुष्टोऽस्त्येव । यथाह मनुः ( अ० २ श्लो० ६६ )—

"अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥
वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया" ॥ इति ।

पुनर्नवमाध्याये ( श्लो० १८ )—

"नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मो व्यवस्थितः ।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः" ॥

न चैवं सति,

"स्वाध्यायजपहोमादि संध्यादानादिकं च यत् ।
ऊर्ध्वपुण्ड्रं विना कुर्यात्तत्सर्वं निष्फलं भवेत्" ॥

इत्यादिस्मृतिसारसमुच्चयादिधृतवचनैरूर्ध्वपुण्ड्रराहित्येन कृतानां सर्वकर्मणां वैफल्यकथनात्स्त्रीकर्तृकेऽपि दानादौ वैफल्यप्रसङ्गात्, तद्वारणाय तस्या अपि तदावश्यकमिति शङ्क्यम्;

"सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्" ॥

इत्युपवीतराहित्येन कृतकर्मणां वैफल्यस्मरणेऽपि स्त्रीणां तदनधिकारात्, विवाहोत्तरमुपवीतद्वयधारणेनैव तासां कर्मवैफल्यनिवृत्तिसम्भवात् ।

अत एव पञ्चमाध्याये स्त्रीधर्मेषु मनुः ( श्लो० १५५ )—

"नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम्" इति ।

बृहत्पराशरोऽपि चतुर्थाध्याये स्त्रीधर्मानुपक्रम्य ( श्लो० ६४ )—

"सामाहमृक्त्वमित्याद्यैर्देवैर्न्यस्ता नृणां तनौ ।
अर्धकाया नराणां ताः स्त्रीणां नातः पृथग्व्रतम्" ॥ इति ।

व्रतशब्देन साम्प्रदायिकनित्यकर्तव्यतिलकादेरपि सङ्ग्रहः ।

पुनर्निर्णयसिन्धौ प्रथमपरिच्छेदे स्कान्दे—

"नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।
भर्तृशुश्रूषयैवैता लोकानिष्टान् व्रजन्ति हि ॥
यद्देवेभ्यो यच्च पित्रादिकेभ्यः
कुर्याद्भर्ताभ्यर्चनं सत्क्रियां च ।
तस्यार्धं वै सा फलं नान्यचित्ता
नारी भुङ्क्ते भर्तृशुश्रूषयैव" ॥ इति ।

अतोऽग्निहोत्रादिवदूर्ध्वपुण्ड्रमपि पतिकृतमेव तासां फलं जनयति ।

अतएव,

"ऊर्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः"

इति निर्णयसिन्धौ तृतीयपरिच्छेदपूर्वार्धधृतवचने ऊर्ध्वपुण्ड्रे अग्निहोत्रतौल्यतातिदेशः ।

( तासां गोपीचन्दनादिनिषेधः उपवासेऽपि सुवासिनीनां गन्धताम्बूलदन्तधावन-
पुष्पाञ्जनादेरत्याग , भाले शूद्रवद्वर्तुल श्राद्धे वर्तुलस्यैव निषेधः )

किञ्च, ऊर्ध्वपुण्ड्रविषये मुख्यद्रव्यस्य गोपीचन्दनतुलसीमूलमृत्तिकादेर्धारणं न क्वापि स्त्रीणां विधीयते । प्रत्युत स्त्रीणां नित्यं माङ्गलिकधारणनियमात्,

"माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनम्"

इतिवचनात्तासां तद्धारणनिषेध एव गम्यते । गन्धादिबिन्दुस्तु ललाटे ताभिः कार्य एव । अवैधव्यकरत्वात् । उपवासव्रतादिष्वपि अत्याज्यत्वस्मरणाच्च । यथोक्तं हेमाद्रौ व्रतकाण्डे स्त्रीव्रतमुपक्रम्य गारुडे—

"गन्धालङ्कारताम्बूलपुष्पमालानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्" ॥ इति ।

तथा तत्रैव भविष्ये—

"अञ्जनं च सताम्बूलं कुङ्कुमं रक्तवाससी ।
धारयेत्सोपवासापि अवैधव्यकरं यतः ॥
विधवा यतिमार्गेण कुमारी वा यदृच्छया" ॥ इति ।

मदनरत्ने व्यासः—

"दन्तधावनपुष्पादि व्रतेऽप्यस्या न दुष्यति"

अत्राप्यादिशब्देन पूर्वोक्तगन्धादिसङ्ग्रहः ।

अथ स्त्रीव्रतेषु विशेष उच्यत इत्युपक्रम्य निर्णयसिन्धौ मनुः—

"पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्" ॥ इति ।

इदं च गन्धधारणं स्त्रिभिर्वर्तुलरूपेणैव कार्यम् । धर्मशास्त्रेष्वनेकत्र स्त्रीशूद्रयोस्तौल्य-कथनात् । मदनपारिजाते तृतीयस्तबके ब्रह्मपुराणे—

"ऊर्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियस्तु त्रिपुण्ड्रकम् ।
अर्धचन्द्रं तु वैश्यस्य वर्तुलं शूद्रजातिषु" ॥

इति, शूद्राणां वर्तुलविधानात्स्त्रीणामपि गन्धधारणे आकारनिर्देशेन वर्तुलकरणस्यैवा-वगम्यमानत्वात् । तथैव वैष्णवस्मार्तादिसर्वसम्मतसार्वत्रिकशिष्टाचारदर्शनाच्च ।

एतेनैव,

"एकं पुण्ड्रं च नारीणां शूद्राणां च विधीयते"

इति पाद्मवचनमपि व्याख्यातं वेदितव्यम् । शूद्रेषु वर्तुलविधायकपूर्वोक्तब्रह्मपुराण-वाक्यैकवाक्यतया, एतद्वाक्यस्थपुण्ड्रशब्दस्य वर्तुलपरत्वनिश्चयात् । तेनैव नारीणामपि

साहचर्येण निःसंशयं वर्तुलस्यैव आप्यमाणत्वात् । अन्यथा, पुण्ड्रशब्दावृत्तिवाक्यभेदाद्यनेकदोषप्रसङ्गाच्च । महानिबन्धेषु स्त्रीणां पुण्ड्रे आकारान्तरसमर्पकवचनान्तरादर्शनेन तदपवादायोगाच्च । नच पुण्ड्रशब्देन वर्तुलग्रहणमयोग्यमिति शङ्क्यम्, हेमाद्रौ देवलः—

"ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे मालां तथैव च ।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम्" ॥

अत्र पुण्ड्रशब्देन वर्तुलमित्यपरार्कमदनरत्ननिर्णयसिन्ध्वादिभिरङ्गीकारात् । माला तु पुष्पादेरेव श्राद्धकाले कर्तुर्निषिद्धेत्यन्यत्र विस्तरः । अत एवाङ्गनानां न क्वापि ऊर्ध्वपुण्ड्रविधानस्य शिष्टाचारो दरीदृश्यते । एवमेव शैवस्मार्तादिस्त्रीणां भस्मत्रिपुण्ड्रादिधारणसम्प्रदायोऽपीत्यलम् ।

तस्मात्स्त्रीभिर्नोर्ध्वपुण्ड्रं कार्यं धार्यस्तु सर्वदा ।
अमन्दसौभाग्यपदं गन्धबिन्दुः सुसुन्दरः ॥ १ ॥

---

## अथ तृतीयोऽवान्तरः प्रश्नः ॥

## ( त्रिचत्वारिंशः प्रश्नः, उत्तरकारिका, तिलकार्थं गङ्गातीर-तुलसीमूलादिमृत्तिकाः, चरणोदकमृत्तिलकं च ) तत्तद्द्रव्यभेदे किं प्रमाणम् ? ॥ ४३ ॥

### उत्तरम् ।

द्रव्यत्वेनोर्ध्वपुण्ड्रस्य मृद्गोपीचन्दनादिना ।
विष्णोः प्रसादभूतं च प्रोच्यते चन्दनादिकम् ॥ १ ॥

तथाहि स्कान्दे मार्गशीर्षमहात्म्ये—

"शृणु वत्स प्रवक्ष्यामि पुंड्रं च त्रिविधं स्मृतम् ।
तुलसीमृत्स्नया सार्धं श्रीगोपीचन्दनेन च ॥
हरिचन्दनेन च ततः कार्यं तत्र विचक्षणैः" ॥ इति ॥

तत्र पूर्वं मृदो निरूप्यन्ते पराशरमाधवीये प्रथमाध्याये "सन्ध्यास्नानं जपो होम", इत्यस्य व्याख्यायां ब्रह्मपुराणे—

"पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ।
सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते ॥
मृद एतास्तु सम्पाद्या वर्जयेत्त्वन्यमृत्तिकाम्" ॥ इति ।

चतुर्विंशतिमतव्याख्याचारकाण्डकमलाकराह्निकादिष्वपीमान्युदाहृतानि ।

आचारप्रकाशे भारते—

"पर्वताग्रे नदीतीरे रामक्षेत्रे विशेषतः" ॥ इति, इतरत्पूर्ववत् ।

तथा, तत्रैव नीलकण्ठाह्निकादिषु पाद्मे—

"श्रीरङ्गे व्यङ्कटाद्रौ च श्रीकूर्मे द्वारिके शुभे ।
प्रयागे नारसिंहाद्रौ वाराहे तुलसीवने ॥
गृहीत्वा मृत्तिकां भक्त्या विष्णुपादजलैः सह ।
धृत्वा पुण्ड्राणि चाङ्गेषु विष्णुसायुज्यमाप्नुयात् ॥
पर्वताग्रे नदीतीरे बिल्वमूले जलाशये ।
सिन्धुतीरे हरिक्षेत्रे विष्णुपादोदकाश्रिते ॥
पुण्ड्राणां धारणार्थाय गृह्णीयात्तत्र मृत्तिकाम् ।
अभावे तूदकेनापि पुण्ड्रं चैतत्सदाचरेत्" ॥ इति ।

मदनपारिजाते तृतीयस्तबके आह्निकप्रकरणे व्यास आह—

"जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्" ॥ इति ।

इदमाचारप्रकाशेऽपि सङ्गृहीतम् । धर्माब्धिसारे च (परि० ३) पूर्वार्धे, आह्निकं प्रक्रम्य, "प्रातः पुण्ड्रं मृदा कुर्यात्" इत्यारभ्य, "शिरसि वासुदेवे"ति "मृदा तिलको विधेयः" इत्यन्तेन एतदेव स्फुटीकृतम् ।

पाद्मोत्तरखण्डे तु—

"यस्मिन्कस्मिन्महाभागा वैष्णवा धारयन्ति वै ।
तस्मिन् वै मृत्तिका ग्राह्या ऊर्ध्वपुण्ड्रस्य धारणे" ॥ इति ।

अतश्चरणामृतादिमृत्तिकयाऽपि तिलकं युक्तम् । "विष्णुपादजलैः सह" इति वाक्यान्तरानुगृहीतत्वाच्च ।

आचारार्के तु ब्रह्मपुराणे तु "गङ्गातीरसमुद्भूतामि"ति पादत्रयं पूर्ववत् । नीलकण्ठाह्निके गारुडे—

"तुलसीमृत्तिकापुण्ड्रं यः करोति दिने दिने ।
तस्यावलोकनात्पापं याति वर्षशतोद्भवम् ॥

(गोपीचन्दनस्य महिमा)

अथ गोपीचन्दनं चिन्त्यते, तत्र आथर्वणोपनिषदि त्वस्यास्त्येव विस्तरेण निरूपणम् । मदनपारिजाते उक्तस्थले सत्यतपाः—

"गोमतीतीरसम्भूतां गोपीदेहसमुद्भवाम् ।
मृदं मूर्ध्ना वहेद्यस्तु सर्वपापैः प्रमुच्यते" ॥ इति ।

आचारप्रकाशेऽपि महाभारते—

"द्वारावत्युद्भवाद्गोपीचन्दनादूर्ध्वपुण्ड्रकम् ।
कारयेन्नित्यमेवं हि पापं हन्ति दिने दिने" ॥ इति ।

धर्मप्रवृत्तौ—

"ब्रह्मघ्नो वाथ गोघ्नो वा हैतुकः सर्वपापकृत् ।
गोपीचन्दनसम्पर्कान्मुक्तो भवति तत्क्षणात्" ॥ इति ।

नीलकण्ठाह्निके ब्रह्मपुराणे—

"ब्रह्महा वाथ गोघ्नो वा पाखण्डी सर्वपापकृत् ।
गोपीचन्दनसम्पर्कात्पूतो भवति मानवः" ॥

इत्थं चतुर्विंशतिमतव्याख्याकमलाकराह्निकरघुनाथभट्टाह्निकगोविन्दार्णवाचारमयूखादिषु गोपीचन्दनमहिम्बोधकानि वचनानि बहून्येवोपलभ्यन्ते, तानि विस्तरभयादिह न लिख्यन्ते ।

( भगवदर्पितचन्दनादिना तिलकम्, जले कर्मसु जलतिलकं च, गोपीचन्दनस्यापि गोपीकृष्णाङ्गरागसम्भवत्वम् )

अथ भगवत्प्रसादभूतं गन्धचन्दनादिकं विचार्यते । तत्र, देवार्चनोत्तरं तदीयगन्धेन तिलकं तु सुप्रसिद्धमेव । यथोक्तमाचारमयूखे ब्रह्माण्डे—

"देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये ।
जलेन तिलकं कुर्याज्जलान्तःकर्मसिद्धये" ॥ इति ।

भट्टोजीदीक्षितकमलाकराह्निकादिषु—

"देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये ।
जलमध्ये यदा सन्ध्या तोयेन तिलकं तदा" ॥ इति ।

आचारार्के च प्रयोगपारिजाते—

"मृद्भस्म चन्दनं प्रोक्तं तोयं चैव चतुर्थकम् ।
स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना ॥
देवानभ्यर्च्य गन्धेन जलमध्ये जलेन तु" ॥ इति ।

अत्र देवप्रसादभूतगन्धेनेत्येवावगम्यते अभ्यर्च्येति पूर्वकालार्थकाव्ययस्य तदैव स्वारसिकतयाऽन्वयात् । तथैव सति पापापनुत्तिरूपफलसम्भवाच्च । अन्यथा श्रुतहान्यश्रुतकल्पनाप्रसङ्गाच्च ।

किञ्च, कौर्मे—

"यस्तु नारायणं देवं प्रपन्नः परमं पदम् ।
धारयेत्सर्वदा पुण्ड्रं ललाटे गन्धवारिभिः" ॥ इति ।

अत्र धारयेत्सर्वदा शूलमिति क्वचित्पुस्तकेषु दृश्यमानः पाठस्तु श्रीपुरुषोत्तमचरणै-रवतारवादावल्यां सगुणोपासकपरत्वेन सम्यग्व्यवस्थापित एवेति किमिहाप्रकृतेन तेन ?

गौतमकृताचारसूत्रेषु ( प्र० १ ) आह्निकं प्रकृत्य ( खं० ७ ) नित्यस्नानं निरूप्य ( खं० ८ ) सन्ध्यादिसर्वकर्मवैफल्यवारणायावश्यकोर्ध्वपुण्ड्रनिरूपणं प्रक्रम्य तत्र द्रव्यापेक्षायामुच्यते—

"द्वारवत्युद्भवगोपीचन्दनोर्ध्वपुण्ड्रधारणं नित्यं पापं हन्ति"

तथा,

"जाह्नवीतीरसम्भूतं मृत्तिलकधारिणं दृष्ट्वा ब्रह्महा शुध्येत्"

"गोपीचन्दनधारी सूर्यरूपं बिभर्ति केवलं तमोनाशाय"

"शालग्रामशिलालग्नं कुङ्कुमं चन्दनं वा यस्तु धारयते स मुक्तो भवती"ति

स्पष्टमेव भगवत्प्रसादभूतकुङ्कुमादेस्तिलकद्रव्यत्वं मुक्तिरूपसर्वोत्तमफलकत्वं चोक्तम् ।

गौतमीयतन्त्रेऽपि सप्तमाध्याये आह्निकमुपक्रम्य स्नानान्तं निरूप्य ( श्लो० ६७ )—

"पीडयित्वाम्बरं चोरू प्रक्षाल्याचम्य वाग्यतः ।<br>
धारयेद्वाससी शुद्धे परिधानोत्तरीयके ॥<br>
अच्छिन्ने सदृशे शुक्ले आचामेत्पीठसंस्थितः ।<br>
ऊर्ध्वपुण्ड्रं चन्दनेन कृत्वा सन्ध्यां समाचरेत्" ॥ इति ।

पुनस्तत्रैव नवमाध्याये मानसपूजामुपक्रम्य ( श्लो० १८ )—

"अथवा बाह्यसम्भूतैः प्रकटैरर्चयेत्प्रभुम् ।<br>
स्वागताद्यैर्निवेद्यान्तैरात्माऽभेदेन पूजयेत् ॥<br>
चन्दनागुरुनिष्पन्दचर्चिताङ्गः स्वयं गुरुः ।<br>
विष्णुपञ्जरमन्त्रेण तत्तत्स्थाने विधानवित् ॥<br>
रचयेत्तिलकं भक्त्या प्रदीपकलिकानिभम्" ॥ इति ।

अत्राप्यर्चनस्यानुपदमुक्तत्वाद्भगवत्प्रसादभूतद्रव्येण तिलकं कर्तव्यमिति प्रतीयते ।

किञ्च, वस्तुतस्तु, आथर्वणे—"तँहोवाच भगवान् वासुदेवः वैकुण्ठस्थानोद्भवं मम प्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारितं विष्णुचन्दनं वैकुण्ठस्थानादाहृत्य द्वारकायां मया प्रतिष्ठितं चन्दनं कुङ्कुमादिसहितं विष्णुचन्दनं ममाङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनाद्गोपीचन्दनमाख्यातं मदङ्गलेपनं पुण्यं चक्रतीर्थान्तःस्थितम्" इति; तथा, चन्दनस्य वैभवं "य एवंविद्वान्" इति ।

तथा,

"चन्दनं वापि गोपीनां केलिकुङ्कुमसम्भवम्" ॥ इति ।

"कृष्णगोपीरतोद्भूतं पापघ्नं गोपिचन्दनम् ।

तत्प्रसादात्सर्वदैव चतुर्वर्गफलप्रदम्" ॥

इत्यादिना गोपीचन्दनस्यापि भगवत्प्रसादभूतकुङ्कुमत्वेनैव माहात्म्यं श्रावितमिति तत्प्रसादभूतकुङ्कुमचन्दनादेः सर्वोत्तमत्वमेव ।

अत एव मदनपारिजाते ब्रह्मपुराणे—

"तिलकं तु द्विजः कुर्याच्चन्दनेन यदृच्छया"

इति वचनमुक्तम् । इदमाचारप्रकाशतैत्तिरीयनीलकण्ठाह्निककमलाकरकृतबह्वृचाह्निकप्रभृतिषु च सङ्गृहीतम् ।

( विवाहादौ गोपीचन्दननिषेध , नित्यं गोरोचनादिमङ्गलाचारः )

क्वचित्तु धर्मप्रवृत्तिस्मृत्यर्थसारनिर्णयसिन्धुप्रभृतिषु,

"अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि ।
माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनम्" ॥

इति निषेधोऽप्युदाहृतः । अतो नित्यमावश्यकमङ्गलाचारैर्गृहस्थैस्तु गन्धगोरोचनादिनैवोर्ध्वपुण्ड्रं सर्वकर्मवैफल्यवारणायावश्यकत्वाद्विधेयमिति केचित् ।

नित्यं मङ्गलाचारधारणं तु विदधाति चतुर्थाध्याये प्रत्यहकर्तव्यधर्मेषु मनुः ( श्लो० १४५ )—

"मङ्गलाचारयुक्तः स्यात् प्रयतात्मा जितेन्द्रियः ।
जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः ॥
मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चैव विनिपातो न विद्यते" ॥ इति ।

अत एवात्राभिप्रेतार्थसिद्धिर्मङ्गलं, तद्धेतुत्वेन गोरोचनादिधारणमपि मङ्गलम् । गुरुसेवादिकमाचारस्तत्रोद्युक्तः स्यादिति कुल्लूकभट्टो व्याचख्यौ । इदं च गोरोचनादिधारणमूर्ध्वपुण्ड्ररूपेणैवेति निश्चीयते । जपहोमादिविनिपाताभावफलकत्वात् । साधारणस्य तादृशफलकत्वायोगात् । क्वचिदपि तद्बोधकप्रमाणानुपलम्भात् । ऊर्ध्वपुण्ड्राहित्येन कृतजपादिविनिपातस्य तु—

"स्वाध्यायजपहोमादि सन्ध्यादानादिकं च यत् ।
ऊर्ध्वपुण्ड्रं विना कुर्यात्तत्सर्वं निष्फलं भवेत्" ॥

इत्यादिवचनैर्धर्मप्रवृत्तिस्मृत्यर्थसारसमुच्चयमदनपारिजातादिषु व्यवस्थापितत्वाच्च ।

धर्मप्रवृत्तौ तु द्रव्यान्तरमप्युक्तम्—

"अभ्यङ्गोत्सवकालेऽपि कस्तूरीचन्दनादिना" इति ।

( भस्मोर्ध्वपुण्ड्रस्त्रिपुण्ड्रयोर्निषेधः, क्वाचित्कतद्विधेराचारावस्था )

तथा, तत्रैव—

"ऊर्ध्वपुण्ड्रं मृदा कुर्यात्तिर्यक् चैव तु भस्मना ।

चन्दनेनोभयं कुर्यादन्यथा नरकं व्रजेत्" ॥

अन्यथा भस्मनोर्ध्वपुण्ड्रकरणादौ सति ।

नीलकण्ठाह्निके—

"न चोर्ध्वं धारयेद्भूतिं न तिर्यग्गोपिचन्दनम् ।
तिर्यगूर्ध्वं च वृत्तं च धारयेच्चन्दनादिकम्" ॥

तत्रैव ब्रह्माण्डे—

"ऊर्ध्वपुण्ड्रं मृदा कुर्यात्त्रिपुण्ड्रं भस्मना सदा ।
तिलकं च द्विजः कुर्याच्चन्दनेन यदृच्छया" ॥

चतुर्विंशतिमतव्याख्याचारकाण्डाचारमयूखादिषु सङ्ग्रहे—

"न कदाचिन्मृदा तिर्यङ्ङ् न्यसेदूर्ध्वं न भस्मना" । इति ।

आचारार्के प्रयोगपरिजाते, मृदोर्ध्वपुण्ड्रं भस्मना तिर्यक् चन्दनेनोभयमित्याह कात्यायनः ।

"ऊर्ध्वपुण्ड्रं मृदा कुर्याद्भस्मना तु त्रिपुण्ड्रकम् ।
उभयं चन्दनेनैव अभ्यङ्गोत्सवरात्रिषु" ॥ इति ।

परमानन्दमन्दारे पाद्मे—

"मृत्तिका चन्दनं भस्म तोयं चैव चतुर्थकम् ।
एभिर्द्रव्यैर्यथालाभमूर्ध्वपुण्ड्रं विधीयते" ॥

अत्रैव व्यासः—

"ऊर्ध्वपुण्ड्रं मृदा कार्यं त्रिपुण्ड्रं भस्मना तथा ।
चन्दनेनोभयं कुर्यान्न तिर्यग्गोपिचन्दनात्" ॥ इति ।

भट्टोजिदीक्षितकृताह्निककमलाकरभट्टाह्निकाचारमयूखेषु ब्रह्माण्डे—

"मृत्तिका चन्दनं चैव भस्म तोयं चतुर्थकम् ।
एभिर्द्रव्यैर्यथाकालमूर्ध्वपुण्ड्रं भवेत्सदा" ॥

तत्र भस्मना पुण्ड्रं तु वैष्णवैर्न कार्यम् ।

"न कदाचिन्मृदा तिर्यङ्ङ् न्यसेदूर्ध्वं न भस्मना" इति सङ्ग्रहादिषु तन्निषेधात् ।

चतुर्विंशतिमतव्याख्यायां ब्रह्माण्डवचनमुक्त्वा, अत्र भस्मनोर्ध्वपुण्ड्रस्य विहितप्रतिषिद्धत्वाद्वृद्धाचारतो व्यवस्थेति कथनात् । नृसिंहभट्टीयेऽपि तस्य विहितप्रतिषिद्धत्वमुपपाद्य शिष्टाचारानुसाराद्व्यवस्थोक्तेश्चेति । अतो होमान्ते बिन्दुरेव कार्यः । तथैव

कात्यायनगृह्याद्यनुगृहीतातैत्तिरीयादीनां शिष्टाचारादित्यन्यत्र विस्तरः। एवं चन्दनादीनामप्यूर्ध्वपुण्ड्रद्रव्यत्वं व्याख्यातम् ॥

( भस्मोत्पत्तिविधिलेश, तत्र चन्दनकुङ्कुमकाश्मीरादिमेलनाग्रहः, जलयोगविचारः, चन्दनादेर्दृष्टमात्रार्थकताखण्डनम्, गोपीचन्दनमिश्रकुङ्कुमादितिलकम् )

किञ्च, भवतामपि स्वधारणीये भस्मनि मिश्रणाय चन्दनादीनां तत्तद्द्रव्याणामाग्रहोऽस्त्येव। यथा, बृहज्जाबालोपनिषदि तृतीयब्राह्मणे—"अथ भुशुण्डः कालाग्निरुद्रं विभूतियोगमनुब्रूहीति स होवाच विकटां गामि"त्याद्युपक्रम्य भस्मकरणान्तं व्याख्याय श्राव्यते—

"संयोज्य गाङ्गसलिलैः कपिलामूत्रकेण वा।
चन्द्रकुङ्कुमकाश्मीरमुशीरं चन्दनं तथा ॥
अगरुद्वितयं चैव चूर्णयित्वा तु सूक्ष्मतः।
क्षिपेद्भस्मनि तच्चूर्णं ओमिति ब्रह्ममन्त्रतः ॥
प्रणवेनाहरेद्विद्वान् ब्रह्मेति वटकानथ।
अणोरणीयानिति हि मन्त्रेण च विचक्षणः ॥
इत्थं भस्मसु सम्पाद्य शुष्कमादाय मन्त्रवित्" ॥ इति।

तत्रैव चतुर्थब्राह्मणेऽपि भस्मनोद्धूलनमुपक्रम्य—

"देवाग्निगुरुविप्राणां समीपेऽन्त्यजदर्शने।
अशुद्धभूतले मार्गे कुर्यान्नोद्धूलनं व्रती ॥
शङ्खतोयेन मूलेन भस्मव्यामिश्रणं भवेत्।
योजितं चन्दनेनापि वारिणा संयुतं तु वा ॥
चन्दनेन समं लिम्पेज्ज्ञानार्थी चूर्णमेव तत्।
मध्याह्नात्प्राग्जलैर्युक्तं तोयं तदनुवर्जयेत्" ॥ इति।

शैवसुधाकरे तु धारिणा संयुतं तु वा, ज्ञानार्थी भस्म चैव हीति पाठभेदादिदमुपन्यस्तम्।

तत्रैव, कौर्म्ये—

"वैदिकैर्मन्त्ररहितं चन्दनागुरुकुङ्कुमम्।
तिर्यक्पुण्ड्रात्मना धार्यं कान्तिसौख्याभिलाषिभिः" ॥ इत्यादि।

यत्तु,

"भस्मवच्चन्दनादीनां त्यागेऽनर्थो न विद्यते।
चन्दनादीन्यतो लौकिकान्येव न संशयः ॥
दृष्टकान्त्याद्यर्थचन्दनादेरुपरि भस्मनि" ॥

इत्यादीनि चन्दनादीनां शोभादिदृष्टमात्रफलकत्वप्रतिपादकानि वचनान्युपन्यस्तानि।

तान्यप्रक्षिप्तत्वनिश्चये सति "चन्दनेन समं लिम्पेज्ज्ञानार्थी"ति ज्ञानरूपात्युत्तमादृष्टार्थकत्वप्रतिपादकजाबालश्रुतिविरोधादप्रमाणानि सर्वावेष्टनस्मृतिवत् ।

"श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते ।
तत्र श्रुतिर्बलिष्ठा स्याद्द्वयोर्द्वैधे स्मृतिर्वरा" ॥

इति लघुव्यासस्मरणात् । द्वयोः स्मृतिपुराणयोः । प्रपञ्चितं चैत"द्विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि"त्यधिकरणे जैमिनिना । नैवेद्यभक्षणविचारादौ च शैवसुधाकरेऽपि तथैवाङ्गीकृतम् । अमिश्रितयोः पृथक्पृथग्धारणविषयाणि वा, प्रकरणेन तथानिश्चयात् । तस्मान्मिश्रद्रव्यैरपि पुण्ड्रधारणे न कस्यापि विवाद इति कृतमतिशयेन ।

अत एव बहवः शिष्टा गोपीचन्दनमिश्रेण भगवदुपभुक्तगन्धचन्दनादिनापि तिलकानि कुर्वन्ति । एवम्विधेषु निबन्धेषु विविधवचनप्रचयोपन्यासेन तानि तानि तिलकद्रव्याणि निर्णीतान्येव । तेषां च यथाकालं यथाशिष्टाचारं यथास्वकुलधर्मं च व्यवस्था ।

"साधूनां समयश्चापि प्रमाणं वेदवद्भवेत्" इति ।
"येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति" ॥

इत्यादिवाक्यैस्तथानिश्चयात् । तस्मादिह न कोऽपि शङ्कावकाशः ॥

इत्थम्,

स्तव्यानां भुवि भव्यानां द्रव्याणां तिलके भिदा ।
किञ्चित्प्राचीनवचनविचारेण विनिश्चिता ॥ १ ॥

---

**(चतुश्चत्वारिंशः प्रश्नः, उत्तरकारिका, विविधास्तिलकाकाराः, ललाटादिस्थानविशेषेणाकारविशेषः, केषाञ्चित्सम्मोहनाद्यर्थत्वम्, भाले दण्डाकारं चरणाकारं वा, ऊर्ध्वपुण्ड्रत्रिपुण्ड्रे सान्तराले एव कार्ये, अच्छिद्रयोर्निन्दा)**

## अथ चतुर्थोऽवान्तरः प्रश्नः ॥ ४ ॥

## आकारभेदे च किं प्रमाणम्? ॥ ४४ ॥

उत्तरम्—

त्रया वाचामनर्वाचां माधवाद्यैरुदाहृताः ।
प्राचामाचारमिलिताः पुण्ड्राकारविचारणे ॥ १ ॥

तथा हि—पराशरमाधवीये प्रथमाध्याये ब्रह्मपुराणे—

"वर्तिं दीपाकृतिं वापि वेणुपत्राकृतिं तथा ।
पद्मस्य मुकुलाकारं तथैव कुमुदस्य च ॥
मत्स्यकूर्माकृतिं वापि शङ्खाकारमतः परम् ।
दशाङ्गुलप्रमाणं तु उत्तमोत्तम उच्यते ॥
नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् ।
सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं स्मृतम् ॥
चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठं त्रिविधं भवेत्" ॥

इति नीलकण्ठाह्निकाचारप्रदीपचतुर्विंशतिमतव्याख्याप्रभृतिषु चैतान्युपलभ्यन्ते । इमान्येव वाक्यानि मदनपारिजाते ब्रह्माण्डे भगवद्वाक्यत्वेन च लिखितानि । आचारप्रकाशे तु दशाङ्गुलप्रमाणमिति श्लोकद्वयं किञ्चित्पाठभेदेन आदित्यपुराणस्थमुदाहृतम् ।

आचारप्रकाशभट्टोजिदीक्षिताह्निककमलाकराह्निकाचारमयूखादिषु च स्थानविशेषेण आकारविशेषः स्मर्यते—

"निटिले बाहुवच्चैव दण्डवत्कर्णपल्लवे ।
हृदये कमलाकारमुदरे दीपवल्लिखेत् ॥
अधः पृष्ठे स्कन्धदेशे लिखेज्जम्बुफलाकृतिम्" ॥ इति ।

निटिले ललाटे ।

भागवततत्त्वभास्करे तु स्मृतिसारे—

"ललाटे ज्योतिषाकारं बाह्वोर्वै वंशपत्रवत् ।
हृदयेऽश्वत्थपत्राभं शेषाङ्गे तुलसीदलम्" ॥ इति ।

तत्रापि निष्कामवैष्णवैस्तु ललाटे हरिचरणाकारं दण्डाकारं वेत्येव धारणीयम्, न तु वेणुपत्राकारादि मोहनाद्यर्थत्वादिति सम्यग्भाति ।

अत एवावतारवादावल्यां पाद्मे—

"अश्वत्थपत्रसंकाशो वेणुपत्रसमाकृतिः ।
पद्मकुड्मलसङ्काशो मोहनं त्रितयं स्मृतम् ॥
महाभागवतः शुद्धः पुण्ड्रं हरिपदाकृतिः ।
दण्डाकारं तु वा देवि धारयेदूर्ध्वपुण्ड्रकम्" ॥ इति ।

शुद्धो निष्कामः ।

नीलकण्ठाह्निकाचारप्रदीपादिषु—

"नासामूलं समारभ्य वेणुपत्राकृतिं शुभम् ।
वश्यकामो द्विजः कुर्यात्तिलकं चन्दनादिना" ॥ इत्यादि ।

तेन निटिले बाहुवच्चैवेत्यंशस्तु सकामपरः । उक्तपाद्मादिना तथावगमात् ।

अत एव तत्त्वदीपे श्रीमदाचार्याः—

"दण्डाकारं ललाटे स्यात्पद्माकारं तु वक्षसि ।
वेणुपत्रनिभं बाह्वोरन्यद्दीपाकृतिर्भवेत्" ॥ इति ।

अत्र दण्डाकारमिति चरणाकारस्याप्युपलक्षणम् । उक्तवक्ष्यमाणपाद्मवचनेषूभयोः प्रशंसनात् । तयोः स्वरूपं तु उपरि किञ्चिद्विस्तीर्णत्वे पदाकृति ज्ञेयम्, समत्वे दण्डाकृतीति प्राञ्चः । इदं च सान्तरालमेव कर्तव्यम् ।

"ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा मध्ये शून्यं प्रकल्पयेत् ।
शृणु षण्मुख तन्मध्ये उमयाऽहं श्रिया हरिः" ॥

इत्याचारमयूखे चतुर्विंशतिमतव्याख्यायां कमलाकराह्निके च प्रयोगपारिजातसङ्ग्रहात् ।

अवतारवादावलिभागवततत्त्वभास्करादिषु महानिबन्धेषु पाद्मे—

"एकान्तिनो महाभागाः सर्वभूतहिते रताः ।
सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृति ॥
ऊर्ध्वपुण्ड्रमृजु सौम्यं सुपार्श्वं सुमनोहरम् ।
दण्डाकारं सुशोभाढ्यं मध्ये छिद्रं प्रकल्पयेत् ॥
ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे ।
सान्तराले समासीनो हरिस्तत्र श्रिया सह ॥
निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः ।
स हि तत्र स्थितं विष्णुं श्रियं चैव व्यपोहति ॥
अच्छिद्रमूर्ध्वपुण्ड्रं तु ये कुर्वन्ति द्विजातयः ।
ते ललाटे तु सततं शुनः पादं न संशयः" ॥ इति ।

बृहन्नारदीये पुरुषोत्तममाहात्म्ये विंशाध्याये ( श्लो० २९ )—

"ऊर्ध्वपुण्ड्रमृजु सौम्यं दण्डाकारं प्रकल्पयेत् ।
ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा मध्ये छिद्रं प्रकल्पयेत् ॥
निवसत्यूर्ध्वपुण्ड्रे तु श्रिया सह हरिः स्वयम् ।
त्रिपुण्ड्रे धूर्जटिः साक्षादुमया सह सर्वदा ॥
विना छिद्रं तु यत्पुण्ड्रं शुनः पादसमं विदुः" ॥ इति ।

भागवततत्त्वभास्करे पाद्मे—

नासादिकेशपर्यन्तमूर्ध्वपुण्ड्रं सुशोभनम् ।
मध्ये छिद्रसमायुक्तं तं विद्याद्धरिमन्दिरम् ॥

वामभागे स्थितो ब्रह्मा दक्षिणे तु सदाशिवः ।
मध्ये विष्णुं विजानीयात्तस्मान्मध्ये न लेपयेत्" ।। इति ।

(तिलकस्यान्त गोपीचन्दनमुद्रा अवश्य कार्या)

अथात्रापि यथाकालं गोपीचन्दनादिना नाममुद्रादिमुद्राधारणं तु तिलकान्तरालेऽपि विधेयमेव । अत एवोर्ध्वपुण्ड्रविधावाचारप्रकाशे—

अत्र हलायुधीये विशेषः—

"मन्त्रमष्टाक्षरं वापि प्रीयते तस्य केशवः ।
गोपीचन्दनमुद्रां च कृत्वा भ्रमति भूतले ।।
सोऽपि देशो भवेत्पूतः किम्पुनर्यत्र संस्थितः" ।।

पाद्मे—

"कृष्णनामाक्षरैर्गात्रमङ्कयेच्चन्दनादिना ।
स लोकपावनो भूत्वा तस्य लोकमवाप्नुयात्" ।।

तथा भगवद्वचः—

"ममावतारचिह्नानि दृश्यन्ते यस्य विग्रहे ।
मर्त्यो मर्त्यो न विज्ञेयः स नूनं मामकी तनुः" ।। इति ।

नीलकण्ठाह्निके च सनत्कुमारः—

"कृष्णायुधाङ्कितं देहं तोयचन्दनमृत्स्नया ।
प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति ।।
यदा यदा प्रपश्येत देहं शङ्खादिचिह्नितम् ।
तदा तदा जगत्स्वामी तुष्टो हरति पातकम्" ।। इति ।

प्रथमश्लोकपूर्वार्धे यः कुर्यादिति शेषः । कृतमनेनाप्राकृतप्रपञ्चनेन । अस्ति हि मनुवचनं "नापृष्टः कस्यचिद्ब्रूयादि"ति । तस्मात्तिलकानां तत्तदाकारभेदे न कोऽप्यप्रामाणिकत्वसन्देहगन्ध इति दिक् ।

सारं सारं मया प्रोक्तमपारं शास्त्रमत्र तत् ।
नानाऽऽकारं यथाऽऽचारं सविचारं विधीयताम् ।। १ ।।

---

(पञ्चचत्वारिंशः प्रश्नः, उत्तरकारिके, भारतेऽनुपलभ्यमानस्यापि श्रुत्यादिसिद्धस्य नाप्रमितत्वम्, भारते ऊर्ध्वपुण्ड्र-विधिवचनानि)

## अथ पञ्चमोऽवान्तरः प्रश्नः ॥ ५ ॥

### भारतादिमन्वादिस्मृतिष्वाचारदर्शाद्याह्निकग्रन्थेषु च तिलकविधानं नेति किम्? ॥ ४५ ॥

उत्तरम् ।

श्रुतिष्वपि पुराणेषु प्रायो ग्रन्थेषु चाह्निके ।
सर्वेष्वस्त्यूर्ध्वपुण्ड्रस्य विधानं सर्वसम्मतम् ॥ १ ॥
तथापि नेति किमिति संशयो विस्मयाम्बुधौ ।
निमज्जयति मां यद्वा गतिश्चित्रेयमैश्वरी ॥ २ ॥

तत्र प्रथमं भारतादौ विधानप्रश्नः समाधीयते—

भारतं हि श्रुत्युक्तार्थानुवादकमेव । यथोक्तं श्रीभागवते—

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं कृपया मुनिना कृतम्" ॥ इति ।

तथा,

"भारतव्यपदेशेन आम्नायार्थश्च दर्शितः" । इत्यादि ।

मार्कण्डेयपुराणे—

"भगवन्भारताख्यानं व्यासेनोक्तं महात्मना ।

इत्युपक्रम्योच्यते,

व्यासवाक्यजलौघेन कुतर्कतरुहारिणा ।
वेदशैलावतीर्णेन नीरजस्का महीकृता" ॥ इति ।

एवमन्यत्रापि । तथा च यच्छ्रुतावुक्तं तद्भारतेऽप्यस्त्येवेति मन्तव्यम् ।

ऊर्ध्वपुण्ड्रप्रतिपादिकाः श्रुतयश्च आचारप्रकाशादिषु स्मार्तग्रन्थेष्वपि प्रत्यक्षतयोपलभ्यमानत्वपूर्वकं मूललेखनपूर्वकं च—

"धृतोर्ध्वपुण्ड्रः कृतशङ्खधारी विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम्" ॥

इत्यादयः कठादिशाखास्था लिखिता एवेति न तत्र विवादः ।

नन्वेवं तर्हि भारते पुण्ड्रं प्रत्यक्षतया कुतो नोपलभ्यत इति चेत्, मैवम्, महाभारते आदिपर्वणि प्रथमाध्याये, मुनिना प्रथमतस्त्रिंशल्लक्षपरिमितं भारतं प्रणीतं, तत्र, कियांश्चिद्भागः स्वर्गं, कियांश्चिद्भागः पातालं, कियांश्चिल्लोकान्तराणि च गतवान्। इह तु लक्षमात्रमेवोर्वरितम्; तदेव वैशम्पायनेन जनमेजयायाभिहितमिति कथायाः स्पष्टतया दृश्यमानत्वादिहोपलभ्यमानभागमात्रेऽनुपलब्ध्या सर्वथा भारतानिरूपितत्वस्य वक्तुमशक्यत्वात्। प्रत्युत सर्वसाधारणग्रन्थोदाहृतप्रत्यक्षश्रुतिमूलकत्वेन तत्र भागान्तरेषु तत्सत्त्वस्यैवानुमीयमानत्वात्। एवमेव च,

"अनाश्रित्येदमाख्यानं कथा भुवि न विद्यते"

इति, आदिपर्ववचः सङ्गच्छते। अन्यथा, सर्वसम्मतप्रामाणिकव्याख्यायुक्तपुराणेषु दृश्यमानानां बह्वीनां कथानामत्रत्यभारतेऽनुपलम्भेन तद्वाक्यं विरुद्धमेव स्यात्। एतेन यद्भारतेऽस्ति तदन्यत्राप्यस्ति, यद्भारते नास्ति तदन्यत्रापि नास्ति इत्येवमर्थबोधकानि

"यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्"

इत्यादीनि भारतादिवाक्यान्यपि समाहितानि वेदितव्यानि। अन्यथेयमाशङ्का भस्मत्रिपुण्ड्ररुद्राक्षधारणादिष्वपि दुर्निवारप्रसरा स्यात्। वस्तुतस्तु, तादृशवाक्यानां प्रायिकत्वमेव वक्तव्यम्। अत एव मार्कण्डेयपुराणे प्रथमाध्याये—

"तपःस्वाध्यायनिरतं मार्कण्डेयं महामुनिम्।
व्यासशिष्यो महातेजा जैमिनिः पर्यपृच्छत॥
भगवन्भारताख्यानं व्यासेनोक्तं महात्मना"।

इत्युपक्रम्य,

"तथेह सर्वशास्त्राणां महाभारतमुत्तमम्"।

इत्यन्तेन दृष्टान्तैः प्रशंस्य,

अग्रे चतुःपुरुषार्थादिबहुवस्तुप्रतिपादकत्वं तस्योक्त्वाऽपि,

"कस्मान्मानुषतां प्राप्तः" इत्यादिना श्रुतेऽपि भारते पुनः संशयावशेषः कथ्यते। एवमेवाग्रे तत्र चतुर्थाध्यायेऽपि स्फुटम्।

किञ्च, भारते शान्तिपर्वणि मोक्षधर्मे पञ्चरात्रमतीव प्रशंसितम्। तत्र, तृतीयरात्रे आह्निकनिरूपणे (अ० १ श्लो० १७)—

"स्नातो निर्मलसूक्ष्मशुद्धवसनो धौताङ्घ्रिपाण्याननः,
स्वाचान्तः सपवित्रमुद्रितकरः शुद्धोर्ध्वपुण्ड्रोज्ज्वलः"॥

इत्यादिषूर्ध्वपुण्ड्रं निरूपितमेवेति तस्य भारताभिमतत्वमायात्येव।

यत्तु, कश्चिदाधुनिकः पञ्चरात्रस्याप्रामाणिकत्वमिदानीमित्याह; तत्तु, पराशरस्मृत्यैव खण्डितमतः किं तेन?।

एवं महाभारते तत्तत्स्मृतिकाराणामपि प्रशंसादर्शनात्तत्तत्कृतस्मृतिषु चोर्ध्वपुण्ड्र-विधेरुपलभ्यमानत्वात्तस्य भारताहृतत्वमायात्येव । एतत्सर्वमभ्युपेत्यवादेन ब्रूमः ।

वस्तुतस्तु, सर्वसाधारणेषु स्मृतिप्रकाशाचारप्रकाशादिषु धर्मशास्त्रग्रन्थेषूर्ध्व-पुण्ड्रविधौ—

"द्वारवत्युद्भवाद्गोपीचन्दनादूर्ध्वपुण्ड्रकम् ।
कारयेन्नित्यमेवं हि पापं हन्ति दिने दिने" ॥

इत्यादीनां स्पष्टतयोर्ध्वपुण्ड्रविधायकानां महाभारतवचनानां महाभारतस्थत्वलिखनपूर्व-कमुदाहृतत्वान्महाभारतेऽपि प्रत्यक्षस्तदुपलम्भोऽस्त्येव ।

नीलकण्ठाह्निकप्रभृतिषु बहुष्वेव ग्रन्थेषूर्ध्वपुण्ड्रविधौ भारते—

"जाह्नवीतीरसम्भूतां मृतं मूर्ध्नि बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्" ॥

इति वचनमुक्तम् ।

कमलाकरभट्टरघुनाथभट्टभट्टोजिदीक्षिताह्निकग्रन्थेषु तूर्ध्वपुण्ड्रविधिप्रक्रमे महा-भारते—

"द्वारावतीमहाक्षेत्रे गोपीवापीसमुद्भवाम् ।
मृदमङ्गेन वहते न यमं पश्यते कदा ॥

कदाचिदपीत्यर्थः ।

पुनरपि,

जाह्नवीतीरसम्भूतां मृदं भाले बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्" ॥

इति श्लोकद्वयमप्युपन्यस्तम् । एवं सर्वसाधारणेषु ग्रन्थान्तरेष्वपि द्रष्टव्यम् ।

(बृहन्नारदीयब्रह्माण्डगारुडादिषूर्ध्वपुण्ड्रविधि, सूतस्योर्ध्वपुण्ड्रमुद्रातुलसीकाष्ठमालादिवैशिष्ट्यं तादृशस्यैव वैष्णवत्वम्, ब्राह्मणा. स्वतो वैष्णवा., तिलकेऽङ्गुलिभेदेन फलभेद, आदर्शे जले वा दृष्ट्वा कार्यम्, सदर्भहस्तेन न कार्यम्)

अथ प्रश्ने भारतादीत्यादिशब्देन पुराणानि ग्राह्याणि । तुल्यकोटिकत्वात् । तेषु चोपलभ्यत एव प्रत्यक्षतयोर्ध्वपुण्ड्रविधिरित्ययुक्तः प्रश्नः । उपलब्धिस्तु दिङ्मात्रेण, यथा बृहन्नारदीये पुरुषोत्तममाहात्म्ये विशेऽध्याये (श्लो० ११)—

"ब्राह्मे मुहूर्ते चोत्थाय परं ब्रह्म विचिन्तयेत्"

इत्यादिना आह्निककथनमुपक्रम्योच्यते (श्लो० २९)—

"आचम्य तिलकं कुर्याद्गोपीचन्दनमृत्स्नया ।
ऊर्ध्वपुण्ड्रमृजु सौम्यं दण्डाकारं प्रकल्पयेत् ॥

ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा मध्ये छिद्रं प्रकल्पयेत् ।
निवसत्यूर्ध्वपुण्ड्रे तु श्रिया सह हरिः स्वयम् ॥
त्रिपुण्ड्रे धूर्जटिः साक्षादुमया सह सर्वदा ।
विना छिद्रं तु तत्पुण्ड्रं शुनः पादसमं विदुः" ॥ इत्यादि ।

नचेदं तन्मासव्रताङ्गमिति शङ्क्यम्; वचनान्तरैर्नित्यत्वावगमात् । तत्राह्निकप्रसङ्गादवगम्यमानं तन्मासव्रताङ्गत्वं तु नित्यस्यापि सिध्येत् । नित्यस्याप्युपवीतस्य तैत्तिरीयसंहितायामुपव्ययत इति श्रावितदर्शाङ्गत्ववत् । अन्यथा तत्रोक्तानां सन्ध्यावन्दनादीनामपि प्रसङ्गात्तन्मासव्रताङ्गत्वावगमेन नित्यत्वं भज्येतेत्यलम् ।

किञ्च, तत्रैव प्रथमाध्याये (श्लो० १९-२०)—

"ऊर्ध्वपुण्ड्रधरं श्रीमन्नाममुद्राविराजितम् ।
शङ्खचक्रधरं दिव्यं गोपीचन्दनमृत्स्नया ॥
लसच्छ्रीतुलसीमालं जटामुकुटमण्डितम् ।
जपन्तं परमं मन्त्रं हरेः शरणमद्भुतम्" ॥

इति, सूतवर्णनेन ऊर्ध्वपुण्ड्रकरणादेः स्पष्टमेव प्राचीनाचारत्वं बोध्यते ।

अपि च ब्रह्माण्डपुराणे—

"ऊर्ध्वपुण्ड्रं मृदा कुर्यात्त्रिपुण्ड्रं भस्मना सदा"

इत्यादिना निरूपितम् ।

तत्परिमाणं च आदित्यपुराणे—

"अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमायुःकरी भवेत् ।
अनामिकाऽन्नदा नित्यं मुक्तिदा च प्रदेशिनी ॥
एतैरङ्गुलिभेदैश्च कारयेन्न नखं स्पृशेत्" ॥

इति ऊर्ध्वपुण्ड्रकरणे प्रकारविशेषादिकमपि भगवता प्रतिपादितम् ।

आचारमाधवे प्रथमाध्याये ब्रह्मपुराणे—

"पूजाकाले जपे होमे सायम्प्रातः समाहितः ।
नामान्युच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकम्" ॥ इति ।

भागवततत्त्वभास्करे पाद्मे—

"तुलसीकर्णमध्यस्था शङ्खचक्रं भुजद्वये ।
ऊर्ध्वपुण्ड्रं तथा भाले नामसङ्कीर्तनं मुखे ॥
रागद्वेषपरित्यागी सर्वत्र समदर्शनः ।
विष्ण्वर्पिताखिलाचारः स वै वैष्णव उच्यते ॥

स सर्वभूतदययाऽतिविराजमानो
ज्ञानप्रधानधिषणः प्रतिलब्धकाष्ठः ।
अन्तर्विरागसुभगोऽजितरागलोभः
पूज्यो गुरुर्गुरुतरो गिरिजे ममैषः ॥
सर्गादौ ब्राह्मणाः सृष्टा वैष्णवत्वेन नोदिताः ।
इतरे च त्रयो वर्णाः स्थितिर्ब्राह्मा च वैष्णवी" ॥ इति ।

तत्रैव गारुडे नारदः—

गोपीचन्दनसम्भवं सुरुचिरं पुण्ड्रं ललाटे द्विजो
नित्यं धारयते यदि प्रतिदिनं रात्रौ दिवा सर्वदा ।
यत्पुण्यं कुरुजाङ्गले रविग्रहे माघ्यां प्रयागे तथा
तत्प्राप्नोति खगेन्द्र विष्णुसदने सन्तिष्ठते देववत् ॥

पाद्मे—

"मत्प्रियार्थं शुभार्थं च रक्षार्थं चतुरानन ।
मत्पूजाहोमकाले च सायम्प्रातः समाहितः ॥
मद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रं भवापहम्" ॥ इति ।

स्कान्देऽपीदमेव वचनम् ।

आचारार्के तिलकप्रकरणे ब्रह्मपुराणे—

"गङ्गातीरसमुद्भूतां मृदं मूर्ध्ना बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्" ॥ इति ।

पुनस्तत्त्वभास्करे ब्रह्माण्डपुराणे—

"वीक्ष्यादर्शे जले वापि यो विदध्यात्प्रयत्नतः ।
ऊर्ध्वपुण्ड्रं महाभाग स याति परमां गतिम्" ॥ इति ।

स्कान्दे मार्गशीर्षमाहात्म्येऽपीदं वाक्यम् ।

परमानन्दमन्दारे स्कान्दे—

"गोमतीतीरसम्भूतां गोपीवापीसमुद्भवाम् ।
मृदं मूर्ध्ना वहेद्यस्तु सर्वपापात्प्रमुच्यते" ॥ इति ।

अवतारवादावल्यां स्कान्दे मार्गशीर्षमाहात्म्ये—

"मन्त्रेणैवाभिमन्त्र्याथ ललाटादिषु वैष्णवः ।
धारयेदूर्ध्वपुण्ड्राणि यथासङ्ख्यमतन्द्रितः ॥

ब्रह्मन् द्वादशपुण्ड्राणि ब्राह्मणः सततं धरेत्" ॥ इत्यादि ।

तिलककरणे विशेषस्तु पृथ्वीचन्द्रोदये ब्राह्मे—

"सदर्भेण तु हस्तेन यः कुर्यात्तिलकं बुधः ।
आचम्य स विशुद्ध्येत दर्भत्यागेन चैव हि" ॥ इति ।

एवमनेकेषु पुराणेष्विदं विस्तरेण निरूपितमस्ति । तत्तत्पुराणवचनानि प्रायः सर्वैरपि शिष्टविद्वद्भिः सर्वसाधारणमहानिबन्धकारैरुदाहृतान्येवेति । इदं निःशेषाशङ्कातूलजालस्य कालनाय महाज्वालानलकल्पम् ।

( बृहत्पराशरादिस्मृतिकारैरूर्ध्वपुण्ड्रमतीव स्तुतम्, तत्र मनुसम्मति , स्मृतिषु तस्येतिकर्तव्यता च )

अथ, यदुक्तं मन्वादिषु ग्रन्थेषु तद्विधानं नेति किमिति, तत्र ब्रूमः ।

"बहुस्मृतिभिरुक्तं तद्बहुग्रन्थेषु वर्णितम् ।
प्रशंसितं च मनुना सर्वाचारप्रशंसनात्" ॥

तथा हि—मन्वादीत्यादिशब्देन स्मृतय एव ग्राह्याः । तुल्यत्वात् । ( याज्ञ० अ० १ श्लो० ४ ) मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिरा इति ।

पराशरे ( अ० १ श्लो० १४ )—

"श्रुता मे मानवा धर्मा गार्गीया गौतमास्तथा"

इत्यादियाज्ञवल्क्यपराशरादिस्मृतिवचोभिस्तथानिश्चयात् । अस्ति च बहुस्मृतिषूर्ध्वपुण्ड्रविधानम् । यथा, निर्णयसिन्धौ ( परि० ३ ) वृद्धपराशरः—

"ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम् ।
ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि ॥
निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम्" इति ।

इदं च पृथ्वीचन्द्रोऽप्युदाजहार ।

माधवीये सत्यव्रतः—

"ऊर्ध्वपुण्ड्रमृजु सौम्यं ललाटे यस्य दृश्यते ।
स चाण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः" ॥ इति ।

इदं मदनपारिजातधर्मप्रवृत्तिपरमानन्दमन्दारकमलाकराह्निकादिष्वपि सङ्गृहीतम् ।

आचारार्के व्यासः—

"वामहस्ते जलं कृत्वा सावित्र्या चाभिमन्त्रितम् ।
तद्विष्णोरिति मन्त्रेण मर्दयेन्मृत्तिकां ततः ॥
अतो देवेति सूक्तेन तिलकं धारयेत्सदा" ॥ इत्याह ।

परमानन्दमन्दारे गौतमः—

> अम्बरीषे महाघस्य क्षयार्थं कुरु वीक्षणम् ।
> ललाटे यैः कृतं नित्यं गोपीचन्दनपुण्ड्रकम्" ॥ इति ।

तत्रैव व्यासः—

> "आदाय पाणिना भक्त्या गङ्गातीरोद्भवां मृदम् ।
> समर्चयति गात्राणि तस्य धर्मो न हीयते" ॥ इति ।

एवं सन्ति तत्र तत्रोदाहृतानि सुबहून्यूर्ध्वपुण्ड्रविधायकानि स्मृतिवचनानि ।

किञ्च, मनुनापि प्रथमाध्याये ( श्लो० १०८ )—

> "आचारः प्रथमो धर्मः स्मृत्युक्तः स्मार्त एव च ।
> तस्मादस्मिन्सदा युक्तो नित्यं स्यादात्मवान् द्विजः" ॥

इत्यादिना श्रुतिप्रसिद्धस्य च सर्वस्याप्याचारस्यात्यावश्यकत्वकथनात् । श्रुतिस्मृत्युभयप्रसिद्धस्योर्ध्वपुण्ड्रकरणस्यावश्यकत्वं तस्याप्यभिप्रेतमेव । अस्याप्यावश्यकाचारत्वं तु तैस्तैः सुप्रसिद्धैर्माधवादिशिष्टैराचारमाधवाचारचिन्तामण्याचारप्रकाशाचारार्काचारमयूखधर्मप्रवृत्त्याचारप्रकरणाचारप्रदीपादिषु तत्र तत्र ग्रन्थेषु प्रसिद्धेषु तत्तद्वचनोपन्यासेन प्रपञ्चितमेवेति किम्बहूक्तेन ।

ननु तथापि मनुना स्पष्टं कण्ठरवेणोर्ध्वपुण्ड्रस्यानिरूपितत्वात्तस्याप्रामाणिकत्वमिति चेत्, तर्हि, भस्मधारणत्रिपुण्ड्रकरणरुद्राक्षभरणशिवाद्यर्चनादीनामप्यप्रामाणिकत्वं प्रसज्येत । तद्ग्रन्थस्यापि मनुस्मृतावदर्शनात् । यदि तु तेषां प्रमाणान्तरे स्पष्टतयोक्तत्वान्नाप्रामाणिकत्वमित्युच्यते, तर्ह्यूर्ध्वपुण्ड्रेऽपि बहुश्रुत्यादिसम्मतत्वाद्बहुग्रन्थप्रसिद्धत्वाच्च तुल्यमित्यलम् ।

( आचारमाधवादिषु बहुतरेष्वेवातिप्रामाणिकसर्वसाधारणग्रन्थेषूर्ध्वपुण्ड्रविधि., प्रातर्मुखादिक्षालन, हरिस्मरणं च )

यत्तूक्तमाचारदर्शाद्याह्निकग्रन्थेषु तिलकविधानं नेति किमिति, तन्न, एकग्रन्थमात्रप्रदर्शनप्रयुक्ताद्ग्रन्थान्तरेष्वपि तदनिरूपणभ्रमादेव ।

> "यत्र यत्राह्निकं प्रोक्तं पुराणादिषु विस्तरात् ।
> शिष्टानां च निबन्धेषु तत्र तत्रेदमीरितम्" ॥

तथाहि, पुराणेषु पाद्मबृहन्नारदीयादिषु आह्निकप्रस्तावेषूर्ध्वपुण्ड्रमत्यावश्यकत्वेन निरूपितमेव । तत्तद्वचनानि तु कानिचिदुक्तान्यधस्तात् । अथ पौरुषेयेष्वपि सर्वदेशप्रसिद्धेषु ग्रन्थेषु तत्प्रपञ्चनमुदाहरामः । तत्र, माधवकृतायां लघुपाराशरस्मृतिव्याख्यायाम्—

> "चतुर्णामपि वर्णानां किञ्चित्साधारणं वद"

इति व्यासप्रश्नोत्तरभूतस्य ( श्लो० ३९ )—

"सन्ध्यास्नानं जपो होमो देवतानां च पूजनम् ।
आतिथ्यं वैश्वदेवं च षट्कर्माणि दिने दिने" ॥

इति श्लोकस्य व्याख्याने—तत्र, साधारणाध्ययनादिप्रसङ्गेन बुद्धिस्थं साधारणमाह्निकं सङ्क्षिप्याहेत्यादिना आह्निकं प्रस्तुत्य, ब्राह्ममुहूर्तोत्थानादिस्नानोत्तरवस्त्रधारणान्तं निरूप्य, अथोर्ध्वपुण्ड्रविधिर्ब्रह्मपुराणे दर्शितः—

"पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः"

इत्यारभ्य,

"स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः"

इतीत्यन्तमेतत्प्रपञ्चितम् ।

एवं धर्मप्रवृत्तौ प्रारम्भ एव—

"उषःकाले समुत्थाय चिन्तयेदात्मनो हितम् ।
स्मृत्वा नारायणं देवं स्तोत्राण्यपि च सञ्जपेत्" ॥

इत्यादिनाऽऽह्निकं प्रक्रम्य स्नानपवित्रधारणादिकं निरूप्य, अथ तिलकविधिः—

"ललाटे तिलकं कुर्यात्"

इत्यारभ्य,

"तर्पणं चापि यच्छ्राद्धमन्यथा निष्फलं भवेत्"

इत्यन्तमूर्ध्वपुण्ड्रं विधाय, तदनन्तरमेव सन्ध्यादिनित्यकर्माणि व्याख्यातानि ।

मदनपारिजाते तृतीयस्तबकारम्भे, अथ गृहस्थस्तबकानन्तरं गृहस्थोपयोगित्वादाह्निकमारभ्यते, इति प्रतिज्ञाय, अथ क्रमप्राप्ततिलकविधिः ब्रह्माण्डपुराणे—

"भगवानुवाच,

अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमायुःकरो भवेत्" इत्यारभ्य,

"अर्धचन्द्रं तु वैश्यस्य वर्तुलं शूद्रजातिषु"

इत्यन्तमूर्ध्वपुण्ड्रकरणं प्रत्यहं स्पष्टतयोदितम् ।

स्मृतिप्रकाशे आचारप्रकाशे प्रथमप्रकरणे, अथ प्रबोधः, अङ्गिराः—

"उत्थाय पश्चिमे यामे रात्रिवासः परित्यजेत् ।
प्रक्षाल्य हस्तपादास्यमुपस्पृश्य हरिं स्मरेत्" ॥

इत्यादिनाऽऽह्निकमुपक्रम्य, शुद्धवस्त्रधारणान्तमुक्त्वा, अथ तिलकं ब्राह्मे—

"ऊर्ध्वपुण्ड्रं मृदा कुर्यात्"

इत्यारभ्य,

"मर्त्यो मर्त्यो न विज्ञेयः स नूनं मामकी तनुः"

इत्यन्तेन ऊर्ध्वपुण्ड्रकरणं विधाय, ततो मुद्राधारणं च विधाय, तदुत्तरमेव सन्ध्यावन्दनादिकं निरूपितम् ।

आचारार्के च आह्निकप्रस्तावे, अथ तिलकम्—

"ललाटे तिलकं कृत्वा सन्ध्याकर्म समाचरेत्"

इत्यारभ्य,

"अतो देवेति सूक्तेन तिलकं धारयेत्सदा"

इत्याह । एवं यथासम्प्रदायं तिलकं कुर्यादित्यन्तं तद्विस्तरेणोक्तम् ।

धर्माब्धिसारे तृतीयपरिच्छेदे आह्निकनिरूपणे, अथ तिलकविधिः—

"प्रातः पुण्ड्रं मृदा कुर्यात्"

इत्यारभ्य,

"मृदा तिलको विधेयः"

इत्यन्तेन तदेव विधाय, सन्ध्यावन्दनाद्युक्तम् ।

स्मृतिसङ्ग्रहे, "ब्राह्मे मुहूर्ते स्वगुरुं विबुद्धं नत्वाऽथ सञ्चिन्त्य गृहस्थकृत्यमि"-त्यादिनाऽऽह्निककथनं प्रकृत्य स्नानान्तमुक्त्वा,

"द्वारावतीपर्वतसिन्धुतीर्थ-
तीरात्समादाय मृदं तुलस्याः ।
अनामिकाद्यङ्गुलिभिर्विहाय
कनिष्ठिकां द्वादशनामभिश्च ॥
अथोर्ध्वपुण्ड्रं बिभृयाल्ललाटे
ततश्च नाभौ हृदये च कण्ठे ।
पार्श्वे च कर्णेतरपार्श्वबाहु-
मूले श्रुतौ पृष्ठगलोत्तमाङ्गे ॥
ततो रजन्यां दिवसे च सन्धौ
सन्ध्यामुपासीत दिवा न रात्रौ"—

इति तदेवाभिहितम् ।

एवमेव हेमाद्र्याचारचिन्तामणिपृथ्वीचन्द्रोदयनिर्णयसिन्धुभागवततत्त्वभास्कराचारमयूखप्रयोगपारिजातचतुर्विंशतिमतव्याख्यानीलकण्ठाह्निकबह्वृचाह्निकरघुनाथभट्टाह्निकस्मृतिदर्पणगोविन्दार्णवकृष्णभट्टपद्धतिमदनरत्नपरमानन्दमन्दारकमलाकराह्निकप्रभृतिभिः सर्वसाधारणैर्बहुशिष्टसम्मतैरखिलग्रन्थदुन्दुभिसन्दोहैरमन्दमुद्घुष्टोऽयमूर्ध्वपुण्ड्रविधिरिति ग्रन्थानामनन्तत्वाद्विरम्यते लेखनप्रयासात् ।

(गङ्गालहर्यादौ तद्वर्णनम्, आचारादर्शे तदविधाने हेतु:, आचारमाधवादावूर्ध्वपुण्ड्रमात्रविधि.)

किञ्च, ऊर्ध्वपुण्ड्रकरणस्य शिष्टाचारोऽप्यनादिसिद्धः, सर्वदेशप्रसिद्ध एव, अत एव प्राञ्चो महाकवयोऽपीदमवर्णयन् । यथा, "जाह्नवीतीरसम्भूताम्" इत्यस्यार्थ उपनिबद्धः पण्डितराजजगन्नाथेन गङ्गालहर्याम्—

"ललाटे या लोकैरिह खलु सलीलं तिलकिता
तमो हन्तुं धत्ते तरुणतरमार्तण्डतुलनाम् ।
विलुम्पन्ती सद्योविधिलिखितदुर्वर्णसरणिं
त्वदीया सन्मृत्स्ना मम हरतु कृत्स्नामपि शुचम्" ॥ इति ।

एवमितरत्रापि द्रष्टव्यम् ।

ननु तथापि,

"दीक्षितो रणयज्ञेषु विबुधानन्ददायिषु ।
हरिरब्धिसुतावक्त्रसोमपीति पुनातु वः" ॥

इत्यादिस्वकवनेन दर्शितविश्वेकभक्तिरप्याचारादर्शकारः कथमूर्ध्वपुण्ड्रं न निरूपितवान् ? यतश्च स तन्न निरूपितवानतोऽप्रामाणिकमेव तदिति चेत्, मैवम्; नह्येकग्रन्थानिरूपितत्वेन बहुश्रुत्यादिमूलकस्य सर्वग्रन्थसम्मतस्य तस्याप्रामाणिकत्वं वक्तुं शक्यम् । यदि च तावता तच्छक्यं तर्हि त्रिपुण्ड्रादीनामपि तत्स्यात् । तत्रानिरूपितत्वात् ।

किञ्च, प्रसिद्धसर्ववेदशाखाव्याख्यात्रा सर्वशास्त्रनिपुणेन श्रौतस्मार्तोभयमीमांसादिपारीणेन सर्वजनीनमहापाण्डित्यप्रभावेण माधवेन पराशरस्मृतिव्याख्यायामाह्निकनिरूपणे विस्तरेणोर्ध्वपुण्ड्रस्यावश्यकत्वनिरूपणात् त्रिपुण्ड्रस्य च नाम्नोऽप्यलिखनात् कमलाकरभट्टकृतबह्वृचाह्निकादिष्वपि ग्रन्थविशेषेषूर्ध्वमात्रस्य विहितत्वात् त्रिपुण्ड्रकरणगन्धस्याप्यभावाच्च, प्रत्युत, तस्यैवाप्रामाणिकत्वं सर्वथा वक्तुं शक्येत । वस्तुतस्तु, ऊर्ध्वपुण्ड्रस्य सर्वसाधारणत्वादाचारादर्शस्य च वाजसनेयिशाखीयानामेव प्रत्यहधर्मप्रपञ्चनार्थं प्रवृत्तत्वात्तत्र तदनिरूपणेऽपि न क्षतिः । प्रतिज्ञातं च तेनैवारम्भे—

"अहोरात्राश्रितो धर्म इह वाजसनेयिनाम् ।
निबध्यते निबद्धो यो धर्मशास्त्रनिबन्धिभिः" इति ।

नैतावता तदनावश्यकत्वं शङ्क्यम् । नागदेवकृताचारप्रदीपादिषु तच्छाखीयानामेवाह्निकनिरूपकग्रन्थान्तरेषु तस्यात्यावश्यकत्वप्रतिपादनात् ।

अतश्च जनाः—

चित्तं तिलकनैर्मूल्याशङ्कापङ्ककलङ्कितम् ।
क्षालयन्त्वार्षवाग्रूपैः शीतलैर्विमलैर्जलैः ॥ १ ॥

---

## अथ षष्ठोऽवान्तरः प्रश्नः ॥ ६ ॥

## ( अष्टचत्वारिंशः प्रश्नः, तदाशयः, उत्तरकारिकाः, तुलसी-काष्ठमालोर्ध्वपुण्ड्रादेर्नित्यता, ऊर्ध्वपुण्ड्रं विना सर्वकर्मवैफल्यम्, शैववैष्णवयोस्तद्धारणम्, नमोन्तैर्नामभिस्तद्धार्यम् )

### अत एव तिलकावश्यकतायाश्च किम्प्रयोजनम्? ॥ ४६ ॥

अयमाशयः, अत्र अत एवेत्यनेन पूर्वोक्तं भारतादिग्रन्थानुक्तत्वम्, तसिलन्तसर्वनाम्ना हेतुत्वेन परामृश्यते । तथा च यद्यूर्ध्वपुण्ड्रमावश्यकं स्यात्तर्ह्युक्तग्रन्थेषु विहितं स्यात्, न त्वेवम्, अतो नैतदावश्यकमिति ।

उत्तरम्—

दत्तोत्तरस्तव प्रश्नः पूर्वप्रश्नोत्तरेण मे ।<br>
ग्रन्थेष्वविहितत्वं हि प्रश्नबीजमिहेक्ष्यते ॥ १ ॥<br>
सर्वग्रन्थेषु तु मया विहितत्वं विवेचितम् ।<br>
हेत्वभावादतः प्रश्नोऽवतरीतुं न सोऽर्हति ॥ २ ॥<br>
तथाप्युत्तरदानस्यौत्सुक्याद्वक्ष्यामि किञ्चन ।<br>
पृच्छकाभावतोऽतोषो वैष्णवानां यतो महान् ॥ ३ ॥<br>
सर्वाह्निकेषु सन्ध्यादिवन्नित्यत्वनिरूपणात् ।<br>
तद्राहित्ये च वैफल्यश्रावणात्सर्वकर्मणाम् ॥ ४ ॥<br>
अग्निहोत्रेण तौल्यातिदेशाद्दोषादधारणे ।<br>
सर्वेषामूर्ध्वपुण्ड्रं तदत्यावश्यकमिष्यते ॥ ५ ॥

तत्र, सर्वत्राह्निकग्रन्थेषु निरूपितत्वेन नित्यत्वं प्रागेवानुपदं प्रपञ्चितम् ।

अथोपवीतादिराहित्यवदूर्ध्वपुण्ड्राहित्येऽपि कृतानां नित्यानामपि सन्ध्यावन्दनादिसर्वकर्मणां नैष्फल्यकथनात्तस्यावश्यकत्वं निर्विचिकित्सं सिध्यति ।

तथाहि, स्कान्दे मार्गशीर्षमाहात्म्यचतुर्थाध्याये ब्रह्माणं प्रति भगवान् (श्लो० १३)—

"तस्माद्धार्या प्रयत्नेन माला तुलसिसम्भवा ।<br>
पद्माक्षनिर्मिता भक्त्या फलैर्धात्र्याः सुपुण्यदा ॥<br>
तदूर्ध्वपुण्ड्रशङ्खाद्यैर्युक्तस्तुलसिभूषणैः ।<br>
सन्ध्योपास्त्यादिकं कुर्यात्कुशपाणिर्हि मां स्मरन् ॥<br>
कृतसन्ध्यादिको भक्तस्ततः सम्पूजयेच्च माम् ॥" इति ।

आचारमाधवे प्रथमाध्याये ब्रह्माण्डे—

"पूजाकाले जपे होमे सायम्प्रातः समाहितः ।
नामान्युच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकम्" ॥ इति ।

नीलकण्ठाह्निकादिषु चेदमुदाहृतम् ।

आचारार्के च प्रयोगपारिजाते—

"ललाटे तिलकं कृत्वा सन्ध्याकर्म समाचरेत् ।
अकृत्वा भालतिलकं तस्य कर्म निरर्थकम्" ॥ इति ।

कमलाकराह्निकस्मृतिदर्पणादिषु चेदमुपन्यस्तम् ।

तत्रैव बृहन्नारदीये—

"स्नानं दानं जपो होमः सन्ध्या स्वाध्यायकर्म च ।
ऊर्ध्वपुण्ड्रविहीनेन तत्सर्वं निष्फलं भवेत् ॥

कमलाकराह्निके तु, "स्नानं दानमि"ति बृहन्नारदीयवचनमुक्त्वा—

"ऊर्ध्वपुण्ड्रविहीनस्तु द्विजः सन्ध्यादिकं चरेत् ।
तत्सर्वं राक्षसैर्नीतं नरकं चाधिगच्छति" ॥

इति तत्रत्यमेव वचनान्तरमुदाहृतम् । गोविन्दार्णवे कृष्णभट्टपद्धतौ च । इह प्रथम-श्लोकोत्तरार्धे कृतमिति शेषः । क्वचिद्विहीनस्येति पाठः ।

परमानन्दमन्दारे मदनपारिजाते कमलाकरकृतबह्वृचाह्निके हेमाद्रौ च ब्रह्मपुराणे—

"योगो दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।
भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम्" ॥ इति ।

इदमेव वाक्यं स्कान्दे मार्गशीर्षमाहात्म्येऽपि दृश्यते ।

हेमाद्रौ—

"जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ।
तत्सर्वं नश्यति क्षिप्रमूर्ध्वपुण्ड्रं विना कृतम्" ॥ इति ।

धर्मप्रवृत्तौ—

"जपो होमस्तथा दानं स्वाध्यायः पितृतर्पणम् ।
व्यर्थं भवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥
ललाटे तिलकं धृत्वा कुर्युः शैवाश्च वैष्णवाः ।
तर्पणं चापि यच्छ्राद्धमन्यथा निष्फलं भवेत्" ॥ इति ।

स्मृतिसङ्ग्रहेऽपि—

"अथोर्ध्वपुण्ड्रं बिभृयाल्ललाटे ततश्च नाभौ हृदये च कण्ठे।
पार्श्वे च कर्णेतरपार्श्वबाहुमूले श्रुतौ पृष्ठगलोत्तमाङ्गे॥
ततो रजन्यां दिवसे च सन्धौ सन्ध्यामुपासीत दिवा न रात्रौ।
माध्याह्निकी चेद्दिवसस्य मध्ये त्वध्यर्धयामादपराह्णतः प्राक्"॥ इति।

अत्रापि तत इति तच्छब्देनानुपदविहितस्योर्ध्वपुण्ड्रधारणस्यैव परामर्शात्तद्धारणान्तरमेव त्रैकालिकसन्ध्यात्रयं कर्तव्यमिति निश्चीयते।

धर्मप्रवृत्तौ च स्मृतिसारसमुच्चये—

"स्वाध्यायजपहोमादि सन्ध्यादानादिकं च यत्।
ऊर्ध्वपुण्ड्रं विना कुर्यात्तत्सर्वं निष्फलं भवेत्"॥

आचारप्रकाशे मुद्राप्रकरणे ब्रह्माण्डे—

"तदूर्ध्वपुण्ड्रशङ्खाद्यैर्युतस्तुलसिभूषणैः।
सन्ध्योपास्त्यादिकं कुर्यात्कुशपाणिर्हरिं स्मरेत्"॥

निर्णयसिन्धौ बृहन्नारदीये—

"यज्ञो दानं जपो होमः स्वाध्यायः पितृकर्म च।
वृथा भवति विप्रेन्द्रा ऊर्ध्वपुण्ड्रं विना कृतम्"॥ इति।

आचारमयूखे च शौनकः—

"ऊर्ध्वपुण्ड्रं शिवस्यैवं विष्णोः कुर्युश्च वा बुधाः।
मूर्ध्नि मूलेन मन्त्रेण शेषं द्वादशनामभिः॥
स्थानेष्वेषु द्विजः स्नात्वा नमोन्तैः प्रणवेन च"॥ इति।

भट्टोजिदीक्षितकमलाकराद्याह्निकग्रन्थेषु चेदं सङ्गृहीतमस्ति। अतः शैवानां वैष्णवानां च सर्वेषामपि क्रियमाणनित्यनैमित्तिकादिनिःशेषकर्मसाफल्यार्थमुपवीतादिवदूर्ध्वपुण्ड्र-धारणमपि सर्वथा आवश्यकमेव।

(ऊर्ध्वपुण्ड्रस्याग्निहोत्रादितौल्य श्राद्धे कर्तुर्भोक्तुश्चोर्ध्वपुण्ड्रमावश्यक क्वचित्तत्र वर्तुलत्रिपुण्ड्र-योर्निषेध, अवैष्णवानां काम्यश्राद्धे ऊर्ध्वपुण्ड्रस्यापि पिण्डदानात्पूर्वोत्तरकालयो. पुण्ड्रे विशेष, अलङ्करणे गन्धचन्दनादिनापि वर्तुलत्रिपुण्ड्रयोर्निषेध)

तत्रापि त्रैवर्णिकानां तु अग्निहोत्रादिवन्नित्यश्रौतकर्मरूपत्वान्नित्यादिसर्वकर्मसाफल्य-करत्वाच्च तद्धारणमत्यन्ततरावश्यकमेव।

तथाच, धर्मप्रवृत्तिस्मृत्यर्थसारनिर्णयसिन्धुप्रभृतिषु स्मृतिः—

"ऊर्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः" इति।

ननु तथापि श्राद्धकाले नेदं धार्यम्; यथाह हेमाद्रौ देवलः—

"ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे मालां तथैव च।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम्" ॥ इति।

सङ्ग्रहे—

"ऊर्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः।
श्राद्धकाले तु सम्प्राप्ते कर्ता भोक्ता च तत्त्यजेत् ॥
वामहस्ते च दर्भास्तु गृहे रङ्गबलिं तथा।
ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः" ॥ इति।

इत्थं निषेधदर्शनादिति चेन्नैवम्; देवलवचने पुण्ड्रं वर्तुलमेवेत्यपरार्कमदनरत्नसिन्ध्वादिभिरङ्गीकारात्। पृथ्वीचन्द्रस्तु पुण्ड्रं त्रिपुण्ड्रम्।

"ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम्।
ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि ॥
निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम्" ॥

इति बृहत्पराशरोक्तेरित्याह। तस्मादूर्ध्वपुण्ड्रं तु कर्तृभोक्तृभ्यामवश्यं कार्यमेव।

"ऊर्ध्वपुण्ड्रधरं विप्रं यः श्राद्धे भोजयिष्यति।
आकल्पकोटिपितरस्तस्य तुष्टा न संशयः ॥
ऊर्ध्वपुण्ड्रधरो यस्तु श्राद्धं कुर्याच्छुभानने।
कल्पकोटिसहस्राणि गयाश्राद्धफलं लभेत्" ॥ इति पाद्मात्।

यत्तु, "कर्ता भोक्ता च तत्त्यजेदि"त्युक्तम्, तदवैष्णवानां काम्यश्राद्धादिविषयम्।

स्कान्दपाद्मयोः—

"मद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रं भवापहम्"

इति वैष्णवस्य नित्यं तद्विधानात्। भवापहमित्यनेन मद्भक्तातिरिक्तानां तस्य काम्यानुपयोगित्वबोधनाच्च। नित्येषु श्राद्धतर्पणादिपितृकर्मसु ऊर्ध्वपुण्ड्रावश्यकताया इह पूर्वोपन्यस्ताद्यनेकवचनसमुदायैर्मुहुर्मुहुरभ्यस्तत्वाच्च। आचारमयूखभट्टोजिकृताह्निकप्रभृतिषु—

"मद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रं विना तु तत्।
यत्कर्म कारयेन्नित्यं तत्सर्वं निष्फलं भवेत्" ॥

इति वैष्णवानां तु विशेषत एव विपक्षे बाधोपलब्धेश्च। तस्मादिदं वैष्णवानां सर्वथा श्राद्धादिकालेऽप्यत्याज्यमेव। अत एव निर्णयसिन्धौ श्राद्धप्रकरणे—ऊर्ध्वपुण्ड्रनिषेधमाशङ्क्य, अत्राचाराद्व्यवस्थेत्युक्तम्।

"ऊर्ध्वपुण्ड्रं च तुलसीं श्राद्धे नेच्छन्ति केचन"

इति बृहन्नारदीये "केचने"त्यनेन श्राद्धे तद्धारणस्य स्वल्पैकदेशिमात्राचारत्वबोधनात् ।

"ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि"

इति बृहत्पराशरादिभिस्तस्य सार्वत्रिकत्वोक्तेश्च ।

न चैतावता शैवानां सन्ध्यावन्दनादिषु वैफल्यवारणोर्ध्वपुण्ड्रस्यावश्यकत्वेऽपि श्राद्धकाले तु तेषां तदनावश्यकम्; विधेर्वैष्णवपरत्वेन निषेधस्य च शैवपरत्वेनोपसंहारे व्यवस्थितिसामञ्जस्यादिति वाच्यम्;

"ललाटे तिलकं धृत्वा कुर्युः शैवाश्च वैष्णवाः ।
तर्पणं चापि यच्छ्राद्धमन्यथा निष्फलं भवेत् ॥

इति धर्मप्रवृत्तौ श्राद्धकालेऽपि शैवानां वैष्णवानां चोभयेषामपि कण्ठरवेणोद्दिष्टानां तदावश्यकत्वविधानात् । न चात्र तिलकशब्दस्य त्रिपुण्ड्रपरत्वेनापि निर्वाहः शङ्क्यः, अप्रसिद्धत्वात् । पृथ्वीचन्द्रोदयादिषु वृद्धपराशरादिभिर्दैवपित्र्ययोस्तन्निषेधाच्च ।

आचारमयूखचतुर्विंशतिमतव्याख्यादिषु—

"ऊर्ध्वपुण्ड्रं शिवस्यैवं विष्णोः कुर्युश्च वा बुधाः ।
मूर्ध्नि मूलेन मन्त्रेण शेषं द्वादशनामभिः" ॥

इति शौनकेन सर्वकालेषूभयेषामपि स्पष्टतयोर्ध्वपुण्ड्रविधानाच्च ।

"ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः" इति सङ्ग्रहोक्तिस्तु पिण्डदानात्प्राक् चन्दनतिलकविषया । निर्णयसिन्धौ, "प्राक् पिण्डदानाद्गन्धाद्यैर्नालङ्कुर्यात्स्वविग्रहमि"-त्याश्वलायनोक्तेः । अत एव धर्मसिन्धौ उत्तरार्धे, चन्दनतिलकस्तु पिण्डदानात्प्राक्कर्तु-र्वर्ज्यः, भोक्तुस्तु भोजनकालात्प्राग्वर्ज्य इति श्राद्धप्रकरणे उक्तम् । अत एव च साम्प्रदायिकाः श्राद्धे चरणामृतमृत्तिकयोर्ध्वपुण्ड्रं कुर्वन्ति । "कर्ता भोक्ता च तत्त्य-जेदि"ति निषेधः पिण्डदानात्प्राक्कर्तृशैवपरो वा अस्तु ।

"ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा ।
श्राद्धकर्ता न कुर्वीत यावत्पिण्डान्न निर्वपेत्" ॥

इति निर्णयसिन्धौ विश्वप्रकाशे च वचनात् । पूर्वोक्तपाद्मस्कन्दादिवचननिचयैकवाक्य-तयाऽस्य शैवपरत्वेनैवोपसंहरणीयत्वाच्च ।

भोक्तुस्तु शैवश्राद्धेऽपि नोर्ध्वपुण्ड्रनिषेधः । अत एव धर्माब्धिसारे श्राद्धप्रकरणे कर्तुर्ललाटे ऊर्ध्वपुण्ड्रादेर्विकल्पः । भोक्तुस्तु भवत्येवेत्युक्तम् । पिण्डदानात्प्राक् शैवस्य निषेधः, वैष्णवस्य तु तन्नित्यत्वात्सार्वदिकमेवेत्येवं व्यवस्थितो विकल्प इत्यर्थः । वच-नानुगृहीतत्वात् । तथैव सार्वत्रिकशिष्टाचाराच्च । शैवभिन्नैस्तु श्राद्धोपक्रम एवोर्ध्वपुण्ड्रं कार्यम् । अत एव निर्णयश्राद्धोपक्रममुक्त्वा "ततः कर्ता ऊर्ध्वपुण्ड्रं कुर्यादि"त्यारभ्य

सविस्तरं कर्तुरपि तदावश्यकत्वं निर्णीतम् । भोक्तुस्तु सर्वस्यापि सर्वत्रारम्भादेवोर्ध्व-पुण्ड्रमावश्यकम् । निरतिशयपितृतृप्त्यादिफलकत्वात् । तद्रहितस्य मुखदर्शननिषेधाच्च । तदग्रे व्याख्यास्यामः । किन्तु, भोक्तॄणां त्रिपुण्ड्रादिकमेव निषिद्धम् । अत एव कमलाकरभट्टेन श्राद्धे ब्राह्मणपूजानिरूपणमुपक्रम्य गन्धदानान्तं निरूप्य गन्धेन ब्राह्मणभाले किमूर्ध्वमेव कार्यं पुण्ड्रान्तरमपि वा विधेयमिति संशयवारणार्थं विप्राणां गन्धेन वर्तुलं त्रिपुण्ड्रं वा न कार्यमित्यादिना त्रिपुण्ड्रादिनिषेधपूर्वकमूर्ध्वपुण्ड्रस्यैवा-वश्यकत्वं व्याख्यातमिति कृतं प्रसक्तानुप्रसक्त्या । तदधारणे प्रत्यवायं च पुरस्तात्पुनः किञ्चित्प्रपञ्चयिष्यामः । न चैवमकरणे प्रत्यवायजनकतया नित्यत्वे महापुण्यजनकत्व-निरूपकवचनविरोधः शङ्क्यः । अकरणे प्रत्यवायोत्पादकत्वेन नित्यानामप्यग्निहोत्रादीनां स्वर्गादिफलकत्ववन्नित्यस्याप्यूर्ध्वपुण्ड्रधारणस्य फलान्तरसमर्पकत्वसम्भवेन नित्यत्व-बाधायोगात् । वचनविरोधाभावात् ।

सर्वसाधारणग्रन्थेष्वेवमावश्यकं मतम् ।
ऊर्ध्वपुण्ड्रं तु शैवानां वैष्णवानां च सर्वदा ॥ १ ॥
समुदाहृतमद्वाक्यसमुदायादिदं बुधाः ।
समुदारेण मनसा समुदारं विबुद्ध्यताम् ॥ २ ॥

---

## अथ सप्तमोऽवान्तरः प्रश्नः ॥ ७ ॥

## विजातीयतिलकनिन्दायां च किं प्रमाणम्? ॥ ४७ ॥

### उत्तरम् ।

अरविन्दाक्षचरणारविन्दमकरन्दपाः ।
न निन्दामो विजातीयं वयं तु तिलकादिकम् ॥ १ ॥
न निन्द्यमपि निन्दन्ति शिष्टा अद्वैतवादिनः ।
किमु शास्त्रोदितं तर्हि गर्हणीयं भवेद्धि तैः ॥ २ ॥
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।
इति न्यायेन नाचार्यैः किञ्चिदप्यस्ति निन्दितम् ॥ ३ ॥
न भजामो विजातीयमन्यधर्मतया वयम् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयाऽऽवहः ॥ ४ ॥
अधारणात्कृता निन्देति चेन्मैवं स्वशाखया ।
विहितस्य कृतौ नाऽन्यशाखानिन्दा प्रसज्यते ॥ ५ ॥
तथाऽपि किञ्चिद्वक्ष्यामो भवत्प्रश्नानुसारतः ।
सुरूपं वा कुरूपं वा तादृक् दृश्येत दर्पणे ॥ ६ ॥

ब्राह्मणैस्तु सर्वैरावश्यकत्वादूर्ध्वपुण्ड्रमेव धार्यं, तस्यैव विष्णुचिह्नत्वात्, न तु देवतान्तरचिह्नानि त्रिपुण्ड्रादीनि; तेषां विष्णुचिह्नमात्रधारणविधानात्। त्रिपुण्ड्रादिधारणे बहुलनिषेधोपलब्धेश्च। तथाहि, आचारमाधवे द्वितीयाध्याये बौधायनः—

"ब्राह्मणानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः" ॥ इति।

तत्रैव स्मृत्यन्तरे—

"मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
बाहुजातोरुजातानां नाऽयं धर्मो विधीयत" ॥ इति।

न चोर्ध्वपुण्ड्रस्य कथं विष्णुचिह्नत्वमिति शङ्कनीयम्। तत्र विष्णुचिह्नत्वस्य तच्चरणतुल्याकारत्वविधानादिबहुहेतुपुरःसरस्य सर्वजनीनत्वात्।

किञ्च ब्रह्मरात्रे ऊर्ध्वपुण्ड्रविधिमुपक्रम्य "यो न धारयते मर्त्यो मामकं चिह्नमीदृशमि"त्यधारणे प्रत्यवायं वदता भगवता कण्ठरवेणैव तस्य स्वचिह्नत्वं निरूपितमेवमन्यत्राऽपि द्रष्टव्यम्। अतो ब्राह्मणैस्तु तदेव धार्यं न तु त्रिपुण्ड्रादिकम्। तस्य वर्णान्तरपरत्वात्। अत एव मदनपारिजाते भागवततत्त्वभास्करे च ब्रह्मपुराणे—

"ऊर्ध्वपुण्ड्रं द्विजः कुर्यात्क्षत्रियस्तु त्रिपुण्ड्रकम्।
"अर्धचन्द्रं तु वैश्यस्य वर्तुलं शूद्रजातिष्वि"ति।

सारसङ्ग्रहे च ब्रह्मरात्रे—

"ब्राह्मणस्योर्ध्वपुण्ड्रं च क्षत्रियस्यार्धचन्द्रकम्"।
"वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुण्ड्रकम्" इति।

पाद्मे—

"विप्राणामूर्ध्वपुण्ड्रं स्यात्तिलकं तु महीभृतः।
पट्टाकारं तु वैश्यानां शूद्राणां तु त्रिपुण्ड्रकम्" ॥ इति।

एवमादिषु वचनेषु स्पष्टमेवोर्ध्वपुण्ड्रं निर्दिश्य ब्राह्मणस्य तु तदेव नियमितम्।

नन्वेवं सति क्षत्रियादीनां तु त्रिपुण्ड्रादिकमेव सिध्यति, न तु कदाचिदप्यूर्ध्वपुण्ड्रम्, माधवीये—

"राजन्यवैश्ययोर्नेति दत्तात्रेयमुनेर्वचः" ॥ इति,
"बाहुजातोरुजातानां नायं धर्मो विधीयत" ॥

इति क्षत्रियवैश्ययोर्विष्णुलिङ्गधारणनिषेधात्; अतः कथं भवत्साम्प्रदायिकैः क्षत्रियादिभिरपि ऊर्ध्वपुण्ड्रमेव धार्यत इति चेत्, मैवम्; ब्राह्मणानां तु सर्वेषामयमेव जात्या सिद्धो धर्मो यद्विष्णोर्लिङ्गधारणमिति नियमार्थत्वाद्वाक्यस्य। तथा च क्षत्रियवैश्ययोस्तु नायं जात्या सिद्धो धर्म इत्यर्थः। क्षत्रियत्वादिजातिमात्रेणैव शस्त्रधारणपशुपालनादिवन्न विधीयत इति यावत्।

किञ्च, क्षत्रियस्य त्रिपुण्ड्रमेव नियतमिति न वक्तुं शक्यम् । वचनान्तरोक्तार्धचन्द्रादिना विकल्पात् । एवं वैश्यस्यापि वर्तुलार्धचन्द्रपट्टाकाराणां विकल्पो द्रष्टव्यः । एतदप्यवैष्णवपरम् । वैष्णवास्तु क्षत्रियादयस्त्रयोऽप्यूर्ध्वपुण्ड्रमेव धारयेयुः । यथोक्तं पाद्मे—

"ऊर्ध्वपुण्ड्रं तु सर्वेषां न निषिद्धं कदाचन ।
धारयेयुः क्षत्रियाद्या विष्णुभक्ता भवन्ति ये" ॥ इति ।

ब्रह्मरात्रेऽपि,

"धारयेत्क्षत्रियाद्योऽपि विष्णुभक्तो भवेद्यदि" ॥

इति भिन्नोत्तरार्धपाठमिदमेव वाक्यं दृश्यते । तथा च, वैष्णवानां तु क्षत्रियादीनामप्यूर्ध्वपुण्ड्रमेव । अन्येषां तु वैकल्पिकं त्रिपुण्ड्रादिकमिति फलति । वस्तुतस्त्वग्निहोत्रसन्ध्यावन्दनादिकर्मसु त्रयाणामपि वर्णानामधिकृतत्वाद्वैष्णवयोरपि क्षत्रियवैश्ययोः कर्मकाले तु तद्वैफल्यवारणायोर्ध्वपुण्ड्रमावश्यकमेव, सर्वेष्वपि त्रैवर्णिकसाधारणग्रन्थेषु तदातदावश्यकतायाः सुप्रपञ्चितत्वात् । क्षत्रियादयस्तु त्रिपुण्ड्रकमित्यादिवाक्यानां कर्मातिरिक्तकाले लब्धावकाशतया तैरस्य बाधायोगाच्च ।

पृथ्वीचन्द्रोदये, निर्णयसिन्धौ च—

"ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम् ।
ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि" ॥

इति वृद्धपराशरेण कर्मकाले त्रिपुण्ड्रकनिषेधपूर्वमूर्ध्वपुण्ड्रकरणस्यैव विहितत्वाच्च । अत एव,

"ऊर्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः"

इति निर्णयसिन्ध्वाद्युदाहृतस्मृतौ त्रैवर्णिकवाचकं द्विजातिपदमुक्तम् ।

संन्यासविधौ (अ० ३ श्लो० ६)—

"भयं च हृत्वा भूतानाममृतीभवति द्विजः ।"

इत्यादियाज्ञवल्क्यादिवचनेष्विवात्रापि द्विजपदस्य माधवेन त्रैवर्णिकपरत्वमुक्तम् ।

"ऊर्ध्वपुण्ड्रमृजु सौम्यं कनिष्ठाङ्गुलिवत्स्मृतम् ।
नासादिकेशपर्यन्तं प्रयत्नाद्धारयेद्द्विजः" ॥

इत्यादिषु भट्टोजिकृताह्निककमलाकराह्निकाचारमयूखनीलकण्ठाह्निकप्रभृतिधृतवचनान्तरेष्वपि द्रष्टव्यम् ।

अथ पूर्वोदाहृतबौधायनस्मृत्यन्तरवचोभ्यां क्षत्रियवैश्ययोर्विष्णुलिङ्गधृतिनिषेधस्तु संन्यासविषयक एवेति माधवादयो बहवः । तथा च क्षत्रियवैश्ययोस्तन्निषेधाभावादग्नि-

होत्रतौल्याच्च तन्नित्यमेव । न चैवं सति ब्राह्मणस्योर्ध्वपुण्ड्रमेवेति नियमो न सिध्येदिति शङ्क्यम् । "ऊर्ध्वपुण्ड्रं द्विजः कुर्यादि"त्यादिभिरेव तत्सिद्धेः ।

अपि च, ब्राह्मणानां त्रिपुण्ड्रादिधारणे निषेधमपि बहुलमुपलभामहे ।

यथा, तत्त्वभास्करादिषु पाद्मोत्तरखण्डे ऊर्ध्वपुण्ड्राध्याये—

"विप्राणां नैव धार्यं स्यात्तिर्यक्पुण्ड्रादिधारणम् ।
नारायणात्परब्रह्मादन्येषामर्चनं न हि ॥
ब्राह्मणः कुलजो विद्वान् भस्मधारी भवेद्यदि ।
वर्जयेत्तादृशं देवि मद्योच्छिष्टघटं यथा ॥
त्रिपुण्ड्रधारणाद्विप्रः पतितः स्यान्न संशयः" ॥ इति ।

सारसङ्ग्रहकारप्रभृतयस्तु त्रिपुण्ड्रनिषेधे वाक्यान्तराण्यपि उदाजह्रुः । तानि यथा, ब्रह्मरात्रे—

"न त्रिपुण्ड्रं द्विजैर्धार्यं पट्टाकारं तथैव च ।
न चान्यदेवताभक्तिरापद्यपि कदाचन ॥
त्रिपुण्ड्रस्य धरं विप्रं पट्टाकारधृतं तथा ।
श्वपाकमिव पश्येत न सम्भाषेत कर्हिचित् ॥
त्रिपुण्ड्रं ब्राह्मणो विद्वान् लीलयाऽपि न धारयेत् ॥
त्रिपुण्ड्रधारणाद्विप्रः पतत्येव न संशयः ।
तिर्यक्पुण्ड्रधरं विप्रं चण्डालमिव सन्त्यजेत् ॥
सोऽनर्हः सर्वकृत्येषु सर्वलोकेषु गर्हितः ।
त्रिपुण्ड्रधारिणो नित्यं भस्मोद्धूलितविग्रहाः ॥
भविष्यन्ति त्रयीबाह्या यथा ज्ञानप्रलापिनः ।
ब्राह्मणस्योर्ध्वपुण्ड्रं च क्षत्रियस्यार्धचन्द्रकम् ॥
वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुण्ड्रकम् ।
ऊर्ध्वपुण्ड्रं तु सर्वेषां न निषिद्धं कदाचन ॥
धारयेत्क्षत्रियाद्योऽपि विष्णुभक्तो भवेद्यदि ।
रुद्राक्षधारिणं विप्रं सदा भस्मानुलेपनम् ॥
सकुलं तं त्यजेन्नित्यं सर्वकर्मबहिष्कृतम् ।
तिर्यक्पुण्ड्रधरो विप्रः पङ्क्तिमध्ये स्थितो यदि ॥
सा पङ्क्तिर्ब्रह्महत्यायां युज्यते नात्र संशयः ।
तिर्यक्पुण्ड्रधरो विप्रो यत्र तिष्ठति दुर्मतिः ॥

स देशः पापसम्भूतः श्मशानसदृशो भवेत् ।
सम्यक्कृत्वा ललाटे तु ऊर्ध्वपुण्ड्रं पुनः स्वयम् ॥
यच्छिनत्ति त्रिपुण्ड्रेण स पापी श्वपचाधमः" ॥

विष्वक्सेनसंहितायाम्—

"न धारयेज्जटाभारं भस्म चैव न धारयेत् ।
बाह्यलिङ्गानि चिह्नानि सन्त्यजेद्यावदायुषम् ॥
जटिला मुण्डिताश्चैव तिर्यक्पुण्ड्रधरास्तथा ।
भविष्यन्ति त्रयीबाह्या मिथ्याज्ञानप्रलापिनः ॥
कपालकेशभस्मास्थिशक्तिपाषाणधारिणम् ।
त्रिपुण्ड्रधारिणं विप्रं चाण्डालमिव सन्त्यजेत् ॥
स्वच्छन्दप्रेतवेषाश्च मिथ्यालिङ्गधरास्तथा ।
ब्रह्मकोपाग्निनिर्दग्धा रुद्रभक्ता जटाधराः ॥
अग्निदं गरदं चैव लिङ्गपाषाणधारिणम् ।
त्रिपुण्ड्रधारिणं विप्रं चाण्डालमिव सन्त्यजेत्" ॥ इति,

वाराहेऽपि,

"कुलीनो ब्राह्मणो विद्वान् भस्मधारी भवेद्यदि ।
वर्जयेत्तादृशं देवि मद्योच्छिष्टघटं यथा" ॥ इति ।

पाद्मेऽप्येतत्सदृशमेव वाक्यमित्युक्तमधस्तात् । कचित्त्वेवं हारीतवचनमप्युदाहरन्ति—

"ऊर्ध्वपुण्ड्रविहीनस्तु सन्ध्याकर्म समाचरेत् ।
तत्सर्वं राक्षसैर्नीतं नरकं स च गच्छति ॥
नित्यं नैमित्तिकं काम्यं त्रिविधं श्रुतिनोदितम् ।
ऊर्ध्वपुण्ड्रविहीनस्य सर्वं तन्निष्फलं भवेत् ॥
ब्राह्मणः क्षत्रियो विद्वान् भस्मधारी भवेद्यदि ।
स जीवन्नेव शूद्रत्वं नरकं चाधिगच्छति ॥
रुद्रार्चनं त्रिपुण्ड्रस्य धारणं यत्र दृश्यते ।
शूद्राणां च विधिः प्रोक्तो न द्विजानां कदाचन ॥
तिर्यक्पुण्ड्रधरं विप्रं पट्टाकारधृतं तथा ।
श्वपाकमिव पश्येत न सम्भाषेत कदाचन" इति ।

तस्माद्ब्राह्मणानामूर्ध्वपुण्ड्रमेवोचितम् ।

ननूक्तवचनैः शूद्राणां वर्तुलं त्रिपुण्ड्रं वा सिध्यति, न तूर्ध्वपुण्ड्रमिति वैष्णवस्यापि शूद्रस्य तु न तद्युक्तमिति चेत्, मैवम्; पाद्मे—

"वर्तुलं तिर्यगच्छिद्रं ह्रस्वं दीर्घं तनुं ततम् ।
वक्रं विरूपं बद्धाग्रं छिन्नमूलं पदच्युतम्" ॥

इत्याद्युक्त्वा,

"............पुण्ड्रमाहुरनर्थकम्"

इति वर्तुलत्रिपुण्ड्रयोरानर्थक्यकथनात् । अयं च निन्दाबोधितो वर्तुलनिषेधः शूद्रेष्वेव पर्यवस्यति । प्राप्तत्वात् । न चास्य शूद्रविषयकत्वे "वर्तुलं शूद्रजातिष्वि"त्यस्यानवकाशत्वापत्त्या विधिः शूद्रविषयो निषेधश्च ब्राह्मणादिविषय इति समञ्जसमिति वाच्यम्, निषेधस्य प्राप्तिपूर्वकत्वनियमेन ब्राह्मणादिषु च तदप्राप्त्या निषेधायोगात् । न च "भूमावग्निश्चेतव्यो नान्तरिक्षे न दिवि" इत्यादिषु अप्राप्तस्यापि स्वर्गान्तरिक्षाधिकरणकाग्निचयनादेर्निषेधदर्शनान्नायं नियम इति शङ्क्यम् । बादरायणाचार्येण समन्वयाध्यायतृतीयपादे "तदुपर्यपि बादरायणः सम्भवात्" इत्यादिना देवतानामपि कर्माधिकारस्य मीमांसितत्वेन तासां च स्वर्गान्तरिक्षयोरपि चयनस्य प्राप्तत्वेन तत्रापि प्राप्तस्यैव निषेधात् ।

ननु निर्यासस्य "नाश्यं ब्रह्महत्या ये ह्येष वर्णं" इति "न कलञ्जं भक्षयेत्" इत्यादिषु रागतः प्राप्तस्यापि व्रश्चनोत्थलोहितनिर्यासकलञ्जभक्षणादेर्निषेधवद्ब्राह्मणानां रागतः प्राप्तवर्तुलनिषेधसम्भवेन "माऽसौ शूद्रेषु प्रसज्यताम्" इति चेन्नैवं वक्तुं युक्तम् । भक्षणवद्वर्तुलादेरागतः प्राप्त्यसम्भवात् । अथ सम्भवेऽपि सामान्यतो मांसभक्षणे रागतः प्राप्तेऽपि "पञ्च पञ्चनखा भक्ष्या" इति परिसङ्ख्यया पञ्चनखेतरद्भक्षणनिषेधवत्सामान्यतः प्राप्तेऽपि नानाविधपुण्ड्रधारणे "ब्राह्मणस्योर्ध्वं पुण्ड्रं चे"त्यादिनैव तदितरनिषेधसम्भवात् । अथ पञ्चनखेतरभक्षणे प्रायश्चित्तविधानवदत्रापि प्रायश्चित्तबोधनार्थं वचनप्रवृत्तिरिति चेत्, न; वचने प्रायश्चित्तानुल्लेखात् । प्रत्युतानर्थक्यमात्रकथनेन चैत्यवन्दनादिवत्प्रायश्चित्ताभावद्योतनात् । अयं च प्रायश्चित्ताभावः शूद्रेष्वेव सङ्गच्छते, न तु ब्राह्मणादिषु । उक्तवचनसमुदायव्याकोपात् । तस्मादयं निषेधो ब्राह्मणादिविषयः, विधिश्च शूद्रविषय इति न युक्तम्, किन्तूभावपि शूद्रविषयावेवेति । नन्वेवं सत्येकविषयकत्वाद्विधिनिषेधयोः कथं व्यवस्थेति चेत्, इत्थम्; शूद्रेषु वर्तुलत्रिपुण्ड्रयोर्विधानं वैष्णवेतरविषयम्, निषेधस्तु वैष्णवविषय इति । न चैवमपि शूद्रस्योर्ध्वपुण्ड्राप्राप्त्या तदयुक्तमिति शङ्क्यम्;

"धारयेयुः क्षत्रियाद्या विष्णुभक्ता भवन्ति ये"

इत्यादिपाद्मादिवचोभिस्तस्यापि तत्प्राप्तेः । अत्र बहुवचनान्ताद्यशब्देन वैश्यशूद्रयोरपि सङ्ग्रहात् । प्रत्युत, "विष्णुभक्ता भवन्ति ये" इत्यनेन विशेषोल्लेखेन सामान्ययोर्वर्तुलत्रिपुण्ड्रयोरवैष्णवविषयत्वं बोध्यत इति सर्वं समञ्जसम् ।

इदमेवाभिप्रेत्य वासुदेवोपनिषदि "मद्भक्तैर्ब्राह्मणादिभिर्धृतमि"त्याम्नायते। अत्राप्यादिशब्देन शिष्टास्त्रयोऽपि वर्णा गृह्यन्ते। सङ्कोचे मानाभावात्। पाञ्चाद्युपबृंहणसिद्धत्वाच्च। अत एव पुराणेषु प्रतिलोमजानामपि सूतादीनां वैष्णवत्वादूर्ध्वपुण्ड्रधारणं वर्ण्यते।

(पूर्वपक्षे व्यवस्था, भस्मोद्धूलनत्रिपुण्ड्रप्रशसा च तयो क्षत्रियपरत्वम्, वस्तुत शैवपरत्वम्, षोडशस्थानानि, तद्देवता., धारणमन्त्रा, ध्यानम्, काम्यत्वम्, जाबालोक्तक्रियाकर्तुरन्ते शिवाप्ति तत्रैव शिवस्याक्षररूपता च)

नन्वेतावता इदं सिध्यति, वैष्णवानां तु सर्वेषामपि ऊर्ध्वपुण्ड्रमेव। क्षत्रियादीनां च स्वस्वयोग्यादृष्टार्थशास्त्रीयकर्मकाले ऊर्ध्वपुण्ड्रं कालान्तरे त्वैच्छिकस्तत्तज्जातिविहितत्रिपुण्ड्रार्धचन्द्रादेर्विकल्प इति। नैतद्युक्तम्; भूतिधारणस्य सर्वेषामावश्यकत्वात्तद्रहितस्य कर्मवैफल्यस्मरणाच्चेति चेत्, तर्हि; भस्मत्रिपुण्ड्रादिसाधकवाक्यान्यप्युदाहृत्य तद्व्यवस्थादिकमपि विचारयिष्यामः। यतो हि वयं शास्त्रीये विषये न दुराग्रहं रोचयामहे।

तत्र कस्मिंश्चिदाधुनिकेन केनचिद्भवदीयेन कृते शैवसुधाकराख्ये ग्रन्थे,

"विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः।
भवन्ति पञ्च नामानि पञ्चभिर्हेतुभिर्भृशम्॥
ऐश्वर्यकरणाद्भूतिर्भस्म सर्वाघभक्षणात्।
भासनाद्भसितं प्रोक्तं क्षारणात्क्षारमापदाम्॥
रक्षा रक्षोगणेभ्यश्च रक्षणात्परिकीर्तितम्॥"

देवीभागवते—

"कीकटेष्वपि देशेषु यत्र भूतिविभूषणः।
मानवस्तु वसेन्नित्यं काशीक्षेत्रसमं हि तत्॥"

न चात्र ब्राह्मणपदाभावे पूर्वोक्तवचनरीत्या शूद्रपरत्वं शङ्क्यम्;

"नास्य ज्ञानं परीक्षेत न कुलं न व्रतं तथा।
त्रिपुण्ड्राङ्कितभालेन पूज्य एव हि नारद" ॥

तथा,

"छद्मनापि चरेद्यो हि भूतिशासनमैश्वरम्।
सोऽपि यां गतिमाप्नोति न तां यज्ञशतैरपि॥
ये घोरराक्षसाः प्रेता ये चान्ये क्षुद्रजन्तवः।
त्रिपुण्ड्रधारिणं दृष्ट्वा पलायन्ते न संशयः" ॥

अत्र यज्ञकरणादिरूपत्रैवर्णिकलिङ्गदर्शनात्।

किञ्च, आचारार्के सङ्ग्रहे—

"अग्निहोत्राग्निजं भस्म विरजाहोमजं तथा ।
औपासनसमुत्पन्नं समिदग्निसमुद्भवम् ॥
समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणा ।
शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् ॥
अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम्" ॥ इति ।

एवमादिषु चतुर्णां वर्णानामन्त्यजानां च तद्धारणमुच्यते ।

किञ्च, तद्रहितस्य कर्मवैफल्यमपि स्मर्यते । तथा च बृहज्जाबाले—

"ये भस्मधारणं त्यक्त्वा कर्म कुर्वन्ति मानवाः ।
तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः" ॥ इति ।

तत्रेदमुच्यते, एतत्सर्वं क्षत्रियपरमेव कुतो न भवति ? बृहज्जाबालोपनिषदि चतुर्थ-ब्राह्मणे भस्मस्नानतदुद्धूलने उपक्रम्य,

"सर्वाङ्गोद्धूलनं कार्यं राजन्यस्य यथाविधि"

इति कथनात् । इतः पूर्वं वर्णान्तरस्य नाम्नोऽप्यनुच्चारणाच्च ।

अथ तत्रैवाग्रे—

"उद्धूलयेन्मुखं विप्रः क्षत्रियस्तच्छिरोधिकम्" इति ।

तथा पञ्चमब्राह्मणारम्भे,

"त्रियायुषाणि कुरुते ललाटे च भुजद्वये ।
नाभौ शिरसि हृत्पार्श्वे ब्राह्मणः क्षत्रियः सदा ॥
त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवम्" ॥

इत्यादिना सर्वेषामपि भस्मधारणमुक्तम् । अतो न क्षत्रियपरमिति चेत्सत्यम्, तथापि मुख्यतयेदं शैवचातुर्वर्णिकपरमेवेति ब्रूमः । तथाहि कालाग्निरुद्रोपनिषदि—

"अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छाधीहि भगवंस्त्रिपुण्ड्रविधिं सतत्त्वं किं द्रव्यं कतिप्रमाणमि"त्यादिना प्रश्नं निरूप्य "तꣳहोवाच भगवन् यद्द्रव्यं तदाग्नेयं भस्मे"त्यादिना साङ्गं त्रिपुण्ड्रविधिं व्याख्यायान्ते "तिर्यक् तिस्रो रेखाः प्रकुर्वीत व्रत-मेतच्छाम्भवमि"त्युपसंहारेण तस्य शैवपरत्वं निश्चितम् ।

किञ्च, बृहज्जाबालेऽपि चतुर्थब्राह्मणे त्रिपुण्ड्रस्य षोडशस्थानानि निरूप्योच्यते—

"......जपे तत्राधिदेवताः ।
शिवं शक्तिं च सादाख्यमीशं रुद्राख्यमेव च ॥
वागादिनवशक्तीश्च एताः षोडशदेवताः" ॥ इति ।

एवमग्रेऽपि, "ललाटे ब्रह्मणे नमः" इत्यारभ्य "सर्वाङ्गे सदाशिवाय नमः" इत्यन्तेन तस्य शिवदेवताकत्वमेव दृढीकृतम् । अग्रे च ध्यानम्—

"भूतिर्भूतिकरी पवित्रजननी पापौघविध्वंसिनी
सर्वानन्दकरी सदाशिवकरी सर्वार्थसम्पत्करी ।
रक्षोभूतपिशाचराक्षसमहाक्षोभैकसत्रायिणी
तेजोराज्यविशेषमोक्षकरणी भूतिः सदा धार्यताम्" ॥

इति काम्यत्वमपि दर्शितम् । उपरिष्टात्,

"एतानि तानि शिवमन्त्रपवित्रितानि
भस्मानि कामदहनाङ्गविलेपनानि ।
त्रैपुण्ड्रकाणि रचितानि ललाटपट्टे
लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥
श्रीकरं च पवित्रं च शोकरोगनिवारणम् ।
लोकवश्यकरं पुण्यं भस्म त्रैलोक्यपावनम् ॥
त्रिनेत्रं त्रिगुणाधारं त्रयाणां जनकं विभुम् ।
स्मरन्नमः शिवायेति ललाटे तु त्रिपुण्ड्रकम् ॥
ईशानाभ्यां नमेत्यु(?)क्त्वा पार्श्वयोश्च त्रिपुण्ड्रकम्" ॥

इत्यादिना,

"नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः"

इत्यन्तेन भस्मभेदानुक्त्वा शिवालयस्थं तल्लिङ्गलिप्तं मन्त्रसंस्कारदग्धं वेति सर्वाधिकारकं भस्मोदितम् । ततः श्लोकेषु च—

"त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते ।
धारयन्ति तु ये भक्त्या धारयन्ति तमेव ते" ॥

इत्यादिना,

"रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम्"

इत्यन्तेन तस्य शिवस्वरूपत्वं शिववीर्यत्वं चोक्तम् । एवं षड्ब्राह्मणात्मिकायास्तस्या उपनिषदः समाप्तावपि "रुद्रजापकशतमेकमेकेनाथर्वशिरःशिखाध्यापकेन तत्समं बृहज्जाबालोपनिषदध्यापकेन तत्समं तद्वा एतत्परं धाम बृहज्जाबालोपनिषज्जपशीलस्य यत्र न सूर्यस्तपति यत्र न वायुर्वाति यत्र न चन्द्रमा भाति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखानि सन्ति सदानन्दं परमानन्दं शान्तं शाश्वतं साम्बं सदाशिवं कामेश्वरं ब्रह्मादिवन्दितं योगिध्येयं परं पदं यत्र गत्वा न निवर्तन्ते योगिनः तदेतदृचाभ्युक्तम् । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।

दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् । ॐ सत्यम् ॐ सत्यम् । न स पुनरावर्तते न स पुनरावर्तते ॐ सत्यम्" इति फलं श्राव्यते ।

एवं शिवदैवत्यत्वात्, शिवमन्त्रैकसाध्यत्वात्, शिवस्वरूपत्वात्तन्मन्त्रदीक्षावतां तदेकभक्तानां शैवानामेवेदमावश्यकमिति स्पष्टमेव सिद्ध्यति । तत्रत्योपक्रमोपसंहारपरिचिन्तनेन च शिवमाहात्म्यातिशयदर्शनादिना इदं स्पष्टतयैवावगम्यते ।

अपि च फलश्रुतावपि "एकेन तत्क्रियाचरणेनेत्यादिना तस्यामुपनिषदि उक्ता या क्रिया भस्मधारणादिरूपा जम्बीराघ्राणवृत्तान्तानुसारेण शिवनैवेद्यादिवर्जनरूपा च तदाचरणकर्तुः पुरुषस्य शान्तं शाश्वतं साम्बं सदाशिवं कामेश्वरं ब्रह्मादिवन्दितं योगिध्येयं परं पदमित्यादिना सर्वदा त्रिगुणात्मकशक्तिसहितस्य काम्यवस्तुजातमात्रदानसमर्थस्य परशिवस्य प्राप्तिः फलत्वेनोक्ता । परशिवस्य च श्रीमत्पुरुषोत्तमधामभूताक्षरब्रह्मस्वरूपत्वं कण्ठरवेणैव वर्णितम् ।

(वैष्णवानां तदधारणम्, मन्त्रेणैव त्रिपुण्ड्रादिकार्यम्, पुनस्तस्य शैवव्रतत्वम्)

अतः क्षराक्षरातीतपुरुषोत्तमप्राप्तिरूपनिर्गुणफलप्रेप्सूनामात्मनो निर्गुणभावाकाङ्क्षिणां तद्भक्तानां नात्रोक्तत्रिपुण्ड्रादिष्वधिकारः; किन्तु, रुद्रपदाद्यवान्तरसगुणफलप्रेप्सूनामेव तत्राधिकार इति निर्विवादं सिद्धम् ।

परशिवस्यापि सर्वदा सगुणत्वं शश्वच्छक्तिसाहित्यं त्रिलिङ्गत्वं भगवद्धामाक्षरब्रह्मात्मकत्वं चेति तु पण्डितकरभिन्दिपालाद्यनेकग्रन्थेषु महता प्रपञ्चेन प्रपञ्चितमेव पुरुषोत्तमचरणादिभिरिति किमिह तद्विचाररूपेणाकाण्डपाण्डित्येन ?

अन्यच्च,

शैवत्वं वैष्णवत्वं चेत्यादि हि शास्त्रोक्तविधानात्तत्तन्मन्त्रग्रहणादेव भवतीति सुप्रसिद्धं तत्तत्सम्प्रदायाङ्गीकर्तुस्तद्भिन्नसम्प्रदायस्थमन्त्रादेर्नोपयोग इति बहुशास्त्रसम्मतम् । एवं च सति प्रकृते भवतां सुधासिन्धुप्रभृतिग्रन्थेषूपन्यस्तैः,

"त्रिपुण्ड्रकं सदा कुर्यान्मन्त्रपूतेन भस्मना ।
मन्त्रहीनं तु यः कुर्यात्पापभागी भवेन्नरः" ॥

इत्यादिवचनैस्त्रिपुण्ड्रादीनि शिवमन्त्रैरेव कार्याणि न तु तन्विनेति तेषां शिवमन्त्रैकविधेयत्वसिद्धेः । बृहज्जाबालादिषु "एतानि तानि शिवमन्त्रपवित्रितानि" इत्यादिभिस्तथैव निश्चयात् । मन्त्ररहिततत्करणे प्रत्युत दोषकथनाच्च । पारम्परिकतन्मन्त्रग्रहणवतां शैवानामेवात्राधिकारो न तु तदग्रहणवतामन्येषामिति निर्विचिकित्सं सिद्ध्यति । तस्मादेतच्छैवपरमेव ।

अत एवान्यत्राप्यथर्वशिरसि "अग्निरि"त्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृ-

शेदित्यादिनोक्तप्रकारस्य भस्मोद्धूलनादेः व्रतमेतत्पाशुपतं पशुपाशविमोक्षायेति स्पष्टमेव शैवव्रतत्वं श्राव्यते। पशुपतिः शिवस्तत्सम्बन्धित्वात्पाशुपतमिति। अत एव भूतिशासनमैश्वरमिति शैवसुधाकरोदाहृतवचनेऽपि तस्य शिवव्रतत्वमुच्यते। ईश्वरः शर्व ईशान इति कोशोदाहृतरूढ्याऽत्रेश्वरशब्दस्य शिवपरत्वप्रतीतेः। उक्तादिश्रुतिषु तस्य स्फुटतया शैवव्रतत्वकथनाच्च। तस्मात्तदेकभक्तानामेवावश्यकम्।

केचित्तु, त्रिपुण्ड्रादिषु शिवव्रतत्वस्य श्रुत्यादिसिद्धत्वात्,

"भवव्रतधरा ये च ये च तान् समनुव्रताः।
पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः" ॥

इति, तद्धारणे भृगुशापेन पाखण्डित्वसच्छास्त्रद्वेषित्वयोरवश्यं प्राप्त्या तद्वारणाय नेदमिदानीं धार्यम्। आवश्यकतानिरूपकतद्विधिस्तु शापप्राक्कालिकविषय इत्यप्याहुः।

अपि च सर्वदा शिवपूजनं शैवानामेव नित्यमित्यग्रिमप्रश्नोत्तरेषु प्रपञ्चयिष्यते। अतस्तदङ्गत्वाद्भस्मरुद्राक्षधारणमपि तेषामेव नित्यम्।

भस्मरुद्राक्षरहितस्य शिवपूजावैयर्थ्यात्। यथोक्तं तिथितत्त्वे लैङ्गे—

"विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः" ॥ इति।

एवमाधुनिके भवदीयशैवसुधाकरग्रन्थेऽपि,

"विभूतिधारणं त्यक्त्वा त्यक्त्वा रुद्राक्षधारणम्।
मा मां पूजय विश्वेशं शिवलिङ्गस्वरूपिणम्" ॥

सनत्कुमारसंहितायामपि,

"यथैव चाण्डालोच्छिष्टं श्राद्धार्थं नोपयुज्यते।
पूतिपर्युषितं यच्च निर्भस्मैवं शिवार्चनम् ॥
दायादहीनो न पुनर्मृतः पिण्डमवाप्स्यति।
तथा भस्मविहीनोऽपि शिवार्चनफलं परम् ॥
यथा कृशानुरहितो ह्यध्वरो नैव शोभते।
अशेषसाधनोपेतं भस्महीनं शिवार्चनम्" ॥ इति।

तस्मान्नित्यं शिवार्चननियमवतां शैवानामेव तद्वैयर्थ्यवारणाय तदावश्यकम्। तादृशमेवास्य फलमाहाचारप्रकाशे पुलस्त्यः—

"करोति शिवमन्त्रेण यत्रिपुण्ड्रं द्विजोत्तमः।
त्र्यक्षः शूलधरः सौम्यः शिवलोके महीयते" ॥ इति।

एवं सिद्धेऽस्य शैवपरत्वे;

यत्त्वाचारार्के कात्यायनः—

"श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने ।
धृतत्रिपुण्ड्रः पूतात्मा मृत्युञ्जयति मानवः" ॥ इति,

क्रियासारे—

"वामहस्ततले भस्म क्षिप्त्वाऽऽच्छाद्य पाणिना ।
अग्निरित्यादिमन्त्रेण स्पृशन् भस्माभिमन्त्र्य च" ॥ इति ।

स्मृतिसङ्ग्रहे—

"मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य च ।
त्रिपुण्ड्रं धारयेद्विद्वान् सर्वकर्मसु सर्वदा" ॥ इति ।

यच्चाचारप्रकाशे भविष्ये—

"सत्यं शौचं जपो होमस्तीर्थं देवादिपूजनम् ।
तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत्" ॥ इति ।

तदेतत्सर्वं त्रिपुण्ड्राहित्येन कर्मवैफल्यमिति शैवानामेवेत्यवसीयते । त्रिपुण्ड्रादेः शैवमात्राधिकारकत्वस्य पूर्वमेव व्युत्पादितत्वात् ।

अपि च, कात्यायनभविष्यवचनयोः सुरार्चनदेवपूजनशब्देन शिवपूजैव विवक्षितेति ज्ञायते । उक्तलैङ्गादिवचनैकवाक्यतया तथैवोपसंहाराध्यवसायात् । सर्वदेवसाधारणत्वाश्रयेण—

"ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम् ।
ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि" ॥

इति पृथ्वीचन्द्रोदयनिर्णयसिन्ध्वाद्युदाहृतवृद्धपराशरवचनानां निरवकाशप्रसङ्गात् । कात्यायनभविष्ययोरुपसंहारकलैङ्गादिवचनवदस्योपसंहारकवचनान्तरालाभात् । उक्तपाद्मादिवचनविरोधाच्च । तस्मादेतत्त्रिपुण्ड्राहित्येन कृतकर्मवैयर्थ्यं रुद्रपदमोक्षाकाङ्क्षिशैवपरमेव । अत एव कात्यायनवचने "मृत्युं जयति मानवः" इति मृत्युञ्जयपदं शिववदाचरति शिवसारूप्यं गच्छतीत्यर्थः । "त्र्यक्षः शूलधरः सौम्यः शिवलोके महीयते" इत्युदाहृतपुलस्त्यवचनेन तथैव निश्चयात् ।

एवमेवाचारार्के कमलाकराह्निके च भविष्ये—

"सितेन भस्मना कुर्यात्त्रिसन्ध्यं च त्रिपुण्ड्रकम् ।
सर्वपापविनिर्मुक्तः शिवेन सह मोदते" ॥

इत्युक्त्वाऽनुपदं "सत्यं शौचं जपो होमः" इत्युच्यते । अत्रापि पूर्ववचने शिवसायुज्यरूपनियतफलकथनात्, द्वितीयवचनोक्तं तद्राहित्येन कृतकर्मवैय्यर्थ्यमपि रुद्रपदा-

काङ्क्षिणः शैवस्यैव नान्यस्येति स्पष्टमेव सिध्यति। अनेनैव शैवसुधाकरोदाहृतानि,

"सन्ध्याशिवार्चनादीनि कर्माण्येतानि वस्तुतः।
वैदिकानि ततस्तेषु कर्तव्यं भस्मधारणम्" ॥

तथा,

"न सम्विशन्ति पापानि भस्मनिष्ठे ततः सदा।
कर्तव्यमतियत्नेन ब्राह्मणैर्भस्मधारणम् ॥
यत्कृतं भस्मनिष्ठेन महादेवस्य पूजनम्।
तत्सर्वाभीष्टदं तस्मात्कर्तव्यं भस्मधारणम् ॥
उद्धूलनत्रिपुण्ड्राभ्यामलङ्कृततनुः शिवम्।
योऽर्चयिष्यति तत्तुल्यो भुवि को वा भविष्यति" ॥

इत्यादीनि शिवरहस्यवचनान्यपि समाहितानि वेदितव्यानि। शिवार्चनादिसाहचर्येण स्फुटमेव तदर्चननियमवच्छैवपरत्वनिश्चयात्। पौर्वापर्यपरिचिन्तनेन च प्रायः सर्वेषामपि शिवरहस्योक्तानां धर्माणां शैवमात्रपरत्वनिश्चयात्; सर्वैरपि विद्वद्भिस्तथैव स्वीकृतत्वाच्च। तत्रोक्तस्य विभूतेर्यज्ञोपवीततौल्यतातिदेशस्यापि शैवपरत्वेनोपसंहार उचितः।

"उपवीतादिवद्धार्याः शङ्खचक्रगदादयः" इति,
"यज्ञोपवीतवद्धार्या तुलसीमालिका द्विजैः"

इत्यादिपद्मपुराणाद्युक्तातिदेशानां वैष्णवपरत्वेनोपसंहारवत्।

(सर्वेषां त्रिपुण्ड्राद्यधारणम्, त्रिपुण्ड्रोर्ध्वपुण्ड्रयोर्युगपद्धारणनिषेध,
शिवविष्णुब्रह्मभक्ताना पृथक् पुण्ड्राणि)

नन्वेवं त्रिपुण्ड्राहित्येन कर्मवैयर्थ्यं शैवपरमेवेति तु सम्यगुपपादितम्। तथाप्येतस्य सर्वपरत्वाश्रयणे का वा क्षतिरिति चेदुच्यते। एतस्य सर्वसाधारणत्वे "ब्राह्मणः कुलजो विद्वान्" इत्यादिनिषेधो निरवकाशः स्यात्। किञ्चोर्ध्वपुण्ड्रस्य सर्वेष्वपि कर्मस्वावश्यकत्वमनेकेषु सर्वसाधारणेष्वाह्निकादिधर्मशास्त्रग्रन्थेषु बहुवचनोपन्यासपुरःसरं सुप्रपञ्चितमेव। तद्यदि त्रिपुण्ड्रं सर्वसाधारणं स्यात्तर्हि तन्निरवकाशं स्यात्। न चास्य वैष्णवमात्रे सावकाशत्वमिति वाच्यम्; बहुग्रन्थविरोधात्। सार्वदेशिकस्मार्तादिशिष्टाचारविरोधात्।

"ऊर्ध्वपुण्ड्रं शिवस्यैवं विष्णोः कुर्युश्च वा बुधाः"

इत्यादिमयूखाद्युद्धृतवचनेषु शैववैष्णवयोरुभयोरपि तदावश्यकत्वस्य विरोधाच्च।

नन्वेवं सत्युभयोरप्यावश्यकत्वात्सन्ध्यावन्दनादिकाले उभयोरपि धारणमस्त्विति चेत्, मैवम्; शिवकेशवचिह्नभूतयोरनयोर्युगपद्धारणस्यायोग्यत्वात्।

"शिवकेशवयोश्चिह्नं चक्रशूलादिकं द्विजः।
न धारयेत मतिमान् वैदिके वर्त्मनि स्थितः" ॥

इत्यादिभिराश्वलायनषष्ठाध्यायवचनैस्तन्निषेधात् । ईदृशवचनानां युगपद्धारणनिषेधपरत्वस्य बहुनिबन्धसम्मतत्वात् ।

स्कान्दे त्रयोविंशाध्याये—

"ऊर्ध्वपुण्ड्रे त्रिपुण्ड्रं यः कुरुते तु नराधमः ।
भङ्क्त्वा विष्णुगृहं पुण्यं स याति नरकं ध्रुवम् ॥
त्रिपुण्ड्रे यस्य विप्रस्य ऊर्ध्वपुण्ड्रं प्रदृश्यते ।
तं दृष्ट्वाप्यथवा स्पृष्ट्वा सचैलं स्नानमाचरेत्" ॥

इति स्पष्टमेव तयोर्युगपद्धारणस्य प्रतिषिद्धत्वाच्च । तस्माद्धार्यं त्वन्यतरदेव । तथा च सति उभयोरावश्यकवचनं बाध्येतैवेति व्यवस्था सामञ्जस्याभावात् । उक्तयुक्त्या त्रिपुण्ड्रादिकं शैवपरमेव, तेषामेव च तद्ग्राहित्येन कर्मवैफल्यमपीति सर्वं सुस्थम् ।

अत एव कौर्मे, सर्वेषामपि शैवानां तदेव मुख्यत्वेनोच्यते,

"सर्वेषामेव भक्तानां शम्भोर्लिङ्गमनुत्तमम् ।
सितेन भस्मना कार्यं ललाटे तु त्रिपुण्ड्रकम्" ॥ इति ।

सर्वेषामेव चतुर्णामपि वर्णानां शम्भोर्भक्तानां अर्थाच्छैवानां शम्भोश्चिह्नं भस्मत्रिपुण्ड्रमेवानुत्तमं मुख्यमित्यर्थः । शम्भोरिति देहलीदीपकन्यायेनोभयत्रान्वेति । न चात्र सर्वेषामेव देवानां भक्तानां शम्भोर्लिङ्गमेव धार्यमित्येवार्थोऽस्त्विति शङ्क्यम् । अग्रिमवाक्यचयविरोधात् । तथा च तत्रैव,

"यस्तु नारायणं देवं प्रपन्नः परमं पदम् ।
धारयेत्सर्वदा पुण्ड्रं ललाटे गन्धवारिभिः ॥
प्रपन्ना ये जगद्बीजं ब्रह्माणं परमेष्ठिनम् ।
तेषां ललाटे तिलकं धारणीयं तु सर्वदा" ॥

इह शूलमिति क्वाचित्कपाठस्तु सगुणोपासकपरत्वेन व्यवस्थापित एवावतारवादावल्याम् । तस्मात्त्रिपुण्ड्रं शैवानामेवेति सिद्धम् ।

(तैत्तिरीयशिक्षाश्रुतेरर्थं, तत्र स्नातकविषया, विवाहपुत्रपौत्रोत्पादनमनुष्यव्यवहारधनोपार्जनावश्यकत्वादयः, गार्हस्थ्यस्याश्रमत्रयोपजीव्यता, श्रुतेर्भस्मार्थकताखण्डनम्)

यत्तूक्तमधुना केनचिच्छैवसुधाकराख्ये स्वग्रन्थे, नित्यत्वाच्च भस्म सदा धार्यम् । तथा च तैत्तिरीयश्रुतिः—"भूत्यै न प्रमदितव्यमि"ति । रावणभाष्ये, भूतिशब्दार्थो भस्मेति स्पष्टमुक्तम् ।

सूतसंहितायां च तदेवोपबृंहितम्; तद्यथा—

"सत्याद्धर्मादपि कुलाद्भसनोद्धूलनादपि ।
त्रिपुण्ड्रधारणाच्चैव सदा न प्रच्युतो भवेत्" ॥ इति ।

तन्न, भूतिशब्दस्यात्र समृद्ध्यर्थकत्वात् । शिष्यस्य ब्रह्मचारिणो विवाहाद्यनेकमाङ्ग-लिककार्योपजीव्यत्वेन तद्विषये प्रमादाभावस्यावश्यविधेयत्वात् । पौर्वापर्यपर्यालोचने-नापि तथैव निश्चयात् । शङ्कराचार्यैरपि तथैव व्याख्यातत्वाच्च । तथाहि—"वेदम-नूच्याचार्योन्तेवासिनमनुशास्ती"त्युपक्रम्येदं पठ्यते । तत्राधीतवेदस्य स्नातुमिच्छोः शिष्यस्य प्रथमं गुरुदक्षिणादानपूर्वकोद्वाहार्थं तदनु पुत्रपौत्रोत्पत्त्याद्यर्थं मनुष्यसम्व्य-वहारार्थं द्रव्यसाध्यावश्यककुटुम्बभरणपञ्चमहायज्ञादिनिर्वाहार्थं गृहस्थाश्रमोपजीव्य-केतराश्रमत्रयस्य यथाशक्ति सत्कारार्थं च द्रव्यसम्पत्तिरवश्यमपेक्षितैव । तद्यथा याज्ञवल्क्यः (अ० १) विवाहप्रकरणे—

"गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्" ॥ इति ।

तृतीयाध्याये मनुरपि ( श्लो० ४ )—

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्" ॥

इति विवाहस्यावश्यकतामाह । अत एव प्रकृतानुवाकेनापि, आचार्याय प्रियं धनमाहृत्य, प्रजातन्तुं मा व्यवच्छेत्सीरित्यनुशिष्यते । व्याख्यातं चात्र शङ्कराचार्यैः—आचार्या-याचार्यार्थं प्रियमिष्टं धनमाहृत्यानीय दत्वा विद्यानिष्क्रियार्थमाचार्येण चानुज्ञातोऽनु-रूपान् दारानाहृत्य प्रजातन्तुं सन्तानं मा व्यवच्छेत्सीः प्रजासन्ततेर्विच्छित्तिर्न कर्त-व्येति । एतदर्थमपि भूतिरपेक्षितैव । किञ्च, तदनु पुत्रपौत्राद्यर्थो यत्नः कार्यः, मनुष्यसम्व्यवहारश्च पाल्यः । इतः पूर्वं नवमानुवाके "प्रजा च स्वाध्यायप्रवचने च प्रजनश्च स्वाध्यायप्रवचने च प्रजातिश्च स्वाध्यायप्रवचने चे"ति वाक्यत्रयेण प्रजो-त्पादनस्य ऋतौ भार्यागमनस्य पुत्रविवाहं कृत्वा तद्वारा पौत्रोत्पादनस्य चावश्यकत्व-श्रावणात् "मानुषं च स्वाध्यायप्रवचने चेति" अनेन लौकिकसम्व्यवहारस्यापि तथा-त्वश्रावणाच्च । अत एव तदर्थमपि समृद्धिरपेक्षितैव ।

अपिच,

"वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः ।
अप्यकार्यशतं त्यक्त्वा ( कृत्वा ) भर्तव्या मनुरब्रवीत् ॥"
"अतिथिं वैश्वदेवं च षट् कर्माणि दिने दिने"

इत्यादि मनुपराशरादिवचनेभ्यो गृहस्थस्य तत्सर्वमावश्यकमेव ।

अत एव नवमानुवाके "अतिथयश्च स्वाध्यायप्रवचने चे"त्याद्युच्यते । प्रकृतानुवा-

केऽपि "मातृपित्राचार्यातिथिषु देवत्वबुद्धिना भवितव्यमि"ति विधीयते । अतस्त-दर्थमपि समृद्धिरपेक्षितैव ।

अन्यच्च, तृतीयाध्याये मनुः ( श्लो० ७७ )—

"यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः ।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः ॥" इत्यादि ।

दक्षः—

"देवैश्चैव मनुष्यैश्च तिर्यग्भिश्चोपजीव्यते ।
गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठो गृहाश्रमी ॥
त्रयाणामाश्रमाणां च गृहस्थो योनिरुच्यते ॥" इत्यादि ।

एवमाद्यनेकश्रुतिवचनैर्यथाशक्त्याऽऽश्रमत्रयसत्कार आवश्यक एव । अत एव प्रकृतानुवाकेऽपि "श्रद्धया देयम्" इत्यादि श्रूयते । अतस्तदर्थमपि समृद्धिरपेक्षितैव । तस्मादत्रैवोक्तानेककार्यसिद्ध्यर्थं तदुपजीव्यायाः समृद्धेः सम्पादनेऽपि त्वया प्रमादो न कर्तव्य इत्येव गुरुणाऽनुशिष्यते । अत एव प्रथमाध्याये आह्निकं वदन् याज्ञवल्क्यः—

"उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये" इति ।

अन्यथा, भवन्मते भस्मरुद्राक्षयोरुभयोरपि तुल्यत्वात् रुद्राक्षधारणान्न प्रमदितव्यमित्यप्यत्र श्रूयेत, तदश्रवणाच्च रुद्राक्षधारणस्यानित्यत्वमपि प्रसज्येत । तस्मान्न किञ्चिदेतत् । एतत्सर्वमभिप्रेत्य शङ्कराचार्यैरपि अनेकमाङ्गलिककर्मोपयोगिनी समृद्धिरेवात्र भूतिशब्देन व्याख्याता ।

यत्तूक्तं रावणभाष्ये तथाऽर्थः स्फुट इति, तद्यदि तद्भाष्ये तथा भवेत्तदापि अप्रसिद्धस्य भगवद्विमुखविविधाधर्मविधायिसर्वदेवोपद्रवकारिशैवमतैकदुराग्रहिराक्षसविशेषकृतव्याख्यानस्याहत्य तत्त्वतः प्रामाण्यं सर्वथा वक्तुमयुक्तम् । यदि च तस्यैव तत्त्वतः प्रामाण्यं स्यात्तर्हि पुनर्वेदव्याख्यानाय सायनमाधवादयो न प्रवर्तेरन् । बहुस्थलेषु तद्विरुद्धं च न व्याकुर्वीरन् । तस्माद्भवतां तु स्वाचार्यशङ्करविद्यारण्यादिविरोधेन रावणभाष्यं नादर्तुमुचितम् । यत्तूपबृंहणवाक्यमुक्तम्, तत्समूलं चेत्तदापि नेदमस्याः श्रुतेरुपबृंहणं भवितुमर्हति । तदुक्तार्थाननुवादकत्वे सति तदनुक्तार्थाभिधायकत्वात् । अत्र हि सत्याद्धर्मादपि कुलादिति कुलशब्देन तदुपलक्षितकुलाचारादप्रच्युतिर्विधीयते । स च प्रकृतश्रुत्यनुक्तः । श्रुतौ च "कुशलान्न प्रमदितव्यमि"त्यनेनोक्त आत्मरक्षणे प्रमादाभावो मध्ये पतितत्वादवश्यमनूदितव्योऽपि न तद्वाक्येनानूद्यते । न च श्रुतौ कुशलशब्देन कुलाचार एव विवक्षितोऽतो न दोष इति वाच्यम्, शङ्कराचार्यैरप्यत्र कुशलशब्देन आत्मरक्षणस्यैव व्याख्याततत्वात् ।

किञ्च, श्रुतौ "भूत्यै न प्रमदितव्यमि"त्येकमेव वाक्यम्। इह तु भस्मनोद्धूलनादपि त्रिपुण्ड्रधारणाच्चैवेति वाक्यद्वयमुच्यते। अतो यद्यत्र त्रिपुण्ड्रान्न प्रमदितव्यमित्यपि वाक्यान्तरं श्रूयेत तदेदं तदुपबृंहणत्वेन शक्येत वक्तुम्। तदेव तु नास्तीति न तथा। न च भूत्यै न प्रमदितव्यमित्यस्यैव वाक्यस्य प्रपञ्चोऽयमिति मन्तव्यम्। सत्यादीनां प्रपञ्चस्याकृतत्वेन प्रक्रमविरोधापत्तेः। एतन्मात्रप्रपञ्चने व्यासस्याग्रहातिशये बीजाभावेन तथा वक्तुमयुक्तत्वाच्च। प्रत्युत, एतन्मात्रप्रपञ्चनदर्शनेनान्यथाशङ्कोदयाच्च। तस्मान्नास्य तदुपबृंहणत्वज्ञापकं किञ्चिल्लिङ्गमस्ति। नन्वस्ति सत्याद्धर्मादिति पदद्वयोच्चारणमिति चेन्नैष दोषः। बृहन्नारायणादिष्वनेकत्र सत्यधर्मयोः साहचर्येण निरूपणदर्शनात् प्रकृतानुवाकोक्तयोरेव तयोरिहानुवाद इति प्रतिपत्तुमशक्यत्वात्। अतः प्रकृतश्रुत्युक्तार्थाननुवादकत्वात्तदनुक्तार्थाभिधायकत्वाच्च नेदं तदुपबृंहणत्वेन शक्यं शंसितुमिति न तद्बलादत्रत्यभूतिशब्दस्य भस्मार्थकत्वं कल्प्यम्। किन्तु, वाचा वक्तव्यत्वेन कायेनानुष्ठेयत्वेन च भिन्नयोरदृष्टार्थयोः सत्यधर्मयोः प्रथमं प्रमादाभावोऽनुशिष्यते। एवमेवान्तरङ्गबहिरङ्गत्वभेदभिन्नयोः सत्यादिनिर्वाहकयोर्दृष्टार्थयोरात्मरक्षणसमृद्ध्योरपि प्रमादाभावः कुशलान्न प्रमदितव्यम्, भूत्यै न प्रमदितव्यमिति वाक्यद्वयेनानुशिष्यते। तदनु द्रव्यसमृद्धस्य वृत्त्यर्थं प्रवचनानुयोगात्। तथा सति च तादृक्स्वाध्यायोपस्थितेरप्ययोगात्तयोरुच्छेदः स्यात्, तद्वारणाय नवमानुवाके ऋतसत्यादिसर्वसाहचर्येणाभ्यस्तस्य स्वाध्यायप्रवचनावश्यकत्वस्य पुनः स्मारणाय तत्र प्रमादाभावश्चोद्यते स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यमिति। एवं स्मारयित्वा, समृद्धिविषये अप्रमादो न स्वत एव पुरुषार्थभूतः, किन्तु, आमुष्मिकाणां देवादीनामैहिकानां मातापित्रादीनां च द्रव्यजन्यसत्कारद्वारैवेति ज्ञापनाय देवपितृकार्याभ्यां न प्रमदितव्यम्, मातृदेवो भव, पितृदेवो भवेत्यादि विधीयते। तस्मादिहोपक्रमोपसंहारादिपरिचिन्तनेन याज्ञवल्क्यादिस्मृत्यनुसारेण च भूतिशब्दः समृद्ध्यर्थक एवेति निश्चीयते। किञ्च, इह भस्मार्थकत्वे सत्याद्धर्मादितिवत् भूतेर्न प्रमदितव्यमित्येव वदेत्। धर्मशब्दलक्षितात्तदनुष्ठानादिव भूतिशब्दलक्षितात्तद्धारणात्प्रमादाभावाभ्यनुज्ञासम्भवात्। वदति तु "भूत्यै" इति। तेन पञ्चमी प्रायपाठपठिता चतुर्थीश्रुतिर्भूतेरर्थपुरुषार्थत्वेन भेदबोधनायैवेति ज्ञायते। श्रुतेर्लिङ्गवाक्यप्रकरणादिसर्वापेक्षया बलिष्ठत्वस्य पारदौर्बल्यसूत्रे जैमिनिनाऽङ्गीकारात्। तथाच फलेभ्यो यातीतिवत् "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इत्यनुशासनात्सत्यधर्माद्यविरोधेन समृद्धिं सम्पादयितुं न प्रमदितव्यमित्येवार्थः समञ्जसः प्रतीयते। शङ्कराचार्यादिभिस्तथैव व्याख्यात इति न भस्मार्थः सः। विशेषश्च मत्कृतोपनिषद्भाष्यात्सेत्स्यत्येवेति सर्वं सुस्थम्।

यत्तु, क्वचित्सकलब्रह्मविद्याङ्गत्वं भस्मोद्धूलनस्य केनचित्प्राचोद्घुष्टम्। यच्च, कैश्चित्

शिरोव्रतत्वादिकमस्य दर्शितम्; तत्तु, प्रागेव पुरुषोत्तमचरणैः सम्यक् निराकृतमिति किं तयाऽत्र चिन्तया ?

( शुद्धचित्तानामेव भस्मतः पावित्र्यम्, सर्वेषां पुण्ड्रव्यवस्था, शुक्लकृष्णपक्षयोस्तिलकेषु नामभेदः, हरिपूजने त्रिपुण्ड्रधृतिरपराधः, तिलकेऽपि सम्प्रदायकुलाचारयोर्नियामकता, आत्मतुष्टेश्च )

यच्च, बृहज्जाबालादिषु पापनाशकत्वमस्योक्तम्, तदपि शुद्धान्तःकरणशैवविषयम्; न तु तस्य चित्तशोधकत्वमिति भाति ।

"अन्तःकरणशुद्धा ये तान् विभूतिः पवित्रयेत् ।
पावनाः किं प्रकीर्त्यन्ते रासभा भस्मधूसराः" ॥

इति काशीखण्डवाक्येऽस्य चित्तशुद्ध्युत्तरकाल एव पापनाशकत्वनिश्चयात् । अलमनेन विचारेण । तथा चेयं व्यवस्था प्रतिभाति—

वैष्णवानां तु चतुर्णामपि वर्णानां सर्वदोर्ध्वपुण्ड्रमेव । पाद्मादिषु पुण्ड्रान्तरनिषेधात् । अधारणे प्रत्यवायाच्च । शैवानां तु त्रिपुण्ड्रमेवमिति शिवार्चनादिषु, तदेव कर्तव्यम् । श्राद्धादिकर्मकाले तु तेषामूर्ध्वपुण्ड्रस्यापि विकल्पः "कुर्युः शैवाश्च वैष्णवाः" इत्यादि-वाक्येभ्यः । शैववैष्णवव्यतिरिक्तानां त्वेवं निर्णयः—तत्र त्रैवर्णिकानामूर्ध्वपुण्ड्रं नित्य-मग्निहोत्रादितौल्यातिदेशात् । ब्राह्मणस्य तु जातिप्रयुक्तत्वादपि नित्यम् । अतः प्रातः स्नात्वा तद्धार्यमेव ।

कमलाकरभट्टाह्निकादिषु—

धारयेदूर्ध्वपुण्ड्राणि स्नात्वाऽऽचम्य यथाविधि ।
सङ्कर्षणादिभिः कृष्णे शुक्ले वै केशवादिभिः ॥

इत्यादिशौनकादिवचनेभ्यः ।

शिवार्चनकाले च त्रिपुण्ड्रमेव धार्यम् । अन्यथा तद्वैकल्यस्मरणात् । एवं शैवमन्त्रजपेऽपि ।

भगवत्पूजने चोर्ध्वपुण्ड्रमेव विधेयम् । कमलकराह्निकभागवततत्त्वभास्करादिषु वाराहे द्वात्रिंशदपराधकथने—

"त्रिर्यक्पुण्ड्रधरो भूत्वा यः कुर्यान्मम पूजनम्"

इति पूजाकाले त्रिपुण्ड्रधारणस्य प्रथमापराधत्वनिरूपणात् ।

अथ होमादिसर्वश्रौतस्मार्तकर्मसु बहुभिर्वचनैरूर्ध्वपुण्ड्रस्यावश्यकत्वं तद्राहित्येन कर्मवैफल्यं च प्रतिपाद्यते । तथा क्वचित्त्रिपुण्ड्रस्यावश्यकत्वं दृश्यते । तयोर्युगपद्धारणं च निषिद्धम् । अतस्तत्र स्वस्वकुलाचारानुसारादन्यतरद्धारणीयम् ।

"येनास्य पितरो याता येन याताः पितामहाः"

इत्यादिमिताक्षराद्युदाहृतमन्वादिवचनेभ्यः ।

अत एवाचारप्रकाशे ऊर्ध्वपुण्ड्रत्रिपुण्ड्रविधी व्याख्यायोच्यते । एवमुक्तयोस्तिलक-भस्मधारणयोर्यथास्वकुलसम्प्रदायमृङ्मन्त्रैर्व्यवस्था श्रूयते । श्रोणामेक उदके० । उपावतु-रिति । अत्र प्रथमः पादो गोपीचन्दनादेस्तिलकं, द्वितीयो गोरोचनायास्तृतीयो भस्म-धारणं, चतुर्थः स्वकुलसम्प्रदायानुरोधं चैषां धारणे प्रतिपादयतीति दिगिति । येषां च न तादृशो नियतः कुलाचारस्तैस्तु शास्त्राविरोधेन स्वमनोऽनुरोधेनैव तद्विधेयम् । मनु-याज्ञवल्क्यादिभिः श्रुतिस्मृतिसदाचारानवसरे आत्मतुष्टेरपि धर्मप्रमाणत्वस्मरणात् । अतो वैष्णवसाम्प्रदायिकैस्तु स्वसम्प्रदायानुसारि उर्ध्वपुण्ड्रमेव कार्यम्; न त्वन्यत् । आचारार्कादिषूर्ध्वपुण्ड्रविधिव्याख्यानान्ते यथासम्प्रदायं तिलकं कुर्यादित्युक्तेः । कमलाकराह्निकेऽपि ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा यथासम्प्रदायं कुर्यादित्युक्तेश्च । इतर-धारणेऽत्यन्ततरदुरितभरप्रसरस्मरणाच्चेत्यलं बहुलेखेन ।

अतो न वयं विजातीयं पुण्ड्रं निन्दाम इति नास्मास्वयं प्रश्नोऽवतरति । न चाधार-णादेव तन्निन्दितमिति वाच्यम्, शास्त्रानुसारादधारणे प्राप्ते तावतैव निन्दा कृतेति वक्तुमशक्यत्वात् । अन्यथेतरशाखीयकर्मपरित्यागपूर्वकं स्वशाखीयकर्माचरतोऽपि वेद-निन्दादोषः प्रसज्येत । शाखामात्रस्यापि वेदत्वाविशेषात् । तस्मान्न किञ्चिदेतत् ।

निन्दाकृतिं न विन्दामो विजातीयेऽपि यद्वयम् ।
अतो निन्दाप्रमाणस्यान्वेषणे किम्प्रयोजनम् ॥ १ ॥

---

## ( अष्टचत्वारिंशः प्रश्नः, उत्तरकारिकाः, ऊर्ध्वपुण्ड्रं विंना नित्य-नैमित्तिककाम्यानां वैफल्यम्, तद्धर्तुः शुचिता, मान-सिकपापनाशः, अधर्तुर्निन्दा, विहितत्यागे दोषः )

## अथाष्टमोऽवान्तरः प्रश्नः ॥ ८ ॥

## तदनङ्गीकारे दोषस्य च किम्प्रमाणम् ॥ ४८ ॥

**उत्तरम्—**

तिलकावश्यकत्वे किम्प्रयोजनमिति त्वया ।
पृष्टं तस्योत्तरे सम्यक् तदावश्यकतोदिता ॥ १ ॥
तेनैवायं गतार्थोऽपि प्रश्नो यस्मात् पुनः कृतः ।
अकस्मादुत्तरं तस्मादस्माभिः पुनरुच्यते ॥ २ ॥
विहितस्यावश्यकस्याधारणं दोषकारणम् ।
प्रायश्चित्तं रवेर्दृष्टिस्तद्धीनाननलोकने ॥ ३ ॥

अत्यन्तं द्योत्यते दोषस्तेनैतद्रहितस्य तु ।
तद्धीनं च त्यजेत्कृष्णो वक्तव्यं किमतः परम् ॥ ४ ॥

तथाहि—

गौतममुनिना कृते आचारसूत्रे प्रथमप्रश्ने, अथाचारान् प्रवक्ष्यामीत्याचारकथनं चतुःपुरुषार्थसाधकत्वेनावश्यकत्वनिरूपणपुरःसरं प्रतिज्ञाय, तत्र-प्रथमं प्रत्यहकर्तव्यत्वेन नित्यत्वात्, "उत्थाय पश्चिमे याम" इत्यादिना आह्निकं निरूपयन् स्नानपर्यन्तं निरूप्य जपादिसर्वनित्यकर्मनैष्फल्याभावाय नित्यमूर्ध्वपुण्ड्रमाह ( खं० ८ )—

जपो, होमो, दानं, यागः, स्वाध्यायः, पितृकर्म, चोर्ध्वपुण्ड्रं विना तत्सर्वं भस्मीभवति, अनाचारोऽशुचिर्वा पापं मनसा चरन् ऊर्ध्वपुण्ड्राङ्कितः शुचिरेव भवेत्" इत्यादि ।

सारसङ्ग्रहे मात्स्ये—

"यो विना चोर्ध्वपुण्ड्रेण यत्कुर्यात्कर्म वैदिकम् ।
निष्फलं तस्य तत्कर्म भस्मन्येवाहुतिर्यथा ॥

तत्रैव हारीते—

"ऊर्ध्वपुण्ड्रविहीनस्तु सन्ध्याकर्म समाचरेत् ।
तत्सर्वं राक्षसैर्नीतं नरकं स च गच्छति ॥
नित्यं नैमित्तिकं काम्यं त्रिविधं श्रुतिनोदितम् ।
ऊर्ध्वपुण्ड्रविहीनस्य तत्सर्वं निष्फलं भवेत्" ॥ इति ।

एवमादिवचनसहस्रैस्तस्यावश्यकत्वं त्वस्त्येव । किञ्चास्तीदं ब्राह्मणानां सन्ध्यावन्दनादिवन्नित्यम् ।

यथोक्तं ब्रह्माण्डपुराणे—

"शङ्खचक्रोर्ध्वपुण्ड्रादि धारयेद्ब्राह्मणः सदा ।
श्राद्धादिसर्वकर्मार्ह इत्युक्तं किमतः परम्" ॥ इति ।

अग्निहोत्रातिदेशस्मृतौ च त्रैवर्णिकानामेतन्नित्यमिति दर्शितम् । एवम्विधैर्विविधमहानिबन्धधृतवचनव्यूहैर्नित्यत्वेन विहितस्यात्यावश्यकस्याऽस्याऽनङ्गीकारे महत्तर एव दोषो भवेदेवेति किमत्र कण्ठशोषणकारिणा बहुभाषणेन ?

अत एव दशमाध्याये प्रायश्चित्तानि निरूपयन् मनुः ( श्लो० ४४ )—

"अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः" ॥ इति ।

केचिच्चेदं पराशरस्मृतिवचनमप्याहुः—

"शङ्खचक्रोर्ध्वपुण्ड्रादिरहितो ब्राह्मणाधमः ।
स जीवन्नेव चाण्डालः सर्वधर्मबहिष्कृतः" ॥ इति ।

( तद्रहितस्य मुखदर्शने दोष , तद्रहितस्य भगवदनवाप्ति॰, सहितस्य तल्लोकाप्त्यादीनि, ऊर्ध्वपुण्ड्रमात्रेण सिद्धि , तत्रोपवीतातिदेश॰, मालाग्रह॰ )

किञ्चोर्ध्वपुण्ड्रादिरहितस्य मुखावलोकनेऽपि प्रायश्चित्तं स्मर्यते आचारार्के सारसमुच्चये कमलाकराह्निके च—

"ऊर्ध्वपुण्ड्रविहीनस्य श्मशानसदृशं मुखम् ।
अवलोक्य मुखं तस्य श्रीसूर्यमवलोकयेत्" ॥ इति ।

एवं तद्रहितमुखद्रष्टुरपि विधीयमानप्रायश्चित्तानुमीयमानदोषबोधने सति तदधारयितुः कियान् दोषो भवेदिति नाहं त्ववधारयितुं शक्तः ।

किञ्च, शिवादिसर्ववृन्दारकवृन्दवन्दितचरणारविन्दोऽखिलेश्वरो यदुनन्दनोऽपि ऊर्ध्वपुण्ड्रानङ्गीकारिणं नाङ्गीकरोतीति किमतः परं वक्तव्यं निःशेषदोषपोषवत्त्वं हरिरोषजोषम्भूतसर्वसुकृतस्य तस्य । उक्तं च सारसङ्ग्रहे ब्रह्मरात्रे भगवतैव—

प्रणवेनैव मन्त्रेण मृदा वै मामनुस्मरन् ।
ललाटे धारयेन्नित्यं विष्णुसालोक्यमाप्नुयात् ॥
यो न धारयते मर्त्यो मामकं चिह्नमीदृशम् ।
तं त्यजामि दुरात्मानं मदीयाऽऽज्ञातिलङ्घिनम् ॥
व्यालं दृष्ट्वा यथा लोके दुर्भरा भयकम्पिताः ।
ऊर्ध्वपुण्ड्राङ्कितं तद्वत्कम्पन्ते यमकिङ्कराः ॥
ऊर्ध्वपुण्ड्रेण संयुक्तो म्रियते यस्तु मानवः ।
चाण्डालोऽपि विशुद्धात्मा विष्णुलोके महीयते ॥
केवलस्योर्ध्वपुण्ड्रस्य धारणादपि मानवः ।
देहजैः पापसङ्घातैर्मुच्यते नात्र संशयः ॥" इति ।

नचैवमूर्ध्वपुण्ड्रधारणमात्रेण सर्वपापप्रलोपपूर्वकं भगवल्लोकाधिगमे सम्भवति सति तदतिरिक्तानां सन्ध्यावन्दनभगवत्सेवादीनामपि वैयर्थ्यं प्रसज्येत, तच्चायुक्तमिति वाच्यम्; आवश्यकतयोर्ध्वपुण्ड्रं विधेयमित्येव तात्पर्यवत्त्वाद्वाक्यानाम् । अन्यथा भवतां शैवसुधाकरे छद्मना त्रिपुण्ड्रकर्तुः सर्वपापक्षयबोधकवचनानि लिखितानीति श्रद्धया त्रिपुण्ड्रधारिणां युष्माकं तु सुतरामितरसर्वकर्मवैय्यर्थ्यं प्रसज्ज्येतेति ।

किञ्च, विष्णुधर्मोत्तरादिष्वपि ऊर्ध्वपुण्ड्ररहितस्य भगवत्प्राप्त्यभावः स्मर्यते—

"शङ्खचक्रोर्ध्वपुण्ड्राद्यैश्चिह्नैः प्रियतमैर्हरेः ।
रहितः सर्वधर्मेभ्यः प्रच्युतो नैनमाप्नुयात् ॥" इति ।

इदं दूषणोद्धारेऽपि सङ्गृहीतम्

पुनः सारसङ्ग्रहे नारदपञ्चरात्रे—

"तुलसीमालिका चैव राज्ञां चामरछत्रवत् ।
ऊर्ध्वपुण्ड्रं सदा धार्यं शिखायज्ञोपवीतवत् ॥" इति ।

एवमनेकनिबन्धेषु परःशतश्रुतिस्मृतिपुराणवचनोपन्यासपुरःसरं सविस्तरं तत्र तत्रोर्ध्वपुण्ड्रानङ्गीकारिणो विशेषतोऽशेषदोषपोषप्रमाणानि प्रपञ्चितान्येवेति तदनवलोकनमूलकाय नमोऽस्तु प्रश्नाय ।

अथैवं निर्विचिकित्सनित्यत्वमप्यूर्ध्वपुण्ड्रं निरवधिविविधजनिपरम्पराजनितकर्मघोरणीपरतन्त्रतया चिराद्धरणिचरैरितरैरङ्गीक्रियतां मा वा । अस्माभिस्तु सर्वैरपि वैष्णवैराप्राकृतमापण्डितमाबालमावृद्धं च स्वस्वामिचरणसरोजमुदाश्रितेन हृदा सर्वदा तदावश्यकतया धार्यमेव ।

(वैष्णवैस्तदेव धार्यम् अमन्त्रकमपि, सर्वकर्मसाफल्यमोक्षाद्याद्य उत्कर्षा )

अत एव सारसङ्ग्रहे हारीतः—

"अविद्यो वा सविद्यो वा शङ्खचक्रोर्ध्वपुण्ड्रधृक् ।
नृणां हन्ति समस्ताघं तमः सूर्योदये यथा" इति ।

परमानन्दमन्दारे गारुडे—

"यो मृत्तिकां द्वारावतीसमुद्भवां
करे समादाय ललाटदेशे ।
करोति नित्यं त्वथ चोर्ध्वपुण्ड्रं
क्रियाफलं कोटिगुणं तदा भवेत् ॥
क्रियाविहीनं यदि मन्त्रहीनं
श्रद्धाविहीनं यदि कालवर्जितम् ।
कुर्याल्ललाटे यदि गोपिचन्दनं
प्राप्नोति तत्कर्मफलं तदाक्षयम् ॥"

दूषणोद्धारे च नारदपञ्चरात्रे—

"ऊर्ध्वपुण्ड्रं द्विजः कुर्याद्दण्डाकारं सुशोभनम् ।
मध्ये छिद्रं वैष्णवस्तु नमोन्तैः केशवादिभिः ॥
सान्तरालमृजु सौम्यं सुपार्श्वं सुमनोहरम् ।
यः करोत्यूर्ध्वपुण्ड्रं स ममातीव प्रियो भवेत् ॥
विपुलान्यूर्ध्वपुण्ड्राणि सान्तरालानि यो नरः ।
करोति विपुलं तत्र मन्दिरं मे करोति सः ॥

ऊर्ध्वपुण्ड्रस्य मध्ये तु विशालेऽतिमनोहरे ।
लक्ष्म्या सार्धं समासीनो रमेऽहं तत्र निर्वृतः ॥" इति ।

तथा सारसङ्ग्रहे पाद्मे

"तस्माच्छिद्रान्वितं पुण्ड्रं महाछिद्रं शुभान्वितम् ।
धारयेद्ब्राह्मणो नित्यं हरिसालोक्यसिद्धये ॥
मध्यच्छिद्रेण संयुक्तं तद्धि वै हरिमन्दिरम् ।
ऊर्ध्वपुण्ड्रमृजु सौम्यं सुपार्श्वं सुमनोहरम् ॥
एकान्तिनो महाभागाः सर्वभूतहिते रताः ।
सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिम् ॥
तस्माच्छिद्रान्वितं पुण्ड्रं दण्डाकारं सुशोभनम् ॥"

नीलकण्ठाह्निके भट्टोजिदीक्षिताह्निके च स्मृतिसारसमुच्चये ब्रह्माण्डे—

"अशुचिर्वाप्यनाचारो मनसा पापमाचरन् ।
शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्राङ्कितो नरः" ॥ इति ।

बह्वृचाह्निकाचारमाधवादिषु—

"ऊर्ध्वपुण्ड्रमृजु सौम्यं ललाटे यस्य दृश्यते ।
स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः" ॥ इति ।

एवमूर्ध्वपुण्ड्रावश्यकताख्यफलजनकाः सन्त्यनन्ता एव श्रुत्यादिवचनसन्ताना इति किं तैरुदाहृतैः । एकोऽपि चक्षुष्मान् पश्यतीति न्यायेन निर्मत्सराणां सतामल्पैरपि समूलवचनैः संशयोच्छेदसम्भवात् । अथ द्वेषविषविशेषकलुषितरोषकषायकषणविषण्णाशयानां तु परः सहस्रश्रुतिवचनैरपि नान्तःकरणसन्तोषः सम्भवति । शतमप्यन्धा न पश्यन्तीति न्यायात् । तदलं बहु लेखनेन ।

इत्थं च—

सङ्गतस्योर्ध्वपुण्ड्रांशे त्वङ्गप्रश्नैः सहाष्टभिः ।
भङ्गः प्रश्नस्य रचितो मङ्गलं ददतोत्तरम् ॥ १ ॥

---

## अथ सप्तमः प्रधानः प्रश्नः ॥ ७ ॥

### ( सप्तमः प्रधानः प्रश्नः, उत्तरकारिकाः, अक्षरस्यैव सत्त्वाद्युपाधिभेदेन विष्णुब्रह्मशिवरूपता, तेषामाविर्भावतिरोभावौ, शरीरविचारः, जगल्लयः तेषामन्योन्यं प्रणामादि च )

**सर्वशास्त्रसम्मतः शिवविष्णवोरभेदो भवत्सम्मतो न वा? ॥ ७ ॥**

उत्तरम् ।

क्षराक्षराभ्यां परमो भगवान् पुरुषोत्तमः ।
स निर्गुणोऽनन्तगुणोऽस्त्यचिन्त्यानन्तशक्तिमान् ॥ १ ॥
नित्यानन्तनिजाभिन्नाचिन्त्यधर्माश्रयो महान् ।
स एव सच्चिद्घणितानन्दमात्रोऽक्षरः स्मृतः ॥ २ ॥
मुण्डके बृहदारण्ये कठवल्ल्यां स्फुटं श्रुतः ।
अक्षरं तूपदधते सत्त्वाद्याः प्राकृता गुणाः ॥ ३ ॥
स्यात्सत्त्वोपहितो विष्णू रजसोपहितो विधिः ।
तमसोपहितः शम्भुर्ब्रह्मैवैकमभूत्त्रिधा ॥ ४ ॥
उपाधिभेदाद्भिन्नास्ते त्वभिन्ना ब्रह्मभावतः ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ ५ ॥
भक्त्येकलभ्यो भगवान्निर्गुणः सर्वकारणम् ।
दास्यवद्भिरुपास्यः सोऽस्माभिः प्रास्य वृथाश्रमम् ॥ ६ ॥

तथाहि—यदिह चोदितमभेदः सम्मतो न वेति । तत्र तु सम्मत एवेति ब्रूमः । उभयोरपि गुणावतारत्वेन तत्र तत्रोपहितस्य ब्रह्मचैतन्यस्यैकत्वात् । एवमेव पद्मासनेऽपि बोद्धव्यम् । एतेषां गुणावतारत्वं तूक्तं श्रीभागवते प्रथमस्कन्धद्वितीयाध्याये ( श्लो० २३ )—

"सत्त्वं रजस्तम इति प्रकृतेर्गुणा-
स्तैर्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादयो हरिविरिञ्चिहरेति सञ्ज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥" इति ।

एवं नारायणोपनिषद्यपि—

"सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं पदम्"

इत्युपक्रम्य "स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्" इति पुरुषोत्तमस्यैवाक्षरात्मकस्य ब्रह्मविष्णुमहेश्वरभाव उक्तः। अत एवैषामुत्पत्तिप्रलयौ श्रुतिस्मृतिपुराणेषु वर्ण्येते।

यथाह लघुपराशरः ( श्लो० २० )—

"कल्पे कल्पे क्षयोत्पत्त्या ब्रह्मविष्णुमहेश्वराः" इति।

एतद्व्याख्यायां माधवः—तदेवं ब्रह्मविष्णुमहेश्वरा एतस्मिन्महाकल्पावसाने क्षीयन्ते, पुनस्तत्र महाकल्पादावुत्पद्यन्त इति सिद्धम्। अक्षरार्थस्तु क्षयसहिता उत्पत्तिः क्षयोत्पत्तिः तयोपलक्षिता भवन्तीति, व्याचख्यौ। तत्रैव पुराणे—

"त्रिशतैः षष्टिभिः कल्पैर्ब्रह्मणो वर्षमीरितम्।
वर्षाणां यच्छतं तस्य तत्परार्धमिहोच्यते॥
ब्रह्मणोन्ते मुनिश्रेष्ठ मायायां लीयते जगत्।
तथा विष्णुश्च रुद्रश्च प्रकृतौ विलयं गतौ॥
ब्रह्मणश्च तथा विष्णोस्तथा रुद्रस्य सुव्रताः।
मूर्तयो विविधास्तेषु कारणेषु लयं ययुः॥
माया च प्रलये काले परस्मिन्परमेश्वरे।
सत्यबोधसुखानन्तब्रह्मरुद्रादिसञ्ज्ञितः" ॥ इति।

तथा कौर्मे ब्रह्मविष्ण्वादिलयानन्तरं पञ्चभूतादिलयः पठ्यते—

संस्थितेष्वेव देवेषु ब्रह्मविष्णुपिनाकिषु।
गुणैरशेषैः पृथिवी विलयं याति वारिषु॥
सवारितत्त्वं सगुणं ग्रसते हव्यवाहनः।
तेजस्तु गुणसंयुक्तं वायौ संयाति सङ्क्षयम्॥
आकाशे सगुणे वायुः प्रलयं याति विश्वभृत्।
भूतादौ च तथाकाशो लीयते गुणसंयुतः॥
इन्द्रियाणि तु सर्वाणि तैजसे यान्ति सङ्क्षयम्।
वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः॥
त्रिविधोऽयमहङ्कारो महति प्रलयं व्रजेत्।
महान्तमेभिः सहितं प्रकृतिर्जायते द्विजाः" ॥ इति।

एवं विष्णुपुराणादिषु प्राकृतलयो द्रष्टव्यः।

तथा उत्पत्तिप्रकरणेऽपि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति तैत्तिरीयश्रुतिमुदाहृत्योच्यते माधवेन। अन्नात्पुरुष इति। तत्र पुरुषशब्देन शिरःपाण्याद्याकृतियुक्तो देहोऽभिधीयते। स च देहो ब्रह्मादिस्तम्बान्तो बहुप्रकारः। तत्र ब्रह्मदेहस्य

निरतिशयपुण्यपुञ्जफलरूपत्वादितरसकलदेहकारणत्वेनानादित्वम्। तथा च "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" इति श्रुतिः। "ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता" इति च। "स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत" इति। एतेन विष्णुमहेश्वरदेहयोरप्यादित्वं व्याख्यातम्। एकेनैव चैतन्येन गुणत्रयव्यवस्थायै देहत्रयस्य स्वीकृतत्वात्। तथा च मैत्रशाखायां श्रूयते—"तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरित्यथ यो ह खलु वाचास्य राजसोंशोसौ स योयं ब्रह्मा, अथो ह खलु वाचास्य तामसोंशोसौ स योयं रुद्रोथ यो ह खलु वाचास्य सात्त्विकोंशोसौ स योयं विष्णुः। स वा एष एकस्त्रिधा भुव" इति। तथोत्तरतापिनीये मायां प्रकृत्य श्रूयते—सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं गुणाऽभिन्नाङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिचैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यं सर्वत्र" इति। अथ ईक्षत्यधिकरणे विज्ञानेन्द्रभिक्षुभाष्ये मत्स्यपुराणे—

"गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवा(?)वजज्ञिरे।
एका मूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः॥
सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्"। इति।

बुद्ध्याख्यसमष्टिमहत्तत्त्वं हि त्रिगुणात्मकरज्जुवत्त्रिगुणात्मकमेकमेव। सत्त्वाद्यंशभेदेन त्रयाणां देवानां च शरीरं भवतीत्येका मूर्तिरित्युच्यते हरिहरात्मकदेहवदिति। अत एव चैतत्सूक्ष्मशरीराधारभूतं विराडाख्यं स्थूलशरीरमेकमेवेति त्रयाणामेव विश्वरूपत्वमुपपद्यते। त्रयश्च देवाश्चेतनरूपाभिन्ना एव। अत एव त्रयाणामेकपिण्डतया वातपित्तकफवत् परस्परसापेक्षत्वात्।

"अन्योन्यमनुरक्तास्ते ह्यन्योन्यमनुजीविनः।
अन्योन्यं प्रणताश्चैव लीलया परमेश्वराः"॥

इति मात्स्यादिवाक्यमप्युपपन्नम्। एतेन त्रयाणां भेदाभेदावपि व्याख्यातौ वेदितव्यौ। न तु तेषां कार्योपाधिकत्वेऽपि

"त्रिधाकृत्वात्मनो देहं सोन्तर्यामीश्वरः स्थितः"

इति स्मृतेर्योगिकायव्यूहवल्लीलावतारत्वमेवास्तु, किमर्थं विष्णवादीनां चेतनान्तरत्वं कल्प्यत इति चेत्, नः कौर्मे—

"प्रधानं पुरुषं चैव प्रविश्याशु महेश्वरः।
क्षोभयामास योगेन परेण परमेश्वरः॥
प्रधानात्क्षोभ्यमाणाच्च तथा पुंसः पुरातनात्।
प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकम्॥"

इत्यनेन, तथा विष्णुपुराणादिषु च पुराणान्तरेण सह प्रकृतिं संयोज्यैव परमेश्वरस्तदुभयात्मकं देवतात्रयरूपं महान्तं सृजतीत्यवगमात्।

"ब्रह्मादीनां त्रयाणां तु स्वहेतौ प्रकृतौ लयः।
प्रोच्यते कालयोगेन पुनरेव समुद्भवः" ॥

इति मात्स्यादिभ्यस्तेषामुत्पत्तिलयसिद्धेश्च।

(तेषां तादात्म्यरूपोन्योन्यमभेदः, भेददर्शने दोष)

अतः,

"त्रयाणामेकभावानां यो न पश्यति वै भिदाम्"

इत्यादिभिस्त्रयाणामेव देवानां स्वाभाविकब्रह्मात्मभावसाम्यमित्युक्तम्।

यत्तु, भिक्षोः तेषां लीलावताररूपत्वादिकमसम्मतम्, तत्तु युक्तं न वेत्यन्यदेतत्। भाष्यप्रकाशे श्रुतत्वाच्चेति सूत्रे भैक्षवमतखण्डनप्रस्तावे पराशरपुराणे,

"वैष्णवानि पुराणानि समस्तानि महामुने।
त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परं पदम् ॥
प्रवदन्ति··· ·· ········"

इति साम्यस्मरणम्। अतो गुणावतारयोर्हरिहरयोस्तत्तद्गुणोपहितब्रह्मचैतन्यस्यैकत्वात्तादात्म्यरूपोऽभेदोऽस्माकं सम्मत एव।

"शिवाय विष्णुरूपाय शिवरूपाय विष्णवे।
शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥
यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः।
यथान्तरं न पश्यामि तथा मे स्वस्तिरायुषि" ॥

इत्यादिप्रमाणसिद्धत्वात्। स्कान्दे च काशीखण्डे पूर्वभागे सप्तविंशाध्याये (श्लो० १८१)—

"विष्णुरुद्रान्तरं ब्रूयाद्यः श्रीगौर्यन्तरं तथा।
तद्भ्रान्तिकस्य मूर्खस्य वाक्यं शास्त्रविगर्हितम्" ॥ इति।

एवं श्रीभागवतादिवचनान्यपि।

"त्रयाणामेकभावानां यो न पश्यति वै भिदाम्।
न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते" ॥

इत्यादीनि द्रष्टव्यानि।

(पुरुषोत्तमस्य महोत्कर्ष, तत्समाधिकयोरभाव, ब्रह्मशिवादीनां तत्कलात्व च)

सर्वकारणभूतस्य श्रीपुरुषोत्तमस्य तु न केनापि साम्यं कर्तुं शक्यम्। यथाह दशमस्कन्धे विधिः—

"क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते
स्वाम्यं तु तत्र कुधियः ( योऽ )पर ईश कुर्युः" । इति ।

पाद्मोत्तरखण्डे पाखण्डोत्पत्तिकथनाध्याये पार्वतीं प्रति शिवः—

"यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः ।
समत्वेनैव वीक्षेत स पाखण्डी भवेत्सदा" ॥ इति ।

तैत्तिरीये श्रूयते—

"नारायणः परं ब्रह्म तत्त्वं नारायणः परः" इति ।

एवं "एको ह वै नारायण आस" इत्याद्या आथर्वणादिश्रुतयोऽप्यनुसन्धेयाः ।

नारदपञ्चरात्रेऽपि द्वितीयरात्रतृतीयाध्याये शिवः—

"गुणान्तरं तीर्थकीर्तेः को वा वक्तुं क्षमो मुने ।
नाहं ब्रह्मा च शेषश्च धर्मः सूर्यस्तथैव च ॥
नारायणर्षिर्भगवान् नरर्षिः कपिलस्तथा ।
सनत्कुमारो वेदाश्चाप्यन्यः को वा न भारती ॥
परमात्मा यथा दृष्टः सीमा च नभसस्तथा ।
यथा दृष्टं मनश्चापि बुद्धिर्ज्ञानं विवेचनम् ॥
तथा गुणश्च कृष्णस्य सर्वाज्ञातश्च नारद ।
तथापि वक्ति तज्ज्ञानं पण्डितश्च यथागमम् ॥
कलाः कलांशास्तस्यापि ये ये सन्तश्च योगिनः ।
ते महान्तश्च पूज्याश्चाप्यंशं वक्तुं च कः क्षमः ॥
नैव कृष्णात्परो देवो नैव कृष्णात्परः पुमान् ।
नैव कृष्णात्परो ज्ञानी न योगी च ततः परः ॥
नैव कृष्णात्परः सिद्धस्तत्परोऽपि न हीश्वरः ।
न तत्परश्च जनको विश्वेषां परिपालकः ॥
न तत्परश्च बलवान् बुद्धिमान् कीर्तिमांस्तथा ।
न तत्परः सत्यवादी दयावान् भक्तवत्सलः ॥
न तत्परश्च गुणवान् सुशीलश्च जितेन्द्रियः ।
शुद्धाशयश्च शुद्धश्च न तस्माद्भक्तवत्सलः ॥
न हि तस्मात्परो धर्मी प्रदाता सर्वसम्पदाम् ।
न हि तस्मात्परः शान्तो लक्ष्मीकान्तात्परश्च कः ॥
अनन्तकोटिब्रह्माण्डा मोहिता मायया यया ।
सा चातिभीता पुरतो यमेव स्तोतुमक्षमा ॥

सरस्वती जडीभूता यमेव स्तोतुमक्षमा ।
महालक्ष्मीश्चातिभीता पादपद्मं निषेवते ॥
प्रत्येकं प्रतिविश्वेषु महाविष्णोश्च लोमसु ।
कोटिशः कोटिशः सन्ति देवा ब्रह्मादयो मुने ॥
यथा रेणुरसङ्ख्यश्च तथा विश्वानि नारद ।
एतेषामीश्वरश्चैको राधेशः प्रकृतेः परः ॥" इति ।
"अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।"
"उत्तमः पुरुषस्त्वन्यः"
"मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय"

एवमादिषु पुरुषोत्तमस्य तु सर्वावधिकोत्कर्षवत्त्वं स्फुटमेव । अतो रुद्रादीनां तदंशभूतानां न तत्साम्यम् । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्वेताश्वतरश्रुतेः ।

"निरस्तसाम्यातिशयेन राधसा"

इति पुराणाच्च ।

विस्तरस्तु मत्कृतेषूपनिषद्व्याख्यानेष्ववगन्तव्यः । शिवादीनां भगवत्कलात्त्वं तु वर्ण्यते श्रीभागवतादिषु । यथाह सप्तमस्कन्धे ( अ० १० श्लो० ३१ )—

"ततः सम्पूज्य शिरसा ववन्दे परमेष्ठिनम् ।
भवं प्रजापतीन् देवान् प्रह्लादो भगवत्कलाः ॥"

तत्रैव ( श्लो० ४८ )—

"यस्य साक्षाद्भवपद्मजादिभी रूपं धियावस्तुतयोपवर्णितमि"ति

पुरुषोत्तमस्य सर्वोत्तमत्वम् । दशमस्कन्धे च साम्बविवाहप्रकरणे बलभद्रः—

"ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः"

इति सर्वेषां कलात्वमाह ।

एतत्सर्वं महता प्रपञ्चेन श्रीपुरुषोत्तमचरणादिभिः प्रहस्तवादपण्डितकरभिन्दिपालभाष्यप्रकाशप्रभृतिषु महत्तरग्रन्थेषु सम्यग्व्यवस्थापितमेवेत्यलं बहुना ।

वेदादिवर्णितौ भेदाभेदावित्युतौ तयोः ।
छेदाय भक्तदुःखानां पृथगुक्तः परः पुमान्" ॥

## अथैतत्सप्तमप्रधानप्रश्नावलम्बिनोऽष्टौ प्रश्नाः

### तत्राद्यः ॥ १ ॥

### ( एकोनपञ्चाशत्तमः प्रश्नः, उत्तरे तदाशयादिशिवस्या-पूजने अनन्यत्वभङ्गादयो हेतवः )

**तत्राभेदः सम्मतश्चेत्तदुपदेशः कुतो न क्रियते प्रत्युत शिवपूजादेः प्रतिषेधः क्रियते तत्कथम् ? ॥ ४९ ॥**

उत्तरम्—

किमत्रोपदेशशब्देनाभेदोपदेश एव विवक्षितः आहोस्वित्तन्मन्त्रोपदेशः ? तत्राद्यश्चे-दुक्तरीतिकस्तयोरभेदोऽस्मदाचार्यादिभिर्भाष्यसुबोधिनीप्रभृतिषु निर्णीत एव । तत्तद्ग्र-न्थाध्यापनावसरे स्वशिष्येभ्योऽपि स उपदिश्यत एवेति व्यर्थोऽयं तदभावे हेतुप्रश्नः । द्वितीयश्चेत्तुर्यप्रधानप्रश्नावान्तरपञ्चमादिप्रश्नत्रयोत्तरेणैव सर्वमुत्तरितमिति श्रीः ।

यत्तूक्तं शिवपूजादेः कथं प्रतिषेधः क्रियत इति; सत्यम्, क्रियते, परं त्वस्य प्रश्न-स्यायमाशयो भवेत्, यदि शिवविष्ण्वोरभेद एव स्वीक्रियते तर्हि विष्णुरूपाणां राम-कृष्णादीनामिव शिवस्याप्युपासनं भवद्भिः कार्यमेव, विष्णुरूपत्वाविशेषादिति । उत्तरं तु तादात्म्यरूपोऽभेदो हि गुणावतारयोरेव तयोरुपपादितः । तद्यदि वयं गुणावतार-विष्णूपासका एवाभविष्यामस्तर्हि तदभिन्नत्वाच्छिवस्याप्युपासनं कर्तव्यत्वेनास्मान-प्राप्स्यत्, नत्वेवं, अतो नैव, अस्माकं तु सर्वकारणभूतस्य सर्वेश्वरस्य श्रीपुरुषोत्तमस्य सेवनेनैव गतार्था सर्वदेवोपासना । उक्तं च श्रीभागवते—

> "यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।
> प्राणोपहाराद्बलिरिन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या" ॥ इति ।

पुनस्तत्रैव ( स्कं० ८ अ० ५ श्लो० ४९ )—

> "यथा हि स्कन्धशाखानां तरोर्मूलावसेचनम् ।
> एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि" ॥ इति ।

अन्यत्रापि,

> "आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
> सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥
> सर्ववेदेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।
> तत्फलं समवाप्नोति स्तुत्वा देवं जनार्दनम् ॥

वासनाद्वासुदेवस्य वासितं भुवनत्रयम् ।
सर्वभूतनिवासीनां वासुदेव नमोस्तु ते ।।" इति ।

दक्षस्मृतौ च समाप्तिदशायाम्—

"विद्या वा यदि वाऽविद्या शरणं तु जनार्दनः" इति ।

दशमस्कन्धे च—

"त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम्" इत्यादि ।

बह्वृचाश्चामनन्ति—

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ।।" इति ।

अतः पुरुषोत्तमसेवनेनैवास्माकं गतार्था सर्वदैव सर्वदेवतोपासना ।

किञ्च, देवतान्तरोपासने, "यो वै स्वां देवतामति यजते" इति तैत्तिरीयसंहिताश्रावितः स्वदेवतातिक्रमदोषः प्रसज्ज्येत । "अनन्याश्चिन्तयन्तो माम्" इत्याद्युक्तमनन्यत्वं च भज्येत । भगवता च, "येप्यन्यदेवताभक्ता" इति देवतान्तरोपासनस्यावैधत्वस्मरणात् । अवैधापेक्षया वैधानुष्ठानमेव श्रेयः ।

अपिच,

"कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः"

इति ज्ञानशून्यानां सकामानामेव देवतान्तरप्रतिपत्तिः ।

"देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि"

इति तदुपासनया तत्सायुज्यादिकमेव फलं न तु भगवत्प्राप्त्यादिकमिति फलतारतम्यं च दर्शितं भगवतेति । निष्कामानां ज्ञानाग्रहवतां देवतान्तरसायुज्याद्यनाकाङ्क्षिणां भगवच्चरणैकप्रेप्सूनां नैव रुद्रादिदैवतान्तरोपासना युक्ता ।

सारसङ्ग्रहादिषु,

"ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ।"
"मुमुक्षवो घोररूपान्"

इत्यादिभागवतादिवचनेभ्यः ।

किन्त्वनन्यतया श्रीपुरुषोत्तमसेवनैव तेषां सकलेष्टसम्पादिका कल्पलतिकेत्येतदुपपादितं प्राक् पञ्चदैवतपूजाप्रश्नोत्तरे ।

( सात्त्विकाना शिवादिपूजानिषेध. )

अन्यच्च, अस्ति शिवपूजायाः प्रतिषेधः । यथा, श्रीभागवते चतुर्थस्कन्धे द्वितीयाध्याये ( श्लो० २८ )—

"भवव्रतधरा ये च ये च तान् समनुव्रताः ।
पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ॥
नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः ।
विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम् ॥
ब्रह्म च ब्राह्मणांश्चैव यद्यूयं परिनिन्दथ ।
सेतुं विधारणं पुंसामतः पाखण्डमाश्रिताः ॥
एष एव हि लोकानां शिवः पन्था सनातनः ।
यं पूर्वे चानुसंतस्थुर्यत्प्रमाणं जनार्दनः ॥
तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम् ।
विगर्ह्य यात पाखण्डं दैवं वो यत्र भूतराट्" ॥ इति ।

तथा, प्रथमस्कन्धे द्वितीयाध्याये ( श्लो० २७ )—

"मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥
रजस्तमःप्रकृतयः समशीला भजन्ति वै ।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः" ॥ इति ।

सारसङ्ग्रहे पद्मपुराणे—

"योऽसौ सर्वगतः श्रीमान् वासुदेवः परात्परः ।
अनादिनिधनो विष्णुः स एव परमेश्वरः ॥
शुद्धसत्त्वमयो योऽसौ कल्याणगुणवान् प्रभुः ।
पुण्डरीकेक्षणः श्रीमान् श्रीपतिः पुरुषोत्तमः ॥
विप्राणां वेदविदुषामेक एवार्चितः प्रभुः ।
विप्राणां नेतरे पूज्या रजस्तमो विमोहिताः" ॥ इति ।

वसिष्ठस्मृतौ—

"नारायणं परं ब्रह्म ब्राह्मणानां हि दैवतम् ।
सोमसूर्यादयो देवाः क्षत्रियाणां विशामपि ॥
शूद्रादीनां तु रुद्राद्या अर्चनीयाः प्रयत्नतः" ॥ इति ।

पाद्मे भृगुवचनानि—

"शुद्धसत्त्वमयो विष्णुः कल्याणगुणसागरः ।
नारायणः परं ब्रह्म विप्राणां दैवतं हरिः ॥
स एव पूज्यो विप्राणां नेतरः पुरुषर्षभ ।
मोहाद्यः पूजयेदन्यं स पाखण्डी भविष्यति ॥

अशुद्धा ब्रह्मरुद्राद्या रजस्तमोविमिश्रिताः ।
नान्यः कश्चिन्नराणां वै पूजनीयः कदाचन ॥
नान्यं देवं निरीक्षेत नान्यं देवं च पूजयेत् ।
न चान्यं प्रणमेद्विप्रो नान्यदायतनं विशेत् ॥" इति ।

वाराहे—

"यत्सत्त्वं स हरिर्देवो हरिस्तत्परमं पदम् ।
सत्त्वं रजस्तमश्चेति तृतीयं चैतदुच्यते ॥"

लिङ्गपुराणे—

"हिरण्यगर्भो रजसा तमसा शङ्करः स्वयम् ।
सत्त्वेन सर्वगो विष्णुः सर्वात्मा सदसन्मयः ॥
सात्त्विकैः सेव्यते विष्णुस्तामसैरेव शङ्करः ।
राजसैः सेव्यते ब्रह्मा सङ्कीर्णैश्च सरस्वती ॥
बौद्धो रुद्रस्तथा वायुर्दुर्गागणपभैरवाः ।
यमस्कन्दौ नैर्ऋतश्च तामसा देवताः स्मृताः ॥"

भागवतेऽपि—

"सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेति सञ्ज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥"

राजसतामसानामेव शिवाद्यर्चनम् । सात्त्विकानां मुमुक्षूणां तु रामकृष्णादिभगवद्वतार्चनमेव विधीयते । तथा सारसङ्ग्रहे ब्रह्मरात्रे—

"न त्रिपुण्ड्रं द्विजैर्धार्यं पट्टाकारं तथैव च ।
न चान्यदेवताभक्तिरापद्यपि कदाचन" इति ॥

( भस्मरुद्राक्षधृति विना शिवार्चन व्यर्थ, वैष्णवाना तद्धारणनिषेध. )

किञ्च, तिथितत्त्वे लैङ्गे—

"विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया ।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥" इति ।

शैवसुधाकरे तु न तस्य फलदो भवेदिति पाठः । तत्रैव सूतसंहितायां कश्चिद्ब्राह्मणं प्रति विष्णुवचनम्—

"विभूतिधारणं त्यक्त्वा त्यक्त्वा रुद्राक्षधारणम् ।
मा मां पूजय विश्वेशं शिवं लिङ्गस्वरूपिणम् ॥"

सनत्कुमारसंहितायामपि,

"यथैव चाण्डालोच्छिष्टं श्राद्धार्थं नोपयुज्यते ।
पूतिपर्युषितं यच्च निर्भस्मैवं शिवार्चनम् ॥
दायादहीनो न पुनर्मृतः पिण्डमवाप्स्यति ।
तथा भस्मविहीनोऽपि शिवार्चनपरं फलम् ॥
यथा कृशानुरहितो ह्यध्वरो नैव शोभते ।
अशेषसाधनोपेतं भस्महीनं शिवार्चनम् ॥"

ति भस्मरुद्राक्षरहितस्य शिवपूजनं निषिद्धम् । तद्धारणं तु वैष्णवानां निषिद्धम् ।

नारायणसारे—

"रुद्राक्षधारिणं विप्रं सदा भस्माऽनुलेपनम् ।
सकुलं तं त्यजेन्नित्यं सर्वकर्मबहिष्कृतम् ॥" इति ।

तत्रैव विष्वक्सेनसंहितायाम्—

"स्वच्छन्दप्रेतवेषाश्च मिथ्यालिंगधरास्तथा ।
ब्रह्मकोपाग्निनिर्दग्धा रुद्रभक्ता जटाधराः ॥
अग्निदं गरदं चैव लिङ्गपाषाणधारिणम् ।
त्रिपुण्ड्रधारिणं विप्रं चण्डालमिव सन्त्यजेत् ॥"

तत्रैव हारीतः—

"रुद्रार्चनं त्रिपुंड्रस्य धारणं यत्र दृश्यते ।
शूद्राणां च विधिः प्रोक्तो न द्विजानां कदाचन ॥" इति ।

पाद्मोत्तरखण्डे ऊर्ध्वपुण्ड्राध्याये—

"विप्राणां नैव धार्यं स्यात्तिर्यक्पुण्ड्रादिधारणम् ।
नारायणात् परब्रह्माद(?)न्येषामर्चनं न हि ॥" इति ।

अयं च सर्वोऽपि निषेधो मुख्यतया वैष्णवपर एवेत्यवगम्यते । सर्वपरत्वे
तद्विधायकशास्त्रैरवकाश्यापत्तेः । अतो वैष्णवानां शिवपूजादिप्रतिषेधो युक्त एव ।
वेधीनां शिवलोककामुकपरत्वेनोपसंहाराच्च ।

( रुद्रार्चनाद् भस्मरुद्राक्षधारणदानादिभ्यश्च रुद्रलोकाप्तिः, तयोः शैवमन्त्रैकसाध्यता च )

तदर्चनादेः शिवलोकफलत्वं तु यथा तिथितत्त्वे भविष्ये—

"धत्तूरकैश्च यो लिङ्गं सकृत्पूजयते नरः ।
स गोलक्षफलं प्राप्य शिवलोके महीयते ॥" इति ।

आचारमयूखादिषु चेदमुदाहृतम्। चतुर्विंशतिमतव्याख्यामयूखादिषु महाभारते—

सदा तं यजते यस्तु श्रद्धया मुनिपुङ्गव।
लिङ्गे वा स्थण्डिले वाऽपि शङ्करं विधिपूर्वकम्॥
युगदोषं विनिर्जित्य रुद्रलोके प्रमोदते॥"

आचारमयूखे पार्थिवादिलिङ्गपूजां प्रक्रम्य भविष्ये—

"सहस्रमर्चयेल्लिङ्गं निरयं स न गच्छति।
रुद्रलोकमवाप्नोति भुक्त्वा भोगाननुत्तमान्॥"

तत्रैव शिवपञ्चाक्षरं प्रक्रम्य नन्दिपुराणे—

"तन्मन्त्रजापी तत्कर्म रतस्तद्गतमानसः।
निष्कामः पुरुषो राजन् स रुद्रपदमश्नुते॥"

तत्रैव शिवधर्मे—

"लिङ्गानुलेपनं कार्यं दिव्यगन्धैः सुगन्धिभिः।
वर्षकोटीशतं दिव्यं शिवलोके महीयते॥"

पुनर्भविष्ये—

"बिल्वपत्रैरखण्डैश्च यो लिङ्गं पूजयेत्सकृत्।
सर्वपापविनिर्मुक्तः शिवलोके महीयते॥"

स्कान्दे—

"एकपत्रं फलं पक्वं यः शम्भोर्विनिवेदयेत्।
वर्षाणामयुतम्भोगैः शिवलोके महीयते॥
एकं मोचाफलं पक्वं यः शिवाय निवेदयेत्।
सर्वमच्छम्महाभोगैः शिवलोके महीयते॥"

एवं ग्रन्थान्तरेष्वपि विविधानि वचनानि द्रष्टव्यानि तथा भस्मत्रिपुण्ड्रविषये पुलस्त्यः—

"करोति शिवमन्त्रेण यस्त्रिपुण्ड्रं द्विजोत्तमः।
त्र्यक्षः शूलधरः सौम्यः शिवलोके महीयते॥" इति।

रुद्राक्षधारणेऽपि निर्णयसिन्धौ तृतीयपरिच्छेदपूर्वार्द्धे—

"विना मन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवः।
स याति नरकान् घोरान् यावदिन्द्राश्चतुर्दश॥
पञ्चामृतं पञ्चगव्यं स्नानकाले प्रयोजयेत्।
रुद्राक्षस्य प्रतिष्ठायां मन्त्रं पञ्चाक्षरं तथा॥" इति।

प्रजापतिः—

"यो ददाति द्विजेभ्यश्च रुद्राक्षं भुवि सन्मुखम् ।
तस्य प्रीतो भवेद्रुद्रः स्वं पदञ्च प्रयच्छति ॥" इति ।

स्कान्दे—

"रुद्राक्षदेहसंस्थोऽपि कुक्कुरो म्रियते यदि ।
सोऽपि रुद्रपदं याति किं पुनर्मानवो गुह ॥" इति ।

अत्र रुद्राक्षस्य शिवलोकप्राप्तिहेतुत्वं स्पष्टमेवेति तत्कामानामेव तद्धारणं तदर्चनं चोचितम् ।

किञ्च, शैवमन्त्रमन्तरा धारणे दोषोऽपि दर्शितः, त्रिपुण्ड्रविषयेऽपि सुधासिन्धौ—

"त्रिपुण्ड्रकं सदा कुर्यान्मन्त्रपूतेन भस्मना ।
मन्त्रहीनं तु यः कुर्यात्पापभागी भवेन्नरः ॥" इति ।

अतोऽपि वैष्णवानां नैतद्युक्तम् । तन्मन्त्रोपासनेऽवश्यभाविना शैवत्वेन साङ्कर्यापत्तेः । तज्जपादिवशादवश्यभाविन्या रुद्रपदप्राप्तेर्निर्गुणमोक्षेच्छूनामत्यन्ताऽनभिलषितत्वाच्च ।

( शिवरूपेण पञ्चदेवरूपेण च भगवानेवार्च्यते, शैववैष्णवयोर्भेदनिर्देश )

अपरञ्च, शिवस्याऽपि भगवदंशत्वात्, वस्तुतस्तु शिवार्चनमपि तद्रूपस्य विष्णोरेवार्चनमिति सिद्ध्यति—दशमस्कन्धे ( अ० ४ श्लो० ५ )—

"त्वामेवाऽन्ये शिवोक्तेन मार्गेण शिवरूपिणम् ।
बह्वाचार्यविभेदेन भगवन्समुपासते ।
सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम्" ॥

इत्यादि भगवन्तम्प्रति अक्रूरवाक्येभ्यः ।

शैवसुधाकरे सूतसंहितायां कश्चिद्ब्राह्मणम्प्रति—

"विभूतिधारणं त्यक्त्वा त्यक्त्वा रुद्राक्षधारणम् ।
मा माम्पूजय विश्वेशं शिवं लिङ्गस्वरूपिणम्" ॥

इति विष्णुवाक्यात् ।

पाद्मे कार्तिकमाहात्म्यप्रथमाध्याये—

"सौराः शैवाश्च गाणेशा वैष्णवाः शक्तिपूजकाः ।
मामेव प्राप्नुवन्तीह वर्षाम्भः सागरं यथा" ॥

इति सत्यभामाम्प्रति भगवद्वाक्याच्च ।

अतः सर्वांशिभूतस्य सर्वदेवदेवस्य साक्षाच्छ्रीपुरुषोत्तमस्याऽनन्यतयाऽर्चनतत्पराणामस्मत्साम्प्रदायिकानां तु भगवत्सेवयैव शिवार्चनादेर्गतार्थत्वम्भवत्येव । "यथा तरोर्मूलनिषेचनेने"ति न्यायात् ।

अपि च निर्णयसिन्धौ उत्तरार्द्धे श्राद्धार्हब्राह्मणेषु—

"शिवभक्तो विष्णुभक्तो भार्यायामृतुकालगः ।
गुरुभक्तो ज्ञाननिष्ठः सोमयाजी च सत्यवाक् ॥
सुशीलस्नातकयतिब्रह्मचारिण उत्तमा" इति ।

अत्र शिवविष्णुभक्तयोः पृथगुपदेशः । एवमन्यत्रापि दृश्यम् । यदि तु शैवैर्विष्णुमन्त्रग्रहणतच्चिह्नधारणादिपूर्वकं विष्णुपूजा, अनन्थवैष्णवैश्च शैवमन्त्रग्रहणतच्चिह्नादिधारणपूर्वकं शिवार्चा विधीयते तर्हि शास्त्रसिद्धः शैववैष्णवसम्प्रदायभेद एव न स्यात् । अपरञ्च, मोक्षार्थिनां विष्ण्वर्चनमेव युक्तम् । तस्यैव मोक्षदातृत्वस्य प्रागुपपादितत्वात् । अत एव गौतमसूत्र आह्निकनिरूपके प्रथमप्रश्ने देवार्चनं प्रक्रम्योच्यते (खं० १२)—

"आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ऐश्वर्यमीश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात्" ॥ इति ।

तस्माद्वैष्णवैर्भगवदर्चनमेव कार्यं न तु रुद्रादिदेवतान्तरार्चनरूपः परधर्मः समाश्रयणीयः । यथाह दशमाध्याये मनुः ( श्लो० ९७ )—

"वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्मेण जीवन् हि सद्यः पतति जातितः" ॥ इति ।

( परधर्माश्रयनिन्दा अधर्मस्य पञ्चशाखाश्च कुलाचारात्मसन्तोषाभ्यां व्यवस्था च )

भगवानप्याह—

"श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" ॥ इति ।

आचारमाधवे च तृतीयाध्याये श्राद्धवर्ज्यब्राह्मणेषु यमः—

"मुद्भिश्च निन्दिताचारः स्वकर्मपरिवर्जकः ।

इति गणयित्वाग्रे उपसंहरति—

"चतुराश्रमबाह्याश्च सर्वे ते पङ्क्तिदूषकाः ।
इत्येतैर्लक्षणैर्युक्तास्तान् द्विजान्न नियोजयेत्" ॥ इति ।

श्रीभागवते सप्तमस्कन्धे पञ्चदशाध्याये ( श्लो० १२ )—

"विधर्मः परधर्मश्च आभास उपमाच्छलः ।
अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥

धर्मबाधो विधर्मः स्यात्परधर्मोऽन्यचोदितः ।
उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः ॥
यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमात्पृथक् ।
स्वभावविहितो धर्मः कस्य नेष्टः प्रशान्तये" ॥ इति ।

दक्षस्मृतौ ( श्लो० १८ )—

"स्वकं कर्म परित्यज्य यदन्यत्कुरुते नरः ।
अज्ञानादथवा लोभात्स तेन पतितो भवेत्" ॥

अत्रिस्मृतौ—

"तानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः ।
प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः" ॥

तत्रैव—

"येऽप्यपेताः स्वधर्माद्ये परधर्मे व्यवस्थिताः ।
तेषां शास्तिकरो राजा स्वर्गलोके महीयते ॥
आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते ।
परधर्मो भवेत्त्याज्यः स स्वयं परदारवत्" ॥ इति ।

नारदपञ्चरात्रे ( रा० २ अ० ७ श्लो० ४० )—

"स्वधर्माचरणं शुद्धं विधर्माच्च निवर्तनम् ।
वेदोक्ताचरणं विप्र परं निर्वाणकारणम्" ॥ इति ।

किञ्च, स्वकुलाचारात्मसन्तोषयोरभावावपि रुद्रादिदेवतान्तरपूजाप्रतिबन्धकावस्माकं वेदितव्यौ ।

"येनास्य पितरो याता येन याताः पितामहाः ।
येन यायात्सतां मार्गस्तेन गच्छन्न दुष्यति" ॥

इति मनुवचनात् ( अ० २ श्लो० ६ )—

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" ॥ इति ।

तथा ( अ० १ श्लो० ७ )—

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः"

इति मनुयाज्ञवल्क्याभ्यामात्मसन्तोषस्यापि धर्मप्रमाणत्वस्मारणात् । अत एव याज्ञवल्क्यस्मृतौ ( अ० १ ) श्राद्धप्रकरणे ( श्लो० ४० ) मृतेऽहनि तु कर्तव्यमित्यस्य मिताक्षरायामन्ते, क्षयाहे एकोद्दिष्टपार्वणयोः वंशसमाचारादेव, तदभावे आत्मतुष्ट्यैव

च व्यवस्था कृता इति ध्येयम् । पराशरमाधवीये च द्वितीयाध्याये बहुविधान् गृहस्थधर्मान्निरूप्य माधवेन सामान्येन च धर्मं सङ्क्षिप्याह मनुरित्युक्त्वा "येनास्य पितर" इति "यत्कर्म कुर्वतोऽप्यस्ये"ति श्लोकद्वयं लिखितम् । इत्थं वैष्णवैः क्रियमाणे शिवपूजायाः प्रतिषेधे विशेषतः प्रमाणजिज्ञासा चेत् सा प्रहस्तपण्डितकरभिन्दिपालप्रभृतिमहत्तरप्राचीनग्रन्थावलोकनादेव पूरयितुं शक्ष्यत इत्युपरम्यते ।

पूज्यो नः सरलो देवो देवदेवः श्रियः प्रियः ।
न तु प्रयोजनाभावाद्वामदेवादयः परे ॥ १ ॥
देवतान्तरविद्वेषस्त्वस्माकं नैव विद्यते ।
कुर्मः स्वधर्ममात्रं तु शाखाधिकरणोक्तवत् ॥ २ ॥
शिवेन गुरुणाऽस्माकं देवदेवेन केवलम् ।
अदर्शि यः सम्प्रदायस्तमेवानुसृता वयम् ॥ ३ ॥

---

## अथ द्वितीयोऽवान्तरः प्रश्नः ॥ २ ॥

### (पञ्चाशत्तमः प्रश्नः, उत्तरकारिकाः, सर्वत्राद्वैते वेदचतुष्कश्रुतिस्मृतिन्यायपुराणानि, भगवति देवान्तरसाम्यबुद्धौ दोषः)

### भेदश्चेच्छास्त्रोक्तदोषभागिनः स्युः ॥ ५० ॥

उत्तरम्—

ये ब्रूयुरनयोर्भेदं सन्तु ते दोषभागिनः ।
तादात्म्यलक्षणास्माभिस्त्वभिदा वर्णिता तयोः ॥ १ ॥
अथवा न्यूनमेवोक्तं तयोरेवाभिदेति यत् ।
ये सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन ॥ २ ॥
ऐतदात्म्यमिदं सर्वमित्यादिश्रुतिदर्शिनः ।
पश्यन्ति शुद्धमद्वैतं दोषैः सज्जेत तेषु कः ॥ ३ ॥

तथाहि, बह्वृचानामैतरेयोपनिषदि—

"पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्" ।

बृहन्नारायणोपनिषदि—

"अहमस्मि ब्रह्माहमस्मीति" ।

कठोपनिषदि—

"नेह नानास्ति किञ्चन" ।

काण्वमाध्यन्दिनानां मैत्रेयीब्राह्मणे—

"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति"

इत्यादिना द्वैतज्ञानफलमुक्त्वा,

"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति ।

छन्दोगानां शाण्डिल्यविद्यायाम्—

"ऐतदात्म्यमिदं सर्वम्"

"सर्वं खल्विदं ब्रह्म तज्जलान्" इति ।

श्वेतकेतुविद्यायाम्—

"ऐतदात्म्यमिदं सर्वम्" ।

आथर्वणानां कैवल्योपनिषदि—

"तद्ब्रह्माद्वयमस्म्यहम्" इति ।

मुण्डकोपनिषदि—

"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्या ओषधयः सम्भवन्ति ।

यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्" इति ।

स्मृतिषु—

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इति ।

"वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" ॥ इति ।

चतुर्लक्षण्याम् ( अ० ४ पा० १ सू० ३ )—

"आत्मेति तूपगच्छन्ति ग्राहयन्ति च"

दशमस्कन्धे ( अ० १० श्लो० २९ )—

"व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः" । इति ।

विष्णुपुराणे—

"भूतानि विष्णुर्भुवनानि विष्णुः" इति ।

एवमादिभिः,

श्रुतिस्मृतिन्यायपुराणपुञ्जैः पश्यन्त्यभेदं प्रतिपादितं ये ।
सर्वत्र तेषां क्व शिवे च विष्णौ सम्बन्धगन्धोऽपि भवेद्भिदायाः ॥ १ ॥
शोषाय पङ्कप्रकरस्य येषामेषां हरे रश्मिततिः सपोषा ।
तोषात्प्रभोस्तेषु कुतो नु दोषा रोषादिकानां हृदये प्रमोदात् ॥ २ ॥

अतो ये तु ब्रह्मादित्रिदैवतैरपि वन्दनीयममन्दश्रुतिसीमन्तिनीशिरःसीमन्तभूषणं श्रीपुरुषोत्तममेव पशुपतिप्रभृतिदेवतान्तरसाम्येन दूषयन्ति त एव शास्त्रोक्तदोषभागिनः स्युः ।

"साम्यं तु तत्र कुधियः पर ईश कुर्युः"
"यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः ।
समत्वेनैव वीक्षेत स पाखण्डी भवेद्ध्रुवम्" ॥

इत्यादिश्रीभागवतपाद्मोत्तरखण्डवचनेभ्यः न तु सर्वत्राभेदवादिष्वस्मासु दोषगन्धोऽपीति शुभं नः ॥

---

## अथ तृतीयोऽवान्तरः प्रश्नः ॥ ३ ॥

## ( एकपञ्चाशत्तमः प्रश्नः, उत्तरे इतरासां भारतादिटीकानां प्रामाण्याप्रामाण्यविचारः )

## किञ्च, पूर्वाचार्यैर्भारतादिटीकाकारैर्यथा विरोधपरिहारः कृतस्तत्प्रमाणमप्रमाणं वा ॥ ५१ ॥

### उत्तरम्—

प्रथमतो भारतादिटीकाकाराणामाचार्यपदवीमनधिरूढानां श्रीधरचतुर्धरप्रभृतीनां पूर्वाचार्यत्वमेव स्वरूपतोऽसिद्धम् । पूर्वोपन्यस्तेन आचार्यलक्षणेन अनाक्रान्तत्वात् । न हि पूर्वत्वमात्रेण पूर्वाचार्यत्वं शक्यं वक्तुम् । विशेष्याभावप्रयुक्तविशिष्टाभावस्य दुष्परिहरत्वात् । यदि तु पूर्वाचार्यैः शङ्करादिभिश्च टीकाकारैः श्रीधरादिभिश्च प्रणीतविरोधपरिहारनिष्ठप्रामाण्याप्रामाण्ययोः कतरत् सम्मतमित्येव जिज्ञासितं तर्हि प्रश्नवाक्ये भेदावगाहनाय समुच्चायकचकारलेखोऽपेक्षितः । आस्तामेतत् । उत्तरं तु ब्रूमः—

पूर्वमेव भेदेषु भवत्सम्मतिर्न वेत्यस्य उत्तरे अस्माभिरस्मदाचार्याभिमतस्य वेदादिमुख्यप्रमाणचतुष्टयस्य अनुकूलमितरोक्तमपि प्रमाणं तत्प्रतिकूलं चाप्रमाणमिति पुरैवोपपादितम् । अतो भारतभागवतादिटीकास्थविरोधपरिहारस्य श्रुत्यादिविरोधाविरोधाभ्यामप्रामाण्यस्य प्रामाण्यस्य चाभ्युपगम आस्माकीनोऽवगन्तव्यः । अस्मत्सम्प्रदाये श्रीमदाचार्यश्रीविट्ठलाचार्यश्रीपुरुषोत्तमश्रीगिरिधरादिभिः सुबोधिनीटिप्पणीप्रकाशबालबोधिनीप्रभृतयः श्रीभागवतादिव्याख्याः कृताः । साम्प्रदायिकशिष्यैश्च गोपालभट्टबालकृष्णभट्टव्रजनाथभट्टादिभिस्तदनुरोधीनि विवरणान्तराणि प्रणीतानि । तेषु श्रुत्याद्यनुरोधेन विरोधपरिहारः कृत एव सोऽस्माकं प्रमाणमेव । यदि तु सर्वेषामपि साकल्येन भागवतादियावट्टीकाप्रामाण्यस्यावश्यमभ्युपगमे तट्टीकात्वमेव हेतुस्तर्हि अस्मत्साम्प्रदायिकीनामपि श्रीभागवतादिव्याख्यानां साकल्येन प्रामाण्यं भवद्भिः कुतो नाङ्गीक्रियते । टीकात्वाविशेषात् । यदि च भिन्नसाम्प्रदायिकत्वादेव तन्नाङ्गीक्रियत इत्युच्यते तर्ह्यस्माभिरपि कथमस्मत्सम्प्रदायविरुद्धानां "तव पुरुषं वदन्त्यखिलशक्ति-

धृतोऽशमि"त्यादौ अंश इवांशः कृत इव इत्यादिरूपाणां, "आसुरं पार्थ मे शृणु" इत्युपक्रम्य, "असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरमि"त्यादिषु स्पष्टतया जगदसत्यत्ववाद-प्रतिषेधपर्यवसायिषु वचनेषु, असत्यमिति नास्ति सत्यं वेदपुराणादिप्रमाणं यस्मिन् तादृशं जगदाहुरित्यादिरूपाणां विचित्राणां व्याख्यानानां कथं प्रामाण्यमङ्गीकर्तव्यम् । अतोऽस्माकमस्मदाचार्यादिभिः कृतः श्रुत्याद्यनुसारी विरोधपरिहार एव सर्वांशतः प्रमाणम् । इतरैर्व्याख्याकारैः कृतस्तु श्रुत्यादिसम्मतास्मत्प्रतितन्त्रार्थाविरुद्ध एव प्रमाणमिति निखिलं निरवद्यम् ।

---

## अथ चतुर्थोऽवान्तरः प्रश्नः ॥ ४ ॥

### प्रमाणं चेत्तदा भवदीयरचितग्रन्थेषु कुतोऽविरुद्धतया वर्णनम् ॥ ५२ ॥

उत्तरम्—

"प्रामाण्यमेव साकल्यान्नास्माभिः स्वीकृतं यतः ।
तत्स्वीकारेऽवतीर्णोऽयं प्रश्नो नोत्तरमर्हति ॥
अनादिरस्मत्सिद्धान्तः श्रुतिस्मृत्यादिसम्मतः ।
कैश्चिद्वेदपुराणादिव्याख्यातं तद्विरोधतः ॥
अतस्तदुपमर्देन सत्सिद्धान्तप्रवृत्तये ।
अवतीर्यसदाचार्यैस्तादृग्भगवदाज्ञया ॥
प्रमाणयुक्तिदवतो दग्ध्वा दुर्वादकाननम् ।
ग्रन्थेषु सर्वं निर्णीतं श्रुतिस्मृत्यनुरोधतः ॥

नन्वेवं भवत्सिद्धान्तो वेदादिसम्मतोऽनादिसिद्ध एव चेत्तर्हि कथमितरैर्ग्रन्थकारैस्त-द्विरुद्धतया क्वचित्क्वचिद्वर्णितं वेदादिकं च कथमन्यथा व्याख्यातमिति चेत् प्रकृतिवै-चित्र्यादेवेति वदामः । यथा एकादशस्कन्धे चतुर्दशाध्याये ( श्लो० १ )—

"वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ।
तेषां विकल्पप्राधान्यमुताहो एकमुख्यता" ॥

इत्युद्धवप्रश्ने श्रीभगवानुवाच ( श्लोक ३ )—

"कालेन नष्टा प्रलये वाणीयं वेदसञ्ज्ञिता ।
मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥
तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा ।
ततो भृग्वादयोऽगृण्हन् सप्त ब्रह्ममहर्षयः ॥

तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ।
मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥
किंदेवाः किन्नरा नागा रक्षः किंपुरुषादयः ।
बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः ॥
याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ।
यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥
एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् ।
पारम्पर्येण केषांचित् पाषण्डमतयोऽपरे ॥
मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि" ॥ इति ।

अत्र पारम्पर्येण केषांचिदिति सम्प्रदायशब्दवाच्येन परम्परागतसदुपदेशेनेति भगवता स्वाभिमतं निर्दिष्टम् । अतो विचित्रप्रकृतिकानां वेदादेरन्यथार्थप्रतीतेरन्यथैव तैर्व्याख्यातम् । सम्प्रदायानुसारिणी भक्तिश्च कलिबलान्मध्ये शिथिलाऽभूदिति इदानीं सदाचार्यकृतग्रन्थेषु पुनस्तत्प्रवर्तकेषु सर्वथा वेदाद्यनुरोधिषु अर्वाचीनजनमोहनार्थमवतीर्णानां रुद्रादिदैवतानां ग्रन्थेभ्यो विरुद्धतया वर्णनं युज्यत एव । इदानीं रुद्रादिदैवतानां एतदर्थमवतार इति तु पुरैव सप्रमाणं दिङ्मात्रेणोपपादितं कस्मै प्रयोजनायेत्यस्योत्तरे । कलिबलान्मध्ये वैष्णवसम्प्रदायैकसाध्यभगवद्भक्तिशैथिल्यं पुनर्नारदादिसदाचार्यश्रमेण सर्वत्र बहुलं तत्प्रचरणं चेति तु पाद्मे श्रीभागवतमाहात्म्ये स्फुटम् ।

तथाहि (अ० १ श्लो० ६५)—

"यदा मुकुन्दो भगवान् क्ष्मां त्यक्त्वा स्वपदं गतः ।
तद्दिनात्कलिरायातः सर्वसाधनबाधकः ॥
दृष्टो दिग्विजये राज्ञा दीनवच्छरणं गतः ।
न मया मारणीयोऽयं सारङ्ग इव सारभुक् ॥
यत्फलं नास्ति तपसा न योगेन समाधिना ।
तत्फलं लभते सम्यक् कलौ केशवकीर्तनात् ॥
एकाऽऽकारं कलिं दृष्ट्वा सारवत्सारनीरसम् ।
विष्णुरातः स्थापितवान् कलिजानां सुखाय च ॥
कुकर्माचरणात्सारः सर्वतो निर्गतोऽधुना ।
पदार्थाः संस्थिता भूमौ बीजहीनास्तुषा यथा ॥
विप्रैर्भागवती वार्ता गेहे गेहे जने जने ।
कारिता कणलोभेन कथासारस्ततो गतः ॥

तथा धर्मशास्त्रादिष्वप्युपलभ्यते माधवविज्ञानेश्वरादीनां राद्धान्तवैलक्षण्यम् । अतो यदि ते सर्वेऽपि सर्वज्ञा एव अभविष्यन् । कथं तर्हि परस्परतोऽतीव व्यरोत्स्यन् । कथं च सर्वज्ञस्य एकतरस्य वचनमन्यतरेण दूषयितुं शक्येत । अतो विज्ञत्वेऽपि तेषां सर्वज्ञत्वाभावात् न तल्लेखस्य सर्वांशतः प्रामाण्यं केनापि वक्तुं शक्यम् । अत एव पराशरस्मृतिव्याख्यारम्भे वक्ति माधवः—

"कल्पिका मानुषी बुद्धिः सा च न व्यवतिष्ठते ।
अत एव निबन्धेषु दृश्यते नैकवाक्यता" । इति ॥

एतन्मूलैवेयं विदुषां किंवदन्ती—

"सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन" । इति ।

न चान्यतमस्यापि सर्वज्ञत्वं वक्तुं शक्यम् । अविशेषात् । किञ्चाऽऽग्रहात्सर्वज्ञत्वाङ्गीकारे ग्रन्थविशेषकर्तृणामस्मत्साम्प्रदायिकशिष्याणामपि तथात्वं किं न वक्तुं शक्यम् ।

यथोक्तं माधवेनैव—

"कपिलो यदि सर्वज्ञः काणादो नेति का प्रमा" ।

इति न्यायः प्रसज्येत । बुद्धिमात्रव्यवस्थिताविति ।

किञ्च, अस्माकीनानामपि वेदादिप्रमाणोपादानेन सर्वव्यवस्थापनपूर्वकं नवीनग्रन्थकरणे तु न क्षतिः । अन्यथा सर्वमूलभूतश्रुतिसत्त्वे स्मृतिकारा न प्रवर्तेरन् । स्मृतिसत्त्वे च तद्व्याख्यातारः व्याख्यासत्त्वे च निबन्धकाराः ।

अत एवाह स एव—

"विशेषादर्शनं यावत्तावत्सामान्यदर्शनम् ।
मानमेवान्यथा ते स्यात्सर्वज्ञत्वेऽधिकारिता ॥
गुणोपसंहृतिश्चैवं यथादर्शनमिष्यताम् ।
अदृष्टानुपसंहारे नाकिञ्चित्करताऽस्तिते ॥
यद्यावद्दृश्यते वाक्यं शक्तिश्चात्रास्य यावती ।
तावत्कार्यं न तूपेक्षा युक्ता वैगुण्यशङ्कया ॥
प्रायश्चित्ते तथाचारे यानि स्मृत्यन्तराण्यहम् ।
दृष्टवांस्तान्युदाहृत्य संहरिष्ये गुणांस्ततः ॥
विषयस्य व्यवस्थां वा मन्दव्युत्पत्तिसिद्धये ।
प्रवक्ष्यामि यथा पूर्वे निबन्धनकृतस्तथा" ॥ इति ॥

अतः—

नाप्यज्ञा नापि सर्वज्ञा विज्ञा एव तु केवलम् ।
तल्लेखानां प्रमाणत्वं नास्ति सर्वांशतस्ततः ॥ १ ॥

---

## अथ सप्तमोऽवान्तरः प्रश्नः ॥ ७ ॥

### अज्ञाश्चेत्तदा सर्वजगद्विरुद्धवादिनो यूयं के इति विवेचनीयम् ॥ ५५ ॥

उत्तरम्—

न ह्यस्माभिः सर्वथाऽज्ञत्वं तेषूपपादितम् । नापि वयं सर्वजगद्विरुद्धवादिनः । अस्मदनुगुणानामपि बहूनामेव जगति सत्त्वात् । यदि तु केषांचिदनभिमतवादमात्रेणैव सर्वजगद्विरुद्धवादित्वं शक्यं वक्तुं तर्हि अनादिसिद्धानि वैष्णवमतानि स्वग्रन्थेष्वनुवादपूर्वकं दूषयित्वा प्रवृत्ते भवन्मत एव तत्प्रसरेत् ।

किञ्च, जगतो रज्जुभुजङ्गवदसत्यत्वाप्रतिष्ठत्वानीश्वरत्वादिवादिन एव सन्तु जगद्विरुद्धवादिनो न तु जगति भगवत्कार्यत्वताद्रूप्यादिस्वीकारिणो वयं भवेम । यत्त्वाक्षिप्तं यूयं क इति विवेचनीयमिति ।

तत्र ब्रूमः । सर्ववेदशास्त्रप्रसिद्धसम्प्रदायभूमण्डलेऽपि यावति वेदविभागोऽस्ति यावति च वर्णविभागः तावति वर्तमानैश्चातुर्वर्णिकैरनन्तैः शिष्यैः सम्पन्नाः शिवादिसर्ववृन्दारकवृन्दवन्दितपदारविन्दश्रीमन्नन्दनन्दनपन्नलिनमिलिन्दाः श्रीवेदव्यासविष्णुस्वामिश्रीमद्वल्लभाचार्यचरणानुचराः तत्कृपया वेदादिप्रमाणघोषपक्षपातेन तन्मूलकसद्युक्तिचयचञ्चुता च विविधविषमहितदुर्वादिपृदाकुभोगविदलनेन सार्थकितद्विजराजभावा इदानीन्तना अप्यस्मदाचार्यास्तच्चरणरजोधनिनस्तदनुकम्पातो वादयुद्धाऽविकम्पा वयं किं तवाऽविदिता एव येनैवमनुयुङ्क्षे । अथवा युक्त एव हरिभक्तेषु कालानुकूल एष आक्षेपः । यथोक्तं माधवीयाचारकाण्डे प्रथमाध्याये ( श्लो० ३० ) व्याख्याने विष्णुपुराणे—

> "यदा यदा सतां हानिर्वेदमार्गानुसारिणाम् ।
> तदा तदा कलेर्वृद्धिरनुमेया द्विजोत्तमैः ॥
> न प्रीतिर्वेदवाक्येषु पाखण्डेषु यदा रतिः ।
> तदा तदा कलेर्वृद्धिरनुमेया द्विजोत्तमैः ॥" इति ।

आस्तामेतत् । तथाप्यस्माभिस्तु नैतादृशा अकल्याणवादा वक्तव्याः । नापि वितण्डया शुष्कवैरं चोत्पादनीयम् । शातातपस्मृतौ—

> "भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा पुनः ।
> शुष्कवैरं विवादं च न कुर्यात्केनचित्सह" ॥

इति तन्निषेधात् ।

---

## अथाष्टमोऽवान्तरः प्रश्नः ॥ ८ ॥

यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु समामनु ॥
त्वदुपासो जगन्नाथ सैवास्तु मम गोपते ॥

**इत्यादिवाक्यानामर्थोऽपि कया रीत्या भवतीत्यपि विवेचनीयम् ॥ ५६ ॥**

उत्तरम्—

"तपोव्रतादिसहितभक्त्या तद्वशतां गतः ।
शिवादिभ्यः स्वपरमभक्तेभ्यो भक्तवत्सलः ॥
प्रभुरीदृशवाक्यानि प्रवदेच्चित्रमत्र किम् ।
पार्थादीनां स्वभक्तानां विषयेऽपि तथा जगौ" ॥

तथा हि—

"विष्णोराराधनार्थं मे व्रतचर्या पितामह"

इत्यादिवचनैर्भगवत्तोषार्थमेव जटाधारणादिव्रतान्याचरतो "वैष्णवानां यथा शम्भु"रित्यादिश्रीभागवतादिवचनैर्वैष्णवाग्रगण्यस्य "विश्वाधियो रुद्रो महर्षिः" इत्यादिश्रुतिभिः,

"एकदा शङ्करो देवो गतो गोकुलमण्डलम्"

इत्याद्यार्षसंहितावचनैश्चास्माकीनवैष्णवसम्प्रदायाचार्यस्य "यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्" इत्यादिश्रीभागवतवचनैस्तत्पादोदकरूपां सुरसरितं निरन्तरं शिरसि धारयतस्तन्महाप्रसादैकजीवनस्य परमभक्तस्य श्रीमहादेवस्य प्रीतये भगवान् यदा पाद्मे—

"त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदा"

इति स्वभक्तस्य स्वयमाराधनमपि प्रतिज्ञातवान् रामाद्यवतारेषु तथा कृतवांश्च । तदा तस्य

"यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु"

इति स्वभक्तं प्रति कथनं नैवाश्चर्यकरम् । अत एवोद्योगपर्वणि एकनवतितमाध्याये भोजनार्थं निमन्त्रयन्तं दुर्योधनं प्रति भगवान् पाण्डवविषयेऽप्येवमेवाह (श्लो० २३)—

"एवमुक्तः प्रत्युवाच धार्तराष्ट्रं जनार्दनः ।
अभिवीक्ष्य सहामात्यं दाशार्हः प्रहसन्निव ॥

नाहं कामान्न संरम्भान्न द्वेषान्नार्थकारणात् ।
न हेतुवादाल्लोभाद्वा धर्मं जह्यां कथंचन ॥
सम्प्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुनः ।
न च सम्प्रीयसे राजन्नैवापद्गता वयम् ॥
अकस्माद्द्वेष्टि वै राजन् जन्मप्रभृति पाण्डवान् ।
प्रियानुवर्तिनो भ्रातॄन् सर्वैः समुदितान् गुणैः ॥
अकस्माच्चैव पार्थानां द्वेषणं नोपपद्यते ।
धर्मे स्थिताः पाण्डवेयाः कस्तान् किं वक्तुमर्हति ॥
यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु ।
ऐकात्म्यं मां गतं विद्धि पाण्डवैर्धर्मचारिभिः ॥"

तथा च पाण्डवादिवच्छिवस्यापि परमभक्तत्वात् स्वसम्प्रदायाचार्यत्वेन सर्वतोऽधिकत्वाच्च तं प्रति "यस्त्वां द्वेष्टि" इत्यादिवचनं भगवतः सङ्गच्छत एव । तथा चायमस्य वाक्यस्यार्थः । हे गोपते शिव, मया दत्तस्वसम्प्रदायाचार्यभावं मत्परमभक्तं त्वां यो द्वेष्टि अयं पिशाचचर्यायुक्तो निन्द्य इत्यादिरूपं द्वेषं करोति स मामेव द्वेष्टि ।

एकादशस्कन्धे—

"आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।
न मर्त्यबुद्ध्यासूयेत"

इति मयैव कथितत्वात् । मद्भक्तप्रह्लादादिद्वेषिणां हिरण्यकशिपुप्रभृतीनां मया स्वद्वेषित्वाङ्गीकाराच्चेति भावः । तथा यस्त्वामनु मया तुभ्यमुपदिष्टवैष्णवसम्प्रदायानुसारेण यस्त्वामनुसरति स मामनु तत्सम्प्रदायानुसारिणां मत्सेवनादिना मामेवानुसृतो भवति । तथा या त्वदुपासा शिवोऽस्माकं परमगुरुर्वैष्णवाग्रगण्यश्चेत्यादिचिन्तनरूपा तवोपासना सा ममैवोपासनाऽस्तु । आशिषि लोट् । तथाचायं वरः प्रदत्त इति ज्ञायते । एवं च सा मदुपासनावन्मनःसन्तोषकारिणी भविष्यतीति भावः ।

(भगवत. स्वार्चनापेक्षया स्वभक्तार्चनेऽतिप्रीतिः, तेषां भोजनादेर्महाफलानि, वैष्णवार्चनस्य नित्यता च)

भगवतो हि स्वार्चनापेक्षया स्वभक्तार्चने निरतिशयप्रीत्युदयस्य बहुप्रमाणसिद्धत्वाद्युक्तमेतत् ।

तथाहि सारसङ्ग्रहे पाराशरस्मृतौ—

"तदीयाराधनं पुण्यं वक्ष्यामि मुनिसत्तमाः ।
यदन्वेषणमात्रेण सर्वपापैः प्रमुच्यते ॥

नातः परतरं पुण्यं त्रिषु लोकेषु विद्यते ।
सर्वकामप्रदं पुंसामत्यन्तातिशयं हरेः ॥
तस्मात्परतरं श्रेयो नास्ति सत्यं ब्रवीम्यहम् ।
सकृत्सम्पूजनं तेषां मुक्तिदं पापिनामपि ॥
सहस्रवार्षिकी पूजा विष्णोर्भगवतो हरेः ।
सकृद्भागवतार्चायाः कलां नार्हति षोडशीम् ॥
सकृत्सम्पूजिते पुण्ये महाभागवते गृहे ।
आकल्पकोटिपितरः परितृप्ता न संशयः ॥
यथा तुष्यति देवेशो महाभागवतार्चनात् ।
तथा न तुष्यति हरिर्विधिवत्स्वार्चनादपि ॥
षष्टिवर्षसहस्राणि विष्णोराराधने फलम् ।
सकृद्वैष्णवपूजायां लभते नात्र संशयः ॥
किं तस्य दानैः किं तीर्थैः किं यज्ञैर्विधिवत्कृतैः ।
सर्वं सम्प्राप्यते पुंसां विष्णुभक्ताभिपूजनात् ॥
आराध्यैव जगन्नाथं यथेष्टानपरानपि ।
त्यक्तभक्तार्चनाद्व्यर्था आचारा ऊषराम्बुवत् ॥
वैष्णवो यद्गृहे भुङ्क्ते तस्य भुङ्क्ते हरिः स्वयम् ।
हरिर्यस्य गृहे भुङ्क्ते तस्य भुङ्क्ते जगत्रयम् ॥
तोषयन्ति च तद्भक्तान् पञ्चकालपरायणान् ।
सकामास्तत्फलं यान्ति निष्कामाः परमं पदम् ॥
यथा भागवतानां तु पादाम्भोरुहसेवनात् ।
तथा स्वाराधने चापि न प्रीतो भगवान् हरिः ॥"

भगवद्वचनम्—

"मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् ।
तस्मान्मद्भक्तभक्तश्च पूजनीयो विशेषतः ॥
अध्वश्रान्तमविज्ञातमतिथिं क्षुत्पिपासितम् ।
यो न पूजयते भक्त्या तमाहुर्ब्रह्मघातकम् ॥
मद्वन्दनाच्छतगुणं मद्भक्तस्य तु वन्दनम् ।
मद्भोजनाच्छतगुणं मद्भक्तस्य तु भोजनम् ॥"

बृहन्नारदीये—

"यो विष्णुभक्तान्निष्कामान्भोजयेच्छ्रद्धयान्वितः ।
त्रिः सप्तकुलमुद्धृत्य स याति हरमन्दिरम् ॥

विष्णोः प्रसादमाकाङ्क्षन् वैष्णवान्परितोषयेत्।
अन्यथाऽवाप्तकामोऽसौ नैव केनाऽपि तुष्यति॥
तस्मात्सर्वप्रयत्नेन वैष्णवानर्चयेत्सदा।
सर्वं तरति दुःखौघं महाभागवतार्चनात्॥
पूजनाद्विष्णुभक्तानां पुरुषार्थोऽस्ति नेतरः।
तेषु तद्द्वेषतः किञ्चिन्नास्ति नाशनमात्मनः॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते।
स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति॥
वस्त्रालङ्कारभूषाद्यैर्यो भागवतमर्चयेत्।
भूष्यते तस्य वंशोऽपि श्रीवृद्धिः पुत्रपौत्रकैः॥
अङ्गसिंहासनाद्यैश्च ताम्बूलैर्व्यजनैस्तथा।
तोषयेद्भगवद्भक्तं तुष्यते च जनार्दनः॥
यः प्रतिष्ठापयेद्विष्णुं वैष्णवं वा गुणान्वितम्।
न तुल्यमिति मे बुद्धिर्भक्तपूजा शताधिका॥"

पुनः पद्मपुराणे शिवः—

"तस्मात्सर्वप्रयत्नेन वैष्णवान्पूजयेत्सदा।
सर्वं नश्यति दुःखौघं महाभागवतार्चनात्॥
महाभागवताञ्छ्रेष्ठान् पूजयेद्गृहमागतान्।
मधुपर्कविधानेन यथाशक्ति द्विजोत्तमान्॥
शुद्धे पात्रान्तरे रम्ये पादौ प्रक्षाल्य भक्तितः।
अर्चयेद्गन्धपुष्पाद्यैर्वस्त्राभरणादिभिः॥
ताम्बूलेन फलैर्वापि यथाशक्ति समर्चयेत्।
पुनः प्रणम्य भक्त्या च शनैस्तत्र निवर्तते॥
उपचारं भृशं कुर्याद्यथाविधिसमन्वितः।
वैष्णवान्भोजयेद्विप्रान् भक्त्या दद्याच्च दक्षिणाम्॥
एवमभ्यर्चयेन्नित्यं यावज्जीवमतन्द्रितः।
कुलकोटिं समुद्धृत्य वैष्णवं लोकमाप्नुयात्॥
आराधनानां सर्वेषां विष्णोराराधनं परम्।
तस्मात्परतरं देवि तदीयानां च पूजनम्॥
अर्चयित्वा तु गोविन्दं तदीयान्नार्चयेत्तु यः।
न स भागवतो ज्ञेयः केवलं दाम्भिकः स्मृतः"॥

भागवते—

"अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः" ॥

नवमे भगवद्वचनम्—

"अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः" ॥

महाभारते—

"तुलसीदलमात्रेण जलस्य चुलकेन च ।
विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सलः" ॥

अतो भगवतो भक्तवश्यत्वात्स्वोपासनापेक्षयापि स्वभक्तोपासनायां निरतिशयप्रीतिमत्त्वाच्च स्वपरमभक्तं शिवं प्रति युक्तमेवोक्तम् ।

"त्वदुपासा जगन्नाथ सैवास्तु मम गोपत" इति ॥

( शिवस्य भगवद्भक्ता एव प्रियाः, तत्सङ्गाभिलाषश्च, तस्मै भगवत्कृतवरदानादिकञ्च )

अत एव शिवोऽपि भगवद्भक्तसङ्गे स्वस्यातिप्रीतिं स्वस्य भगवद्भक्तत्वादिकं च तत्र तत्र वदति ।

यथा श्रीभागवते चतुर्थस्कन्धे चतुर्विंशाध्याये—

"यः परं रंहसः साक्षात्त्रिगुणाज्जीवसञ्ज्ञितात् ।
भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥
स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चितामेति ततः परं हि माम् ।
अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाऽहं विबुधाः कलात्यये ॥
अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।
न मे भागवतानां च प्रेयो नान्योऽस्ति कर्हिचित् ॥"

तत्रैव ( श्लो० ५७ )—

"क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥
अथाऽनघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्बहिःस्नानविधूतपाप्मनाम् ।
भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात्सङ्गमोऽनुग्रह एव नस्तव ॥
न यस्य चित्तं बहिरर्थविभ्रमं तमो गुहायां च विशुद्धमाविशत् ।
यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते गतिम्" ॥

तत्रैव ( श्लो० ६७ )—

"कस्त्वत्पदाब्जं विजहाति पण्डितो यस्तेऽवमानं व्ययमानकेतनः ।
विशङ्कयास्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्चतुर्दश" ॥

अष्टमस्कन्धे द्वादशाध्याये भगवन्तं प्रति शिव एव ( श्लो० १० )—

"नाहं परायुर्ऋषयो मरीचिप्रमुख्या जानन्ति यद्विरचितं खलु सत्त्वसर्गाः ।
यन्मायया मुषितचेतस ईशदैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः" ॥

तत्रैव शिवं प्रति भगवानाह ( श्लो० ३९ )—

"को नु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान् ।
तांस्तान् विसृजती भावान् दुस्तरामकृतात्मभिः ॥
सेयं गुणमयी माया न त्वामभिभविष्यति ।
मया समेता कालेन कालरूपेण भागशः" ॥ इति वरः प्रदत्तः ।

तत्रैव ( श्लो० ४२ )—

"आत्मांशभूतां तां मायां भवानीं भगवान् भवः ।
शंसितामृषिमुख्यानां प्रीत्याऽऽचष्टाथ भारत ॥
अपि व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः ।
अहं कलानामृषभो विमुह्ये यया वशोऽन्ये किमुताऽस्वतन्त्राः ॥
यं मामपृच्छस्त्वमुपेत्य योगात्समासहस्रान्त उपारतं वै ॥
स एष साक्षात्पुरुषः पुराणो न यत्र कालो विशते न वेदः ॥" इति ।

एवंविधानि शिवस्य भगवद्भक्तत्वे तद्दत्तवरप्रदानेनात्युत्कर्षे भगवदाज्ञया वैष्णवसम्प्रदायविशेषाचार्यत्वप्राप्त्यादौ च प्रमाणभूतानि वचनानि श्रुत्यादिषु शतशः सहस्रशश्चोपलभ्यन्त एवेति विस्तरभिया न लिख्यन्ते । अतो "यस्त्वां द्वेष्टी"त्यादिवचनानां दर्शितदिशैवार्थो बहुप्रमाणानुरोधाद्विधेयः । स एव निर्मत्सराणां सतां मनोरम इति शुभम् । इत्थम् ।

सप्तसप्तिहृदिस्थस्य कृपया सप्तमं मया ।
सद्य उत्तरितं चोद्यमङ्गैः सङ्गतमष्टभिः ।

---

( अष्टमः प्रधानप्रश्नः, उत्तरकारिका, स्वाह्निकस्वरूपम्, सर्वाङ्गोपसंहाराशक्तावपि यथाशक्ति नित्यान्यवश्यमनुष्ठेयानि, काम्यानि तु सर्वाङ्गोपसंहारेणैव )

## अथाष्टमः प्रधानः प्रश्नः ॥ ८ ॥

## भवतामाह्निकं कीदृशम् ॥ ८ ॥

### उत्तरम्—

"वेदेषु स्मृतिषु प्रोक्तं यथावश्यकमाह्निकम् ।
यद्व्यवस्थापितं सूत्रैः शाखाभेदान्महर्षिभिः ॥
यथोदितं च व्यासाद्यैः पुराणेषु पुरातनैः ।
महानिबन्धकारैश्च सम्प्रदायविभेदतः ॥
वैष्णवानां तु कर्तव्यं निर्णीतं विस्तरेण यत् ।
सदाचार्यैः सदा कार्यं यत्प्रमाणैः प्रपञ्चितम् ॥
तत्तथैवाह्निकं सर्वं स्वस्वशक्त्यनुसारतः ।
यथादेशं यथाकालं यथावर्णं यथाश्रमम् ॥
यथास्वसम्प्रदायं च यथाशाखं यथामति ।
अनुतिष्ठन्ति नः शिष्टा विशिष्टाः श्रद्धया सदा ॥
उत्थानकालमारभ्य यावच्छयनमत्र तत् ।
सर्वं न शक्यते वक्तुं महाविस्तरभीतितः ॥

अतो विस्तरतो जिज्ञासायां तन्निरूपकान् वेदभागान् स्मृतिविभागान् कल्पसूत्रादिखण्डान् पुराणेतिहासदेशांश्च निरीक्ष्यावबुद्ध्यताम् । ततोऽप्यनिर्णये मदनपारिजाताचारमाधवहेमाद्र्याचारचिन्तामणिधर्मप्रवृत्त्याचारार्ककमलाकराह्निकाचारप्रकाशधर्माब्धिसारप्रभृतयः साधारणग्रन्थाः स्वमार्गाह्निकप्रभृतयो विशेषग्रन्थाश्च निरीक्षितमात्रा एव निराकरिष्यन्ति सुरसरित्पूराश्शिरोपात्तं दुरितभरमिव सकलसंशयप्रसरमस्मदाह्निकविषयकमित्यलम् ।

नन्वेवमपि नह्युक्तसर्वग्रन्थोक्ताः सर्वेऽपि धर्मा भावत्कैः सर्वैरपि प्रत्यहमनुष्ठीयन्ते । न च यथाधिकारं सर्वैरपि स्वशक्त्यनुसारेण यथाकथंचित्सर्वाण्यपि नित्यान्यनुष्ठीयन्त एवेत्यदोष इति वाच्यम् । स्वशक्त्यनुसारेण यथाकथंचिदनुष्ठितानामप्यङ्गवैकल्येन फलाजनकत्वप्रयुक्तवैयर्थ्यानपायात् । तथा च तत्तद्ग्रन्थोक्तयावदङ्गासमवधानेन कथं भवदाह्निकस्य उक्तसर्वग्रन्थानुसारित्वं निश्चेयमिति चेत् । अत्र वदामः ।

नित्यान्यपि यथाशक्ति शाठ्यवर्जं समाचरेत् ।
कालादेस्तारतम्याच्चाशक्यत्यागेऽप्यदोषतः ॥

तथा हि पराशरमाधवीये प्रथमाध्याये ( श्लो० २२ ) व्याख्याने—

युगानां स्वरूपमनुष्ठातृपुरुषशक्तितारतम्योपेतं तदनुसारेणानुष्ठानवैषम्यं सम्भवति यथा शक्नुयात्तथा कुर्यादिति नित्यकर्मसु निर्णीतत्वादित्युक्तं माधवेन । नित्यकर्मस्वेवं निर्णयस्तु पूर्वतन्त्रे षष्ठस्य तृतीयपादे—"सर्वशक्तौ प्रवृत्तिः स्यात्तथा भूतोपदेशात्" इति पूर्वपक्षसूत्रेण सर्वाङ्गोपसंहारेणैव नित्यानामनुष्ठेयत्वमाशङ्क्य "अपिवाप्येकदेशे स्यात्प्रधानेह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वादि"त्यादिना जैमिनिना स्फुटमुक्तः । सङ्क्षिप्तः सूत्रार्थस्तु बह्वृचब्राह्मणे श्रूयते—"यावज्जीवमग्निहोत्रं जुहोति यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति । नित्यमग्निहोत्रं नित्यौ च दर्शपूर्णमासौ । तत्र संशयः । किं सर्वाङ्गोपसंहारेणैवाग्निहोत्रप्रयोगः कर्त्तव्यः ? आहोस्वित् यावन्ति शक्येरंस्तावदुपसंहारेणेति । किं तावत् प्राप्तम् ? सर्वाङ्गशक्तौ सत्यामेव प्रवृत्तिरुपपद्यत इति । कुतः ? तथाभूतोपदेशात् । यथाभूतं हि तत्कामसंयुक्तं श्रुतं तथाभूतमेव नित्यमप्युपदिश्यते । तस्मात् अङ्गवैकल्ये प्रधानस्य कामितस्वर्गादिफलनिष्पादितत्वादिति निष्कर्ष इति पूर्वः पक्षः ।

सिद्धान्तस्तु—अपिवेति पक्षव्यावृत्तिः । अप्येकदेशेऽङ्गानां स्यादेव प्रयोगः । यतः साङ्गस्याप्यनङ्गस्यापि प्रयुज्यमानस्य प्रधानादेवायमर्थो निष्पद्यते इतरदङ्गजातं तु गुणमात्रम् तदर्थत्वात् प्रधानोपकारकत्वादिति । किंचाशक्यत्यागभिया नित्याकरणे प्रत्यवायः स्यात् । तस्य यावज्जीवाधिकारकत्वात् । अतोऽप्यशक्यत्यागे न क्षतिः । इममेवार्थं तत्राग्रिमं सूत्रं बोधयति । तदकर्मणि च दोषस्तस्मात्ततो विशेषः स्यात्प्रधानेनाभिसम्बन्धात् । विस्तरस्तु शाबरभाष्यादेरवधेयः । अस्याधिकरणस्य सङ्क्षेपस्त्वधिकरणमालायाम्—

"नित्ये सर्वाङ्गसंहारः शक्त्या वाऽऽद्यः फलित्वतः ।
शक्त्या त्यागासम्भवेन निमित्ते जीवने स्थिते" ॥ इति ॥

तस्माद्यथाशक्त्येव नित्यान्यनुष्ठीयन्ते । अत एव बौधायनोऽपि स्मरति—

"यथाकथंचिन्नित्यानि शक्यवस्त्वनुरूपतः ।
येनकेनापि कार्याणि नैव नित्यानि लोपयेत्" ॥ इति ।

आचारमाधवे चोक्तस्थले उक्ताधिकरणं लेशेन बोधयित्वोच्यते । पुरुषशक्तितारतम्यकृतमत्रानुष्ठानवैषम्यमिति । न चाशक्त्याङ्गत्यागे फलानिष्पत्तिः शङ्क्या । परिहृतत्वात् । शास्त्रबलादेव तत्सिद्धेः । अत एव जैमिनीयन्यायमालाव्याख्यायां षष्ठाध्यायतृतीयपादे काम्यकर्माङ्गशक्त्यशक्तिविचारके द्वितीयाधिकरणे तस्मात्काम्यं कृत्स्नाङ्गोपेतं यदा कर्तुं शक्नुयात्तदा कुर्यात् । नित्यं तु यथा शक्नुयात्तथा कुर्यात् । एतदेवाभिप्रेत्य श्रुतं तदेव यादृक्तादृग्धोतव्यमितीत्युक्तम् । अलमनेन विचारेण । तस्माद्यथाशक्ति

श्रुतिस्मृतिकल्पसूत्रसदाचारादिप्राप्तं नित्यं कर्म स्वस्वशाखीयं प्रत्यहं क्रियते नचान्यशाखीयमप्याचरणीयं भवति । धर्मसिन्धुतृतीयपरिच्छेदपूर्वार्द्धे—

"बह्वल्पं वा स्वगृह्योक्तं यस्य यत्कर्म चोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्" इति स्मृतेः ।

विशेषस्त्वनुपदमग्रिमप्रश्नोत्तर एव स्फुटीभविष्यति । अथ त्रिपुण्ड्रोर्ध्वपुण्ड्रधारणादीनां वैकल्पिकानां तु मध्ये द्वितीयप्रयाजे तनूनपान्नाराशंसवच्छास्त्रव्यवस्थातः स्वस्य प्राप्तमेवानुष्ठीयते । "राजन्यवसिष्ठानां नाराशंसो द्वितीयप्रयाजस्तनूनपादन्येषामि"तिवदाचारार्कादिषु त्रिपुण्ड्रोर्ध्वपुण्ड्रादिनिर्णयानन्तरं यथासम्प्रदायं तिलकं कुर्यादित्यादित्यादिलेखदर्शनादिति दिक् । अलं बहुना ।

सन्देहेन्धनसन्दोहस्त्वह्नामस्माकमाह्निके ।
निर्निह्नवं शास्त्रवह्निज्वालाजालात्समाप्यताम् ॥

---

(सप्तपञ्चाशत्तमः प्रश्नः, उत्तरे स्वशाखीयमेव कर्म कार्यम्, तावतैव परिपूर्तिः, अन्यशाखीयस्य निषेधः, अध्ययनेऽपि पूर्वं स्वशाखा ततोऽन्येषाम्)

## अथैतत्प्रश्नानुरोधिनोऽष्टौ प्रश्नास्तत्राद्यः प्रश्नः ॥ १ ॥

## प्रातः कृत्यादिसन्ध्यावन्दनान्तं कर्म कया श्रुत्या स्मृत्या वा क्रियते ॥ ५७ ॥

### उत्तरम्—

एतादृशेष्वसङ्गततरेषु प्रश्नेषु विचारचतुरेण किमुत्तरणीयम् । तथा हि । इमे हि प्रश्ना वैष्णवसाम्प्रदायिकान् सर्वान्प्रति प्रवृत्ताः । सन्ति च वैष्णवसम्प्रदायेषु सर्वशाखीया ब्राह्मणादयः । अतो यदि बह्वृचा एव वैष्णवाः स्युस्तर्हि ऋक्शाखाश्रुत्या आश्वलायनादिसूत्ररूपया स्मृत्या च क्रियत इत्युत्तरं स्यात् । यदि वा यजुःशाखीया एव भवेयुस्तर्हि तैत्तिरीयमाध्यन्दिनशाखाश्रुत्या आपस्तम्बसत्याषाढकात्यायनादिसूत्ररूपया स्मृत्या च क्रियत इत्युत्तरितं भवेत् । नत्वेवमेकशाखीया एव वैष्णवाः सन्ति । अतः कया श्रुत्या स्मृत्येति जिज्ञासितो नित्यकर्मसाधकतमो नियतः श्रुतिविशेषः स्मृतिविशेषो वा न वक्तुं शक्यः । इदं तु वदामः । अन्यसम्प्रदायस्थवदस्मत्साम्प्रदायिकैरपि स्वस्वशाखाश्रुत्यनुसारेण स्वस्वगृह्यसूत्रादिरूपस्मृत्यनुसारेण च सर्वमपि नित्यं नैमित्तिकं च विधीयत इति । स्वशाखास्वसूत्रयोरनुरोधेनैव श्रौतस्मार्तकर्मकरणस्य तदुल्लङ्घने दोषातिशयस्य च शास्त्रसिद्धत्वात् । तथाहि । स्मृतिप्रकाशस्याचारप्रकाशे बैजवापायनः—

"बह्वल्पं वा स्वशाखोक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥" इति ।

लौगाक्षिरपि—

"ऊनो वाप्यतिरिक्तो वा यः स्वशाखोदितो विधिः ।
तेन सन्तनुयाद्यज्ञं न कुर्यात्पारतन्त्रिकम् ॥

तथा पराशरमाधवीये ( अ० १ श्लो० ३'१ ) व्याख्यायां वसिष्ठः—

"पारम्पर्यागतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥" इति ।

स्वशाखापरित्यागं स एव निषेधति—

"यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ।
स शूद्रवद्बहिष्कार्यः सर्वकर्मसु साधुभिः ॥
स्वीया शाखोज्झिता येन ब्रह्म तेनोज्झितं परम् ।
ब्रह्महैव स विज्ञेयः सद्भिर्नित्यं विगर्हितः" ॥ इति ।

स्वशाखाध्ययनपूर्वकमन्यशाखाध्ययनं तेनैवाङ्गीकृतम्—

"अधीत्य शाखामात्मीयां परशाखां पठेद्द्विजः" ॥ इति ।

( बह्वृचस्यान्यशाखया कर्म निषिद्धम्, अन्यशाखीयैस्तु स्वशाखाभावे ऋक्शाखयाऽग्निहोत्रादि ग्राह्यम् )

धर्मप्रवृत्तौ वसिष्ठः ( श्लो ५१ )—

"स्वशाखाविधिमुत्सृज्य त्वन्यस्य विधिमाचरेत् ।
अप्रमाणमृषिं कृत्वा त्वन्धे तमसि मज्जति ॥
ऋक्शाखी नैव कुर्वीत स्वकीयं परशाखया ।
प्रमादाद्यदि कुर्वीत पुनः संस्कारमर्हति ॥
यजुःशाखाविधानेन यदि बह्वृचकर्म च ।
कृतं चापि हि तत्कर्म पुनः कुर्याद्यथाविधि ॥
यत्र नास्ति स्वशाखा चेदृक्शाखोक्तं समाचरेत् ।
पुनर्नार्हति संस्कारमन्यथार्हति चेत्पुनः ॥
ऋक्शाखाविधिना कर्म यदि स्यादन्यशाखिनाम् ।
न तत्कर्म पुनः कुर्यादिति यज्ञविदां मतम् ॥" इति ।

न चैवं सति अग्निहोत्रादिकर्मणां शाखाभेदेन भिन्नभिन्नविधत्वाचोदकवाक्येऽग्नि-होत्रादिपदैरेकतरशाखीयाग्निहोत्रग्रहणमितिस्वीकारे शाखान्तरीयाणां तेषामवैधत्वप्र-

सङ्गः। सर्वशाखीयानां तेषां ग्रहणमितिस्वीकारे तु आवृत्त्यादिदोषप्रसङ्गश्चेति वाच्यम्। सर्वशाखीयेऽग्निहोत्रेऽग्निहोत्रत्वस्याविशिष्टत्वेन चोदकवाक्य आवृत्तिमन्तरापि अग्निहोत्रपदेन सर्वशाखीयस्य तस्य ग्रहणसम्भवात्। यथा "न ब्राह्मणं हन्यात्" इति वाक्यं गुर्जरगौडान्ध्रादिसर्वब्राह्मणसामान्यस्य वध्यत्वनिषेधं बोधयति। एवं विधिवाक्यमप्यग्निहोत्रादिकं सामान्यतो विदधत् स्वस्वशाखीयस्यैव तस्य कर्तव्यतां बोधयति। अत एवाहुः स्मृतिप्रकाशे आचार्याः—

"सर्वत्र प्रत्यभिज्ञानात्सञ्ज्ञारूपगुणादिभिः।
एककर्मत्वविज्ञानं न शाखास्वपगच्छति" ॥ इति।

(जपोपस्थानहोमश्राद्धादिनित्यनैमित्तिकानि स्वशाखयैव, स्वशाखाध्ययनमेव ब्रह्मयज्ञः)

अत एव स्वशाखानुसारेणैव तेषां तेषां नित्यानां नैमित्तिकानां चानुष्ठेयत्वं तत्र तत्रोच्यते यथा द्वितीयाध्याये स्नानप्रकरणे बृहत्पराशरः (श्लो० १३७)—

"छन्दोमुन्यपरैर्युक्तं स्वशाखास्वरसंयुतम्।
आवर्त्य प्रणवं स्नायाच्छतशोऽर्द्धशतं दश" ॥ इति।

तथा आचारमाधवे प्रथमाध्याये आह्निकप्रकरणे (श्लो० ३९) व्याख्याने—उपस्थानं तु स्वशाखोक्तमन्त्रैः कार्यम्।

"उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेत्" ॥ इति वसिष्ठस्मरणात्।

तत्रैव लिङ्गपुराणे—

"स्वशाखाध्ययनं विप्र ब्रह्मयज्ञ इति स्मृतः" ॥ इति।

तत्रैव होमप्रकारः स्वगृह्योक्तविधिना द्रष्टव्यः।

तदुक्तं गृह्यपरिशिष्टे—

"स्वगृह्योक्तेन विधिना होमं कुर्याद्यथाविधि" ॥ इति।

तत्रैव तर्पणं प्रक्रम्य अत्राञ्जलिसङ्ख्या यथाशाखं व्यवतिष्ठते। यत्र शाखायां न सङ्ख्यानियमः श्रुतस्तद्विषये कूर्मपुराणे—

"देवानृषीन् पितॄंश्चैव तर्पयेदक्षतोदकैः।
पितॄन् भक्त्या तिलैः कृष्णैः स्वसूत्रोक्तविधानतः" ॥ इति।

तत्रैव वैश्वदेवमुपक्रम्य यथा स्वशाखं व्यवस्थेत्युक्तम्।

अत्रैवाग्रे कात्यायनः—

"उद्धृत्य हविषासिच्य हविष्येण घृतादिना।
स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत्" ॥ इति।

तत्रैव तृतीयाध्याये श्राद्धप्रकरणे—"आचमनात्प्रागूर्ध्वं वा ब्राह्मणविसर्जनादूर्ध्वं

वा पिण्डनिर्वापणमिति पक्षाः शाखाभेदेन व्यवस्थिता इत्युच्यत इति दिक् । एवमन्यत्राप्यनेकत्र प्रामाणिकमहानिबन्धेषु प्रसिद्धतरेऽस्मिन् विषये कृतं बहुलेखनेन । तस्मात् स्वशाखास्वसूत्रयोरनुरोधेनैव श्रौतं स्मार्तं च प्रातःकृत्यादिकं निखिलमप्यनुष्ठेयम् ।

( सामगानामग्निहोत्रमिवात्यावश्यकमविरोधि शाखान्तरादपि ग्राह्यम् )

यत्त्वावश्यकं कर्म स्वशाखायां नैवोपलभ्येत यथा सामशाखीयानामग्निहोत्रं तद्यथाशाखमन्यशाखमप्यवश्यमनुष्ठेयम् ।

अत एवाचारप्रकाशे कार्ष्णाजिनिः—

"आत्मतन्त्रे तु यन्नोक्तं तत्कुर्यात्पारतन्त्रिकम् ।
विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः" ॥

यत्तु बैजवापायनवचस्तदसमर्थस्यानुकूल्यप्रतिपादनार्थम् । यच्च लौगाक्षिवचनं तत्स्वशाखोक्तविरुद्धार्थनिषेधपरम् । एतेन परशाखाविहितं स्वशाखाविहितेन बाध्यत इति श्रुतिलिङ्गाधिकरणगतवार्तिकग्रन्थोऽपि व्याख्यातः । स्वशाखाविहितविरुद्धवैकल्पिकानुष्ठानेनापि साद्गुण्यसम्भवे परशाखाविहितस्यानपेक्षणात् । अमुमेवार्थमभिप्रेत्योक्तं भविष्यपुराणे—

"यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा" ॥ इति ।

तथा च सर्वोपसंहारेणैव धर्मानुष्ठानमिति स्थितमिति । विस्तरस्तु "एकं वा संयोगरूपचोदनाख्याविशेषात्" इति शाखान्तराधिकरणभाष्यादाववधेयः । अतो यथास्मत्साम्प्रदायिकभिन्नैरपि द्विजातिभिः स्वस्वशाखानुसारेण स्वस्वसूत्रानुसारेण च श्रौतस्मार्तानि सर्वकर्माणि अनुष्ठीयन्ते तथैवास्मत्साम्प्रदायिकैरपि तैस्तानि यथादेशकालं यथाशक्ति यथामति चानुष्ठीयन्ते इति सर्वं सुस्थम् ।

---

( अष्टपञ्चाशत्तमः प्रश्न , कर्मविधानग्रन्थनिर्देशादि )

## अथैतत्प्रश्नानुबन्धी द्वितीयः प्रश्नः ॥ २ ॥

## विधानग्रन्थश्च कीदृशः ॥ ५८ ॥

### उत्तरम्—

अयमपि प्रश्नः पूर्वप्रश्नवदसङ्गततर एव । शाखाभेदेन विधानग्रन्थानां वैविध्यात् । तत्तच्छाखीयैर्वैष्णवैरपि स्वस्वशाखीयविधानग्रन्थानामेवादर्तव्यत्वेनाऽमुक एव विधानग्रन्थ इति वक्तुमशक्यत्वात् । अत्र प्रश्नवाक्ये विधानग्रन्थश्च क इति वक्तव्येऽपि कीदृश इति प्रकारप्रश्नस्तु चातुर्यातिशयात् । यदि तु प्रकार एव जिज्ञासितस्तर्हि

अस्मद्ग्रन्थाः समीचीनप्रकारका इत्येवोत्तरम् । अतो मीमांसानिवर्तितसर्वसन्देहास्तास्ताः श्रुतयः स्मृतयः स्वस्वशाखीयगृह्यसूत्राणि चानुष्ठानक्रमनियामकाः कात्यायनकल्पसूत्र-तद्भाष्यादयश्च तदनुरोधेन बह्वृचतैत्तिरीयादीनां संस्कारकौस्तुभविश्वप्रकाशबोप्पणभट्टी-प्रभृतयश्च श्रौतस्मार्तादिकर्मणां विधानग्रन्थास्तथाचारप्रकाशाचारादर्शकमलाकराह्निक-नागदेवकृताह्निकप्रभृतय आह्निकग्रन्थाश्च सन्ति बहुतरा जागरूका जगत्याम् । तथा श्रीविट्ठलाचार्यादिकृतपुष्टिमार्गाह्निकप्रभृतय आस्माकीनाश्च विजयन्त एवाऽनन्ता इत्य-लमज्ञबालकर्तव्येनेदृशप्रश्नेन ।

---

( एकोनषष्टितमः प्रश्नः, उत्तरकारिकाः, उपपातकमहापातकादिनाशाय गायत्र्या जपे नानासङ्ख्याविशेषाः, नियमविशेषाश्च, तस्या अतिपुण्यत्वम्, ततो मुक्तिः, सर्वापत्तारणम्, व्याहृतिहोमादि )

## अथ प्रक्रान्तप्रश्नानुबन्धी तृतीयः प्रश्नः ॥ ३ ॥

## गायत्रीजपस्यावश्यकताऽनावश्यकता वा ॥ ५९ ॥

उत्तरम्—

पुरुषोत्तमदेवस्य गूढतत्त्वनिरूपिणी ।
सर्वाघसङ्घसङ्घातकृत्साक्षान्मोक्षदायिनी ॥
जननी सर्ववेदानां परब्रह्ममयी स्वयम् ।
अजापे व्रात्यता हेतुर्बीजं ब्राह्मण्यसत्तरोः ॥
अगण्यपुण्या गायत्री सर्वत्र विदितैव या ।
तज्जपावश्यकत्वं को न ब्रूयाद्द्विजवीर्यजः ॥

तथा हि आचारमाधवे प्रथमाध्याये गायत्रीजपं प्रशंसति व्यासः—

"दशकृत्वः प्रजप्ता सा त्र्यहाद्यच्च कृतं लघु ।
तत्पापं प्रणुदत्याशु नात्र कार्या विचारणा ॥
शतजप्ता तु सा देवी उपपातकनाशिनी ।
लक्षजापेन च तथा महापातकनाशिनी ॥
कोटिजापेन राजेन्द्र यदिच्छति तदाप्नुयात्" ॥ इति ।

यमोऽपि—

"गायत्र्या न परं जाप्यं गायत्र्या न परं तपः ।
गायत्र्या न परं ध्यानं गायत्र्या न परं हुतम्" ॥ इति ।

मनुरपि—

"योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमप्येति वायुभूतः खमूर्तिमान्" ॥ इति ।

गौतमोऽपि—

"अनेन विधिना नित्यं जपं कुर्यात्प्रयत्नतः ।
प्रसन्नो विपुलान् भोगान् भुक्तिं मुक्तिं च विन्दति" ॥ इति ।

दक्षस्मृतौ आह्निकमुपक्रम्य—

"मार्जनं जलमध्ये तु प्राणायामस्ततः स्मृतः ।
उपस्थानं ततः पश्चात् सावित्रीजप उच्यते ॥
सविता देवता यस्या मुखमग्निरुदाहृतः ।
विश्वामित्रऋषिश्छन्दो गायत्री सा विशिष्यते" ॥

तत्रैव—

"अस्नात्वाशी मलं भुङ्क्ते त्वजापी पूयशोणितम् ।
अहुत्वा च कृमीन्भुङ्क्ते ह्यदत्त्वाऽमेध्यमेव च ॥

अत्रिस्मृतौ (अ० २)—

"सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं यो जपेद्विप्रो न स पापेन लिप्यते ॥
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः" ॥ इति ।

तत्रैव (अ० ३)—

"गायत्र्यष्टसहस्रं तु जप्यं कृत्वा स्थिते रवौ ।
मुच्यते सर्वपापेभ्यो यदि न ब्रह्महा भवेत्" ॥

लघ्वत्रिः (अ० ८)—

"सर्वेषामेव पापानां सङ्करे समुपस्थिते ।
दशसाहस्रमभ्यस्ता गायत्रीशोधनं परम्" ॥

तत्रैव (अ० ८)—

"यानि पूर्वप्रणीतानि पवित्राणि महर्षिभिः ।
तेषां जपैश्च होमैश्च पूयन्ते कल्मषावृताः" ॥ इति ।

सम्वर्तस्मृतौ (श्लो० १९४)—

सप्तव्याहृतिभिर्होमो द्विजैः कार्यो महात्मभिः ।
उपपातकशुद्ध्यर्थं सहस्रपरिसङ्ख्यया ॥
महापातकसंयुक्तो लक्षहोमं सदा द्विजः ।
मुच्यते सर्वपापेभ्यो गायत्र्या चैवमाचरन् ॥

अभ्यसेच्च महापुण्यां गायत्रीं वेदमातरम् ।
गत्वारण्ये नदीतीरे सर्वपापविशुद्धये ॥
स्नात्वा च विधिवत्तत्र प्राणात्मानं तु पावयेत् ।
प्राणायामैस्त्रिभिः पूतो गायत्रीं तु जपेद्विजः ॥
अक्लिन्नवासाः स्थलगः शुचौ देशे समाहितः ।
पवित्रपाणिराचान्तो गायत्र्या जपमारभेत् ॥
ऐहिकामुष्मिकं लोकं पापं सर्वं विशेषतः ।
पञ्चरात्रेण गायत्रीं जपमानो व्यपोहति ॥
गायत्र्यास्तु परं नास्ति शोधनं पापकर्मणाम् ।
महाव्याहृतिसंयुक्तां प्राणायामेन संयुताम् ॥
ब्रह्मचारी मिताहारः सर्वभूतहिते रतः ।
गायत्र्या लक्षजाप्येन सर्वपापैः प्रमुच्यते ॥
अयाज्ययाजनं कृत्वा भुक्त्वा चान्नं विगर्हितम् ।
गायत्र्यष्टसहस्रं तु जपं कृत्वा विमुच्यते ॥
अहन्यहनि योऽधीते गायत्रीं वै द्विजोत्तमः ।
मासेन मुच्यते पापादुरगः कञ्चुकाद्यथा ॥
गायत्रीं यः सदा विप्रो जपेत नियतः शुचिः ।
स याति परमं स्थानं वायुभूतः खमूर्तिमान् ॥

(प्राणायामलक्षणम्, प्रायश्चित्तेषु जप्यानि, महापातकेषु रहस्यप्रकाशभेदेन गायत्रीजपे लक्षादिसङ्ख्याविशेषा जप्यान्तराणि)

प्रणवेन च संयुक्ता व्याहृतीः सप्त नित्यशः ।
गायत्रीं शिरसा सार्धं मनसा त्रिः पठेद्विजः ॥
निगृह्य चात्मनः प्राणान् प्राणायामो विधीयते ।
प्राणायामत्रयं कुर्यान्नित्यमेव समाहितः ॥
मानसं वाचिकं पापं कायेनैव तु यत्कृतम् ।
तत्सर्वं नश्यते तूर्णं प्राणायामत्रये कृते" ॥ इति ।

प्रायश्चित्ताध्याये रहस्यप्रायश्चित्तप्रकरणे स्वयं याज्ञवल्क्यः (श्लो० ४)—

"शुक्रियारण्यकजपो गायत्र्याश्च विशेषतः ।
सर्वपापहरा ह्येते रुद्रैकादशिनी तथा ॥
यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्या वाचनं तथा ॥

वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाप्सु सूर्यदृक् ।
जप्त्वा सहस्रं गायत्र्याः शुद्ध्येद्ब्रह्मवधादृते" ॥ इति ।

अत्रैव मिताक्षरायां शङ्खः—

"शतं जप्त्वा तु सा देवी सर्वपापप्रणाशिनी ।
सहस्रं जप्ता च तथा पातकेभ्यः प्रमोचनी ॥
दशसाहस्रजापेन सर्वकल्मषनाशिनी ।
सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः ॥
सुरापश्च विशुद्ध्यन्ति लक्षजाप्यान्न संशयः" ॥ इति ।

इदं रहस्यपापप्रायश्चित्तविषयम् । प्रकाशप्रायश्चित्तविषये गायत्रीजपसङ्ख्या तु चतुर्विंशतिमते—

"गायत्र्यास्तु जपन् कोटिं ब्रह्महत्यां व्यपोहति ।
लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते ॥
पुनाति हेमहर्तारं गायत्र्या लक्षसप्ततिः ।
गायत्र्या लक्षषष्ट्या तु मुच्यते गुरुतल्पगः" ॥ इति ।

तथा कृच्छ्रादिलक्षणप्रकरणे ( श्लो० १४ )—"कुर्यात्त्रिषवणस्नायी" इत्यस्य मिताक्षरायां षट्त्रिंशन्मते—

"जपहोमादि यत्किञ्चित्कृच्छ्रोक्तं सम्भवेन्न चेत् ।
सर्वं व्याहृतिभिः कुर्याद्गायत्र्या प्रणवेन वा" ॥ इति ।

जपसङ्ख्यायां च विशेषो वैशंपायनेनैव दर्शितः—

"ऋषभं विरजं चैव तथा चैवाघमर्षणम् ।
गायत्रीं वा जपेद्देवीं पवित्रां वेदमातरम् ॥
शतमष्टशतं वापि सहस्रमथवा परम् ।
उपांशु मनसा वापि तर्पयेत्पितृदेवताः ॥
मनुष्यांश्चैव भूतानि प्रणम्य शिरसा ततः" ॥ इति ।

एवमनेकत्रैव नानाप्रकारैर्गायत्र्याः सर्वपापनाशकत्वं श्रूयते स्मर्यते च तथापि विस्तरभयान्न लिख्यते ।

( गायत्रीं विना ब्राह्मण्याभाव , तस्या पारलौकिकनिरूपकत्वम्, स्मृतिषु तदर्थः, स्वाभेदधियोपासनादि )

अतो गायत्रीजपस्तु द्विजातीनामावश्यक एव । तमन्तरा ब्राह्मण्यस्यैवासम्भवात् ।

यथाह द्वितीयाध्याये गायत्रीनिरूपणप्रकरणे बृहत्पराशरः ( श्लो० १२ )—

"गायत्रीं यो न जानाति ज्ञात्वोपास्ते न यो द्विजः ।
नामधारकमात्रोऽसौ न विप्रः शूद्र एव सः ॥

किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः ।
साङ्गैः सावित्रीहीनेन न विप्रत्वमवाप्यते ॥
गायत्रीमेव यो ज्ञात्वा सम्यगभ्यसते पुनः ।
इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात् ॥
गायत्री च तथा वेदा ब्रह्मणा तोलिताः पुरा ।
वेदेभ्योऽपि षडङ्गेभ्यो गायत्र्यतिगरीयसी ॥
यदक्षरेषु दैवत्यं चतुर्विंशतिषूच्यते ।
सन्यासं यद्विबोधेन कुर्वन् ब्रह्मत्वमाप्नुयात्" ॥ इति ।

परब्रह्मप्रतिपादकत्वं च स एवाह ( श्लो० ३४ )—

"हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुद्धं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥
देवस्य सवितुर्भर्गो वरणीयं च धीमहि ।
तदस्माकं धियो यस्तु ब्रह्मत्वे च प्रचोदयात्" ॥ इति ।

एवं ब्रह्माभेदेनैव गायत्र्या उपास्यत्वमाह आचारमाधवप्रथमाध्याये ( श्लो० ३९ )— व्याख्याने व्यासः—

"न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
साऽहमस्मीत्युपासीत विधिना येनकेनचित्" ॥ इति ।

इत्थं सृष्टिकर्तृत्वादिभिर्ब्रह्मधर्मैरेव गायत्र्या साक्षाद्ब्रह्मरूपत्वं निरूपितं बृहत्पराशरे द्वितीयाध्याये गायत्रीप्रकरणे ( श्लो० ४ ) "गायत्री तु परं तत्त्वं"इत्यादिना ।

एवं छान्दोग्येष्वपि ( अ० ५ खंड १२ )—

"गायत्री वा इदं सर्वं भूतं यदिदं किञ्च" इत्यादौ स्फुटम् ।

तथा गायत्र्याः पुरुषोत्तमैकप्रतिपादकत्वं तु व्यासेन "जन्माद्यस्य यतोऽन्वयात्" इत्यादौ निर्णीतम् । तथैव श्रीमद्वल्लभाचार्यैर्गायत्रीभाष्ये श्रीविट्ठलाचार्यैस्तत्कारिकासु शङ्कराचार्यविद्यारण्यादिभिश्च स्वकृतभाष्यादौ परब्रह्मत्वेन गायत्री व्याख्यायत इति सर्वं सुस्थम् ।

ब्राह्मण्यद्रुमबीजं स्वराहित्ये व्रात्यताकरी ।
परब्रह्ममयी साक्षात् पुरुषोत्तमवर्णिनी ॥
तत्र चेतोऽर्पणे हेतुर्वेदमाताऽखिलैर्द्विजैः ।
अवश्यमेव जप्या सा वैष्णवैः सुतरां पुनः ॥

---

( षष्टितमः प्रश्नः, उत्तरकारिका, त्रिपुण्ड्रनिषेधादि )

## अथैतदनुबन्धी चतुर्थः प्रश्नः ॥ ४ ॥

## आवश्यकता चेत्तत्र भस्मधारणस्य, रुद्राक्षमालया जपस्यावश्यकता नावश्यकता वा ॥ ६० ॥

उत्तरम्—

नैवावश्यकता भस्मधारणस्य कथंचन ।
नापि रुद्राक्षमालाया गायत्र्यास्तु जपे क्वचित् ॥

तथाहि ब्राह्मणादीनां भस्मधारणस्यात्यन्तनिषेधकानि—

"विप्राणां नैव धार्यं स्यात्तिर्यक्पुण्ड्रादिधारणम् ।
नारायणात्परब्रह्मादन्येषामर्चनं न हि ॥
ब्राह्मणः कुलजो विद्वान् भस्मधारी भवेद्यदि ।
वर्जयेत्तादृशं देवि मद्योच्छिष्टं घटं यथा ॥
त्रिपुण्ड्रं शूद्रकल्पानां शूद्राणां च विधीयते ।
त्रिपुण्ड्रधारणाद्विप्रः पतितः स्यान्न संशयः" ॥

इत्यादिपद्मोत्तरखण्डीयोर्ध्वपुण्ड्राध्यायादिवचनानि तेषां वैष्णवपरत्वेनोपसंहारः । तद्विधीनां व्यवस्थापूर्वकं शैवपरत्वं शैववैष्णवोभयदीक्षाशून्यानां स्मार्तानां कर्मभेदेनोभयविधपुण्ड्रधारणव्यवस्था चेत्यादिकमवान्तरप्रश्नाष्टकसहितषष्ठप्रधानप्रश्नोत्तरे दिङ्मात्रेण दर्शितमेव । विस्तरश्च ग्रन्थान्तरे निर्णीतमेवेति नेह पुनः प्रपञ्चनीयम् ।

( भस्मरहितस्य सन्ध्यादिसर्वकर्मानधिकार., गायत्रीजपे तदावश्यकता )

यत्तु शैवसुधाकरे शिवरहस्ये—

"सर्वकर्मबहिर्भूतो भस्मधारणवर्जितः ।
भस्मना रहितं कर्म वृथा भवति सर्वथा ॥
विभूतिधारणं त्यक्त्वा कुर्वन् हैमतुलामपि ।
तत्फलं न समाप्नोति पतितोऽपि भविष्यति ॥
सन्ध्याशिवार्चनादीनि कर्माण्येतानि वस्तुतः ।
वैदिकानि ततस्तेषु कर्तव्यं भस्मधारणम् ॥
यथोपवीतरहितैः सन्ध्या न क्रियते द्विजैः ।
तथा सन्ध्या न कर्तव्या विभूतिरहितैरपि ॥
विभूतिधारणं त्यक्त्वा यदि सन्ध्यां करोति सः ।
प्रत्यवैत्येव वै नासौ नाधिकारी तदा द्विजः ॥

यथाधीत्यान्त्यजो वेदान् प्रत्यवैति तथा द्विजः ।
प्रत्यवैति न सन्देहः सन्ध्याकृद्भस्मवर्जितः ॥
न सम्विशन्ति पापानि भस्मनिष्ठे ततः सदा ।
कर्तव्यमतियत्नेन ब्राह्मणैर्भस्मधारणम् ॥
यत्कृतं भस्मनिष्ठेन महादेवस्य पूजनम् ।
तत्सर्वाभीष्टदं तस्मात्कर्तव्यं भस्मधारणम् ॥
उद्धूलनत्रिपुण्ड्राभ्यामलङ्कृततनुः शिवम् ।
योऽर्चयिष्यति तत्तुल्यो भुवि को वा भविष्यति" ॥ इति ।

शिवगीताटीकायां वसिष्ठः—

"न तद्ध्यानं न तज्ज्ञानं न तद्दानं तपो न सः ।
त्रिपुण्ड्रेण विना येन विप्रेण यदनुष्ठितम् ॥

देवीभागवते—

"न गायत्र्युपदेशोऽस्ति भस्मनो धारणं विना ।
ततो धृत्वैव भस्माङ्गे गायत्रीजपमाचरेत् ॥
गायत्रीमूलमेवाहुर्ब्राह्मण्यं मुनिपुङ्गवाः ।
सा भस्मधारणाभावे न केनाप्युपदिश्यते" ॥ इत्याद्युक्तम् ।

(तद्वचसां नैर्मूल्यम्, शैवपरत्वम्, रुद्रगायत्रीपरत्व च)

तत्र शिवरहस्ये शैवधर्माणामेव बहुतरं निरूपितत्वात् सन्ध्याशिवार्चनादीनीति शैवस्यावश्यकर्तव्यशिवार्चनसाहचर्यात् अग्रे भस्मसाहित्येन कृतशिवार्चनस्यात्युत्कर्षव्यवस्थापनेन वचनोपसंहाराच्च तद्वचनानि शिवदीक्षावतामेव सन्ध्यावन्दनादिषु भस्मावश्यकताबोधकानि न तु सर्वेषां सर्वथा । एतेन वसिष्ठवचनमपि व्याख्यातम् । अन्यथा तन्निषेधस्य निरवकाशत्वापत्तेः । वस्तुतस्तु शिवरहस्यं नहि वेदः । नापि पुराणेतिहासस्मृतिष्वन्यतमम् । अतो न तत्प्रामाण्यं त्वया स्वीकार्यम् । "यन्नास्ति वेदे न च यत्पुराण" इति स्वप्रतिज्ञाविरोधात् । बहुभिर्दुराग्रहिशैवैरेव शिवरहस्यमतिविस्तीर्णं कृतम् । सूतसंहितायां चात्यन्तं प्रक्षेपः कृत इति विद्वत्किम्वदन्तीश्रवणात्तद्वचसामार्षत्वेऽपि सुतरां सन्देहः । सति समूलत्वे तूक्तैव व्यवस्था । यच्च देवीपुराणवचनं गायत्रीजपे तदावश्यकताबोधकं सङ्गृहीतं तत्तु उपसंहारबलीयस्त्वात् उभयबलीयस्त्वाद्वा प्रक्षिप्तमिव भाति । गायत्रीजपप्रकरणे हेमाद्रिमाधवविज्ञानेश्वरप्रभृतिभिः प्रामाणिकैर्महानिबन्धकारैरनुदाहृतत्वात् । जपे भस्मधारणावश्यकताया अपि तैरनुल्लेखाच्च ।

किञ्च, वचने यतो भस्मधारणं विना गायत्र्युपदेशो न केनापि क्रियते अतस्तद्धारणमन्तरा तज्जपो न कार्य इत्युच्यते । अतोऽपि कल्पितमेवेति भाति । गाय-

त्र्युपदेशकाले उपनीयस्य उपनेतुश्च भस्मधारणशिष्टाचारस्य क्वाप्यनुपलब्धेः । अथ समूलत्वेऽप्यस्तु रुद्रगायत्रीपरम् । एकदैवत्यत्वात् । बृहज्जाबालोपनिषदि समाप्तिदशायां चतुर्थखण्डे—"सद्योजाताय विद्महे महादेवाय धीमहि । तन्नोऽघोरः प्रचोदयात्" । इति भस्मगायत्रीति श्रुतेश्च । एतेन "गायत्र्या वापि देवर्षे" इति त्रिपुण्ड्रकरणे मन्त्रविधायकं पुलस्त्यवचनं लिखित्वा गायत्र्यपि प्रसिद्धैवेति वदन् शैवसुधाकरो निरस्तो वेदितव्यः ।

न चेह "गायत्रीमूलमेवाहुर्ब्राह्मण्यमि"ति मुख्यगायत्रीलिङ्गविरोधः शङ्क्यः । प्रशंसापरत्वेनाप्युपपत्तेः । अस्तु वा पारम्परिकशैवपरम् ।

"भस्मनो धारणं प्रोक्तं नित्यं शैवागमेषु च ।
उद्धूलनं त्रिपुण्ड्रं च धारणं द्विविधं मतम्" ॥ इति ।

शैवसुधाकरे एवोदाहृताल्लिङ्गात् । अत्र शैवानामेव तद्धारणनित्यत्वसिद्ध्या इतरेषां तदनित्यमिति फलति । वैष्णवानां तु तन्निषेध एवेत्युपपादितं पुरा न तु कथञ्चिदपि तत्सर्वसाधारणं भवितुमर्हति । कथमन्यथा मनुयाज्ञवल्क्यपराशरादीनां महत्तराणां स्मृतिकाराणां महर्षीणामन्यतमोऽपीदं गायत्रीजपनिरूपणावसरे तदङ्गत्वेन नावक्ष्यत् । अतो वस्तुतस्तु तदुक्तवचने समूलत्वनिश्चये तत्र गायत्रीशब्दो रुद्रगायत्रीपर एव । उक्तजाबालश्रुतौ स्पष्टं तस्या एव भस्मगायत्रीत्वकथनात् । श्रुतेश्च सर्वापेक्षया बलिष्ठत्वात् । धृतभस्मकस्यैवोपदेशाधिकार इतिवचनोक्तनियमस्यापि तथासत्येव सामञ्जस्यसम्भवाच्च ।

किञ्चैवं अस्य सर्वसाधारण्ये सति जपादिषु अत्यावश्यकतया प्रतिपादितस्याप्यूर्ध्वपुण्ड्रस्य निरवकाशत्वं प्रसज्येत ।

( ऊर्ध्वपुण्ड्रं विना सर्वकर्मवैयर्थ्यम् )

तस्य तेष्वत्यावश्यकतायाः प्रतिपादनं तु आचारमाधवप्रथमाध्याये ब्रह्माण्डे—

"पूजाकाले जपे होमे सायम्प्रातः समाहितः ।
नामान्युच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकम्" ॥ इति ।

मदनपारिजाते च तृतीयस्तबके ब्राह्मे—

"यागो दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।
भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम्" ॥ इति ।

स्कान्दे मार्गशीर्षमाहात्म्येऽपीदमेव वाक्यम्—धर्मप्रवृत्तौ च स्मृतिसारसमुच्चये—

"स्वाध्यायजपहोमादि सन्ध्यादानादिकं च यत् ।
ऊर्ध्वपुण्ड्रं विनाकुर्यात्तत्सर्वं निष्फलं भवेत्" । इति ॥

एवमादिवचनोपन्यासात्प्रागेव समर्थितम् । न च युगपदुभयधारणं विधीयतामितिशङ्क्यम् । युगपदुभयधारणस्यापि आश्वलायनस्मृत्याद्यवलम्बेन प्रागेव निराकृतत्वात् ।

(अन्योक्तमूर्ध्वपुण्ड्रस्याश्रौतत्वशूद्रपरत्वादिदूषणम्, श्रौतत्वसर्ववर्णावश्यकत्वस्थापनेन तत्परिहारश्च, वैदिकावैदिकशैवयो पुण्ड्रभेदश्च)

एवमूर्ध्वपुण्ड्रस्य बहुश्रुतिस्मृत्यादिसिद्धत्वे प्रामाणिकसकलनिबन्धादृतत्वे च सत्यपि यत्त्विदानीं शैवसुधाकराख्ये स्वग्रन्थे वैष्णवधर्मविद्वेषादेव केनचिदुच्यते।

ननु महाभारते—

"जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना बिभर्ति यः।
बिभर्ति रूपं सोऽर्कस्य तमो नाशाय केवलम्" ॥ इति।

सत्यव्रतः—

"ऊर्ध्वपुण्ड्रो मृदा शुद्धो ललाटे यस्य दृश्यते।
स चण्डालोऽपि पूतात्मा पूज्य एव न संशयः" ॥

इत्यादिवचनैर्मृदोर्ध्वपुण्ड्रमपि विधीयते। तत्कथं भस्मरुद्राक्षधारणमेव कर्तव्यतया प्रतिपाद्यत इति चेदित्थम्। तत्र तावत्सति प्रक्षिप्तत्वाभावनिश्चये ऊर्ध्वपुण्ड्रादिकं शूद्रविषयम्।

अश्रौतमूर्ध्वपुण्ड्रादि ललाटे श्रद्धया तु ये।
धारयिष्यन्ति मोहेन युगान्ते समुपस्थिते ॥ इति।

इति वासिष्ठलैङ्गे नवमाध्याये अश्रौतमिति विशेषितत्वेन तस्याश्रौतत्वात्। तर्हि श्रुतिषु विधानाभावादेकादशीव्रतस्यापि द्विजेतरविषयत्वमिति चेत्, नः प्रत्यक्षश्रुत्यभावेऽप्यनुमितश्रुतेस्तत्र सद्भावात्। तर्ह्यनुमितश्रुतिसद्भाव ऊर्ध्वपुण्ड्रेऽप्यस्तु इति चेत्, नः एकादशीव्रतस्य कुत्राप्यनिषिद्धत्वादनुमितश्रुतेः सम्भवात्। ऊर्ध्वपुण्ड्रस्य तु पुराणेषु बहुशो निषेधादनुमितश्रुतिसद्भावस्य कल्पयितुमशक्यत्वात्।

तथा हि पराशरे साङ्कनं पुण्ड्रान्तरं निराक्रियते—

"ऊर्ध्वपुण्ड्रं त्रिशूलं च वर्तुलं चतुरस्रकम्।
अर्धचन्द्रादिकं लिङ्गं वेदनिष्ठो न धारयेत् ॥
जन्मना लब्धजातिश्च वेदपन्थानमाश्रितः।
पुण्ड्रान्तरं भ्रमाद्वापि ललाटे नैव धारयेत् ॥
तिर्यक्त्रिपुण्ड्रं सन्त्यज्य श्रौतं पुण्ड्रान्तरं भ्रमात्।
ललाटे धारयन्मर्त्यः पतत्येव न संशयः ॥ इति।

इदमङ्कितशैवसुधाकरपुस्तकेऽशुद्धमपि बुद्ध्या किञ्चिच्छोधयित्वानूदितम्। अत्र यत्सन्दिग्धतयोक्तं प्रक्षिप्तत्वाभावनिश्चय इति तत्प्रमादात्। अत्रैवोपन्यस्तस्य जान्हवीतीर इतिवचनस्य हेमाद्रिबह्वृचाह्निकमदनपारिजातादिषु सत्यव्रतवचनस्य चाचारमाधवादिषु सर्वशिष्टादृतेषु सर्वसाधारणेषु प्रामाणिकनिबन्धेषु मूलनामलिखनपूर्वकं स्पष्टतयोदाहृत-

त्वेन प्रक्षिप्तत्वस्य केनाप्युन्मत्तेन वक्तुमशक्यत्वात् । ऊर्ध्वपुण्ड्रावश्यकताबोधकानेकश्रुतिस्मृत्यादीनां हेमाद्रिमाधवनिर्णयसिन्धुमदनपारिजातधर्मसिन्ध्वाचारप्रकाशाचारार्कपरमानन्दमन्दारप्रभृतिप्रामाणिकनिबन्धोदाहृतानां बहूनामिहैव मया प्रागुपन्यस्तत्वाच्च । यच्चास्याश्रौतत्वाच्छूद्रमात्रविषयकत्वमुक्तम् । तदप्याचारप्रकाशभागवततत्त्वभास्कराद्युदाहृतानाम्—

"धृतोर्ध्वपुण्ड्रः कृतविष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यो महतो महान्तम्" ॥

वासुदेवोपनिषदि—

"ॐ नमस्कृत्य भगवन्तं नारदः सर्वेश्वरं वासुदेवं पप्रच्छ श्रीभगवन्नूर्ध्वपुण्ड्रविधिं द्रव्यमन्त्रसंस्थानादिसहितं मे ब्रूहि" इत्यादिश्रुतीनामदर्शनादेव ।

अथ श्रुतिस्मृत्युक्ताया "इमं मे गङ्गे" इति जलमादायेत्यादिरूपाया वैदिकमन्त्रसाध्याया ऊर्ध्वपुण्ड्रेतिकर्तव्यताया विस्मरणादेव च ।

तथा शूद्रमात्रविषयकत्वमप्युक्तं मदनपारिजाते ब्रह्माण्डपुराणे—

"ऊर्ध्वपुण्ड्रं द्विजः कुर्यात्क्षत्रियस्तु त्रिपुण्ड्रकम् ।
अर्धचन्द्रं तु वैश्यानां वर्तुलं शूद्रजातिषु ॥"

पाद्मे—

"ऊर्ध्वपुण्ड्रं तु सर्वेषां न निषिद्धं कदाचन ।
धारयेयुः क्षत्रियाद्या विष्णुभक्ता भवन्ति ये" इति ।

पृथ्वीचन्द्रोदये निर्णयसिन्धौ च वृद्धपराशरः ।

"ऊर्ध्वं च तिलकं कुर्यान्नैव कुर्यात्त्रिपुण्ड्रकम् ।
ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि ॥
निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम्" ॥

इत्यादिवचनोपन्यासपुरःसरं सर्वैरपि प्रामाणिकनिबन्धकारैः सर्ववर्णेषु तदावश्यकतायाः सम्यगुपपादितत्वात् ।

यत्तु वासिष्ठलैङ्गवचनमुक्तं तत्त्वश्रौतमिति विशेषणात् युगान्ते ब्राह्मणादयोऽपि श्रुत्युक्ततदितिकर्तव्यतामन्तरैव पाषण्डमात्रेण धारयिष्यन्तीति भाविवृत्तान्तबोधकम् । अतः, "सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे" इतिन्यायेन श्रुत्यधिकारिभिः श्रुत्युक्तविधिनैवैतद्धार्यम् ; न तु तं विनेति तात्पर्यविशिष्टमेतद्वचनं नोर्ध्वपुण्ड्रं प्रतिषेद्धुं प्रभवति ।

यदि तु युगान्त एवोर्ध्वपुण्ड्रधारणादिरूपो धर्मः प्रादुर्भविष्यतीति तात्पर्यविशिष्ट-

मेतदित्युच्यते तर्ह्यनादिसिद्धश्रुत्यादिवचनैस्तदावश्यकताप्रतिपादकानां बहूनां प्राचीनतरनिबन्धानां दृश्यमानत्वेन वदतो व्याघातः स्यात् । सर्वदा युगान्ताभावात् ।

यानि च पराशरवचनान्युक्तानि, तत्राद्यं, युगपद्धारणनिषेधकमस्तु । द्वितीये च वेदपन्थानमित्यस्य शिवमार्गमित्यर्थः । "वेदः शिवः शिवो वेदः" इति वाक्यात् ।

अथवाऽस्तु वेदपदमाम्नायपरमेव, तथापि धर्मप्रवृत्तौ श्रुतिसारसमुच्चये ऊर्ध्वपुण्ड्रविधिं प्रक्रम्य—

"ललाटे तिलकं कृत्वा कुर्युः शैवाश्च वैष्णवाः ।
तर्पणं चापि वै श्राद्धमन्यथा निष्फलं भवेत्" ।। इति ।

चतुर्विंशतिमतव्याख्यायामाचारमयूखे च शौनकः—

"ऊर्ध्वपुण्ड्रं शिवस्यैवं विष्णोः कुर्युश्च वा बुधाः ।
मूर्ध्नि मूलेन मन्त्रेण शेषं द्वादशनामभिः" ।। इति ।

एवमादिषु वैदिकावैदिकशैवानां प्राप्तमूर्ध्वपुण्ड्रं वैदिकशैवे निषिद्ध्यावैदिकशैवपरत्वेन परिसङ्ख्यायते भवदुक्तवचनैः । "इमामगृभ्णन्" इतिमन्त्रस्य रशनाग्रहणलिङ्गादश्वगर्दभोभयरशनाग्रहणयोगे प्राप्ते "इमामगृभ्णन्नशनामृतस्येत्यश्वाभिधानीमादत्त" इति विशेषवाक्येन तस्याश्वरशनाग्रहणमात्रे विनियोगवदिति न कोऽपि दोषः । न तु त्रिपुण्ड्रप्रशंसापराणि तानि वचनानि कथमपि ऊर्ध्वपुण्ड्रादिनिषेधं कर्तुं शक्तानि । उदिते जुहोत्यनुदिते जुहोतीति प्रकरणनिष्पन्नात्, "नहि निन्दा निन्दितुं प्रवर्तते किन्तु विधेयं स्तोतुं" इति न्यायात् । अस्य न्यायस्यामन्त्रकभस्मरुद्राक्षधारणनिषेधकवचनविचारे स्वयमप्यादृतत्वाच्च । तस्मान्न कथमप्यूर्ध्वपुण्ड्रं निषेद्धुं शक्यम् । नापि गायत्रीजपादिषु सर्वेषां त्रिपुण्ड्रस्यैवावश्यकता शक्योपपादयितुम् । तदुपन्यस्तवासिष्ठादिवचनानां बहुपन्थेष्वप्यदृश्यमानत्वेन निर्मूलत्वं समूलत्वं वेति तु चिन्त्यम् ।

( त्रिपुण्ड्रादिशैवस्यैव नित्यम्, नत्वन्येषां ब्रह्मशक्तिविष्णुशिवादिभक्तानाम्,
वर्तुलचतुरस्रादिपुण्ड्राणि, वैष्णवस्य भस्मोर्ध्वपुण्ड्रादिनिषेध. )

अपि च सिद्धान्तशेखरे श्लोकाः—

"एता नित्यं नमस्कृत्य त्रिपुण्ड्रं धारयेच्छुचिः ।
स्मरन्नमः शिवायेति ललाटे च त्रिपुण्ड्रकम् ।।
स्वच्छाभ्यां नम इत्युक्त्वा धारयेत्तत्प्रकोष्ठयोः ।
भीमायेति ततः पृष्ठे शिवाय जठरे तथा ।।
नीलकण्ठाय शिरसि क्षिपेत्सर्वात्मने नमः" ।। इति ।

एवमादिवचनेषु स्पष्टमेव शिवदैवत्यत्वात्तल्लोकप्रापकत्वाच्च शैवानामेवेदमावश्यकम्,

इतरेषां तु वैकल्पिकम् । अनन्यवैष्णवानां तु इतरदैवत्यस्य तस्य धारणे तैत्तिरीय-संहितायां तृतीयपञ्चमाष्टकयोर्द्वितीयप्रश्ने अष्टकभेदेन नवमदशमयोरनुवाकयोः "यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति" इति श्रूयमाणः स्वदैवतात् प्रच्यावस्तस्या देवताया अप्राप्तिर्महत्तरो दोषश्च प्रसज्येत । अतो नैवैतैस्तद्धारणीयम् ।

यत्तु शैवसुधाकरे वायवीयसंहितायाम्—

"लिङ्गं दीपार्धचन्द्राभं चतुरस्रं च वर्तुलम् ।
त्रिपुण्ड्रं चेति कथितं षड्विधं शिवशासनम् ॥
वर्तुलं ब्रह्मभक्तानां शाक्तानां चतुरस्रकम् ।
वैष्णवानां दीपसमं ह्यर्धचन्द्राभमेव च ॥
सदाशिवस्य भक्तानां लिङ्गं तिर्यक् त्रिपुण्ड्रकम्" ॥

इति दीपाकारं भस्मोर्ध्वपुण्ड्रं वैष्णवानामुक्तम् । तत्तु इतरत्र कृतेन भस्मोर्ध्वपुण्ड्र-कर्तव्याकर्तव्यत्वविचारेणैव दत्तोत्तरम् ।

किञ्च, ब्रह्मभक्तशिवभक्तमध्यपातित्वाद्वैष्णवशब्देनात्र गुणावतारविष्णूपासका एवाभिप्रेता इति निश्चीयते । सहचरितासहचरितयोः सहचरितग्रहणस्यैव युक्तत्वात् ।

"सौराः शैवाश्च गाणेशा वैष्णवाः शक्तिपूजकाः ।
मामेव प्राप्नुवन्तीह वर्षाम्भः सागरं यथा" ॥

इत्यादिवत् न तु सर्वमूलभूतस्य पुरुषोत्तमस्योपासका अनन्यवैष्णवा इह ग्रहीतुं शक्याः अनन्यत्वभङ्गप्रसङ्गात् । सर्वतो बलवती च श्रुत्यादिविहितस्य गोपीचन्दनादि-द्रव्यकोर्ध्वपुण्ड्रस्य निरवकाशत्वापत्तिः । अतो वायव्यसंहितावचनं, समूलत्वे सति अर्धजरतीयानां सगुणविष्णूपासकानामेव इच्छया कादाचित्कभस्मधारणविधानार्थं जीविकार्थं यजमानादिप्रतिनिधितया शिवार्चने तदङ्गभूतभस्मधारणे तेषां प्रकारविशेष-बोधकं वास्तु, न तु षड्विधं शिवशासनमिति शिवशासनत्वेनोक्तं तत् अनन्य-वैष्णवेषु कथमपि प्राप्तुं शक्नोति ।

किञ्च, स्वयं तूर्ध्वपुण्ड्रं शूद्रमात्रस्यैव व्यवस्थापितमिति इह भस्मद्रव्यकदीपाकारको-र्ध्वपुण्ड्रं शूद्रवैष्णवानामेवेति त्वन्मते सिद्ध्यति । स्वोपन्यस्तपराशरवचने चतुरस्रादीनां निषेधः । इह तु तद्विधिरिति परस्परविरोधोऽपि । अनन्यवैष्णवानां कथमपि भस्म-धारणे पाद्मवाराहादीषूपलभ्यमानाः—

"ब्राह्मणः कुलजो विद्वान् भस्मधारी भवेद्यदि ।
वर्जयेत्तादृशं देवि मद्योच्छिष्टं घटं यथा ॥"

इत्यादयोऽत्यन्तनिषेधाश्च षष्ठप्रधानप्रश्नोत्तर एव दर्शिता इति कृतं पतितोपरि लत्ता-

प्रहारकल्पेन बहुना। तस्माद्गायत्रीजपे तदङ्गतया भस्मधारणावश्यकत्वं सर्वेषां कथमपि न सिद्ध्यति।

(सङ्ख्यारहितजपो निरर्थकः, जपेष्वावश्यका नियमविशेषाः, अक्षमालावश्यकता, विविधा एवाक्षमाला., उत्तरोत्तरोत्कृष्टा, रुद्राक्षाधिकफलाश्च, अष्टोत्तरादिमणिसङ्ख्याश्च)

यच्चोक्तं रुद्राक्षमालया जपस्यावश्यकताऽनावश्यकता वेति तत्रापि ब्रूमः। अस्ति च जपे सङ्ख्याया एवावश्यकत्वं न तु रुद्राक्षमालामणिभिरेव सङ्ख्याकरणस्यावश्यकत्वं क्वाप्युपलभ्यते। तथा हि अङ्गिरःस्मृतौ—

"विना दर्भेण यत्स्नानं यच्च दानं विनोदकम्।
असङ्ख्यातं तु यज्जप्तं तत्सर्वं निष्फलं भवेत्" ॥ इति।

स्मृत्यर्थसारे गायत्रीजपप्रस्तावे—

"नाधोऽरत्निर्नान्यमना न च व्यत्यस्तपत्करः।
जपेन्न प्रौढपादश्च नावष्टब्धोऽलसोऽशुचिः॥
न चाक्रमन्न जल्पंश्च न पार्श्वमवलोकयन्।
नासङ्ख्यातमदर्भश्च नाऽशिखाकरबन्धनः" ॥ इति।

नागदेवाह्निके च दक्षः—

"अङ्गुल्यग्रे तु यज्जप्तं यज्जप्तं मेरुलङ्घने।
असङ्ख्येन च यज्जप्तं तत्सर्वं निष्फलं भवेत्" ॥ इति।

आचारमाधवप्रथमाध्याये चतुर्विंशतिमतव्याख्याकमलाकराह्निकाचारमयूखाचारप्रकाशादिषु च गौतमः—

"गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः।
अशुचेर्वा विना सङ्ख्यां तत्सर्वं निष्फलं भवेत्" ॥ इति।

सम्वर्तोऽपि—

"लोकवार्तादिकं श्रुत्वा दृष्ट्वा स्पृष्ट्वा प्रभाषितम्।
सङ्ख्यां विना च यज्जप्यं तत्सर्वं निष्फलं भवेत्" ॥ इति।

सङ्ख्यार्थं च सामान्यतोऽक्षमालाया एव ग्रहणं वक्ति शङ्खः—

"कुशबृस्यां समासीनः कुशोत्तरीयः कुशपवित्रपाणिः सूर्याभिमुखो वाऽक्षमालामादाय देवतां ध्यायन् जपं कुर्यात्" इति।

न चैवमपि रुद्राक्षमालया जपे फलानन्त्यात्तदावश्यकत्वमिति वाच्यम्। आनन्त्यमात्रेणावश्यकताया वक्तुमयुक्तत्वात्। तया जपाकरणे प्रत्यवायाश्रवणात्। तत्तुल्यफलानां तदधिकफलानां च मालान्तराणां शास्त्रे निरूप्यमाणत्वेन निरतिशयफलाभावाच्च।

तत्र तुल्यफला यथा पराशरमाधवीये प्राह गौतमः—

"अङ्गुल्या जपसङ्ख्यानमेकमेकमुदाहृतम् ।
रेखयाऽष्टगुणं पुत्रजीवैर्दशगुणाधिकम् ॥
शतं स्याच्छङ्खमणिभिः प्रवालैश्च सहस्रकम् ।
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ॥
पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्या च रुद्राक्षैरनन्तं फलमुच्यते" ॥ इति ।

भट्टोजिकृताह्निककमलाकराह्निकमयूखादिषु चेदमुदाहृतम् । आचारप्रकाशे त्विदमेव शिवपुराणवचनत्वेनोपन्यस्तम् । अत्र रुद्राक्षवत्कुशग्रन्थिमालाया अपि फलानन्त्य-कथनान्न रुद्राक्षमालाया एव निरतिशयमाधिक्यम् ।

तदधिकफला यथा । गायत्रीजपमेव प्रक्रम्य द्वितीयाध्याये बृहत्पराशरेण (श्लो० ४०)—

"अपां समीपे कुर्याद्वै ससङ्ख्यं तद्भवेद्यथा ।
असङ्ख्यमासुरं यस्मात् तस्मात्तद्गणयेद्ध्रुवम् ॥
स्फाटिकाब्जाक्षरुद्राक्षपुत्रजीवसमुद्भवैः ।
अक्षमाला प्रकर्तव्या प्रशस्ता चोत्तरोत्तरा" ॥ इति ।

रुद्राक्षापेक्षयापि गायत्रीजपविषये पुत्रजीवमालाया उत्कर्ष उक्तः । भवताद्दते आचारादर्शे तु इदमेव वचनं स्फाटिकेन्द्राक्षरुद्राक्षेति पाठभेदेनोपन्यस्तम् ।

तथा, पराशरमाधवीये कमलाकराह्निकचतुर्विंशतिमतव्याख्याऽऽचारमयूखप्रभृतिषु च विविधा एवाक्षमाला वक्ति हारीतः—

"शङ्खरूप्यमयी माला काञ्चनस्फाटिकोपलैः ।
पद्माक्षकैश्च रुद्राक्षैर्विद्रुमैर्मणिमौक्तिकैः ॥
तुलसीन्द्राक्षकैर्माला तथैवाङ्गुलिपर्वभिः ।
पुत्रजीवमयी माला शस्ता वै जपकर्मणि" ॥ इति ।

अत्रापि रुद्राक्षस्यानन्यसाधारण्यं तदपेक्षया पुत्रजीवमय्या उत्कर्षश्चाभिहितः ।

स्मृत्यर्थसारे—

"हस्तेनावर्तयेद्देवीमक्षसूत्रमथापि वा ।
सौवर्णै राजतैस्ताम्रैः स्फाटिकै रत्नजैस्तथा ॥
अरिष्टैः पुत्रजीवोत्थैरिन्द्राक्षैः शङ्खसम्भवैः ।
रुद्राक्षैरपि पद्माक्षैः कुशग्रन्थिभिरेव च ॥

मणिभिस्त्वक्षसूत्रं स्यात्तदष्टशतसङ्ख्यया ।
चतुःपञ्चाशता वापि सप्तविंशतिभिस्तथा" ॥ इति ।

अत्रापि सर्वासां तौल्यं दृश्यते । त्रिविधा मालासम्बन्धिमणिसङ्ख्या तु मयूख-चतुर्विंशतिमतव्याख्याकमलाकराह्निकादिष्वपीत्थमेव वाक्यान्तरोपन्यासेन निर्णीते-त्यन्यदेतत् ।

तथाचारादर्शे—"सूर्याभिमुखोऽक्षमालामादाय देवतां ध्यायन् जपं कुर्यात् सुवर्ण-मणिमुक्ताफलस्फाटिकब्रह्माक्षेन्द्राक्षपुत्रजीवकानामन्यतमामक्षमालां कुर्वीत कुशग्रन्थि-कृतां वा हस्तोपयामैर्वा गणयेदिति सर्वासामविशेष उक्तः ।

(मन्त्रविशेषेषु मालाविशेषा, रुद्राक्षमाला कामदा, तुलसीमाला मोक्षदा, तस्या अत्युत्कर्षोऽक्षय्यफलदत्व च, रुद्राक्षधारणविचारश्च)

किञ्च, गौतमतन्त्रे चतुर्दशाध्याये जपाङ्गमालाविधिमुपक्रम्य (श्लो० ४२)—

"रुद्राक्षसम्भवा माला अनन्तफलदा भवेत् ।
पुण्डरीकभवा माला गोपालमनुसिद्धिदा ॥
पुत्रजीवभवा या तु पुत्रं वितनुतेऽचिरात् ।
कुचन्दनभवा माला राज्यभोगापवर्गदा ॥
प्रवालनिर्मिता या तु सर्वसत्त्ववशङ्करी ।
कुशग्रन्थिभवा माला धर्मवृद्धिकरी मता ॥
आमलकीभवा माला सर्वसिद्धिप्रदा मता ।
तुलसीसम्भवा या तु मोक्षं वितनुतेऽचिरात् ॥
अष्टोत्तरशतमणिनिर्मिता या तु मालिका ।
राज्यं वितनुते नृणां देहान्ते मोक्षदायिनी" ॥ इति ।

अत्र सर्वान्ते तुलसीकाष्ठमालाया एव मोक्षदत्वकथनात् रुद्राक्षस्योक्तमपि फला-नन्त्यं काम्यविषयकमेवेति सिद्ध्यति ।

अत एव धर्मप्रवृत्तौ स्मृतिः—

"स्फाटिकी मोक्षदा माला रुद्राक्षा सर्वकामदा ।
मुक्तिदा तुलसीमाला विद्रुमा धनवृद्धिदा" ॥ इति ।

एतेन रुद्राक्षमुपक्रम्य—

शतकोटिगुणं पुण्यं धारणाल्लभते नरः ।
लक्षकोटिसहस्राणि लक्षकोटिशतानि च ॥
जपाच्च लभते नित्यं नात्र कार्या विचारणा ॥

इति बृहज्जाबालोपनिषदपि व्याख्याता वेदितव्या ।

यत्तु शैवसुधाकरे स्कान्दे—

"स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने ।
प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः ॥
अरुद्राक्षधरो भूत्वा यत्किञ्चित्कर्म वैदिकम् ।
कुर्याद्विप्रस्तु मोहेन न ह्यवाप्नोति तत्फलम्" ॥ इत्यादि ।

तत्समूलत्वे सति शिवदीक्षावतामेव तद्धारणावश्यकत्वविधायकम्, न तु तन्मालया जपस्यावश्यकत्वं विधातुं शक्नोति । शिवदीक्षावतामेव तद्धारणावश्यकत्वं तु मया ग्रन्थान्तरे प्रपञ्चितम् । इहापि "दीक्षाकाले विशेषत" इति शैवदीक्षाग्रहणकाले विशेषतस्तद्धारणाग्रहोऽप्येवमेव सङ्गच्छते । वैष्णवानां तद्धारणनिषेधस्तु प्राग्दर्शितः । किमनेनाप्रासङ्गिकेन । अतो गायत्रीजपे तु न कथमपि रुद्राक्षमालया जपस्यावश्यकत्वम् । तस्माद्वैष्णवानां तु अष्टोत्तरशतमणिघटिता तुलसीकाष्ठमालैव जपे मुख्या ।

रामार्चनचन्द्रिकायाम्—

"तुलसीकाष्ठघटितैर्मणिभिर्जपमालिका ।
सर्वकर्मणि सर्वेषामीप्सितार्थफलप्रदा" ॥ इति ।

तत्र धर्मप्रवृत्तौ च—

"तुलसीमणिभिश्चैव गणितं चाक्षयं भवेत्" ॥ इति ।

अगस्त्यसंहितायां षष्ठाध्याये—

यः कुर्यात्तुलसीकाष्ठैरक्षमालां सुरूपिणीम् ।
कर्णमालां प्रयत्नेन कृतं तस्याक्षयं भवेत्" ॥

कमलाकराह्निके—

"तुलसीकाष्ठसम्भूतैर्दशकोटिरुदाहृता" ।

आचारप्रकाशे स्कान्दे—

"प्रवालमुक्तास्फटिकैर्जप्तं कोटिफलप्रदम् ।
तुलसीमणिना येन गणितं चाक्षयं भवेत्" ॥

तत्रैवागस्त्यसंहितायां—

"तुलसीकाष्ठघटितैर्मणिभिर्जपमालिका ।
सर्वकर्मणि सर्वेषामीप्सितार्थफलप्रदा ।
पद्मकोदुम्बरश्चैव बिल्वश्चैव कुशस्तथा ॥
पलाशो जपमालाया अभावे समुदाहृतः" ।

इत्येवमादिवाक्येभ्यः ।

( शैवानां तुलसीमालाद्वेषमात्रमिति सिन्ध्वादयः, कण्ठेऽपि सैव धार्या तद्धारणादिनिन्दायामतिदोषः )

यत्त्वेवं शास्त्रसिद्धामपि तुलसीकाष्ठाक्षमालां केचन शैवादयो निन्दन्ति तत्तु विद्वेषादेव । यथोक्तं धर्मसिन्धौ द्वितीयपरिच्छेदे कार्तिकमासनिर्णये तुलसीकाष्ठमालाधारणस्य अत्यावश्यकतां निर्णीय रामार्चनचन्द्रिकादौ तुलसीकाष्ठमालया जपविधिवाक्यानि तुलसीकाष्ठघटितैर्मणिभिर्जपमालिकेत्यादीनि स्पष्टानि । एवं ग्रन्थान्तरेषु बहूनि वाक्यान्युपलभ्यन्ते सर्वदेशीयवैष्णवेषु तुलसीकाष्ठमालाधारणजपाचारश्चोपलभ्यते । भस्मादिधारणद्वेषिवैष्णवस्पर्धया शैवागमाग्रहिभिः केवलं द्विष्यत इत्यलं बहुनेति दिगिति । एवं कण्ठेऽपि तुलसीकाष्ठमालैव वैष्णवैः सर्वदा धार्या ।

सारसङ्ग्रहे भारद्वाजसंहितायाम्—

"पूजाकाले हरिध्याने सन्ध्यादिवन्दने तथा ।
तुलसी धार्यते कण्ठे ते भक्ता हरिवल्लभाः ॥
श्रवणे कीर्तने चैव मन्त्रजापे च वैष्णवैः ।
धार्यते तुलसीकण्ठे महाभागवतोत्तमैः ॥
सदा स धारयेद्यस्तु तुलसीमणिमालिकाम् ।
भूतप्रेतपिशाचास्तु वर्तन्ते न समीपतः ॥
न धारयन्ति ये मालां तुलसीकाष्ठसम्भवाम् ।
विष्णुकोपाग्निना दग्धास्ते यान्ति यममन्दिरम्" ॥ इति ।

वादावल्यां स्कान्दे मार्गशीर्षमाहात्म्ये भगवद्वाक्यानि—

"अतः परं प्रवक्ष्यामि तुलसीमालिकाफलम् ।
अन्यासामपि माहात्म्यं शृणु ब्रह्मन् सुशोभनम् ॥
तुलसीकाष्ठजां मालां कण्ठस्थां वहते तु यः ।
अप्यशौचोऽप्यनाचारो मामेवैति न संशयः ॥
धात्रीफलकृता माला तुलसीकाष्ठसम्भवा ।
दृश्यते यस्य देहे तु स वै भागवतोत्तमः ॥

तथा—

"तुलसीकाष्ठसम्भूतां यो मालां वहते नरः ।
फलं यच्छाम्यहं तस्य प्रत्यहं द्वारकोद्भवम् ॥
तुलसीकाष्ठमालाभिर्भूषितः पुण्यमाचरेत् ।
पितॄणां देवतानां च पुण्यं कोटिगुणं कलौ ॥
धारयन्ति न ये मालां हेतुकाः पापबुद्धयः ।
नरकान्न निवर्तन्ते दग्धाः कोपाग्निना मम" ॥ इति ।

ये च तुलसीकाष्ठमालाधारिणं तन्मालया जपकारिणं वा निन्दन्ति तेषां स्वरूपं गारुडाज्ज्ञेयम् ।

"कृष्णायुधाङ्कितं विप्रं तुलसीकाष्ठभूषितम् ।
दृष्ट्वा निन्दापरो यस्तु स बौद्धो न तु वैष्णवः" ॥ इति ।

तथा—

"धारयन्ति न ये मालां हैतुकाः पापबुद्धयः ।
नरकान्न निवर्तन्ते दग्धाः कोपाग्निना हरेः ॥
तुलसीकाष्ठमालोक्य कण्ठे वा मस्तके करे ।
निन्दां कुर्वन्ति ये मूढा म्लेच्छजास्ते न संशयः ॥
अत्रातिशयमालोक्य तुलसीं दूषयन्ति ये ।
बहुनोक्तेन किं पार्थ सर्वे ते ह्यन्यवीर्यजाः ॥
तुलसीकाष्ठधृक्विप्रान् वैष्णवान्दूषयन्ति ये ।
सर्वे ते रौरवं यान्ति संशयो नास्ति नारद" ॥ इति ।

आस्तामेतत् ।

( अङ्गुलिपर्वभिरेव गायत्रीजपो न मालाभि गणनप्रकारः, आश्रमादिभेदेन सङ्ख्याभेदः, क्वचिन्मालानामभावे पाणिना जप , वस्तुतो विकल्प. )

प्रकृतमनुसरामः ।

अथ गायत्रीजपविषये क्वचिन्मालान्तरनिषेधपूर्वकमङ्गुलिपर्वभिरेव जपकरणं विधीयते । यथाह धर्मप्रवृत्तौ शौनकः—

"प्रातस्तिष्ठञ्जपेद्देवीं सायं चैवोपविश्य च ।
उपविश्य तु मध्याह्ने जपकर्म समाचरेत् ॥
अङ्गुष्ठानामिकामूलप्रदक्षिणमतन्द्रितः ।
मध्यमामूलपर्यन्तं गायत्रीजप ईरितः" ॥ इति ।

तत्रैव—

"गायत्र्या वेदमूलत्वाद्वेदः पर्वसु गीयते ।
पर्वभिस्तु जपेद्देवीं न मालाभिः कदाचन" ॥ इति ।

स्मृत्यर्थसारे—

"ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् ।
वानप्रस्थो यतिश्चैवाष्टाधिकं तु सहस्रकम् ॥
यद्यापत्सु जपेद्देवीमष्टाविंशतिरष्ट वा ।

सदर्भपाणिराहोमात् दर्भस्थस्तूक्तसङ्ख्यया ॥
हस्तेनावर्तयेद्देवीमक्षसूत्रमथापि वा" ॥ इति ।

अत्राथापि वेत्यनेनाक्षसूत्रस्य गौणत्वमुच्यते । बृहत्पराशरस्तु अक्षमालाया अभावे पाणिना जपं विधत्ते । यथाह द्वितीयाध्याये गायत्रीजपप्रकरणे ( श्लो० ४२ )—

"अभावे त्वक्षमालायाः कुशग्रन्थ्याऽथ पाणिना ।
यथाकथञ्चिद्गणयेत्ससङ्ख्यं तद्भवेद्यथा" ॥ इति ।

आचारप्रदीपे च योगीश्वरः—

"अभावे त्वक्षमालायाः कुशग्रन्थ्याऽथ पाणिना ।
जप एव तु कर्तव्यः एकाग्रमनसा सदा ॥
कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ करौ ।
मध्ये तिर्यक्करौ प्रोक्तौ जपन्यास उदाहृतः" ॥ इति ।

तदेवाह आचारप्रकाशे च कल्पचिन्तामणौ नारसिंहेऽप्याद्यश्लोकोऽस्ति । अतो यथासम्प्रदायं यथाकुलाचारं च अक्षमालया अङ्गुलिपर्वभिर्वा गायत्रीजपः कार्यः । धर्मसिन्ध्वादिषु तथा विकल्पादरणात् । वैष्णवादिसर्वशिष्टेषूभयविधस्याचारस्य दर्शनाच्च । अथ वर्ज्यावर्ज्यमालास्तु—

( वर्ज्यावर्ज्या माला , जपार्थं गोमुखाकारवस्त्रविधिः, पुनरङ्गुलिपर्वभिर्जपविधिस्तत्प्रकारश्च )

"अक्षुद्राः समरन्ध्राश्च परिपूर्णा दृढा नवाः ।
निश्चला ग्रथिताश्चैव अन्योऽन्यं घृष्टिवर्जिताः ॥
सशब्दा चञ्चला या तु त्रुटिता ग्रथिता तथा ।
छिन्नसूत्रेण ग्रथिता पाखण्डाख्या पुरातना ॥
माला दुःस्वप्नदायिन्यो ग्रथिता निन्द्यतन्तुषु ।
तस्मात्तु तादृशा माला वर्जनीयाः प्रयत्नतः" ॥

एवमादिवचनोपन्यासेन नागदेवाह्निकप्रभृतिषु निरूपिता एव । अथाचारार्काचारमयूखयोर्वृद्धमनुः—

"वस्त्रेणाच्छाद्य तु करं दक्षिणं यः सदा जपेत् ।
तस्य स्यात्सफलं जाप्यं तद्धीनमफलं स्मृतम्" ॥ इति ।

अत एव शिष्टा गोमुखाकारे वस्त्रे करं प्रवेश्य जपन्ति । उक्तं चैतद्वचनादग्रेऽनुपदमेवाचारार्के । अत एव तिर्यक् सञ्चिका कल्पिता केनचिद्बुद्धिमता वृद्धेन जपशीलेन जपार्थं सा च गोमुखीति व्यवह्रियते लोकैरिति । आस्तामेतत् ।

अथ जपविषयेऽस्माकं तु गायत्रीजपोऽङ्गुलिपर्वभिर्वैष्णवमन्त्रजपश्च तुलसीकाष्ठमाल-

येत्येव मुख्यः शिष्टाचारः । आचारार्के जपमालानिर्णयानन्तरम् एतच्च गायत्रीजपातिरिक्तजपे ज्ञेयम् । उक्तं च मालाकरणं ब्रह्मयामले गायत्रीकल्पे च—

"पर्वभिस्तु जपेद्देवीं माला चान्यजपे स्मृता ।
गायत्र्या वेदमूलत्वाद्वेदः पर्वसु गीयते ॥
आरभ्यानामिकामध्यं पर्वाण्युक्तान्यनुक्रमात् ।
तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ॥
मध्यमाङ्गुलिमूले तु यत्पर्वद्वितयं भवेत् ॥
तं वै मेरुं विजानीयाज्जपे तन्नातिलङ्घयेत् ॥
आरभ्यानामिकामूलात्प्रादक्षिण्येन वै क्रमात् ।
मध्यमामूलपर्यन्तं जपेद्दशसु पर्वसु ॥

इत्यादिवचनानुगृहीतत्वात् । अतः कथमपि न रुद्राक्षमालाया एव गायत्रीजपे सर्वेषामावश्यकत्वं सिद्ध्यतीति व्यर्थोऽयं प्रश्नः ।

अतः—

न भस्मधारणं नापि जपो रुद्राक्षमालया ।
आवश्यकस्तु सर्वेषां वैष्णवानां कुतस्तराम् ॥ १ ॥

---

(एकषष्टितम. प्रश्न', उत्तरकारिका', सौवर्णराजतताम्रमृण्मयपालाशादिपात्राणि पूर्वपूर्वोत्कृष्टानि, पित्तलादिपात्राणि, विभवाविभवविचार , ताम्रपात्रोत्कर्ष., शङ्खस्य तदुदकतुलस्यादेश्च सर्वत्रावश्यकता, स्नानधूपदीपराजभोगशयनभोगादिनैवेद्यदुग्धनिवेदनादिषु पात्राणां निवेदनीयद्रव्यादीनां च विचार , स्नाने घण्टादिवादनं धूपदीपयोश्च वामहस्तेन, रजतकांस्यमृण्मयादीनां विधिनिषेधयोर्व्यवस्थादि, आयसादिनिषेध., प्रकीर्णका. पात्रनिर्णयाश्च)

## अथैतत्प्रधानप्रश्नानुबन्धी पञ्चमः प्रश्नः ॥ ५ ॥

## भगवत्पूजनसमये कानि पात्राणि शस्तानि ॥ ६१ ॥

उत्तरम्—

पुराणे पञ्चरात्रादौ पूजायाः प्रक्रमे प्रभोः ।
प्रोक्तानि यानि पात्राणि पवित्राणि पुरातनैः ॥
स्वसम्प्रदायप्राप्तानि रचितान्युचितानि तु ।
सुवर्णताम्रदुर्वर्णकांस्याद्यैः शुद्धधातुभिः ॥
यथाकालं यथाकर्म यथाशक्ति यथाश्रमम् ।
प्रशस्तानि समस्तानि शास्त्राचाराविरोधतः ॥

अथ पात्रनिर्णयस्य नारदपञ्चरात्रादिग्रन्थेषु विस्तीर्णत्वेऽपि भवत्सन्तोषार्थं किञ्चिदुच्यते—

तत्र स्कान्दे मार्गशीर्षमाहात्म्यनवमाध्याये स्वनैवेद्यनिर्णयमुपक्रम्य ब्रह्माणं प्रति भगवान् ( श्लो० ३ )—

"आदौ हिरण्मयं पात्रं तदभावे च राजतम् ।
तदभावे च पालाशं विस्तीर्णं बहुसुन्दरम् ॥
कचोलाः शतशः कार्याः पात्रे वै परितोऽनघ ।
तन्मध्ये व्यञ्जना देया नाना फलमयाः शुभाः" ॥

तथा ( श्लो० ६ )—

"नाना व्यञ्जनसंरुद्धं त्रिभिः पङ्क्तिभिरेव च ।
निम्बूरसेन चोड्रेण फलमूलयुतेन च" ॥

तथा ( श्लो० ९ )—

"प्रहेलनास्तथा कार्या कचोलशतसङ्कुलाः" ॥

तथा ( श्लो० ११ )—

"कचोले सुप्रभे वत्स स्थितं काञ्चनसुप्रभम् ।
घृतं सुवासितं प्रीत्या देहि त्वं मम भोजने" ॥ इत्यादि ।

नारदपञ्चरात्रे चतुर्थरात्रे नवमाध्याये श्रीमहादेवः ( श्लो० १ )—

"परिभाषामथो वक्ष्ये उपचारविधौ हरेः ।
द्रव्याणां यावती सङ्ख्या पात्राणां द्रव्यसङ्गतिः" ॥ इत्युपक्रम्य—
"हाटकं राजतं ताम्रमारकूटं मृदादिना ।
उपचारविधावेतद्द्रव्यमाहुर्मनीषिणः" ॥ इति ।

आरकूटं पित्तलम् । "रीतिः स्त्रियामारकूटः" इत्यमरोक्तेः ।

तथा तत्रैव ( श्लो० ५ )—

प्रोक्तमाचमनं कांस्ये । इदमशक्तविषयम् ।

तत्रैव—

"स्वर्णाद्याभरणान्येव मुक्ताद्याभरणानि च ।
चन्दनागरुकर्पूरपङ्कगन्धपलावधि ॥
नानाविधानि पुष्पाणि पञ्चाशदधिकानि च ।
कांस्यादिनिर्मिते पात्रे धूपगुग्गुलुकर्मभाक्" ॥ इति ।

सम्प्रदाये तु चन्दनधूप एव प्रसिद्धः । बहुवचनप्रशस्तत्वादित्यन्यदेतत् ।

तथा—

"कार्या ताम्रादिपात्रे तत्प्रीतये हरिमेधसः" ॥ इति ।

अयं सर्वोऽपि पात्रनियमो विभवविषयकः । यथोक्तं तत्रैवोपसंहारे ( श्लो० १४ )—

"तत्त्वतोऽयं विधिः प्रोक्तो विभवे सति सर्वदा ।
एषामभावे सर्वेषां यथाशक्त्यभिपूजयेत् ॥
सर्वभोगान्वितो भूत्वा व्रजेदन्ते हरेः पुरम्" ॥ इति ।

एवं सर्वो गौतमतन्त्रेऽपि तत्र तत्र भगवत्पूजोपयोगिपात्रनिर्णयोऽस्ति ।

यथा नवमाध्याये ( श्लो० ५९ )—

"तद्दक्षिणे तु शङ्खं वा ताम्रं चाप्यथ मार्तिकम् ।
पात्रमेकं निधायाथ तथा जलेन पूरयेत् ॥
ताम्रपात्रं च विप्रर्षे विष्णोरतिप्रियं मतम् ।
तत्रैव सर्वपात्राणां मुख्यं शङ्खं प्रकीर्तितम् ॥
मृत्पात्रं च द्विधा प्रोक्तं सौवर्णं राजतं तथा ।
पञ्चपात्रं हरेः शुद्धं नान्यत्तत्र नियोजयत्" ॥ इति ।

तथा तत्रैव दशमाध्याये ( श्लो० ११७ )—

"एवं वा पूजयेत्कृष्णं यथावित्तानुसारतः ।
इह भुक्त्वा वरान् भोगानन्ते तु हरितां व्रजेत्" ॥

( श्लो० ११८ )—

अगुरूशीरगुग्गुलसितामधुसुचन्दनैः ।
"साराङ्गारे विनिक्षिप्तैर्नासाधो धूपमर्पयेत् ।
वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥
वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ॥
संस्थाप्य स्वर्णपात्रादौ सुदीप्य शिखया ततः ।
अर्घोदकेन संस्कृत्य नन्दजाय निवेदयेत् ॥
उत्तार्य दृष्टिपर्यन्तं घण्टां वामदिशि स्थिताम् ।
वादयन्वामहस्तेन दक्षहस्तेन चार्पयेत् ॥
सुप्रकाशो महातेजाः सर्वत्र तिमिरापहः ।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥
स्वर्णे वा ताम्रपात्रे वा रौप्ये वा पाङ्कजे दले ।
सितोपदंशशाल्यन्नं सगुडं मधुना युतम् ॥

दधिदुग्धघृतोपेतं कदल्यादिफलान्वितम् ।
आनीय देवपुरतोऽर्घतोयं च विनिक्षिपेत्" ॥ इति ।

सारसङ्ग्रहे हारीतः—

"यो नित्यमर्चयेद्देवं यावज्जीवमतन्द्रितः ।
गण्डकीगोमतीचक्रं तुलसीताम्रभाजनम् ॥
घण्टानादं शङ्खतोयमष्टमं चानुलेपनम् ।
सर्वेषामप्यलाभे तु शङ्खमेकं विशिष्यते ॥
शङ्खोदकं सदा पूतमतिप्रियतरं हरेः" ॥ इति ।

कमलाकरभट्टाह्निके—

"शङ्खतीर्थं क्षिपेन्मूर्ध्नि विष्णुपादोदकं पिबेत्" ।

पादोदकप्रकारः—

"उदकं चन्दनं चक्रं शङ्खश्च तुलसीदलम् ।
घण्टा पुरुषसूक्तं च ताम्रपात्रमथाष्टमम् ॥
शालग्रामशिला मुख्या नवभिस्तीर्थमुत्तमम्" ॥ इति ।

तत्रैव स्मृतिः—

"शङ्खोदकेन स्नानं तदति प्रियमतं हरेः ।
शङ्खोदकेन सम्प्रोक्ष्य पूजोपकारणानि वै ॥
दक्षिणे घृतदीपं च वामे तैलस्य दीपकम्" ॥ इति ।

तत्रैव वसिष्ठः—

"धूपे दीपे च नैवेद्ये स्नाने चैव विशेषतः ।
घण्टानादं प्रकुर्वीत नानावादित्रकं तथा" ॥ इति ।

पुनर्गौतमतन्त्रे षोडशाध्याये ( श्लो० ४६ )—

"सितोपदंशमन्नं च स्वर्णपात्रे निवेदयेत् ।
अथवा रौप्यपात्रे च ताम्रपात्रेऽथवा पुनः ॥
अभावात् पद्मपात्रे वा अन्यथा नरकं व्रजेत् ।
सुवर्णचषके वाऽथ रौप्ये वा विधिना ततः ॥
सशर्करं पक्वदुग्धमन्नं व्यञ्जनपायसम् ।
नानाविधोपहाराणि गोविन्दाय निवेदयेत्" ॥ इति ।

पुनस्तत्रैव षोडशाध्याये ( श्लो० ७० )—

"रजता रचिते पात्रे खण्डदुग्धं निवेदयेत्" ॥ इति ।

तत्रैव ( श्लो० ९० )—

"एवमभ्यर्च्य विधिना कांस्ये वा राजतान्विते ।
पात्रे दुग्धं निवेश्याथ मिथुनेभ्यस्तथार्पयेत्" ॥ इति ।

मिथुनेभ्यः राधिकाद्येकैकपत्नीसाहित्येन प्रक्रान्तेभ्यो भगवद्युग्मेभ्यः ।

पराशरमाधवीये तृतीयाध्याये श्राद्धप्रकरणे—

"राजतं पात्रं पित्र्ये विनियुज्यते न दैवे" ।

तदाह मत्स्यो राजतं पात्रमधिकृत्य—

"शिवनेत्रोद्भवं यस्मादतस्तत्पितृवल्लभम् ।
अमङ्गलं तद्यत्नेन देवकार्येषु वर्जितम्" ॥ इति ।

इति देवकार्ये रजतनिषेधः, स तु मत्स्यपुराणे श्राद्धं प्रक्रम्योक्तः । माधवेनापि श्राद्धप्रकरण एवोदाहृत इति विश्वदेवकार्यविषयक एव । भगवत्पूजायां तत्र तत्र स्मृति-पुराणेषु रजतपात्राणामपि विधीयमानत्वात् ।

आचारादर्शे देवपूजानिरूपणात्प्राक् योगियाज्ञवल्क्यः—

"सौवर्णं राजतं ताम्रं मुख्यं पात्रं प्रकीर्तितम् ।
तदभावे स्मृतं पात्रं स्रवते यन्न धारितम्" ॥ इति ।

आचारप्रकाशे धूपदीपान्तां पूजां निरूप्य,

अथ नैवेद्यपात्रं स्कान्दे—

"हैरण्यं राजतं कांस्यं ताम्रं मृन्मयमेव च ।
पालाशं पद्मपात्रं वा पात्रं विष्णोरतिप्रियम्" ॥

वाराहे—

"सौवर्णं राजतं कांस्यं येन दीयेत प्रापणम् ।
तानि सर्वाणि सन्त्यज्य ताम्रं तु मम रोचते" ॥ इत्युक्तम् ।

तत्र जलार्पणे द्विमुखमेव रजतादिपात्रं भृङ्गारशब्दवाच्यं प्रसिद्धम् । यज्ञपात्रत्वात् । पूजाक्रमेऽपि प्रशंसितत्वाच्च । देवतास्नापनं तु सुवर्णरूप्यताम्रान्यतमपात्रैरेव कार्यं न तु कांस्यपात्रेण ।

प्रजापतिस्मृतौ—

"कांस्यपात्रच्युतं वारि स्नाने च देवतार्चने ।
श्वानमूत्रसमं तोयं पुनः स्नानेन शुद्ध्यति" ॥ इति तन्निषेधात् ।

लोहपात्रे तु नान्नं निवेदनीयम् । तत्र भोजने दाने च निषेधात् ।

यथाह स्वस्मृतौ वृद्धात्रिः ( श्लो० ४३ )—

"आयसेन तु पात्रेण यदन्नमुपदीयते ।
श्वानविष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत्" ॥ इति ।

न चैवं कांसपात्रस्यापि भोजने निषिद्धत्वान्नैवेद्यादिषु तन्निषेधप्रसङ्गः । तत्र भोजननिषेधस्य यतिविषयकत्वात् ।

यथाह स एव—

"न च कांस्येषु भुञ्जीयादापद्यपि कदाचन ।
मलाशाः सर्व एवैते यतयः कांस्यभोजनाः ॥
कांस्यकस्य च यत्पात्रं गृहस्थस्य तथैव च ।
कांस्यभोजी यतिश्चैव प्राप्नुयात्किल्बिषं परम्" ॥ इति ।

आचारार्के पूजाप्रकरणे पाद्मे—

"नैवेद्यपात्रं वक्ष्यामि केशवाय महात्मने ।
हैरण्यं राजतं कांस्यं ताम्रं मृन्मयमेव च ॥
पालाशं पद्मपात्रं वा पात्रं विष्णोरतिप्रियम् ।
हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम् ॥
नैवेद्यं देवदेवाय यावकं पावकं तथा ।
नैवेद्यवस्त्वलाभे तु फलानि विनिवेदयेत् ॥
फलानामप्यलाभे तु तोयान्यपि निवेदयेत्" ॥ इति ।

धर्मप्रवृत्तौ पूजाप्रक्रमे—

"मृन्मये भिन्नपात्रे च पाषाणे लोहकाष्ठजे ।
पल्लवे करभूमौ च नैवेद्यं न च दापयेत् ॥
सौवर्णं राजतं ताम्रं कांस्यं पालाशमेव च ।
नैवेद्यायतपत्रं च पात्रं विष्णोरतिप्रियम्" ॥ इति ।

कमलाकराह्निके वराहपुराणे भगवतोक्तेषु द्वात्रिंशदपराधेषु—

"मृण्मये भिन्नपात्रे वा पालाशे लोहकाष्ठजे ।
पल्लवे करभूम्योर्वा नैवेद्यं मम चार्पयेत्" ॥

इति तथा निवेदनमपराधत्वेनोक्तम् । इह मृन्मयनिषेधः शक्तविषयः । शाल्यादिमुख्यान्नानां नित्यं निवेदनविषयो वेत्यन्यत्र विस्तरः ।

कमलाकरभट्टाह्निके भगवत्पूजाक्रमे स्मृतिः—

"अर्घ्यं पुष्पफलैश्चैव चन्दनेन समन्वितम् ।
ताम्रपात्रस्थितं तोयं हरये तन्निवेदयेत्" ॥

तथा तत्रैव नैवेद्यपात्रमुक्तं स्कान्दे—

"हिरण्यं राजतं कांस्यं ताम्रं पालाशपत्रकम् ।
नैवेद्यार्थं प्रशंसन्ति पूर्वाभावे परं परम्" ॥ इति ।

एवं दिङ्मात्रेणेह दर्शितम् । विस्तरस्तु ग्रन्थान्तरेषु पात्रनिर्णये कृत एव । मयापि स्वतन्त्रतयाऽन्यत्र कर्तव्य एवेति नेह तन्यते । एवं—

पूजोपयोग्यपात्राणि पञ्चरात्रादिषु स्फुटम् ।
प्रोक्तानि सम्प्रदाये स्वे यानि सम्मानितानि च ॥
तैर्यथार्हं हिरण्यादिशुद्धऋतुजभाजनैः ।
सभाजनं भगवतो निर्णीतं नः सभाजनैः ॥

---

(द्विषष्टितम प्रश्न., तदाशये गङ्गाया हरिपादांबुता शिवादिधार्यत्वं च)

## अथ प्रक्रान्तप्रधानप्रश्नानुबन्धी षष्ठः प्रश्नः ॥ ६ ॥

## गङ्गाजलेन भगवतः स्नानं समीचीनं न वा ॥ ६२ ॥

अस्यायमाशयो भवेत् । पाद्मगोदामाहात्म्यादिषु विवाहसमये पार्वतीदर्शनात् स्कन्नरेतसो वेधसः पापापनोदाय शिवेन सर्वतीर्थजलपूर्णः कमण्डलुस्तस्मै दत्तः । तेनैव जलेन ब्रह्मणा त्रिविक्रमावतारे भगवतश्चरणः क्षालित इति प्रसिद्धम् । श्रीभागवते च तदा भगवन्नखेन ब्रह्माण्डभेदे बाह्यजलधाराऽपि प्राप्तेत्युच्यते । अत एव विष्णुपुराणादिषु द्वितीयांशद्वितीयाध्याये (श्लो० ३१)—

"विष्णुपादविनिष्क्रान्ता प्लावयित्वेन्दुमण्डलम् ।
समन्ताद्ब्रह्मणः पुर्यां गङ्गा पतति वै दिव" ॥ इत्यादिषु सर्वत्रैव

भगवच्चरणोदकरूपत्वं तस्या निरूपितमिति तद्भक्तानां शिवादीनामेव स्वमूर्ध्नि विष्णुपद्यास्तस्या धारणत्वमुचितम् ।

उक्तं च श्रीभागवते द्वितीयस्कन्धे—

"यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्" ॥ इति ।

न तु भगवतः स्वचरणोदकेन स्नानादिकं योग्यमिति ।

(उत्तरे गङ्गाया हरिस्नानाद्युपयोगित्वे युक्तय.)

उत्तरं ब्रूमः—

भगवतो ह्यवयवविभागप्रदर्शनमैच्छिकमेव । वस्तुतस्तस्य सर्वतः पाणिपादान्तत्वात् । तैत्तिरीये—

"विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्" ॥ इति ।

"सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमँल्लोके सर्वमावृत्त्य तिष्ठति" ॥ इत्यादिश्रुतिस्मृतिभ्यः ।

श्वेताश्वतरे तु—"सर्वतः पाणिपादं तत्" इति पाठः । अतः सर्वत्रैव सच्चिदानन्द-पूर्णत्वाविशेषात् अवयवविभागप्रदर्शनस्यैच्छिकत्वाद्वस्तुतः सर्वतः पाणिदान्तत्वाच्च भगवदवयवेषु नित्यसिद्धसच्चिदानन्दरूपेष्वनौपाधिकेषु न प्राकृतमनुष्याद्यवयववदुत्त-माधमभावो वक्तुं शक्य इति चरणवत्तदुदकस्याधिदैविकरूपत्वात्तेन तदर्चनादौ न कोऽपि दोषः । एवमेव च सति वटपत्रपुटशायिना भगवता स्वमुखे निक्षिप्य स्वचर-णाङ्गुष्ठश्चूष्यत इति पुराणप्रसिद्धिः सङ्गच्छते । कथमन्यथा अत्युत्तमावयवे मुखे प्राकृ-तदृष्ट्या अधमावयवस्य चरणनिक्षेपो योग्यः स्यात् । किञ्चास्ति गङ्गायामाधिदैविका-दिभेदेन त्रैरूप्यम् । चरणोदकस्य स्वल्पत्वाबाहुल्यार्थं चर्मण्वत्यादिनद्यन्तरोदकवर्षो-दकादिप्रवेशश्च । तत्राधिदैविक्या देवतारूपायाः सम्बन्धात् पवित्रतमेन सर्वतीर्थोत्त-मेनाध्यात्मिकजलेन भौतिकजलेन च भगवत्पूजादिकरणे न कोऽपि शङ्कावकाशः । शास्त्रेषु ब्रह्मद्रवत्वकथनाच्च । अत एव पुराणादिषु भगवत्पूजायां तज्जलस्योत्कर्षो निरूप्यते ।

( पर्युषितजलपुष्पादेः पूजायां निषेधः, तुलस्यगस्त्यबिल्वगङ्गोदकानां प्रतिप्रसवः, तुलसीदलगङ्गा-जलयोरतिप्रशसा, साधरणजलेऽपि गङ्गाद्याह्वानात्पूजोपयोगिता, स्पष्टस्तत्स्नानादिविधिश्च )

यथा निर्णयसिन्धौ तृतीयपरिच्छेदपूर्वार्धे बृहन्नारदीये—

"वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् ।
न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम्" ॥ इति ।

स्कान्दे मार्गशीर्षाष्टमाध्यायेऽपि भगवत्स्नानाचमनाद्युपयोगिजलपत्रपुष्पादिनिर्णये इदमेव वाक्यं दृश्यते । आचारप्रकाशे च पारिजाते—

"जलं पर्युषितं त्याज्यं पत्राणि कुसुमानि च ।
तुलस्यगस्त्यबिल्वानि गाङ्गं वारि न दुष्यति" ॥ इति ।

धर्मप्रवृत्तौ चेदं विष्णुपूजायामुदाहृतम् । आचारार्के पूजाप्रकरणे स्कान्दे—

"गङ्गाजलं त्र्यहाद्ग्राह्यं पूजने भक्तिसंयुतैः" ॥

सारसङ्ग्रहे स्कान्दे—

"न विप्रसदृशं पात्रं न दानं सुरभीसमम् ।
न च गङ्गासमं तीर्थं न पत्रं तुलसीसमम्" ॥

नारदपञ्चरात्रे च प्रथमरात्रत्रयोदशाध्याये ( श्लो० १७ )—

"पूतश्च पावनो वह्निर्जलं च तुलसीदलम् ।
पूतान्येव हि तीर्थानि गङ्गादीनि च गायक" ॥ इति ।

तत्रैव द्वितीयरात्रतृतीयाध्याये ( श्लो० ८९ )—

"पवित्राणि च तीर्थानि तुलसी चापि जाह्नवी" ॥ इति ।

कमलाकरभट्टाह्निके भगवत्पूजानिरूपणे—

"आसनं कल्पयेद्धैमं नानारत्नविभूषितम् ।
पाद्यं देवाय दातव्यं गङ्गातोयं सचन्दनम्" ॥ इति ।

तत्र चाचारप्रदीपे—

"जलं पर्युषितं त्याज्यं पत्राणि कुसुमानि च ।
तुलस्यगस्त्यबिल्वादिगङ्गावारि न दुष्यति" ॥ इति ।

एवं तत्र तत्र भगवत्पूजाप्रक्रमे प्रशंसितस्य गङ्गाजलस्य तत्स्नानाद्यर्थमेवोपयोगोऽभिप्रेत इति निश्चीयते । किञ्च साधारणजलेष्वपि गङ्गायमुनाद्यावेशेनैव भगवत्पूजोपयोगित्वं भवतीति ज्ञायते । तत्र तत्र ग्रन्थेषु पूजोपयोगिजले मन्त्रैस्तदाह्वानस्य विधानात् । यथा कृष्णाराधनपद्धतौ शङ्खतोये "गङ्गे च यमुने चैव" इत्याह्वानं कलशे किञ्चिज्जलनिक्षेपश्च निरूपितः । देवपूजाग्रन्थे तु कलश एव तदावाहनमुक्तम् । इदं सर्वत्र प्रसिद्धमेवेति किं बहुना । अपि च तत्रैव पञ्चामृतस्नानोत्तरम्—

"श्रीखण्डं चन्दनोपेतं कस्तूर्यादिसमन्वितम् ।
गङ्गाजलविमिश्रं च गन्धस्नानं समर्पयेत्" ॥

इति वचनोपन्यासपूर्वकं स्पष्टमेव गङ्गाजलेनाभ्यङ्गसमर्पणमुक्तम् । एवं कण्ठरवेण स्नानादौ गङ्गाजलोपयोगविधायकानि वचनान्तराण्यपि तत्र तत्र प्रसिद्धान्येव ।

( तस्या हरिस्नानादिषूपयोगे युक्त्यतर स्वग्रन्थसम्मतिश्च )

अन्यच्च यदि सर्वथा चरणोदकत्वेन भगवदनुपयोगित्वमेव तस्य स्वीक्रियेत तर्हि तेन तत्तर्पणमयुक्तं स्यात् । विधीयते च तद्गौतमतन्त्रे चतुर्विंशाध्याये ( श्लो० १०० )—

"मत्स्यण्डी कदली दुग्धं गुडपायसतच्छ्रिया ।
तर्पयेदयुतं मन्त्री गाङ्गेयेन जलेन वै" ॥

अत्रैव पञ्चविंशाध्याये ( श्लो० १० )—

"पलाशैः कुसुमैर्हुत्वा दिव्यज्ञानमवाप्नुयात् ।
पूर्ववत्तर्पणं कुर्यात्सर्वाभीष्टानि साधयेत्" इति ।

पूर्ववद्गङ्गाजलेन । अपि च ग्रहिलतया भगवच्चरणसम्बन्धित्वात्तदनुपयोगित्वमेवास्य यद्युच्येत तर्हि "पद्भ्यां भूमिर्दिशः श्रोत्रात्" "भूर्लोकः कल्पितः पद्भ्यां द्यौः शीर्षमाशाश्रुतिरङ्घ्रिरुर्वीत्यादिश्रुतिपुराणादिवचनेभ्यो भूमिलोकस्य भगवत्पादोत्पन्नत्वात्तद्रूपत्वाच्चात्रोत्पन्नानां सर्वपदार्थानां भगवत्पूजानुपयोगितयाऽस्मिँल्लोके भगवत्पूजादिसन्मार्गो

एवोच्छिद्येरन् । तथा च सति न कस्यापि मोक्षादिकमपि स्यादिति नैतत्सारम् । अत आधिदैविकरूपत्वाद्गङ्गाजलेन भगवत्सेवनादौ न कोऽपि दोषलेशोऽपीति सङ्क्षेपः । विस्तरस्तु "विष्णोर्नुकं वीर्याणि" "चस्कम्भयः स्वरहसा" "या वै लसच्छ्रीतुलसी-विमिश्रा" इत्यादीनां व्याख्यानात् प्रहस्तवादादेश्चावगन्तव्यः ।

अत एवैतत्सर्वं हृदिकृत्याहुः पञ्चमस्कन्धनिबन्धे श्रीमदाचार्याः ( श्लो० ७८ )—

"जलेनाप्युत्तमा सेयमिति गङ्गावतारणम् ।
सर्वत्र तस्याः सम्बन्ध इति भेदा निरूपिताः ॥
ऊर्ध्वपादाद्विनिष्क्रान्ता जघने पतति स्फुटम् ।
चरणस्याधिदैवत्वान्न दूषणमिहाण्वपि ।
गङ्गाजलेन पूजादि सर्वं कार्यमिति स्थितिः" ॥ इति ।

अतः समग्रमव्ययं मङ्गलं नः ।

उत्तमाधमभावस्याभावात्प्राकृतवद्धरौ ।
पुराणादौ प्रभोः पूजाप्रक्रमेषु प्रशंसनात् ॥
आधिदैवादिभेदेन त्रैविध्याज्जाह्नवीभवम् ।
मुरारिस्नापने वारि पुण्यकारि विचारितम् ॥

---

( त्रिषष्टितमः प्रश्नः, उत्तरकारिका., आहारो रहसि छादित स्थल एव कार्य. )

## अथैतत्प्रश्नानुबन्धी सप्तमः प्रश्नः ॥ ७ ॥

## भगवत्सम्प्रदायरहितविद्वत्तादिगुणयुक्तब्राह्मणेन दृष्टमन्नं भोज्यं न वा ॥ ६३ ॥

### उत्तरम्—

आहारस्य रहस्यत्वविधानाच्छादिते स्थले ।
कर्तव्यताविधानाच्च तत्ताद्दग्व्रतवत्तया ॥
तथैवास्मत्कुलाचाराल्लोकाद्दृग्दोषरूपणात् ।
तथैव चात्मसन्तोषात् पाकदेवार्चनादिषु ॥
दृष्ट्यन्तरालचैलानां निबन्धनविधानतः ।
केनापि नः सम्प्रदाये स्थितेनाप्यस्थितेन वा ॥
विदुषाऽविदुषा वापि दृष्टमन्नं न भुज्यते ।
पूर्वैर्भुक्तं तु यद्दृष्टं तद्दृष्टं खलु भुज्यते ॥

---

१ तथा भोजनस्य लोकविद्विष्टत्वात् । २ इदमुत्तरत्रान्वेति ।

तथा हि पराशरमाधवीये प्रथमाध्याये आह्निकप्रकरणे हारीतः—

"आहारं रहः कुर्याद्विहारं चैव सर्वदा ।
गुप्ताभ्यां लक्ष्मीयुक्तः स्यात्प्रकाशे हीयते श्रिया" ॥ इति ।

मदनपारिजाते तु भोजनविधौ देवलो हारीतश्च—

"गुप्ताभ्यां लक्ष्म्युपेतः स्यात् प्राकाश्ये हीयते श्रिया" ॥ इति । पूर्वार्द्धं तदेव ।

आचारार्के स्मृतिचन्द्रिकायामाचारप्रदीपे कमलाकराह्निकादिपु चेदमुपन्यस्तम् । आचारमाधवेऽपि भोजनविधौ बौधायनः—"सर्वावश्यकावसानेषु प्रक्षालितपाणिपादोऽप आचम्य शुचौ सम्वृते देशे प्राङ्मुख उपविश्येत्यादि प्रजापतिं मनसा ध्यायेत्" इत्यन्तम् । अत्र अन्ने दृष्टिपातवारणाय सम्वृते देशे इति वस्त्रभित्त्याद्यन्यमाच्छादितत्वं देशविशेषणम् ।

अत्रैवाग्रे उशनाः—

"नादत्त्वा मृष्टमश्नीयाद्बहूनां चैव पश्यताम् ।
अश्नीयुर्बहवश्चैव तथा नैकस्य पश्यतः" इति ।

तत्रैव तृतीयाध्याये श्राद्धप्रकरणे याज्ञवल्क्यः—

"परिश्रिते शुचौ देशे दक्षिणाप्रवणे तथा" ॥ इति ।

परिश्रिते परितः प्रच्छादिते शुचौ गोमयादिनोपलिप्ते इति माधवो व्याचख्यौ । अत्र परिश्रित इति दृष्टिदोषनिवारणार्थम् ।

(तथैव व्रत कुलाचारश्च, श्राद्धादिष्वाचाराद्व्यवस्था च)

किञ्च, केनापि दृष्टमन्नं नास्माभिर्भोज्यमित्यस्माकं व्रतम् । नहि तल्लोपो योग्यः । उपपातकरूपत्वात् ।

यथाह तृतीयाध्याये उपपातकगणनायां याज्ञवल्क्यः (श्लो० ३२)—

"कौटिल्यं व्रतलोपनम्" इति । "अत्र व्रतशब्दस्य ईदृशवैष्णवादिधृतनियमपरत्वम्" इति मिताक्षरायां स्पष्टम् । अपि च अस्माकं कुलपरम्पराप्राप्तोऽयमितरदृष्टान्नाभोजनरूपो धर्मः सोऽप्यवश्यं पालनीयः । यथोक्तमाचारमाधवप्रथमाध्याये महाभारते आनुशासनिके पर्वणि उमामहेश्वरसम्वादे—

"धर्माश्चतुर्विधा लोके श्रुतिभेदमुखोद्भवाः ।
देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च ॥
जातिधर्मा वयोधर्मा गुणधर्माश्च शोभने ।
शरीरकालधर्माश्च आपद्धर्मास्तथैव च ॥
एतद्धर्मस्य मान्यत्वं क्रियते लोकवासिभिः" ॥

अत एव श्राद्धादिष्वपि वंशधर्मादिसारः स्मर्यते ।

यथाह निर्णयसिन्धौ पृथ्वीचन्द्रोदये च वृद्धपराशरः—

"मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि" ।

इत्युक्त्वाह—

"देशधर्मं समाश्रित्य वंशधर्मं तथा परे ।
सूरयः श्राद्धमिच्छन्ति पार्वणं च क्षयाह्यपि" ॥ इति ।

एवमितरदृष्टान्नभोजनरूपोऽपि वंशधर्मोऽनुल्लङ्घनीयः । अत एव मनुरप्याहचतुर्थाध्याये ( श्लो० १७८ )—

"येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यते" ॥ इति ।

मिताक्षरायां तु न दुष्यतीति पाठः । अतो राज्ञापि नैतद्विषये बलात्कारः कार्यः । शास्त्रविरोधाभावात् । यथाह आचाराध्याये राजधर्मप्रकरणे याज्ञवल्क्यः ( श्लो० १५ )—

"यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः ।
तथैव परिपाल्योऽसौ यदावशमुपागतः" ॥ इति ।

पुनस्तत्रैव ( श्लो० ५२ )—

"कुलानि जातीः श्रेणीश्च गणान् जानपदानपि ।
स्वधर्माचलितान् राजा विनीय स्थापयेत्पथि" ॥ इति ।

विनीय यथापराधं दण्डयित्वा । तथा च येषां यः कुलधर्मस्तत्रैव ते राज्ञा प्रवर्त्तनीयाः ।

( लोकसङ्ग्रहोऽपि प्रमाणम् )

किञ्च । अस्माकं तद्भोजनमेव पारम्परिकलोकसङ्ग्रहादपि धर्मत्वेन प्राप्यते । उक्तं च पराशरमाधवीये प्रथमाध्याये आनुशासनिके पर्वणि—

"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।
द्वितीयं धर्मशास्त्रं तु तृतीयं लोकसङ्ग्रहः" ॥ इति ।

अतो लोकविद्वेषादपि सर्वलोकदृष्टान्नं नास्माभिः स्वीकर्तव्यम् । लोकविद्विष्टस्य धर्मस्याप्यननुष्ठेयत्वात् । उक्तं च मनुना—

"अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु" ॥ इति ।

एतदेवाश्रित्य मिताक्षरायां प्रथमाध्याये गृह्यप्रकरणे ( श्लो० १३ )—

"महोक्षं वा महाजं वा" इत्यत्र मधुपर्के पशुवधस्य तथा तृतीयाध्याये "त्रिरात्रं

दशरात्रं वा" इत्यत्र "चतुर्थे दशरात्रं स्यात्" इत्यत्र च विगानं स्वीकरोति विज्ञानेश्वरः । अत एव च शिष्टयाज्ञिका आनुबन्ध्याख्यमैत्रावरुणपशोः स्थाने मैत्रावरुणीमामिक्षामेव कुर्वन्ति । पुनश्चतुर्थाध्याये मनुः ( श्लो० १७६ )—

"परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।
धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च" ॥ इति ।

पराशरमाधवीये च प्रथमाध्याये प्रातःप्रबोधकालविचारे विष्णुपुराणे—

"परित्यजेदर्थकामौ धर्मपीडाकरौ नृप ।
धर्ममप्यसुखोदर्कं लोकविद्विष्टमेव च" ॥ इति ।

अपि च—

बहुभिरनुष्ठीयमानस्योच्यमानस्य वा धर्मशास्त्राप्रसिद्धस्याप्याचारस्यास्ति प्रामाणिकत्वं किं पुनस्तत्प्रसिद्धस्य ।

उक्तं च स्वस्मृतावत्रिणा ( श्लो० ३०२ )—

"हास्येऽपि बहवो यत्र विना धर्मं वदन्ति हि ।
विनापि धर्मशास्त्रेण स धर्मः पावनः स्मृतः" ॥

( लोकविद्विष्टोऽसुखोदर्कश्च धर्मोपि नानुष्ठेय हास्यतोऽपि बहुभिरुक्तो धर्मः सद्भिर्निन्दितो न स्यात्, काम्यमगर्हितं कार्यम् )

अन्यच्चैतद्भोजनेऽस्मदीयैः सद्भिरपि निन्दा क्रियते । पराशरमाधवीये तृतीयाध्याये श्राद्धवर्जब्राह्मणेषु मनुः—

"आचारहीनः क्लीबश्च नित्यं याचनकस्तथा ।
कृषिजीवी शिल्पजीवी सद्भिर्निन्दित एव च" ॥ इति ।

अत्रैव यमः—

"सद्भिश्च निन्दिताचारः स्वकर्मपरिवर्जकः" ॥ इति गणयित्वाग्रे

उपसंहरति—

"चतुराश्रमबाह्याश्च सर्वे ते पङ्क्तिदूषकाः ।
इत्येतैर्लक्षणैर्युक्तांस्तान् द्विजान् न नियोजयेत्" ॥ इति ।

अतः क्वापि स्थित्वा नायं स्वाचारोऽस्माभिर्लङ्घनीयः ( अ० १ श्लो० ४७ )—
"उषित्वा यत्र तत्रापि स्वाचारं न विवर्जयेत्" । इति बृहत्पराशरोक्तेः ।

दक्षोऽप्याह्निकमुपक्रम्याह ( श्लो० १७ )—

"उदयास्तमनं यावन्न विप्रः क्षणिको भवेत् ।
नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः" ॥ इति ।

अगर्हिताचाराश्च प्रकृतसदृशाः ।

( पतितोदक्याकाकपाखण्ड्यवैष्णवादिदृष्टस्पृष्टपादस्पृष्टकालदुष्टभावदुष्टादेरन्नस्य भोजननिषेध. )

अपरं चास्मिन्दुस्तरतरेऽवसरे नहि सर्वजनानां रहस्यानि प्रकाशानि च सुकृतदुष्कृतानि ज्ञातुं शक्यन्त इति नहि सर्वैः सह दृष्टः स्पृष्टान्नभोजनादिरूपो व्यवहार इदानीं योग्यः। तादृशपातकिदृष्टान्नभोजने निषेधं त्वाह सम्वर्तः—

"अन्नं पर्युषितं भुक्त्वा केशकीटैरुपद्रुतम्।
पतितैः प्रेक्षितं वापि पञ्चगव्यं द्विजः पिबेत्" ॥ इति।

मनुरपि चतुर्थाध्याये ( श्लो०. २०७ )—

"मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन।
केशकीटावपन्नं च पदा स्पृष्टं च कामतः ॥
भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाप्युदक्यया" इत्यादि।

कमलाकराह्निकादिषु च याज्ञवल्क्यः—

"भुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम्।
उदक्या स्पृष्टसंदुष्टं पर्यायान्नं विवर्जयेत्" ॥ इति।

सारसङ्ग्रहे तु अवैष्णवादिभिरपि दृष्टान्नस्य निषेध उक्तः। यथा हारीतः—

"यच्छास्त्रेषु निषिद्धं तु तत्प्रयत्नेन वर्जयेत्।
भावदुष्टं कालदुष्टं क्रियादुष्टं तथैव च।
संसर्गदुष्टमपि च वर्जयेद्यज्ञकर्मणि" ॥

इत्युपक्रम्य कालदुष्टादिस्वरूपं कथयन्नाह—

"शैवपाखण्डपतितैर्विकर्मस्थैर्निरीश्वरैः।
अवैष्णवैर्द्विजैः शूद्रैर्हरिवासरभोक्तृभिः ॥
श्वकाकसूकरोष्ट्राद्यैरुदक्या सूतिकादिभिः।
पुंश्चलीभिश्च नारीभिर्वृषलीपतिभिस्तथा ॥
दृष्टं स्पृष्टं च दत्तं च भुक्तशेषं तथैव च।
अभक्ष्येण च संयुक्तं सांसर्गं दुष्टमुच्यते" ॥ इति।

संसर्गदुष्टस्य च निषेधो धर्मप्रवृत्तावपि प्रायश्चित्तप्रकरणे दर्शितः।

"संसर्गदुष्टं यच्चान्नं क्रियादुष्टमकामतः।
भुक्त्वा स्वभावदुष्टं च तप्तं कृच्छ्रं समाचरेत्" ॥ इति।

एवमितरत्राप्यनेकत्र संसर्गदुष्टनिषेधः स्पष्ट एव।

नारपञ्चरात्रे च द्वितीयरात्रे द्वितीयाध्याये वैष्णवैर्दृष्टस्पृष्टान्नभोजनादिसंसर्गं वैष्णवानां निषेधति महादेवः—

"हरिभक्तिप्रदं ज्ञानं ज्ञानं पञ्चविधेषु च।
विदुषां वाञ्छिता मुक्तिः सततं परमा सताम् ॥

सा च श्रीकृष्णभक्तेश्च कलां नार्हति षोडशीम् ।
श्रीकृष्णभक्तसङ्गेन भक्तिर्भवति नैष्ठिकी ॥
अनिमित्ता च सुखदा हरिदास्यप्रदा शुभा ।
यथा वृक्षलतानां च नवीनः कोमलाङ्कुरः ॥
वर्द्धते मेघवर्षेण शुष्कः सूर्यकरेण च ।
तथैव भक्तालापेन भक्तिवृक्षनवाङ्कुरः ।
वर्धते शुष्कतां याति शुष्कः सूर्यकरेण च ॥
तस्माद्भक्तैः सदालापं कुरुते पण्डितः सदा ।
यात्येवाभक्तसंसर्गाद्दुष्टात्सर्पाद्यथा नरः ॥
आलापाद्गात्रसंस्पर्शाच्छयनात्सहभोजनात् ।
सञ्चरन्ति च पापानि तैलबिन्दुरिवाम्भसि ॥
संसर्गजा गुणा दोषा भवन्त्येव हि जीविनाम् ।
तस्मात्सतां हि संसर्गं सन्तो वाञ्छन्ति सन्ततम् ॥
मुने संसर्गजो दोषो वस्तूनां प्रभवेदिह ।
हीनधातुप्रसङ्गेन स्वर्णे दोषः प्रजायते ॥
तस्माच्च हीनसंसर्गं न वाञ्छन्ति मनीषिणः ।
तस्माद्वैष्णवसंसर्गं कुर्वते वैष्णवाः सदा ॥
कुर्वन्ति वैष्णवाः शश्वत् षड्विधं भजनं हरेः ।
स्मरणं कीर्तनं चैव वन्दनं पादसेवनम् ।
पूजनं सततं भक्त्या परं स्वात्मनिवेदनम्" ॥ इत्यादि ।

एवं रहस्यादिपापसञ्चरणभयादेव सर्वेषामेकपङ्क्तिभोजनमपि नाद्रियन्ते शिष्टाः । उक्तं च चतुर्विंशतिमतव्याख्याचारमयूखाचारप्रकाशाचारादर्शादिषु कात्यायनेन—

"अप्येकपङ्क्त्यां नाश्नीयाद्ब्राह्मणैः स्वजनैरपि ।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥
एकपङ्क्त्युपविष्टानां दुष्कृतं यद्दुरात्मनाम् ।
सर्वेषां तत्समं तावद्यावत्पङ्क्तिर्न भिद्यते ॥
अग्निना भस्मना चैव स्तम्भेन सलिलेन च ।
द्वारेणैव च मार्गेण पङ्क्तिभेदो बुधैः स्मृतः" ॥ इति । आस्तामेतत् ।

( भक्ताभक्तसङ्गाभ्यां भक्तेर्वृद्धिनाशौ आलापस्पर्शसहभोजनादित परस्परपापसञ्चार अन एवैकपङ्क्तौ भुक्तिनिषेध भस्माद्यन्तरायेण पङ्क्तिभेद. )

अपरं च ( अ० २ श्लो० ६ )—

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" ॥

(अ० १ श्लो० ७)—

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्" ॥

इत्यादिमनुयाज्ञवल्क्यवचनेष्वात्मसन्तोषस्याप्यस्ति धर्मे प्रामाण्यम् । तथा आचाराध्याये श्राद्धप्रकरणे (श्लो० ३७।३८)

"गन्धोदकतिलैः" इति "ये समाना" इति च श्लोकयोर्मिताक्षरायाम्—

"येनास्य पितरो याता येन याताः पितामहाः ।
येन यायात्सतां मार्गं तेन गच्छन्न दुष्यति" ॥

इति वंशपरम्परायातसमाचारेण व्यवस्था । एवंविधविषयव्यतिरेकेणास्य वचनस्य विषयान्तराभावात् । यत्र पुनः शास्त्रतो न व्यवस्था नाप्याचारस्तत्र "आत्मनस्तुष्टिरेव च" इति वचनादात्मनस्तुष्टिरेव व्यवस्थापिका । यथा—"गर्भाष्टमेऽष्टमे वाब्दे" इति विज्ञानेश्वरः । इतरदृष्टान्नभोजने च नास्माकमात्मा तुष्यतीति नैतद्भोज्यम् ।

अत एव चतुर्थाध्याये मनुः, अभक्ष्यान्नेषु (श्लो० २०९)—

"गणान्नं गणिकान्नं च विदुषां च जुगुप्सितम्" ॥ इति ।

विद्वद्भिर्निन्द्यमानस्येतरदृष्टादेरप्यभक्ष्यत्वमुक्त्वा अतुष्टिकरस्य पृथगभक्ष्यतामाह (श्लो० २१७)—

"अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च" ॥ इति ।

पुनः स एव एकादशाध्याये (श्लो० ५६)—

"ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः ।
गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट्" ॥ इति ।

अत्र न भोक्ष्यत इति सङ्कल्प्य न भुज्यते तदेवाद्यमिति मेधातिथिः—

पुनस्तत्रैव (श्लो० १६०)—

"अभोज्यमन्नं नात्तव्यं नात्मनः शुद्धिमिच्छता ।
अज्ञानभुक्तं तूत्तार्यं शोध्यं वाप्याशु शोधनैः ॥
एषोऽनाद्यादनस्योक्तो व्रतानां विविधो विधिः" ॥ इति ।

अत्राभोज्यस्य विवेचनाभावात् पूर्वोक्तान्येवातुष्टिकरान्तानि ग्राह्याणि ।

याज्ञवल्क्योऽपि तृतीयाध्याये ब्रह्महत्यादिप्रायश्चित्तप्रकरणे (श्लो० २०३)—

"निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् ।
रजस्वलामुखास्वादः सुरापानसमानि तु" ॥

निषिद्धं लशुनादिकं तस्य मतिपूर्वं भक्षणमिति मिताक्षरा । नन्वेवं सत्यतुष्टिकरस्य

कदाचिदमत्या भक्षणे सुरापानप्रायश्चित्तमुचितम् । न चैतत्क्वचिदपि व्यवहारे दृष्टश्रुतचरमिति चेत् सत्यम् । सुरापानपापातिदेशेऽपि प्रायश्चित्तलाघवस्य—

"अमत्यैतानि षड्जग्ध्वा कृच्छ्रं सान्तपनं चरेत् ।
यतिचान्द्रायणं वापि शेषे तूपवसेदहः" ॥

इति मनुवचनेन विहितत्वात् । वचनबलान्महतोऽपि पापस्य क्षयसम्भवाच्च प्रकृतान्नभोजने उपवास एवैकः शिष्टाचारसम्मतः । अत एवोपपातकप्रायश्चित्तानि सर्वाणि व्याख्याय पश्चात्तानि महता विस्तरेण व्यवस्थापयन् अभक्ष्यप्रायश्चित्तव्यवस्थायां प्राह विज्ञानेश्वरः । एवमादौ च यत्र प्रतिपदोक्तं प्रायश्चित्तं न दृश्यते तत्र "शेषेषूपवसेदहः" इति साधारणप्रायश्चित्तं मनूक्तं द्रष्टव्यमिति । अभ्यासे तु प्रायश्चित्तावृत्तिस्तेन पूर्वमेवोक्ता अतो न कोऽपि शङ्कावकाशः ।

(आत्मतुष्टि. प्रमाणम् अतुष्टिकर नाऽशनीयम् अभोक्तव्यतया सङ्कल्पितमनाद्यम्, तद्भक्षणे प्रायश्चितम्)

किञ्च वैष्णवसम्प्रदायेषु पाककरणं भगवत्सेवनं तन्निवेदनादिकं ततः प्रसादभोजनादिकं च भित्त्यावृतस्थले तदभावे च सर्वतश्चैलावरणवेष्टिततया अन्यदृष्टिपातायोग्यस्थल एव कार्यमिति शास्त्रसिद्धा रीतिः । अतस्तन्मूलभूतवचनान्यप्यनेकत्र ग्रन्थेषूपलभ्यन्ते । यथा सारसङ्ग्रहे पाराशरे—

"श्वानवायसचण्डालदृष्टिदोषं परित्यजेत् ।
प्रपन्नः परमैकान्तो भोजने पाककर्मसु ॥
चाण्डालाः शाक्तकाः शैवास्तथा भैरवपूजकाः ।
येऽप्यन्यदेवताभक्तास्तेषां दृष्टिं विवर्जयेत् ॥
अत्युष्णमतिरूक्षं च शुक्तं पर्युषितं तथा ।
आघ्रातमितरैर्दृष्टं प्रयत्नेन विवर्जयेत् ॥
विष्णोर्नैवेद्यकालेषु चैलावरणमाचरेत् ।
त्यक्त्वा वृत्तिं पचेदन्नं स मूढो नरकं व्रजेत् ॥
आवृतिं यः परित्यज्य नैवेद्यं कुरुते यदि ।
स चाण्डालो महापापी रौरवं नरकं व्रजेत् ॥
जैनबौद्धादिकैः सम्यक् श्वानमार्जारवायसैः ।
देवतान्तरभक्तैश्च दृष्टं दोषात्परित्यजेत् ॥
नैवेद्यपाककाले च भोजने च विशेषतः ।
असद्दृष्टं परिहरेदच्युतस्य निवेदने ॥
काकं दृष्ट्वा प्रपन्नश्च नाश्नीयाल्लोभतोऽपि वा ।
अवैष्णवानां दृष्टं च भोजनं वैष्णवस्त्यजेत्" ॥

पुनः पाराशरे—

"एकशय्यासने पङ्क्तिभाण्डपक्वान्नमिश्रितम् ।
यजनाध्यापने योनिस्तथैव सहभोजनम् ॥
नवधा सङ्करः प्रोक्तो न कुर्याच्चाधमैः सह ।
वर्जयेद्विधवापाकमनर्चककृतं तथा ॥
अधमान्नं तथा सम्यग्वर्जयेत्सर्वकर्मसु ।
पञ्चसंस्काररहितः शिखाकौपीनवर्जितः ॥
वैष्णवाचाररहितो ह्यनर्चक इति स्मृतः" ॥

मोक्षधर्मे—

"न नाग्नामीक्षते नारीं न नग्नान् पुरुषानपि ।
मैथुनं शयनं गुप्तमाहारं च समाचरेत् ॥
सायं प्रातर्मनुष्याणामशनं देवनिर्मितम् ।
पाखण्डपतिताशुद्धविकर्मस्थानवेक्षितम्" ॥

हारीते—

"पैशाचिकानां यक्षाणां शाक्तानां लिङ्गधारणम् ।
द्वादशीविमुखानां च दृष्टिदुष्टं विवर्जयेत् ॥
अवैष्णवानां दृष्टिः स्यात् पाकपात्रे तथा जले ।
तत्पाकं तु परित्यज्य पात्रशुद्धिं च कारयेत्" ॥

सुदर्शनसंहितायाम्—

नीलाद्रौ चित्रकूटे च व्रजे शेषे हिमाचले ।
अन्तर्वेद्यां तथा राजन् दृष्टिदोषो न विद्यते ॥

वृद्धवासिष्ठे—

"पूजानैवेद्यकालेषु यागद्रव्याण्यशेषतः ।
तिरोधाय च वस्त्रेण अलक्ष्यं प्राकृतैर्यथा" ॥

जयसंहितायाम्—

"पिदधीत तथा क्षेत्रमायागात्पाकभूमिकाः ।
वस्त्रपर्णकुशाद्यैर्वा यथालक्ष्यमवैष्णवैः" ॥

वृद्धपाराशरे—

"विष्णोरिज्यां सदा कुर्याद्योऽवनिं वसनादिभिः ।
पूज्यते हरिरव्यक्तस्तत्र लक्ष्म्या स मोदते ॥

विप्रो वा वैष्णवो वा स्यादनुपाकादिकर्मसु ।
तिरस्कुर्याद्विधानेन नान्यथा हरिरिज्यते ॥
यागभूमौ च यागान्नपाकयोगादिकर्मसु ।
तिरस्कुर्याद्ध्रुवं तेषां नान्यथा शुद्धिमाप्नुयात् ॥
अनाच्छाद्यं तथा क्षेत्रं यागादौ यः करोति सः ।
सिद्धिं नैव समाप्नोति प्रत्युत प्रच्युतो भवेत्" ॥ इति ।

वसनादिभिराच्छादयेदिति शेषः । तिरस्कुर्यात्तिरस्करणिकाभिराच्छादयेदित्यर्थः एवं वचनान्तराण्यपि तत्र तत्र द्रष्टव्यानि ।

( सात्विकादिकर्मलक्षणम्, अतुष्टिर्लज्जा च तामसे, सन्तोषो लज्जानुदयश्च सात्त्विके )

तस्माच्छास्त्रव्याकोपात्सम्प्रदायविरोधाच्च एतादृशभोजनेऽस्माकं लज्जाभ्युदेति । नाप्यात्मा परितुष्यतीति । नह्यन्येन केनापि दृष्टमन्नमस्माभिर्भोज्यम् । तादृशभोजनस्यासात्त्विकत्वात् ।

उक्तं च द्वादशाध्याये मनुना ( श्लो० ३७ )—

"त्रयाणामपि चैतेषां गुणिनां त्रिषु तिष्ठताम् ।
इदं सामासिकं ज्ञेयं क्रमशो गुणलक्षणम् ॥
यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जति ।
तज्ज्ञेयं विदुषां सर्वं तामसं गुणलक्षणम् ॥
येनास्मिन्कर्मणा लोके ख्यातिमिच्छन्ति पुष्कलाम् ।
नच शोचत्यसम्पत्तौ तद्विज्ञेयं तु राजसम् ॥
यत्सर्वेणेच्छति ज्ञातुं यन्न लज्जति चाचरन् ।
येन तुष्यति चात्मास्य तत्सर्वगुणलक्षणम्" ॥ इति ।

अग्रे च सर्वतः सत्त्वगुणोत्कर्षमुक्त्वा त्रिविधकर्माचरणे पृथक्फलकथनं प्रतिज्ञायाह—

"देवत्वं सात्त्विका यान्ति मनुष्यत्वं च राजसाः ।
तिर्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः" ॥ इति ।

तस्मान्नैतादृशं सर्वथा अशनीयम् । इत्थं च—

आहारस्य रहस्यत्वमाच्छन्नस्थलकार्यता ।
तादृग्व्रतं कुलाचारो दृष्टिदोषस्तथात्मनः ॥
असन्तोषः प्रावरणविधिः पाकादिकर्मसु ।
दृष्टान्नाभोजने त्वेते हेतवोऽत्र समर्थिताः ॥
अन्येऽपि बहवोऽनेकशास्त्रारण्यविहारिभिः ।

स्वतः सुधीकेसरिभिरुपलप्स्यन्त एव ते ॥
तस्मादस्माभिरुचितं स्वाचाररुचितश्चिरात् ।
स्थले भित्त्यादिनाच्छन्ने प्रावृतद्वारि वाससा ॥
प्रवासे पटवासेषु सेवापाकादिचाशनम् ।
विधीयते किं बहुलादलं लेखात्फलं परम् ॥

---

**( चतुःषष्टितमः प्रश्नः, उत्तरकारिकाः, शूद्रादिदृष्टान्नभुक्तिनिषेधः, वैष्णवब्राह्मणदृष्टस्याप्यनशनम्, मनसोऽन्नपरिणामत्वम्, आचारात्तद्दृष्टाशनम् )**

**अथैतत्प्रक्रान्तप्रधानप्रश्नानुबन्धी अष्टमः प्रश्नः ॥ ८ ॥**

**भवत्सम्प्रदायस्थसर्ववर्णदृष्टमन्नं भुज्यते न वा ॥ ६४ ॥**

उत्तरम्—

"अयं दत्तोत्तरः प्रश्नः पूर्वप्रश्नोत्तरेण तु ।
केनापि दृष्टं नास्माभिर्भोज्यमित्थं समर्थितम् ॥
तथापि कथ्यते किञ्चित्तथ्यं पथ्यं तदुत्तरम् ।
वैष्णवत्वेऽपि शूद्रादिजातिभेदो न नश्यति ॥
तस्माद्भोज्यं न तद्दृष्टं शूद्रदृष्टान्नसेवनात् ।
कुलाचाराद्यथाभावाच्चाज्ञेयत्वाद्धूर्तचेतसाम्" ॥

तथाहि । अस्ति शूद्रादिदृष्टानामन्नानामपावित्र्यम् । अत एव निर्णयसिन्धौ तृतीयपरिच्छेदे श्राद्धप्रकरणे पराशरः—

"तद्विष्णोरिति मन्त्रेण गायत्र्या च प्रयत्नतः ।
प्रोक्षयेदन्नजातं तु शूद्रदृष्टादिशुद्धये" ॥ इति ।

एवमादिषु तद्दोषवारणाय प्रोक्षणादिकमुच्यते ।

धर्मसिन्धौ तृतीयपरिच्छेदपूर्वार्धे—

"शूद्रान्नं शूद्रदत्तब्राह्मणान्नं रात्रिपर्युषितं रजस्वलाचाण्डालपतितादिदृष्टं काकादिपक्ष्युच्छिष्टमभोज्यम्" इति । आदिशब्देन शूद्रादिसङ्ग्रहः । अतस्तद्दृष्टमभोज्यमेव ।

एवं "कलौ वर्णद्वयं मतम्" इत्यादिवाक्येभ्य इदानीन्तनयोः क्षत्रियवैश्ययोरपि शूद्रप्रायत्वात्तन्निरीक्षितमपि नात्तव्यम् । तथा स्वसम्प्रदायवर्तिब्राह्मणेष्वपि बाह्यचिह्नधारणमात्रेण कलिकालवर्तिनां धूर्तानामन्तःकरणस्य तत्त्वतो ज्ञातुमशक्यत्वान्नहि सर्वेषामेकान्ततो वैष्णवत्वं निश्चेतुं शक्यते । अत एवोक्तं केनचित्—

"अन्तः शाक्ता बहिः शैवाः सभामध्ये च वैष्णवाः ।
विचरन्ति महाधूर्ता नानारूपधराः कलौ" ॥ इति ।

अतः सर्वांशेन याथार्थ्यादान्तरवैष्णवपरीक्षायाः कर्तुमशक्यत्वान्नहि सर्वैः स्वसाम्प्रदायिकवैष्णवब्राह्मणैरपि दृष्टं स्पृष्टमन्नमशनीयम् । तथा सति मनसो बाहिर्मुख्यापत्त्या कदाचित्तादृगनन्यवैष्णवत्वभङ्गप्रसङ्गात् । मनसोऽन्नपरिणामत्वेन तदनुरूपतायास्तत्रावश्यभावित्वात् ।

यथा छान्दोग्येऽष्टमप्रपाठके श्रूयते ( खं० ५ )—

"अन्नमशितं त्रेधा भवति तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति,
यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन" इति ।

तथा ( खं० ६ )—

"दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदिषति तत्सर्पिर्भवति एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदिषति तन्मनो भवति" इत्यादिना हेतुसमर्थनपूर्वकं पुनराम्नायते "अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक्" ॥ इति । तस्मात्पूर्वाचार्याः शुद्धब्राह्मणज्ञातयः प्रायः साकल्येनास्मत्सम्प्रदायनिष्ठाः स्वगृहे भगवत्सेवाधिकारितया परिगृहीताः, एकादशस्कन्धायुक्तरीत्या विविधमहोत्सवविस्तारस्य भगवत्सेवाप्रकारस्यैकेन स्वयं निर्वोढुमशक्यत्वात्, तज्ज्ञातीयेष्वपि येऽस्मद्गृहेषु भगवत्सेवां नियमेन स्थित्वा कुर्वन्ति तैरेव भगवत्सेवावसरे निरीक्षितोऽपि भगवत्प्रसादो भुज्यते । श्रीमज्जगन्नाथपुरीद्वारावतीप्रभृतिषु चेतरनिरीक्षितोऽपि तत्रत्यः प्रसादो यथासम्प्रदायं भुज्यते ।

( सदाचारस्य प्रामाण्ये श्रुतिस्मृतिपुराणानि पूर्वमीमांसा च )

अत्र प्रमाणं तु साधुसदाचार एव । तस्यापि धर्मे प्रमाणत्वात् । यथा शिक्षोपनिषदि—"वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति" इत्युपक्रम्य श्रूयते—"अथ यदि ते कर्मविचिकित्सा वा स्यात् । ये ते ब्राह्मणाः सम्मर्शिनः । युक्ता अयुक्ताः । यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः" ॥ इति ।

मनुरप्याह द्वितीयाध्याये ( श्लो० ६ )—

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" ॥ इति ।

तथा ( श्लो० १२ )—

"वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्" ॥

याज्ञवल्क्योऽपि प्रथमाध्याये ( श्लो० ७ )—

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्" ॥ इति ।

आचारमाधवप्रथमाध्याये ( श्लो० ३५ ) व्याख्याने आपस्तम्बः—

"धर्मज्ञसमयः प्रमाणं वेदाश्च" ॥ इति ।

मिताक्षरादिबहुनिबन्धेषु ब्रह्माण्डपुराणे—

"साधूनां समयश्चापि प्रमाणं वेदवद्भवेत्" इति ।

महाभारते चाजगरपर्वणि युधिष्ठिरः—

"तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः" इति ।

जैमिनिनापि पूर्वमीमांसाप्रथमाध्यायतृतीयपादे शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणे ( सू० ९ )—

"शास्त्रस्था वा तन्निमित्तत्वात्" इति सूत्रे शिष्टाचारस्य वस्तुनिर्णायकत्वं स्वीकृतम् । अत्रैव शाबरभाष्ये—"कः पुनरत्र निश्चयः? यः शास्त्रस्थानां स शब्दार्थः । के शास्त्रस्थाः? । शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च तेन शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे" इत्यादिना तदेव प्रकाशितम् । इतः पूर्वाधिकरणे च शिष्टाचारस्य प्रामाण्यं विचारितम् ।

उक्तं च जैमिनीयाधिकरणमालायाम्—

"सदाचारोऽप्रमा मा वा निर्मूलत्वादमानता ।
अष्टकादेरिवैतस्य समूलत्वात्प्रमाणता" ॥ इति ।

इतरदृष्टान्नस्याभोज्यत्वविषये विस्तरश्चानुपदमतीतस्य प्रश्नोत्तरे दर्शित एवेत्यलम् । अतो यथासम्प्रदायमेवेतरैर्दृष्टमदृष्टं वा श्रीमद्राधावदनारविन्दाधरामृतमकरन्दास्वादादमन्दमामोदनिवेदकं सदन्नं सदास्माभिर्भोक्तव्यमिति सकलं मङ्गलं नः ।

शूद्रादिदृष्टसेधाचाबोध्यत्वाच्छन्नः कलौ ।
सम्प्रदायविरोधाच्च दृष्टमन्नं न भुज्यते ॥

इत्थम्—

अष्टमं सहितमष्टभिरङ्गैश्चोद्यतं यदिह चोद्यमहृद्यम् ।
तस्य वैदिकसुयुक्तितरङ्गैरुत्तरं बहुतरं व्यतरं ते ॥



( अन्ते प्रष्टृकृतप्रमाणपरिगणनश्लोकः, तदुत्तरश्लोके, ब्रह्ममीमांसादेरपरिगणनं दोषः, चत्वारि वेदोपाङ्गानि )

## अथैतत्प्रश्नान्ते लिखितमस्ति

एतेषामुत्तरं सप्रमाणं देयं प्रमाणं च,

श्लोकः—

यन्नास्ति वेदे न च यत्पुराणे रामायणे भारतसागरे वा ।
मन्वादिशास्त्रेषु च यन्न वोक्तं तन्नास्ति नास्तीति न तेन कार्यम् ।

उत्तरम्—

यदस्ति वेदेऽस्ति च यत्पुराणे रामायणे भारतसागरे यत् ।
मन्वादिशास्त्रेषु च यद्बहूक्तं तदेव सर्वं विमलं व्यलेखि ॥

यत्त्वस्मिन्भवच्छ्लोके सर्वशास्त्रमूर्धन्यानामपि ब्रह्ममीमांसादीनामपरिगणनम्, तत्तु तदनभ्यासात् । कथमन्यथा एतावत्सु प्रश्नेषु वेदान्ताचार्यान् प्रत्येव प्रवृत्तेषु एकोऽपि वेदान्तगर्भितः प्रश्नो न स्यात् । यच्च स्वपरिगणितशास्त्रातिरिक्तोक्तं नास्त्येव प्रामाणिकमित्यवादि । तदपि प्रमादात् । तदतिरिक्तायामपि ब्रह्ममीमांसायां प्रतिपादितस्यार्थस्य केनापि सदास्तिकेन प्रतिषेद्धुमशक्यत्वात् । न च वेदोक्तार्थ एव व्यासेन निर्णीत इति वेदसङ्ग्रहादेव सङ्गृहीता सेयमिति वाच्यम् । तया सति श्रौतानेवार्थान् स्मरतां मन्वादीनां शास्त्राणि स्त्रीशूद्रार्थं वेदार्थमेवानुवदन् महाभारतं च तेनैव सङ्गृहीतमिति पृथगुल्लेखस्य पुनरुक्तित्वापत्तेः ।

किञ्च, वेदपदेन साङ्गस्य तस्य ग्रहणमभिप्रेतं साङ्गोपाङ्गस्य वा ? आद्ये, पूर्वोत्तरमीमांसयोरसङ्ग्रहः । तयोरुपाङ्गत्वात् । द्वितीये, पुराणेतिहासपरिगणनं पुनरुक्तिः स्यात् । उपाङ्गत्वाविशेषात् । चरणव्यूहे अङ्गानि गणयित्वा अनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानीत्युक्तेः । न च मन्वादीत्यादिपदेन तत्सङ्ग्रहः । मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिरादिस्मृतिप्रसिद्धानां स्मृत्यन्तरकाराणामेव तौल्येन सङ्ग्रहसम्भवात् । तादृशस्य प्रधानस्य शास्त्रस्य सर्वथा पृथङ्निर्देष्टुमौचित्याच्च । आस्तामेतत् ।

नहि भवद्भिरस्मत्सिद्धान्ते प्रमाणविषये सन्देग्धव्यं किञ्चिदपि ।

वेदेषु सर्वेषु तथा स्मृतिष्वपि पुरा पुराणेषु च यन्महर्षिभिः ।
श्रुतं स्मृतं वीक्षितमस्ति नोऽखिलं तदेव जागर्ति मते समुज्ज्वलम् ॥

( युग्मं )

दुष्टप्रपञ्चप्रलयप्रसङ्गादत्युन्मदानष्टविनष्टदृष्टीन्[1] ।
सदन्तदैर्घ्यान्[2] गिरिवैर्यभावभ्रान्त्युद्भवान्[3] प्रश्नगजांस्तदित्थम् ॥
सद्युक्तिशूलेन निविध्य ग्रन्थाभिधो नृत्यतु शङ्करोऽयम् ।
परप्रमाणाख्यतृतीयनेत्रज्वालावलीवेगवलीढमोहः ॥

"इत्यष्टमूर्तिर्मतवर्तिकृताष्टचोद्यध्वान्तप्रशान्तय उदैदयमुष्णरश्मिः ।
उल्लास्य हृद्य नलिनानि सतां सतावद्यामॉस्तमोष्टहरितां हरतां प्रतापी ॥

अपि च—

श्रीमद्वल्लभविठ्ठलेशचरणच्छायाश्रयान्निर्भया
वेदारण्यविचारिणोऽत्र नखैर्वादैः प्रमाणोज्वलैः ।
दुर्वादोद्धतहस्तिमस्तदलने शार्दूलविक्रीडितं
सन्तः सन्ततमाचरन्तु सुधियोऽनन्ता अनन्तालये ॥

( समाप्तिमङ्गलानि स्वप्रवर्तकस्य स्वपित्रादीनां स्वस्य च नामनिर्देश., असत्कृतपरिभाषा च )

इदानीं च—

श्रीमद्वल्लभवंश[10]मौक्तिकमणिर्यः सूरिरत्ना[11]ग्रणीः
प्रोद्यत्स्वप्रभया[12] च दुर्मततमः[13]पुञ्जप्रणाशप्रणीः ।
सत्सूत्र[14]प्रवणः सतां हृदि[15] मुदं तन्वन्ननर्घ्यश्रिया
हेतुर्जीवन[16]सम्पदां विजयतां श्रीजीवनेशः प्रभुः ॥

शारीरनयनहैन्यं नाभूद्दैन्यस्य साधनं किल मे ।
यद्दृया शास्त्रदृशो निजजनकं तं भजे घनश्यामम् ॥

कृष्णयजुस्तरुशाखासुमनःश्लाघ्यास्ति तैत्तिरीयाख्या ।
तां सेवते मधुरवागापस्तम्बद्विजातिकुलम् ॥

तत्रोद्भूतो मतिमान् वाधूलसगोत्रवारिधेश्चन्द्रः ।
तैलङ्गवेल्लनाटीज्ञातिविद्वत्सभारत्नम् ॥

यः पञ्चनद्युपाह्वयगोपीनाथाङ्गजो घनश्यामः ।
गोवर्धनाभिधोऽहं तत्सूनुस्तन्मुखाधिगतविद्यः ॥

---

१ विनष्टं ज्ञान येभ्य । पक्षे मदेनान्धप्रायान् । २ सन्तो ये अन्ता स्वशेषभूतान्यष्टाष्टवाक्यानि तैर्दैर्घ्यं येषा तान् । "अन्त स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु" इति मेदिनी । पक्षे दन्तदैर्घ्यसहितान् । ३ गिरि वाचि विषये प्रष्टुर्वैर्यभावभ्रान्तिकरान् । पक्षे प्रोच्चपर्वतभ्रमदान् । ४ वेदादि । ५ "वष्टिभागुरिरल्लोपमवाप्योरुप-सर्गयो" इत्यकारलोप । ६ ग्रथ । ७ अष्टौ । ८ परिचिंतका विशेषणचारिणश्च । ९ अकठिनै नखैश्च । १० कुल वेणुश्च । ११ ज्ञातिश्रेष्ठा मणयश्च । १२ बुध्या कान्त्या च । १३ अज्ञान अन्धकारश्च । १४ ब्रह्म-सूत्रादितत्पर. तन्तुप्रोत च । १५ चित्ते वक्षोदेशेच । १६ जीविका जल च ।

ग्रन्थोऽयं रचितो मया श्रीजीवनेशाज्ञया
श्रीमत्पश्चनदान्ववायजनुषा गोवर्द्धनाख्याजुषा ।
श्रीमद्वल्लभनाममात्रविदुषात्रोक्तं भवेद्यन्मृषा
तच्छोध्यं कृपया भवद्भिरितरै[1]राक्षिप्यतां मा रुषा ॥
वेदा[2]त्मा जडभाव[3]शोषणकरो[4] दोषा[5]न्ध्यपोषान् हरन्
दुष्टोल्ककुलान्ध्यकृद्विमलयन्मार्गा[6]ननन्ता[7]श्रयः ।
आराध्यश्च सदाग्रहैः[8] प्रतिदिनं सोऽयं प्रभातोदयो[9]
मार्तण्डः कृतनीरजं[10]स्फुटरुचि[11]श्चण्डः समुद्वीक्ष्यताम् ॥
श्रुति४दृङ्२नन्द९शशि१मितेऽद्य वैक्रमे[12] वै क्रमेण वर्षेऽस्मिन् ।
रविवासरान्वितायां तपस्य[13]मास्यमलसप्तम्याम् ॥
श्रीबालकृष्णमन्दिर आस्थाने जीवनेशविभोः ।
हरिगुरुचरणसरोजनि सपर्यया पर्यपूर्यत निबन्धः ॥

इति श्रीमद्वेदव्यासविष्णुस्वामिमतपुण्डरीकमण्डलमण्डनमार्तण्डश्रीमद्वल्लभाचार्यचरणाब्जचञ्चरीकचित्तेन मोक्षगुरुगोस्वामिश्रीव्रजवल्लभचरणानुचरेण तैलङ्गज्ञातीयविद्वरत्नपञ्चनद्युपनामकघनश्यामभट्टात्मजेन वेदान्तचिन्तामण्याद्यनेकशास्त्रग्रन्थनिर्मायिणा रुक्मिणीचम्प्वादिविविधकाव्यप्रबन्धविधायिना गोवर्धनाऽऽशुकविना विरचित सत्सिद्धान्तमार्तण्ड सम्पूर्णः ॥

धीमान् साहित्यवेदान्तधर्मशास्त्रादिमर्मवित् ।
मन्दरः पाणिनीयाब्धेः नारायणतनूभवः ॥
नासिकक्षेत्रवास्तव्यः स्तव्यसारल्यभाजनम् ।
आत्मारामाभिधो विद्वान् ग्रन्थमेतमशोधयत् ॥



---

१ असत्हृदयै । २ वेदमूलक त्रयीतनुश्च । ३ मौर्ख्य शैत्यच डलयोरैक्याज्जल वा । ४ कर्ता किरणाश्च । ५ पापानि रात्रिश्च । ६ भक्त्यादिमार्गान् सञ्चराश्च । ७ भगवान् आकाशश्च । ८ अदुराग्रहैः सदाऽष्टखेटैश्च । ९ प्रकर्षेण दीप्ताभ्युदय प्रात कालोदयश्च । १० निर्गतरजस्काना खर्परेशरिविसर्गलोप पक्षे कमलानाम् । ११ प्रीति शोभा च । १२ विक्रमशकसम्बन्धिनि । १३ फाल्गुनशुक्लसप्तम्याम् ।

॥ श्रीः ॥

## सत्सिद्धान्तमार्तण्डस्य परिभाषेयम् ।

श्रीः० ॥ अथास्मिन्नस्मद्गुरुकृते ग्रन्थे उपन्यस्तार्षवचनानां नैर्मूल्यशङ्कापङ्कक्षालनाय तत्तन्मूलग्रन्थाध्यायश्लोकाद्यङ्का इह (अ० श्लो०) इत्येवमाद्याक्षरनिर्देशपूर्वकं मया स्वबुद्ध्यैव तत्तद्ग्रन्थानवलोक्य प्रायेण सर्वत्र कृताः । यानि तु प्रामाणिकनिबन्धेभ्यो वचांसि गृहीतानि तत्र नाङ्काः सन्ति । यत्र च आचारमाधवे मदनपारिजाते इत्येवं निबन्धनाम निर्दिश्य अनुपदं मनुः, याज्ञवल्क्यः, विष्णुः इत्येवं पङ्क्तिशो यानि वचांसि लिख्यन्ते तत्र तानि सर्वाण्यपि तन्निबन्धस्थानि ज्ञेयानि । यत्र च तस्यामेव वचनपङ्क्तौ स्वयं स्मृत्यादिषूपलब्धं वचनं लिख्यते, तत्र अमुकसङ्ख्याकाध्याये अमुक ऋषिः, स्वस्मृतावमुकर्षिः इत्येवं भेदकं दृश्यते । एवं विविधा एवास्मद्गुरोर्लेखनिबन्धाश्चातुर्यस्थापकाः सन्ति, ते सूक्ष्ममतिभिः सुकृतिभिः स्वयमेवावगंस्यन्त इति किं बहुलविलेखेन । स्वयमेव मया त्वरावशात् कृतेष्वध्यायश्लोकाद्यङ्केषु क्वचित्प्रमादश्चेत्स क्षन्तव्यो गुणैकग्राहिभिरिति शिवम् ॥

"श्रीगोर्धनशिष्येण महाराष्ट्रद्विजन्मना ।
मया मयूरभट्टेन परिभाषा व्यलेख्यसौ" ॥



सत्सिद्धान्तमार्तण्डे समुद्धृतानां वाक्यानां

# सूचीपत्रम् ।

## आ

## श

## ष



## स

इतोऽपि निवेश्यतां चक्षुः

परमपुरुषार्थस्य निगमकल्पतरोः फलं श्रीभागवतस्य सरसरसास्वादचतुरैः कथमास्वाद्यते ?

प्रकारत्रयेणेति—

तत्र

(१) परमपुरुषार्थप्रतिपादिका—

**वृत्रासुरचतुःश्लोकी—**

सा हि पण्डितपुरन्दराणां गोस्वामिश्रीपुरुषोत्तमानां प्रकाशेन समलङ्कृता

देवर्षिश्रीरमानाथशास्त्रिकृतव्रजभाषया च समुपबृंहिता

**चतुर्भिरेवाणकैर्लभ्यते ।**

(२) भगवता कपिलेन मात्रे देवहूत्या उपदिष्टः साङ्ख्ययोगात्मकस्तृतीयस्कन्धः—

तदर्थश्च श्रीमदाचार्यचरणप्रोक्तेन निबन्धेन विना दुर्बोध एव, अतः—

**तृतीयस्कन्धार्थः—**

भागवतार्थनिबन्धान्तर्गतः, आचार्यचरणानां प्रकाशेन कल्याणरायाणां टिप्पण्या च समेतः ।

अयं हि **अष्टभिरेवाणकैः** प्राप्यते ।

(३) श्रीमद्भागवतस्य प्रत्यध्यायतात्पर्यं, तस्य हि शास्त्रार्थाद्यर्थसप्तकेन च समन्वयः कुत्र प्रदर्शितः ?

गोकुलरायभट्टकृते,

**निबन्धान्तर्गते–भागवताध्यायार्थ एव ।**

सोऽपि **नवभिराणकैः** क्रेय ।

एतेषां प्राप्तिस्थानं ज्ञायते नु भवता ?

**"शेठ नारायणदास तथा जेठानन्द आसनमल्ल चेरिटि ट्रस्ट ऑफिस,**

**२३६ कालबादेवीरोड, मुंबई २."**